॥ श्रीः ॥

काशी-संस्कृत-ग्रन्थमाला

६



(न्यायविभागे (१) प्रथमं पुष्पम्)



श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता

# कारिकावली-मुक्तावली

श्रीमहादेवभट्टारब्धेन श्रीदिनकरभट्टप्रपूरितेन

(दिनकरी) प्रकाशाख्यव्याख्यानेन श्रीरामरुद्रभट्टाचार्यारब्धेन

पण्डितराजश्रीराजेश्वरशास्त्रिप्रपूरितेन

(रामरुद्री) तरङ्गिण्याख्यव्याख्यानेन च विभूषिता।

श्रीपूज्यपादगुरुवरपण्डितराजश्रीराजेश्वरशास्त्रिद्राविडमहोदयानामन्तेवासिना

काशीस्थसाङ्गवेदमहाविद्यालयोपाध्यायेन

श्रीहरिरामशुक्लन्यायाचार्येण सम्पादिता।

(सुपरिष्कृतं द्वितीयं संस्करणम्)



प्रकाशकः

जयकृष्णदास हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस।

वि. सं. २००८] [ई० सन् १९५१

श्रीगुरुः शरणम् ।

# किञ्चित्प्रास्ताविकम्

अथेदं पूज्यवरैः श्रीमद्भिर्गुरुवरैः प्रपूरितरामरुद्रीटीकासनाथदिनकरीव्याख्यासहिताया न्यायसिद्धान्तमुक्तावल्या द्वितीयं संस्करणं विपश्चिदपश्चिमानां पुरत उपस्थियते। मुक्तावलीरचयितुर्विश्वनाथन्यायपञ्चाननस्याधमर्णं सर्वमेव नैयायिककुलं किम्बहुना पण्डितकुलमिति ग्रन्थस्यास्य विषये किं विशेषतो वक्तव्यम् । यद्यपि चान्या बह्वयः सन्ति व्याख्याः सिद्धान्तमुक्तावल्यास्तथापि मुक्तावलीप्रकाशापरनाम्नी दिनकरीव्याख्या सर्वा अपि ता अतिशेते इत्यपि न तिरोहितं सूक्ष्मेक्षिकया तामवलोकयताम् । गोलोकीत्यादिषु कोडपत्रग्रन्थेषु तस्या उद्धरणमपि एतदेवोपोद्बलयति । यद्यपि कैश्चिद्व्याख्यातृभिर्बहुशः कृतमस्ति दिनकर्याः खण्डनं, परं वस्तुस्थितिमालोचयतां मर्मज्ञानां पुरतः स प्रयत्नो विफल एवेति स्पष्टमनुभवपथमारोहत्येव ।

दिनकरीव्याख्याया यथावत्तात्पर्यस्फोरिणी मुक्तावल्याश्चानेकत्र भावं प्रकटयन्ती रामरुद्रीव्याख्या अपि अनितरसाधारण्येव यद्यपि, तथापि तस्याः शब्दखण्डान्ते भाग एव विश्रान्तेः, गुणनिरूपणे तादृश्या एव दिनकरीव्याख्याया आवश्यकतामनुभवन्तोपि विद्वांसो विद्यार्थिनश्च तस्या अभावेन बहोर्दिनादिमां त्रुटिमनुभवन्ति स्म। सेयं त्रुटिः साक्षाद्विश्वनाथमूर्तिभिः प्रातःस्मरणीयैरस्मद्गुरुवरैः सर्वथा दूरीकृतेति तु विजानन्त्येव विद्वांसः । स्वकीयेऽल्पीयस्येव वयसि विरचितोऽयं ग्रन्थः रामरुद्र्याः सर्वथैव सादृश्यमावहन् कचित्तु गुणत्वजातिसाधनपाकजप्रक्रियादिविचारावसरे पूर्वग्रन्थापेक्षयापि च विचारगाम्भीर्यमुद्वहन् श्रान्तं रामरुद्रीत्यन्वर्थनामधारणे सर्वथा योग्य एवेत्यत्र न विप्रतिपत्तिलेशोपि । नात्यन्तमाकर्षकेपि प्रथमसंस्करणे एतावत्येव कालेऽस्य द्वितीयं संस्करणं विदुषामेतद्ग्रन्थे स्नेहातिशयं व्यञ्जयत्येव। गुणनिरूपणविषये यावान्विचारोऽत्र ग्रन्थे उपलभ्यते तावतामेकत्र कचिदपि ग्रन्थे लब्धिरशक्यैवेत्यपि न विदुषां तिरोहितम् । ग्रन्थस्यास्यान्तिमसंशोधनपत्र( प्रूफ )मात्रसंशोधनकार्यमङ्गीकुर्वन्तं मामप्रदर्श्यैव केषाञ्चित्तेषां प्रकाशनेन संशोधकान्तरकृताः, इतरत्रांच मदीयानवधानतया, सीसकाक्षरसंयोजकदोषेण वा जाता अशुद्धीः संशोध्य गुणैकपक्षपातिनो विद्वांसोऽनुगृह्णीयुरिति साञ्जलिबन्धमभ्यर्थयते ।

विदुषामनुचरः—

हरिराम शुक्लः

# सिद्धान्तमुक्तावलीस्थविषयानुक्रमणिका

* प्रमादवशादितः ३२४ पर्यन्तं क्रमाङ्का विपरीता अभवन् , अतः संशोध्यानुगृह्णन्तु पाठकाः।




प्राप्तिस्थानम्—

जयकृष्णदास-हरिदासगुप्तः

चौखम्बा संस्कृत सीरिज आफिस

बनारस-१

श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचित—

# न्यायसिद्धान्तमुक्तावली

श्रीमहादेवभट्टाख्येन श्रीदिनकरभट्टप्रपूरितेन प्रकाश( दिनकरी )व्याख्यानेन तदुपरि श्रीरामरुद्रभट्टाचार्याख्यया पण्डितराजश्रीराजेश्वरशास्त्रिप्रपूरितया तरङ्गिणी( रामरुद्री )टीकया सहिता ।

मुक्तावली ।

**चूडामणीकृतविधुर्वलयीकृतवासुकिः ।**
**भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥**

दिनकरी ( प्रकाशः ) ।

लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाऽभिधं
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवाऽऽस्याऽम्बुजात् ।
ज्ञात्वाऽशेषमतं मितेन वचसा सिद्धान्तमुक्तावली-
गूढार्थांस्तनुते यथामति महादेवः परेषां मुदे(१) ॥ १ ॥

तत्र तावद्भाषापरिच्छेदव्याख्यानं चिकीर्षुर्विश्वनाथपञ्चाननो निर्विघ्नपरिसमाप्तये कृतस्येश्वरनिर्देशरूपमङ्गलस्य शिष्या अप्येवं कुर्युरिति शिष्यशिक्षायै निबन्धनं कुर्वन्नीश्वरं प्रार्थयते—**चूडामणीकृतेति । लीलेति ।** इदं च विशेष्यं, नातः समाप्तपुनरात्तत्वं दोषः ।

रामरुद्री ( तरङ्गिणी ) ।

तातस्य तर्कसरसीरुहकाननेषु रामेश्वरस्य तरणेश्चरणौ प्रणम्य ।
श्रीरामरुद्रसुकृती कृतिनां हिताय लीलावशात्किमपि कौतुकमातनोति ॥ १ ॥
जाने कदाचिदपि नैव शिवस्वरूपात्तातात्पुनः परमदैवतमन्यदत्र ।
तस्मादिमां कृतिमिहाऽद्य तरङ्गिणीत्वात्पाद्याय तच्चरणयोः परिकल्पयामि ॥ २ ॥
तरङ्गिणीयं सफलोक्तिवाचो मुदे बुधानां तरसा विदे च ।
भूयात्सदाऽलं निखिलाऽण्डभाण्डकीर्तिप्रभाजातविभूषितानाम् ॥ ३ ॥

सिद्धान्तमुक्तावलीव्याख्यांचिकीर्षुर्महादेवः प्रारिप्सितग्रन्थविघ्नविघाताय कृतं तातनमस्काररूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति—**लक्ष्मीति । गूढार्थांस्तनुते**—विस्तारयतीत्यर्थः । अन्यत्र(२) विस्तारो नाम नानाजनसम्बन्धः, प्रकृते तु स्वविषयकज्ञानवत्त्वमेवेति भावः । **तत्र तावदिति ।** निपातो वाक्याऽलङ्कारे । **शिष्या अप्येवं कुर्युरितीति ।** अत्र “इति” शब्दस्य उक्ताऽऽकारकाऽभिप्रायोऽर्थः । इतिशब्दस्याऽव्ययतया तृतीयाऽन्तत्वेन, शिष्या अप्येवं कुर्युरित्याकारकाऽभिप्रायेणेत्यर्थः पर्यवसितः । एतेन शिष्या अप्येवं कुर्युरित्याकारकज्ञानेच्छाशब्दानां शिष्यशिक्षाऽनात्मकतया, “कुर्युरिति शिष्यशिक्षायै” इति ग्रन्थाऽसङ्गतिः, स्वकर्तव्यत्वेन ज्ञानस्यैव शिक्षाशब्दार्थत्वादिति निरस्तम् । **समाप्तपुनरा-**

---

( १ ) ‘कृते’ इत्यपि पाठः ।  ( २ ) “अर्थस्य” इति पाठोऽपि ।

दिनकरी ।

**वस्तुतस्तु**—विधोः किमिति चूडामणीकरणं ? किमर्थं वा वासुकेर्वलयीकरणम् ? इत्याकाङ्क्षायां(१) निराकाङ्क्षप्रतिपत्तिर्न सम्भवतीति लीलेत्यादिविशेषणाऽनुक्तौ विवक्षिताऽन्वयबोधाभावान्नाऽयमत्र दोषः। उत्थाप्याऽऽकाङ्क्षया विशेषणाऽन्वय एव तत्प्रसरादिति। लीलया ताण्डवं नृत्यं, तत्र पण्डितोऽभिज्ञ इत्यर्थः। अनेन च नृत्यविशिष्टतया स्मृतिविषयत्वात् प्रार्थिता अर्थाः सम्भवन्त्येवेति सूचितम्। ननु भूषणरहितस्य कथं नृत्यं ? तत्राऽऽह—

रामरुद्री ।

**त्तत्वमिति** । क्रियाऽन्वयेन शान्ताऽऽकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तराऽन्वयार्थं पुनरनुसन्धानं समाप्तपुनरात्तत्वं काव्यदोषः। प्रकृते हि "चूडामणीकृतविधुर्वलयीकृतवासुकिः। भवो भवतु भव्याय लीलाताण्डवपण्डित" इत्यत्र भवो भव्याय भवत्वित्येतावताऽन्वयबोधेनैव भवपदस्य शान्ताऽऽकाङ्क्षतयोत्तरत्र विद्यमानस्य "लीलाताण्डवपण्डित" इति विशेषणस्याऽन्वयार्थं स भवः पुनः कीदृश ? इत्याकाङ्क्षासम्पादनाय भवपदेन भवस्मरणस्यावश्यकतया भवति समाप्तपुनरात्तत्वं दोष इति भावः।

ननु जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां मध्ये जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचकमिति नियमः। अन्यथा नीलोत्पलमित्यादिवदुत्पलनीलमित्यादेरपि प्रयोगस्य प्रसङ्गात्, तथाहि--समासविधायकसूत्रे यत्प्रथमान्तपदनिर्दिष्टं तत्समासे पूर्वं निपततीति नियमः, "विशेषणं विशेष्येण" इति कर्मधारयविधायकसूत्रे विशेषणवाचकपदस्य प्रथमान्तपदनिर्दिष्टत्वात्पूर्वनिपातनियमः, नीलोत्पलयोर्विशेषणविशेष्यभावे नियामकाभावे उत्पलस्य विशेषणत्वविवक्षयोत्पलनीलमिति प्रयोगः स्यादेव, तस्माज्जातिप्रवृत्तिनिमित्तकत्वादुत्पलपदस्य विशेष्यवाचकत्वमेवेत्यवश्यमङ्गीकरणीयम्, तथा च शिवशरीरवृत्तिजातिविशेषप्रवृत्तिनिमित्तकस्य भवशब्दस्य विशेषणपरत्वाऽनुपपत्तिः। न चैकव्यक्तिकत्वाद्भवत्वं न जातिरिति वाच्यम्। कल्पभेदेन शिवशरीरस्यापि भिन्नत्वात्। न च भवः सर्वं जानातीति प्रतीत्यनुपपत्तिः, अवच्छेदकतासम्बन्धेन ज्ञानवत्त्वबोधकत्वस्येश्वरज्ञानस्य किञ्चिदनवच्छिन्नत्वेन स्वीकर्तुमशक्यत्वादिति वाच्यम्। स्वाश्रयावच्छिन्नत्वसम्बन्धेन तादृशवैजात्यविशिष्टचैतन्य( चेतन )स्यैव भवपदार्थत्वोपगमात्। स्वाश्रयावच्छिन्नत्वं स्वनिष्ठकर्माऽसाधारणकारणयत्नवत्त्वसम्बन्धेन स्वाश्रयविशिष्टत्वमिति बोध्यम्। न च भवत्यस्माज्जगदिति व्युत्पत्त्या जगत्कारणत्वमेव भवपदप्रवृत्तिनिमित्तं, न तु जातिविशेष इति वाच्यम्। "योगाद्रूढेर्बलीयस्त्वात्" इत्यभियुक्तोक्त्या शीघ्रोपस्थितिकरूढ्यर्थमादाय शान्ताऽऽकाङ्क्षाऽन्वयबोधोपपत्तौ विलम्बोपस्थितिकयोगार्थमादायाऽन्वयबोधाऽनुपपादने समाप्तपुनरात्तत्वदोषस्याऽऽवश्यकत्वादित्यत आह—**वस्तुतस्त्विति** । **इत्याऽऽकाङ्क्षायामिति** । सत्यामिति शेषः। **निराकाङ्क्षप्रतिपत्तिर्न सम्भवतीति** । स्वोत्तराऽनुत्पन्नाऽऽकाङ्क्षाकशाब्दबोधो न भवतीत्यर्थः। **विवक्षिताऽन्वयबोधेति** । विशेष्यवाचकपदेन निरुक्तनिराकाङ्क्षाऽन्वयबोधजननोत्तरं विशेषणाऽन्तराऽन्वयार्थं विशेष्यवाचकपदस्य पुनरनुसन्धानं समाप्तपुनरात्तत्वमिति समाप्तपुनरात्तत्वलक्षणघटकत्वेन विवक्षितो यो निराकाङ्क्षाऽन्वयबोधस्तदभावादित्यर्थः। "लीलेत्यादिविशेषणाऽनुक्ता"वित्यनेन तादृशविशेषणोक्तौ तादृशविशेषणसहितेतरवाक्यजन्याऽन्वयबोध एव विवक्षिताऽन्वयबोधो भवतीति सूचितम्। नन्वेवं समाप्तपुनरात्तत्वं क्वाऽपि दोषो न स्यात्, शाब्दबोधमात्रे आकाङ्क्षायाः प्रयोजकत्वेन विशेषणाऽन्तराऽन्वयार्थं स कीदृश ? इत्यादियत्किञ्चिदाकाङ्क्षायाः कल्पनीयतया क्वाऽपि निराकाङ्क्षप्रतिपत्तेरसम्भवादित्यत आह—**उत्थाप्याऽऽकाङ्क्षयेति** । अनियताऽऽकाङ्क्षयेत्यर्थः। क्रियाकारकपदानां परस्पराकाङ्क्षा नियता, पुत्रादिपदानामपि पित्राद्याकाङ्क्षा(२) नियता, एवं प्रयोजनाकाङ्क्षाऽपि नियतैव, प्रयोजनाऽभावे वाक्यार्थस्यैवाऽसिद्धिप्रसङ्गात्। भवः कीदृश ? इत्याद्याऽऽकाङ्क्षा तु न नियता, तथा च नियताकाङ्क्षारहिताऽन्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसन्धानमेव समाप्तपुनरात्तत्वमिति

---

( १ ) 'काङ्क्षया' इत्यपि पाठः।    ( २ ) "प्रतियोग्याकाङ्क्षा' इत्यन्यत्र पाठः।

मुक्तावली।

**निजनिर्मितकारिकावलीमतिसङ्क्षिप्तचिरन्तनोक्तिभिः।**
**विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः॥ २॥**

दिनकरी।

**चूडामणीकृतेति**। अचूडामणिश्चूडामणिवत् सम्पद्यत इति चूडामणीकृतः, चूडामणीकृतो विधुर्येन स तथोक्तः। **वलयीकृतेति**। अवलयं वलयवत् सम्पद्यत इति वलयीकृतः, वलयीकृतो वासुकिर्येन स तथेत्यर्थः॥ १॥

शिष्याऽवधानाय प्रतिजानीते—**निजनिर्मितेति**। निजेन स्वेन निर्मिता रचिता या कारिकावली ताम्। अति, अत्यन्तं, सङ्क्षेपः शब्दसङ्क्षेपो यासु ता अतिसङ्क्षिप्तास्तादृश्यश्च ताश्चिरन्तनानां कणादप्रभृतीनां या उक्तयो वचांसि–वचःप्रतिपाद्या युक्तयस्ताभिरहं विशदीकरवाणि प्रकटीकरोमीत्यर्थः। ननु लीलावत्यादिप्राचीननिबन्धाऽध्ययनेनैव कारिकावलीप्रतिपादितोऽर्थो बोद्धव्य इति किमनेन भवत्कृतविशदनिबन्धेनेत्यत आह—**अतिसङ्क्षिप्तेति**। तथा च लीलावत्यादिप्राचीननिबन्धेषु ग्रन्थबाहुल्येन बहुतरदुःखहेतुप्रतिपत्तिकतया न बालानां प्रवृत्तिरिति भावः। स्वोत्प्रेक्षामूलकताप्रयुक्ताऽनादरणीयतां निरसितुं चिरन्तनेत्युक्तम्। नन्वित्यवधारणे। तथा च कौतुकादेवेत्यर्थः। एतेन स्वस्य ग्रन्थकरणे क्लेशाऽभावः सूचितः। स्वस्य ग्रन्थकरणे प्रवृत्तौ निमित्तमाह—**राजीवेति**। राजीवे शिष्ये या दया कृपा, तया वशंवदस्तदधीन इत्यर्थः॥ २॥

ननु ग्रन्थादौ श्रोतृप्रवृत्तये प्रयोजनादि वक्तव्यं भवति, तस्य चेहाऽनुक्तत्वादुपेक्षणीयतैतद्ग्रन्थस्य स्यादित्याशङ्क्य विषयप्रयोजनसम्बन्धाऽधिकारिणः सूचयन्नतिसङ्क्षिप्तत्वादेतद्ग्रन्थस्य सकलपदार्थाऽप्रतिपादकतया कथं बालव्युत्पत्तिरित्याऽऽशङ्कां चैतद्ग्रन्थस्य सकलपदार्थप्रतिपादकत्वप्रदर्शनेन परिहरन्—

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्*"

इति भगवदुक्तेर्मुक्तावलीसमं स्वकीयग्रन्थं श्रीमति भगवति चाऽर्पयन् स्वकीर्त्यनुवृत्तये

रामरुद्री।

विवक्षितत्वात् स कीदृश? इत्याद्युत्थाप्याकाङ्क्षया विशेषणान्तराऽन्वयस्थल एव समासपुनरात्तत्वदोष इति भावः। **अचूडामणिरिति**। "च्विः स्यादभूततद्भावे" इत्यनेन विहितच्विप्रत्ययान्तचूडामणिशब्दघटितत्वात् उक्तवाक्यादयमर्थो लभ्यत इति भावः॥ १॥

**शिष्याऽवधानायेति**। शिष्याणामवधानं शुश्रूषा, तस्यै इत्यर्थः। वक्तव्याऽर्थस्य विशिष्याऽज्ञाने तत्प्रतिपत्तेरिष्टसाधनत्वाऽग्रहेण शिष्याणां वाक्यश्रवणेच्छा न सम्भवति, प्रतिज्ञया स्वकारिकावलीव्याख्यानस्य कर्तव्यत्वज्ञाने कारिकावल्यर्थज्ञानरूपेष्टसाधनत्वस्य ग्रन्थकृद्वाक्येषु सुग्रहत्वेन भवत्येव तच्छ्रवणेच्छेति भावः। **शब्दसङ्क्षेप इति**। सङ्क्षेपो द्विविधः–शब्दसङ्क्षेपोऽर्थसङ्क्षेपश्च। तत्राऽर्थसङ्क्षेपेण ग्रन्थस्य सकलाऽर्थाऽप्रतिपादकत्वे बालव्युत्पत्तिजनकता न स्यादित्याशङ्क्य सङ्क्षेपपदस्य प्रकृते शब्दसङ्क्षेपमात्रपरत्वमुपदर्शितम्। पद्यस्थाऽतिसङ्क्षिप्तपदस्य प्रयोजनं प्रकटयन्नाह—**नन्वित्यादि**। **स्वोत्प्रेक्षेति**। स्वकीयकल्पनामूलकत्वेत्यर्थः। **एतेनेति**। अनेनाऽवधारणेन॥ २॥

---

* भगवद्गीता।

मुक्तावली ।

**सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका**
**सत्सामान्यविशेषनित्यमिलिताऽभावप्रकर्षोज्ज्वला ।**
**विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली**
**विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥**

दिनकरी ।

ग्रन्थस्य स्वस्य च नाम निबध्नाति—**सद्द्रव्येति** । द्रव्यैः सहिता युक्ता, प्रतिपादकतया । गुणैरपि गुम्फिता युक्ता । सतामुत्क्षेपणादीनां पञ्चानां कर्मणां ज्ञापिका बोधिका । सत् जातिरूपं सामान्यं, विशेषाः, नित्यः समवायः, तैर्मिलिता । यद्वा सन्ति सामान्यविशेषनित्य-मिलितानि यस्यां सा । नित्यमिलितं नित्यसम्बन्धः । अभावस्य प्रकर्षः प्रागभावाऽऽदिभेदेन वैलक्षण्यं, तस्य **उज्ज्वला**-प्रकाशिका । **एषा**-बुद्धिस्था । सिद्धान्ता एव मुक्तास्तासामा-**वली**—पङ्क्तिः । विष्णोर्नारायणस्य । **वक्षसि**—वक्षःस्थले । **विन्यस्ता**-विशेषतोऽर्पिता । **सुकृतिनां**—पण्डितानाम् । मनसः । **मुदं**-सन्तोषम् । **चिरं**-बहुकालम् । **वितनुतां**-विस्तारयत्वित्यर्थः । ननु युक्तीनामत्राऽसत्त्वात्कथं विदुषां सन्तोषस्तत्राऽऽह-**सद्युक्तिरिति** । सत्यो युक्तयो यस्यां सा तथा । मुक्तावलीसादृश्यं ग्रन्थे द्रव्याऽऽदिपदार्थवत्तया । तथा हि-मुक्तावली **सद्द्रव्या**—साध्यतया द्रव्यवती, द्रव्यसाध्येति यावत् , नानाविधद्रव्यघटिता वा । **गुणेन**-सूत्रेण **गुम्फिता**-निर्मिता । **सुकृतिनां**-पुण्यवतां यानि सन्ति-समीचीनानि भगवद्भजनादिरूपाणि कर्माणि तेषां बोधिका । **सत्सामान्यं**-समीचीना जातिः, विशेषो महत्त्वनिर्मलत्वादिस्ताभ्यां नित्यमनवरतं मिलिता सम्बद्धा । **अभावे**-तेजोऽभावेऽन्धकारे सति **प्रकर्षेणोज्ज्वला**-अर्थप्रकाशिकेति यावत् । यथा मुक्तावली द्रव्यादिसकलपदार्थवती, तथाऽयं ग्रन्थोपीति । अत्र च ग्रन्थे मुक्तावलीसाम्योक्त्या(१) निर्दोषत्वं सूचितम् । अत्र द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः । पदार्थतत्त्वाऽवधारणं च प्रयोजनं सूचितम् । सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः । पदार्थतत्त्वाऽवधारणकामोऽधि-कारीति ॥ ३ ॥

रामरुद्री ।

**सज्जातिरूपमिति** । सामान्यमनुगतधर्ममात्रम् । तच्च क्वचिदुपाधि(२)रूपं, क्वचिज्जातिरूपम् । प्रकृतग्रन्थे जातिरूपसामान्यस्यैव निरूपणीयत्वेन जातिरूपसामान्यलाभाय सत्सामान्येत्युक्तमिति भावः । ननु सदित्यस्य सत्ताविशिष्टार्थकत्वेन सत्पदस्य जातिरूपाऽर्थकत्वं लक्षणयैव वाच्यं, सामान्यपदमपि शास्त्रकृत्परिभाषया जातिरूपसामान्य एव सुप्रसिद्धम् , अन्यथा "सामान्यं सविशेषक"मिति मूलेऽपि जात्यतिरिक्तसामान्यव्यावर्तकविशेषणाऽनुक्त्या मूलकारस्य न्यूनता(३)ऽऽपत्तेः सदित्यनर्थकं चेत्यत आह—**यद्वेति** ॥ ३ ॥

---

(१) 'वलीत्वोक्त्या' इत्यपि पाठः । (२) 'दुखण्डोपाधि' इत्यन्यत्र पाठः ।
(३) अनभिधानानुमिताऽबोधकतावत्पुरुषत्वं ग्रन्थकृन्निष्ठं न्यूनत्वम् । तादृशपुरुषो-च्चरितत्वं च मूलस्य न्यूनत्वम् ।

कारिकावली।

**नूतनजलधररुचये गोपवधूटीदुकूलचौराय।**

मुक्तावली।

**विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति-नूतनेति। ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं, विनापि मङ्गलं**

दिनकरी।

ग्रन्थाऽऽरम्भसमये कृतस्य मङ्गलस्य तन्निबन्धनस्य च वैयर्थ्यमाशङ्क्य फलं दर्शयति—**विघ्नविघातायेति**। प्रारब्धुमिष्टस्य ग्रन्थस्येति शेषः। यद्यप्यत्र घातपदस्योत्पत्तिमदभावपरतया विपदमनर्थकमिति प्रतिभाति, तथापि विशिष्टवाचकानां पदानां सति पृथक् विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायाः "स कीचकैर्मारुतपूर्णरन्ध्रै"रित्यत्र—

"कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धता"

इति कोशपर्यालोचनया(१) मारुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधककीचकपदे दृष्टत्वाद् घातपदमभावमात्रपरं द्रष्टव्यम्।

ननु निष्फलत्वान्मङ्गलाऽऽचरणमयुक्तं, नच निष्फलत्वमेव तस्याऽसिद्धं, फलविशेषशून्यत्वेन हेतुना तस्य साधनादित्यभिप्रायेणाऽऽशङ्कते—**नन्विति**। मङ्गलस्य कारणत्वाऽभावे

रामरुद्री

**विपदमनर्थकमिति**। इदं चोपसर्गाणां वाचकत्वमताऽभिप्रायेण। अन्यथा तेषां द्योतकत्वपक्षे किञ्चिदर्थाऽवाचकतयोपसर्गाणां शक्तत्वरूपपदत्वाऽसम्भवेन विपदमित्यसङ्गतमेव स्यात्। अत एव समाधानेऽपि "विशिष्टवाचकानां पदानां सति पृथक् विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्" इति न्यायेन विपदसन्निहितघातपदस्याभावमात्रपरताप्रदर्शनमपि सङ्गच्छते, अन्यथा विपदस्य किञ्चिदर्थाऽवाचकत्वेन विशेषणवाचकत्वाऽसम्भवात् विघातपदस्योक्तन्यायविषयता न स्यादिति ध्येयम्। विशिष्टवाचकपदस्याऽपि विशेषणबोधकत्वरूपविशेषणवाचकत्वस्याऽक्षततया तेषां काऽपि विशिष्टवाचकता न स्यादित्यतः पृथगित्युक्तम्। विशिष्टवाचकपदाऽतिरिक्तमित्यर्थः।

ननु "विघ्नविघाताय कृतं मङ्गलम्" इति मूलेन मङ्गले विघ्नध्वंसजनकत्वस्यैव सूचितत्वेन तदुपरि "ननु" इत्यादिमूलेन विघ्नध्वंसं प्रति मङ्गलं न कारणमित्याशङ्का यद्यपि युज्यते, तथापि "न वा समाप्तिं प्रति कारणम्" इत्युक्तिरसङ्गतेत्यतस्तद्ग्रन्थमभिप्रायान्तरेणाऽवतारयति—**ननु निष्फलत्वादिति**। **फलविशेषशून्यत्वहेतुनेति**। यद्यपि ज्योतिष्टोमादावपि पुत्रादिरूपफलविशेषशून्यत्वेन फलविशेषशून्यत्वं न निष्फलत्वव्याप्यं, तथाऽपि तत्पदेन यावत्फलविशेषशून्यत्वस्य विवक्षितत्वात् यावद्विशेषाऽभावस्य च सामान्याभावव्याप्यत्वान्नोक्ताऽसङ्गतिरिति भावः। नचैवं निष्फलत्वसिद्धये यावत्फलविशेषशून्यत्वमेव साधनीयम्, मूले तु "मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणम्" इत्यनेन फलद्वयशून्यत्वमेव साध्यते, तेन च न यावत्फलविशेषशून्यत्वरूपहेतुसिद्धिरिति कथं प्रकृतोपयोग इति वाच्यम्। पशुपुत्रादिफलशून्यत्वस्य मङ्गले सर्वसम्मतत्वेन तस्य साधनाऽनर्हतया प्राचीननवीनाभ्यां समाप्तिविघ्नध्वंसयोरेव फलत्वाऽङ्गीकारेण तदुभयफलशून्यत्वसाधने यावत्फलविशेषशून्यत्वरूपहेतुसिद्धेरावश्यकत्वादिति भावः। न चैवमपि प्राचीनैर्मङ्गलस्य समाप्तिं प्रति विघ्नध्वंसद्वारैव कारणत्वाऽङ्गीकाराद्विघ्नध्वंसं प्रत्यकारणत्वे समाप्तिं प्रत्यपि विघ्नध्वंसद्वारा कारणत्वमसम्भवदुक्तिकमेवेति पृथक् समाप्तिकारणत्वनिषेधो

(१) 'कोशात्' इति पाठः।

मुक्तावली ।

**नास्तिकादीनां ग्रन्थेषु निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न । अविगीत-**

दिनकरी ।

व्यतिरेकव्यभिचार(१)रूपहेतुमाह—**विनाऽपीति । निर्विघ्नपरिसमाप्तीति ।** विघ्न-ध्वंसपूर्वकसमाप्तीत्यर्थः । न च तत्र जन्मान्तरीयमङ्गलकल्पनान्न व्यभिचार इति वाच्यम् । भोगाऽऽदिनाऽपि नास्तिकाऽऽत्मनि विघ्ननाशसम्भवेन जन्मान्तरीयमङ्गलसन्देहेन व्यभि-चारसंशयसम्भवात् । अत्र कादम्बर्यादिग्रन्थे मङ्गलसत्त्वेऽपि समाप्तेरदर्शनेनाऽन्वयव्यभि-चारोऽपि दोषो बोध्यः ।

व्यभिचारसन्देहस्य ग्राह्यसंशयरूपतया कारणताप्रत्यक्ष एव प्रतिबन्धकत्वं, न त्वनु-

रामरुद्री ।

व्यर्थ एवेति वाच्यम् । यतो हि विघ्नध्वंसद्वारैव समाप्तिं प्रति मङ्गलस्य प्राचीनैः सर्वत्र कारणत्वोपगमे "विघ्नध्वंसो मङ्गलफलम्" इति वादिनो नवीनस्य मते "न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य" इत्याऽऽदिना विघ्नाऽत्यन्ताभाववता कृतस्य मङ्गलस्य निष्फलत्वाऽऽपत्तिः प्राचीनैः कर्तुमशक्या, स्वम-तेऽपि तत्र विघ्नध्वंसरूपद्वाराऽभावेन मङ्गले निष्फलत्वस्यैवाङ्गीकरणीयत्वात् । तथा च प्राचीनानामपूर्व-द्वारैव मङ्गलस्य समाप्तिहेतुता सम्मतेति न कश्चिद्दोष इति भावः । न चैवं "विघ्नध्वंसस्तु मङ्गलस्य द्वारम्" इति प्राचीनोक्तिविरोध इति वाच्यम् । द्वारत्वं हि तज्जन्यत्वे सति तज्जन्यजनकत्वं, तच्चाऽपूर्वद्वारा मङ्ग-लस्य समाप्तिहेतुत्वेऽपि मङ्गलजन्यसमाप्तिं प्रति विघ्नध्वंसस्य प्रतिबन्धकसंसर्गाभावविधया कारणत्वेन विघ्नध्वंसस्य मङ्गलजन्यत्वेन च सम्भवत्येवेति मङ्गलस्याऽपूर्वद्वारा समाप्तिकारणत्वेऽपि विघ्नध्वंसस्य द्वार-तासम्भवात् । न चैवमप्यपूर्वस्य द्वारतामते स्वजन्याऽपूर्वसम्बन्धेनैव मङ्गलस्य हेतुताया वक्तव्यतया स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन मङ्गलस्य कारणताप्रतिपादनं मुक्तावलीव्याख्यानकृतामसङ्गतमेवेति वा-च्यम् । यत्र मङ्गलजन्यविघ्नध्वंसो वर्तते तत्राऽनन्तस्थलेषु नानाऽपूर्वव्यक्तीनां कल्पने गौरवात् तादृश-स्थले(२) स्वजन्यविघ्नध्वंससम्बन्धेनैव मङ्गलस्य समाप्तिहेतुता युक्तेत्यभिप्रायकतया तदुक्तिसङ्गतेः । नचै-वमपि समाप्तिं प्रति मङ्गलस्य क्वचित्स्वजन्यविघ्नध्वंससम्बन्धेन हेतुता, क्वचित्स्वजन्यापूर्वसम्बन्धेनेत्या-यातं, तथा च पृथक् समाप्तिकारणत्वनिषेधस्याऽऽवश्यकत्वेऽपि यत्र स्वजन्याऽपूर्वसम्बन्धेन मङ्गलं न तत्र स्वजन्यविघ्नध्वंससम्बन्धेन, यत्र च स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलं न तत्र स्वजन्याऽपूर्वसम्ब-न्धेनेति, समाप्तौ मङ्गलस्य सम्बन्धद्वयेनाऽपि व्यतिरेकव्यभिचारात्कारणत्वमेवाऽसम्भवदुक्तिकमिति वाच्यम् । अतस्तत्तत्सम्बन्धेन मङ्गलाऽव्यवहितोत्तरत्वस्याऽपि कार्यतावच्छेदककोटिप्रविष्टतया व्यभिचा-राऽभावादिति हृदयम् ।

ननु व्यतिरेकव्यभिचाररूपहेतुना समाप्तिकारणत्वाऽभावस्य मङ्गले पूर्वपक्षिणा साधनात् समाप्त्यन्या-फलकत्वे सति सफलत्वहेतुना मङ्गले समाप्तिकारणत्वाऽनुमानं सिद्धान्तिनामसङ्गतं, समाप्तिकारणत्वाऽभा-वसाधकहेतौ हेत्वाभासमनुद्भाव्य समाप्तिकारणत्वाऽनुमानस्य सत्प्रतिपक्षत्वाऽऽपत्तेरित्यतः सिद्धान्तग्र-न्थस्य भावमाह—**व्यभिचारसन्देहस्येति ।** मङ्गलत्वधर्मिकसमाप्तिमन्निष्ठाभावप्रतियोगितावच्छेदकत्व-सन्देहस्येत्यर्थः । **ग्राह्यसंशयरूपतयेति ।** अनुमित्या ग्राह्यं हि मङ्गले समाप्तिकारणत्वं, तच्च समा-प्तिमन्निष्ठाभावप्रतियोगितानवच्छेदकमङ्गलत्ववत्त्वं, तथा च साध्यसन्देहपर्यवसन्नस्य व्यभिचारसन्दे-हस्य नाऽनुमितौ प्रतिबन्धकत्वमिति भावः । **कारणताप्रत्यक्ष एव प्रतिबन्धकत्वमिति ।** इदं च

---

(१) कार्यसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वं व्यतिरेकव्यभिचारः ।

(२) 'मङ्गले' इति पुस्तकान्तरे पाठः ।

मुक्तावली ।

**शिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां**

दिनकरी ।

मितौ, तत्र तस्याऽनुकूलत्वादित्यभिप्रायवान्—मङ्गलं समाप्तिफलकं, समाप्त्यन्याऽफलकत्वे (१)सति सफलत्वात् इति परिशेषाऽनुमानेन मङ्गलस्य समाप्तिफलकतां व्यवस्थापयिष्यन् प्रथमतो विशेष्याऽसिद्धिनिरासाय फलवत्तां साधयति—**अविगीतेति** । विषयत्वं च ज्ञान-विषयसुखेऽतिप्रसक्तमत—**आचारेति** । आचारश्चाऽत्र यद्यपि क्रियैव, तथाऽपि विषयत्वश्रुतेः कृति(२)रेव विवक्षिता । तद्विषयत्वं चाऽत्र विधेयतया बोध्यम् । तेन फले न व्यभिचारः, तस्योद्देश्यतया कृतिविषयत्वात् । विधेयतया कृतिविषयत्वं चैत्यवन्दनादावप्यस्त्यतः—**शिष्टेति** । शिष्टत्वं च फलसाधनतांशे भ्रान्तिरहितत्वं, न तु वेदप्रामाण्याऽभ्युपगन्तृत्व-म् । तेन व्युत्क्रमेण कृते दर्शाऽऽदौ निष्फलत्वेऽपि न व्यभिचारः। शिष्टाचारविषयत्वं श्येन-यागाऽऽदावप्यस्त्यतः—**अविगीतेति** । अविगीतत्वं च बलवदनिष्टाऽननुबन्धित्वम् । तेन श्येनाऽऽदौ प्रवृत्त्युपयुक्तबलवदनिष्टाऽननुबन्धीष्टसाधनत्वरूपसाध्याऽभावेऽपि न व्यभिचारः । **सिद्धे**—अनुमिते । **तत्र**—मङ्गले । **फलजिज्ञासायां**—विशेषतः फलजिज्ञासायां । ननु कथं

रामरुद्री ।

विशेषदर्शनाऽभावविशिष्टतत्संशयः(३) प्रात्यक्षिकनिश्चयप्रतिबन्धक इति मताऽभिप्रायेणोक्तम् । वस्तुतस्तु संशयसामग्र्या एव निश्चयप्रतिबन्धकत्वं, अत एव विशेषदर्शनदशायामेककोटिभानप्रतिबन्धेन संशय-सामग्र्यभावान्निश्चय इति मन्तव्यम् । **तत्र तस्येति** । अनुमितौ साध्यसंशयस्येत्यर्थः । **अनुकूलत्वा-दिति** । सिद्ध्यभावरूपपक्षतासम्पादकत्वादिति भावः । **परिशेषानुमानेनेति** । तदितरविशेषाऽभाववत्त्वे सति सामान्यवत्त्वरूपो हेतुः परिशेषानुमानम् । **आचारश्चाऽत्रेति** । अत्रेतिशब्दश्चोत्तरान्वयी, तथा चाऽऽचारो यद्यपि क्रियैव, तथाऽप्यत्र विषयत्वश्रुतेः कृतिरेव विवक्षितेत्यर्थः । ननु श्येनयागस्याऽपि शत्रुवधरूपेष्टसाधनत्वात्सफलत्वमक्षतमेवाऽतस्तत्र हेतुसत्त्वेऽपि न व्यभिचार इति हेतावविगीतत्वविशेषणं व्यर्थमित्याशङ्कां निराकर्तुमविगीतपदाऽभावे व्यभिचारमुपपादयन्नाह—**तेनेत्यादि** । **प्रवृत्त्युपयु-क्तेति** । मङ्गलाचरणे प्रवृत्तिनिर्वाहाय बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसफलत्वमेवाऽनुमेयम् । तच्च श्येने नाऽस्त्येवेति हेतावविगीतपदाऽभावे भवत्येव व्यभिचार इति भावः । अनिष्टे बलवत्त्वं चेष्टो-त्पत्तिनान्तरीयकभिन्नत्वम् । अनिष्टे बलवत्त्वविशेषणाद् बहुवित्तव्ययाऽयाससाध्ययागादौ न प्रवृत्त्यनु-पपत्तिः । यद्यपि जलताडनाऽऽदेरपि "न कुर्यान्निष्फलं कर्म" इत्यादिना निषिद्धतया तदनुकूलकृतेरपि न-रकरूपबलवदनिष्टजनकतयाऽविगीताचारविषयत्वं सफलकर्मण्येवेति शिष्टपदमनर्थकं, तथापि पश्वादिकृत-

---

(१) अत्र फलत्वं स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम्, न तु जन्यत्वमात्रम् । अन्यथा मङ्गलध्वंस-मङ्गलज्ञान-विघ्नध्वंसाऽऽदीनामपि मङ्गलजन्यतया विशेषणाऽसिद्धेरिति विभावनीयम् ।

(२) कृतिरप्यत्र प्रवृत्तिरूपैव विवक्षिता । तेनेश्वरीयकृतिविषयत्वेऽपि जलताडनाऽऽदेर्न व्यभिचारः । प्रवृत्तेरिच्छाजन्यकृतित्वेनेश्वरीयकृतेस्तथात्वाऽसम्भवादिति ध्येयम् ।

(३) यत्र संशयोत्तरं विशेषदर्शनं, तत्र तस्मिन् क्षणे संशयस्य द्विक्षणाऽवस्थायित्वेन सत्त्वादुत्तरत्र च निश्चयोत्पादात्तत्र व्यभिचारवारणाय विशेषदर्शनाभावविशिष्टेत्युपात्तम् । कार्यव्यापकत्वे सति कार्यसमानकालवृत्तित्वरूपाया एव कारणताया अभ्युपगमान्नैष दोष इत्यत आह—वस्तुतस्त्विति । तादृशकारणताऽनभ्युपगमादिति भावः ।

मुक्तावली ।

**सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च समाप्तिरेव तत्फलं कल्प्यते । इत्थं च यत्र मङ्गलं न दृश्यते, तत्रापि जन्मान्तरीयं तत् कल्प्यते । यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते, तत्र बलव-**

दिनकरी ।

तर्हि गङ्गास्नानाऽऽदीनामदृष्टार्थकतेत्यत आह-**सम्भवतीति** । तथा च तत्र दृष्टाऽसम्भवेनाऽदृष्टकल्पनेति भावः । ननु तर्हि विश्वजिन्न्यायात्स्वर्ग एवेष्टं कल्प्यतामत आह-**उपस्थितत्वादिति** । आरब्धं कर्म मे निर्विघ्नं परिसमाप्यतामिति ग्रन्थाऽऽदौ प्रवृत्तपुरुषकामनाविषयत्वेन परिशेषानुमाने प्रवर्तमानस्योपस्थितत्वादित्यर्थः । **कल्प्यते**—अनुमीयते । अनेन च मङ्गलस्य समाप्तिहेतुत्वेऽनुमानमेव प्रमाणं, न तु शिष्टाचाराऽनुमिता श्रुतिः, इदानीमानुपूर्वीविशेषनिर्णयाऽभावेन तस्या अबोधकत्वादिति सूचितम् । व्यापकत्वघटितकारणताग्रहप्रतिबन्धकज्ञानविषय(१)व्यतिरेकव्यभिचारमुद्धरति—**इत्थञ्चेति** मङ्गलस्य समाप्तिफलकत्वे सिद्धे चेत्यर्थः । **तत्राऽपि**-नास्तिकादिग्रन्थेऽपि । **तत्**-मङ्गलम् । **कल्प्यते**-अनुमी-

रामरुद्री ।

वृथाचेष्टायां व्यभिचारवारकतया शिष्टपदसार्थक्यमेव, विधिनिषेधयोर्नराऽधिकारिकत्वेन तदीयवृथाचेष्टाया निषेधाऽविषयत्वेन बलवदनिष्टाऽजनकत्वादिति भावः । **ननु तर्हीति** । अदृष्टफलकल्पनाया अन्याय्यत्वे हीत्यर्थः । **विश्वजिन्न्यायादिति** । काम्यप्रकरणे "विश्वजिता यजेत" इति विधिः श्रूयते । काम्यप्रकरणपठितत्वेन तस्य नित्यत्वाऽभावात् प्रत्यवायपरिहाररूपफलस्याऽप्यभावात् प्रवृत्त्यर्थं किञ्चित्फलं कल्पनीयं, श्रुतौ फलाश्रवणादिति "स स्वर्गः सर्वान् प्रत्यविशिष्टत्वा" दिति जैमिनिना सूत्रं प्रणीतम् । सः-विश्वजिता साध्यः स्वर्गो भवितुमर्हति, स्वर्गस्य सर्वान् प्रत्यविशिष्टत्वात्सर्वेषामिच्छाविषयत्वादिति यावत् । तथा च विश्वजिद्यागस्य पुत्रादिफलकत्वे पुत्रवदादीनां(२) तत्र प्रवृत्तिर्न स्यात्, स्वर्गफलकत्वे तु तस्य सर्वेषामिच्छाविषयतया सर्वेषां तत्र प्रवृत्तिः सम्भवतीति स्वर्ग एव फलत्वेन कल्पयितुमुचित इति न्यायपर्यवसितोऽर्थः । तन्न्यायादत्राऽपि स्वर्ग एवेष्टं कल्प्यतामित्यर्थः । उपस्थितत्वादित्यनेन कस्योपस्थितत्वमुक्तमित्याकाङ्क्षायामाह—**परिशेषानुमाने प्रवर्तमानस्येति** । समाप्त्यन्याऽफलकत्वे सति सफलत्वहेतुकानुमान इति तदर्थः । ननु समाप्तित्वेन समाप्तेरुपस्थितिरकिञ्चित्करी, व्याप्तिघटकाभावादीनामप्युपस्थितत्वाऽविशेषादित्यत आह-**ग्रन्थादौ प्रवृत्तपुरुषकामनाविषयत्वेनेति** । तथा च तादृशकामनाविषयत्वप्रकारकोपस्थितिविषयत्वं नाऽन्येषामिति भावः । ग्रन्थाऽऽदौ प्रवृत्तिसमये ग्रन्थसमाप्तावेवेच्छाया औत्सर्गिकत्वात्तथात्वं बोध्यम् । **व्यतिरेकव्यभिचारमुद्धरतीति** । यद्यपि व्यतिरेकव्यभिचारनिश्चये सति कारणताया बाधितत्वेन समाप्तेर्मङ्गलकार्यत्वाऽसिद्ध्या समाप्तिरूपकार्येण मङ्गलाऽनुमितिरेव न सम्भवति, यदि तु जन्मन्तरीयमङ्गलसन्देहान्न व्यतिरेकव्यभिचारनिश्चयोऽपि तु सन्देह एव, स च न कारणत्वाऽनुमितौ प्रतिबन्धक इति समाप्त्या मङ्गलानुमानं सम्भवत्येवेत्युच्यते, तदा ग्राह्यसन्देहपर्यवसन्नतादृशव्यभिचारसन्देहस्याऽकिञ्चित्करत्वेन तादृशव्यभिचारोद्धारो विफल एव । तथाऽपि कारणत्वाऽनुमितावपि नास्तिकस्य जन्माऽन्तरीयमङ्गलसन्देहेन बाधितविषयकत्वसन्देहाद्ध्रुवत्यप्रामाण्यसन्देहः, अप्रामाण्यसन्देहाऽऽस्कन्दितकारणतानिश्चयो न स्वकार्याय क्षम इति तदुद्धार आवश्यक इति भावः । व्यतिरेकव्यभिचारेण समाप्तेः कार्यत्वाऽसिद्ध्या कथं समाप्तिकार्येण मङ्गलाऽनुमानमित्याऽऽशङ्कां निर-

---

(१) कार्यसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वज्ञानप्रतिबन्धकज्ञानविषयेत्यर्थः ।
(२) 'अपुत्राऽर्थिनां' इति पाठोऽन्यत्र ।

मुक्तावली।

**त्तरो विघ्नो विघ्नप्राचुर्य्यं वा बोध्यम्। प्रचुरस्यैवाऽस्य बलवत्तरविघ्ननिनिवारणे कारणत्वं बोध्यम्। विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः।**

दिनकरी।

यते। कार्यरूपसमाप्त्येति शेषः। ग्राह्यसन्देहपर्यवसन्नस्य पूर्वोक्तव्यभिचारसंशयस्य कारणताऽनुमितावप्रतिबन्धकत्वात् व्यभिचारनिर्णयस्य चाऽभावादिति भावः। नन्वेवमप्यन्वयव्यभिचारज्ञानं कारणताग्रहविरोधि भविष्यत्येवेत्याऽऽशङ्कयाऽन्वयव्यभिचारं निरस्यति—**यत्र चेति**। **तत्र**—कादम्बर्यादौ। **बलवत्तरत्वं**—वैजात्यम्। नन्वेवमपि कादम्बर्यादौ कुतो न विघ्नध्वंस? इत्यत आह—**प्रचुरस्येति**। प्रचुरस्यैव मङ्गलस्येत्यर्थः। **बलवत्तरविघ्ननिवारणे**—बलवत्तराऽऽदिविघ्ननिवारणे। तेन प्रचुरविघ्नस्याऽपि सङ्ग्रहः। तथा च मङ्गलस्य विघ्नसमसङ्ख्याकमङ्गलत्वेन नाशकतया न तत्र विघ्ननाश इति भावः। अत्र च विघ्नसमसङ्ख्याकमङ्गलत्वेन हेतुत्वेऽधिकसङ्ख्याकमङ्गलान्न्यूनसङ्ख्याकविघ्ननाशो न स्यादतः प्राचुर्यं वेत्यत्र वाकारोऽनास्थायां बोध्यः। ननु तथाऽपि कादम्बर्यादौ विघ्नध्वंसो मा जायतां, समाप्तिः परं जायतां, मङ्गलरूपहेतोः सत्त्वादित्याशङ्कयाऽऽह—**विघ्नध्वंसस्त्विति**। तथा च स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलाऽभावान्न समाप्तिरिति भावः।

**आहुरिति**—अस्वरसोद्भावनम्। तद्बीजं तु विघ्नध्वंसद्वारा मङ्गलस्य हेतुत्वं न सम्भवति, नास्तिकग्रन्थसमाप्तौ व्यभिचारात्। न च स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसाऽवच्छेदकतासम्बन्धेन मङ्गलस्य हेतुत्वात्,

रामरुद्री।

स्यति—**ग्राह्यसन्देहेत्यादिना**। ननु प्रचुरविघ्नस्थले यत्किञ्चिन्मङ्गलेन यत्किञ्चिद्विघ्नध्वंसस्याऽऽवश्यकतया स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलस्य सत्त्वात्कथमेतत्पक्षे समाप्त्यभाव इत्याऽऽशङ्कां निरस्यति—**तथा चेत्यादिना**। **विघ्नसमसङ्ख्याकेति**। तत्स्थलीयविघ्नेतराऽवृत्तित्वे सति सकलविघ्नवृत्तिर्या सङ्ख्या तत्सजातीया तत्स्थलीयमङ्गलेतराऽवृत्तितादृशसकलमङ्गलवृत्तिर्या सङ्ख्या, तादृशसङ्ख्यावन्मङ्गलत्वेनेत्यर्थः। अन्यथा विघ्नप्राचुर्येऽपि यत्किञ्चिद्विघ्नवृत्तिसङ्ख्यामादाय(१) मङ्गलस्य न्यूनतायामपि मङ्गलाऽन्यवृत्तिसङ्ख्यामादाय वा समसङ्ख्यत्वोपपादनसम्भवात्। **अधिकसङ्ख्याकमङ्गलादिति**। एतच्चाऽऽपाततः। निरुक्तविघ्ननिष्ठसङ्ख्यासजातीयतत्स्थलीयमङ्गलेतराऽवृत्तिसङ्ख्यावन्मङ्गलत्वेन कारणत्वेऽधिकसङ्ख्याकमङ्गलादपि स्वल्पविघ्ननाशसम्भवात्। वस्तुतस्तु प्रतिबन्धकसंसर्गाऽभावविधया सकलविघ्नाऽभावस्याऽपि समाप्तिहेतुत्वेन स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलसत्त्वेऽपि मङ्गलेतरयावत्कारणान्तर्गतयावत्प्रतिबन्धकाभावस्याऽसत्त्वादेव नाऽन्वयव्यभिचार इत्यत्रैव मूलतात्पर्यात् समसङ्ख्याकमङ्गलत्वेन कारणतावर्णनमयुक्तमेव। मूले तु(२) बलवत्तररूपवैजात्यकल्पनं गौरवग्रस्तमित्यभिप्रायेणैव(३) द्वितीयपक्षाऽवलम्बनमिति ध्येयम्।

**न च स्वजनकविघ्नध्वंसेति**। अत्र च स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन समाप्तिं प्रति मङ्गलस्य हेतुत्वात्, समाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन मङ्गलस्य हेतुत्वात्, स्वप्रतियोगिचरमवर्णाऽनुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रत्याऽऽश्रयतासम्बन्धेन मङ्गलस्य हेतुत्वाद्वेत्य-

(१) 'अन्यस्थलीयमङ्गलस्य तामादाय वा' इत्यधिकः पाठः।
(२) 'परन्त्विति' पाठोऽन्यत्र। (३) णैव अत्र 'मूले' इत्यपि पाठः।

दिनकरी ।

स्वप्रतियोगिचरमवर्णाऽनुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रत्याश्रयतासम्बन्धेन मङ्गलस्य हेतुत्वाद्वा जन्मान्तरीयमङ्गलकल्पनया न व्यभिचार इति वाच्यम् । तथा सति जन्मान्तरीयसमाप्तिमुद्दिश्य जन्मान्तरीयमङ्गलकरणाऽऽपत्तेः । अतः स्वप्रतियोगिचरमवर्णाऽवच्छेदकतासम्बन्धेन समाप्तिं प्रति स्वोत्पत्त्यवच्छेदकजातीयतासम्बन्धेन मङ्गलहेतुत्वस्य वाच्यतया नास्तिकशरीरे व्यभिचारस्य दुर्वारत्वात् । न च पुत्रकामाऽधिकरणविरोधः, सहकार्य्यन्तराऽसमवधानेनैहिकपुत्राऽभावेऽप्यामुष्मिकपुत्ररूपफलस्य तत्र सिद्धान्तितत्वादिति वाच्यम् । तत्र पुत्रमात्रकामनाश्रवणात् । इह तु विशिष्टशिष्टाचाराऽनुमितश्रुत्या ऐहिकसमाप्तेरेव मङ्गलफलत्वात् । नच स्वाऽवच्छेदकाऽवच्छिन्नप्रतियोगिकत्व-स्वाऽव्यवहितोत्तर-

रामरुद्री ।

न्वयेन कार्यकारणभावत्रयलाभः । तत्राऽऽद्यद्वयं शरीरनिष्ठप्रत्यासत्त्या, तृतीयस्त्वात्मनिष्ठप्रत्यासत्त्या । प्रथमकल्पे कारणतावच्छेदकसम्बन्धो द्वितीयकल्पे कार्यतावच्छेदकसम्बन्धश्च केवलाऽवच्छेदकतैव । स च सुगमत्वाद् ग्रन्थकृता नोक्त इति बोध्यम् । एतेन कार्यतावच्छेदकसम्बन्धस्य कारणतावच्छेदकसम्बन्धस्य चाऽतिगुरुभूतस्याऽऽचरणं प्रयोजनाऽभावाद् ग्रन्थकृतामनुचितमिति केषांचिदाऽऽक्षेपो निरवकाशः । अत एवोत्पत्तिपदमपि सार्थकम् । अन्यथा स्वजनकविघ्नध्वंसाऽवच्छेदकतासम्बन्धेन नास्तिकशरीरेऽपि समाप्त्युत्पत्त्या तत्राऽवच्छेदकतासम्बन्धेन मङ्गलविरहेऽपि स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन मङ्गलसत्त्वेन व्यभिचाराऽप्रसक्त्या तदुपादानवैयर्थ्याऽऽपत्तेरिति ध्येयम् । **जन्मान्तरीयसमाप्तिमिति** । न चेष्टापत्तिः, तथा शिष्टानामाचाराऽननुभवादिति भावः । अत्रेदमवधेयम्—मङ्गलाचरणस्य बहुवित्तव्ययाऽऽयाससाध्यत्वविरहेण ग्रन्थारम्भसमयेऽपि कर्तुं शक्यतया जन्मान्तरे ग्रन्थकर्तृत्वसामर्थ्यविरहदशायामेतदुपेक्षणसम्भवेन नेयमापत्तिः सम्भवति, न हि कश्चिद्भाविराज्यसम्भावनया स्वल्पवित्तसाध्यं श्वेतच्छत्रमावश्यकमर्जयति । ग्रन्थकरणसामर्थ्यसत्त्वे ग्रन्थसमाप्तिमुद्दिश्य मङ्गलमाचरतो ग्रन्थ-(करण)प्रवृत्तिरावश्यकी, आवश्यकी च तत्समाप्तिरिति । यदि च कदाचिद्विघ्नभूयस्त्वादिना न समाप्तिस्तथाऽपि न तत्र जन्मान्तरीयसमाप्तेरुद्देश्यता, भ्रान्त्या ऐहिकसमाप्तेरेवोद्देश्यतासम्भवादिति । **अतः स्वप्रतियोगीति** । न चाऽवच्छेदकतासम्बन्धेन समाप्तिं प्रतीत्येव वक्तव्यं, किं स्वप्रतियोगिचरमवर्णाऽवच्छेदकतापर्यन्तानुधावनेनेति वाच्यम् । यत्र वर्णोत्पत्तिद्वितीयक्षणे शरीरक्रियया शरीरस्यैतद्देशाद्विभागः, तेन च पूर्वसंयोगनाशः, तत्र तच्छरीरावच्छेदेन न वर्णनाशः, किन्तु शरीराऽधिकरणवृत्तिप्रमाऽऽद्यवच्छेदेनैवेति नाऽवच्छेदकतायाः कार्यतावच्छेदकसम्बन्धत्वमङ्गीकृतम् । **स्वोत्पत्त्यवच्छेदकजातीयतेति** । मङ्गलावच्छेदकशरीर एव समाप्तिरिति न नियमः, अवयवोपचयादिना समाप्तिसमये मङ्गलाऽवच्छेदकशरीरनाशात्, अतो जातीयतापर्यन्ताऽनुधावनम् । जातिश्चैकक्षणवृत्तिपदार्थद्वयाऽवृत्तित्वेन विशेषणीया । तेन जन्मान्तरीयशरीरस्याऽपि पृथिवीत्वादिना मङ्गलाऽवच्छेदकशरीरसजातीयत्वेऽपि न क्षतिः । तादृशी च जातिस्तत्तत्पुरुषीयतत्तज्जन्मीययावच्छरीरवृत्तिचैत्रत्वादिरेवेति नोक्तक्षतिः । यद्यपि स्वावच्छेदकजातीयतेत्युक्तावपि न दोष इत्युत्पत्तिप्रवेशवैयर्थ्यम् । तथापि विघ्नध्वंसस्याऽप्यनेनैव सम्बन्धेन हेतुत्वमिति लाभार्थैवाऽत्रोत्पत्तिपदप्रवेशः । मङ्गलस्याऽनेन सम्बन्धेन हेतुत्वे विघ्नध्वंसस्याऽप्यनेन सम्बन्धेन हेतुत्वमिति लाभसम्भवात् । विघ्नध्वंसस्य तु कारणतावच्छेदकसम्बन्धे उत्पत्तिप्रवेश आवश्यकः, अन्यथा जन्मान्तरीयसमाप्तेरपि विघ्नध्वंसफलत्वाऽऽपत्तेरिति मन्तव्यम् । यद्वा स्तुतिरूपमङ्गलस्य मीमांसकमते नित्यतया तदवच्छेदकत्वं शरीरस्य न सम्भवति, किं तु प्राकट्यरूपतदुत्पत्तेरेवेति मीमांसकमतसङ्ग्रहायैवोत्पत्तिपर्यन्तनिवेशनम् । **पुत्रकामाऽधिकरणेति** । "पुत्रकामः पुत्रेष्ट्या यजेत" इति विधौ पुत्रकामपदमधिकृत्य यो विचारस्तद्विरोध इत्यर्थः । **स्वावच्छेदकाऽवच्छिन्नेति** । आस्तिकनास्तिकाभ्यां युगपदत्र ग्रन्थसमाप्तिः कृता, तत्र नास्तिकीयसमाप्तेरप्यास्तिकीयमङ्ग-

दिनकरी।

क्षणोत्पत्तिकत्वोभयसम्बन्धेन मङ्गलजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य मङ्गलकार्यतावच्छेद-

रामरुद्री

मङ्गलजन्यविघ्नध्वंसाऽव्यवहितोत्तरक्षणोत्पत्तिकत्वेन तत्पूर्वमुक्तसम्बन्धेन कार्याऽधिकरणे मङ्गलविरहाद्व्यभिचार इत्यतः स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वनिवेशः। नास्तिकसमाप्तौ व्यभिचारवारणाय द्वितीयसम्बन्धप्रवेशः। स्वोत्तरत्वं च स्वाऽधिकरणक्षणध्वंसाऽधिकरणत्वमेव। तादृशक्षणोत्पत्तिकत्वं च नास्तिकसमाप्तिसाधारणमेवेत्यव्यवधाननिवेशेनैव नास्तिकसमाप्तिर्व्यावर्त्तनीया। तच्चाऽव्यवधानं यदि स्वाऽधिकरणक्षणध्वंसाऽधिकरणक्षणध्वंसानधिकरणत्वं, तदा आस्तिकीयसमाप्तेरप्यसङ्ग्रहः, स्वाऽधिकरणीभूतविघ्नध्वंसोत्पत्त्यधिकरणक्षणध्वंसाधिकरण—तद्द्वितीयक्षणध्वंसाऽनधिकरणत्वस्य समाप्त्युत्पत्तिक्षणे काऽप्य(१)सम्भवात्। यदि च स्व(२)ध्वंसाधिकरणक्षणध्वंसाऽनधिकरणत्वं तदित्युच्यते, तदाऽपि ध्वंसस्य ध्वंसाऽप्रसिद्ध्या तादृशोभयसम्बन्धेन ध्वंसविशिष्टाऽप्रसिद्धिरेव।

यत्तु स्वाऽधिकरण–तत्क्षणध्वंसाऽधिकरणक्षणध्वंसाऽनधिकरणत्वमेवाऽव्यवहितत्वं, तच्च सर्वत्र तत्क्षणपदेन समाप्त्यव्यवहितपूर्वक्षणव्यक्तिमादाय समाप्तिक्षणे सूपपादमेव। नास्तिकशरीरे व्यभिचारवारणं तु स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वदलेनैवेति केश्चित् प्रलपितं—तदत्यन्तमसत्। आत्मन्युत्पन्नस्य विघ्नध्वंसस्य ध्वंसाऽभावेन तदीयभोगायतनजन्मान्तरशरीरावच्छेदेनाऽपि तदात्मनि सत्त्वस्याऽऽवश्यकत्वात् प्रथमदलेन नास्तिकसमाप्तिवारणाऽसम्भवात्। अन्यथा जन्मान्तरार्जितपुण्यपापादेरपि जन्मान्तरीयशरीराऽवच्छेदेनाऽसत्त्वाऽऽपत्त्या तदवच्छेदेन भोगजनकता न स्यात्। न च 'स्वावच्छेदके'त्यस्य स्वोत्पत्त्य(३)वच्छेदकार्थकत्वात् नोक्तदोष इति वाच्यम्। तथा सति आस्तिकीयसमाप्तेरपि स्वो(४)त्पत्त्यवच्छेदकावच्छिन्नप्रतियोगिकत्वाभावेनाऽसङ्ग्रहप्रसङ्गात्। न च स्वोत्पत्त्यवच्छेदकजातीयाऽवच्छिन्नप्रतियोगिकत्व एव तात्पर्यमिति न कोऽपि दोष इति वाच्यम्। एवमपि निरुक्ताऽव्यवधाननिवेशे प्रयोजन(५)विरहेण तद्वैयर्थ्यस्य दुरुद्धरत्वादिति चेत्सत्यम्। स्वोत्तरजन्माऽनुत्तरत्वमेव प्रकृते अव्यवहितत्वम्। जन्म च आद्यशरीरप्राणसंयोगः। शरीरे आद्यत्वं च स्वसजातीयशरीरध्वंसाऽनधिकरणत्वम्। जातिश्च पूर्वोक्तैव ग्राह्या, अतो नाऽप्रसिद्धिः। एवं च नास्तिकीयसमाप्तेर्विघ्नध्वंसोत्तरजन्मोत्तरक्षणोत्पत्तिकत्वेनाऽव्यवधाननिवेशात्तद्वारणमव्याहतमेव। न च आस्तिकीयसमाप्तेरपि स्वोत्तरपुरुषान्तरीयजन्मोत्तरक्षणोत्पत्तिकतयाऽसङ्ग्रहो दुर्वार एवेति वाच्यम्। स्वाश्रयशरीराऽवच्छिन्नभोगाश्रयत्व–दैशिकविशेषणत्वोभयघटित(६)सामानाधिकरण्यसम्बन्धेन विघ्नध्वंसविशिष्टत्वेन जन्म-

---

(१) अयं भावः। मङ्गलकरणाऽनन्तरमेव समाप्तेरुत्पत्तिर्जायत इत्यवश्यमङ्गीकरणीयम्। समाप्तिश्च चरमवर्णध्वंसः। मङ्गलस्य विघ्नध्वंसहेतुत्वेन मङ्गलाऽव्यहितोत्तरक्षण एव विघ्नध्वंसः। तदनन्तरमेव हि समाप्तिप्रतियोगिचरमवर्णस्योत्पत्तिः। अनन्तरं च तस्य विनाश इति सर्वत्र विघ्नध्वंसानन्तरं बहुकाले व्यतीते एव समाप्तिरभ्युपेया। तथा च स्वाऽधिकरणक्षणध्वंसाऽधिकरणक्षणध्वंसाऽधिकरणे एव क्षणे समाप्त्युत्पत्तिरिति।

(२) इदं चाऽव्यवधानं द्विक्षणावस्थायिगुणेषु प्रसिद्धम्। तथा हि–शब्दः शब्दान्तरस्याऽव्यवहितोत्तरवर्ती। न चैवं पूर्वशब्दप्राक्क्षणानामपि तथात्वापत्तिः। स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपस्योत्तरत्वस्याऽपि तत्र निवेशितत्वादिति ध्येयम्।

(३) स्वाऽधिकरणक्षणध्वंसाऽनधिकरणसमयसम्बन्ध उत्पत्तिपदार्थः।

(४) मङ्गलकर्तृशरीरस्याऽवयवोपचयापचयादिना समाप्त्यवस्थायां विनष्टत्वेन स्वोत्पत्त्यवच्छेदकावच्छिन्नप्रतियोगिकत्वविरहात्।

(५) एतेनैव नास्तिकसमाप्तिवारणसम्भवादिति भावः।

(६) सामानाधिकरण्यं नाम तदधिकरणवृत्तित्वम्। दैशिकविशेषणतया विघ्नध्वंसाऽऽ

## दिनकरी।

कत्वान्न व्यभिचार इति वाच्यम्। कारणस्य कार्य्यतावच्छेदकत्वाऽनुपगमात्। अत एव "काशीमरणान्मुक्तिः" इति श्रुत्यन्तर्गतपञ्चम्याः प्रयोजकत्वपरत्वोपवर्णनं ग्रन्थकृतां सङ्गच्छते। अन्यथा तत्राऽपि काशीमरणविशिष्टमुक्तिं प्रति काशीमरणे हेतुत्वस्य(१) निर्दुष्टतया तथोपवर्णनमसङ्गतं स्यात्।

अथ "तमेव विदित्वाऽऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्या तत्त्वज्ञानस्य मुक्तिसामान्यं प्रति हेतुत्वं प्रतिपादितम्, तच्च काशीमरणस्य मुक्तिहेतुत्वे न सम्भवति, काशीमरणजन्यमुक्तौ तत्त्वज्ञानस्य व्यभिचारप्रसङ्गादतः काशीमरणस्य न मुक्तिजनकत्वम्, अपि तु तत्त्वज्ञानद्वारा मुक्तिप्रयोजकत्वमेवेति ग्रन्थकृतां तत्रत्यपञ्चम्याः प्रयोजकत्वपरत्वोपवर्णनं, न तु कारणस्य कार्य्यतानवच्छेदकत्वात्तथोपवर्णनमिति चेत्—

अस्तु कारणस्य कार्य्यतावच्छेदकत्वम्, अस्तु च पूर्वोक्तरीत्या मङ्गलजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य मङ्गलकार्य्यतावच्छेदकत्वेन नास्तिकशरीरे व्यभिचारवारणम्, एवमपि भोगादिनाश्यविघ्नध्वंसपूर्वकसमाप्तौ क्लृप्तनियतपूर्ववृत्तिताकेन ध्वंसेनैव मङ्गलस्थलीयसमाप्त्युपपत्तेर्मङ्गलस्याऽन्यथासिद्धत्वं दुर्वारमेव। न च व्यापारेण व्यापारिणो नाऽन्यथासिद्धिरिति वाच्यम्। यत्र व्यापारिणः प्रमाणबोधितकारणतानिर्वाहाय व्यापारस्य कारणत्वं कल्प्यते, यथा—यागस्य स्वर्गहेतुतानिर्वाहार्थमपूर्वम्, तत्रैव व्यापारेण व्यापारिणो नाऽन्यथासिद्धिः। अत एव काशीमरणस्य तत्त्वज्ञानेन मुक्तावन्यथासिद्धत्वात् प्रयोजकत्वपरतया श्रुतिसमर्थनं सङ्गच्छते। प्रकृते च प्रतिबन्धकाभावस्य कार्यमात्रे हेतुताया मङ्गलकारणतां विनाऽपि क्लृप्ततया मङ्गलस्याऽन्यथासिद्धत्वं दुष्परिहरमेवेति।

## रामरुद्री।

नो विशेषणीयत्वात्। न चैवमपि यादृशग्रन्थसमाप्त्यनन्तरं ग्रन्थकर्तुर्मुक्तिस्तादृशसमाप्तेरसङ्ग्रह एव, स्वोत्तरस्वसमानाधिकरण-जन्माऽप्रसिद्धेरिति वाच्यम्। स्वोत्तरचरमशरीराऽनुत्तरत्वस्यैवाऽव्यवधानपदार्थत्वेनाऽङ्गीकरणीयत्वात्। चरमत्वं च स्वसजातीयशरीरप्रागभावाऽनधिकरणत्वम्। इत्थं च समाप्त्युत्तरं मुक्तिस्थलेऽपि स्वोत्तरचरमशरीरप्रसिद्ध्या नाऽसङ्ग्रहः। उत्तरत्वनिवेशनं च यत्र नास्तिकेन मङ्गलाचरणं विनैव ग्रन्थसमाप्तिः कृता, तदनन्तरं तच्छरीरेणैवाऽऽस्तिकीभूय तदनन्तरजातविघ्नं मङ्गलाचरणेन नाशयित्वा ग्रन्थान्तरसमाप्तिः कृता, तत्रत्यपूर्वसमाप्तौ व्यभिचारवारणायैवेति दिक्॥

कारणस्य कार्यतानवच्छेदकत्वे प्राचां सम्मतिमाह—**अत एवेति**।

कारणस्य कार्यतावच्छेदककोटिप्रवेशाऽङ्गीकारेऽपि "काशीमरणान्मुक्ति"रित्यत्र पञ्चम्याः प्रयोजकत्वार्थकत्वोपवर्णनमावश्यकं, तथा च कारणस्य कार्यतानवच्छेदकत्वे न प्राचां सम्मतिरित्याशयेन शङ्कते—**अथेति**।

कारणस्य कार्यतावच्छेदककोटिप्रवेशसम्भवेऽपि समाप्तिं प्रति मङ्गलस्य न हेतुतासम्भवः, अन्यथासिद्धत्वादित्याशयेन समाधत्ते—**एवमपीति**।

---

श्रये स्वाश्रयशरीराऽवच्छिन्नभोगाश्रयत्वसम्बन्धेन वृत्तित्वमिति भावः। अन्यथा तादृशोभयसम्बन्धेन आद्यशरीरप्राणसंयोगरूपस्य जन्मन आत्मनि वृत्तित्वाऽप्रसिद्धेः। कालोपाधित्ववद्दिगुपाधित्वस्याऽपि नित्येष्वनङ्गीकारादित्यवधेयम्।

(१) 'काशीमरणहेतुत्वस्य' इति पाठः।

मुक्तावली ।

**नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् । न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् । इष्टापत्तेः, विघ्नशङ्कया तदाचरणात्, तथैव शिष्टा-**

दिनकरी ।

इदानीं विघ्नध्वंसस्य द्वारत्वमिच्छतां प्राचां मतेऽपि विघ्नध्वंसस्य कार्यत्वाऽऽवश्यकतया विघ्नो मे निवर्ततामिति कामनया मङ्गलाचरणेन च मङ्गलस्य विघ्नध्वंस एव फलमिति वदतां चिन्तामणिकृतां मतमाह—**नव्यास्त्विति** । 'विघ्नध्वंस एव'इत्येवकारेण समाप्तिव्यवच्छेदः । फलं—प्रवृत्त्युद्देश्यम् । ननु समाप्तिस्तर्ह्याकस्मिकी स्यादत आह—**समाप्तिस्त्विति** । बुद्धिर्ज्ञानम् । प्रतिभा–तद्विशेषः स्फूर्त्याख्यः । 'प्रतिभादि' इत्यादिना विघ्नसंसर्गाभावपरिग्रहः । अनयैव रीत्या कारीरीष्टिस्थलेऽप्यवग्रहनिवृत्तिरेव फलम्, वृष्टिस्तु स्वकारणादेवेति बोध्यम् ।

एवं—मङ्गलस्य विघ्नध्वंसं प्रति जनकत्वे । **स्वतः सिद्धविघ्नविरहवतेति** । विघ्नात्यन्ताभाववतेत्यर्थः । ननु निष्फले प्रवृत्तिरेव कथमत आह—**विघ्नशङ्कयेति** । संशयनिश्चयसाधारणविघ्नज्ञानमेव प्रवर्त्तकमिति भावः । तदाचरणात्–मङ्गलाचरणात् । ननु विघ्नसंशये मङ्गलाचरणमेवाऽसि(१)द्धमित्यत्राऽऽह—**तथैवेति । शिष्टाचारादिति ।** विषयतासम्बन्धेन मङ्गल इति शेषः ।

ननु निर्विघ्नपुरुषानुष्ठितमङ्गलस्थलेऽन्वयव्यभिचारेण विघ्नध्वंसं प्रति मङ्गलस्य कारणता बाधिता, तथा च बाधिताऽर्थबोधकत्वाद्वेदस्याऽप्रामाण्यमिति श्रुतेः कारणताबोधकत्वमङ्गी-

रामरुद्री ।

**विघ्नध्वंसस्य कार्यत्वाऽवश्यकतयेति** । तथा च प्राचीनमते समाप्तौ विघ्नध्वंसे च मङ्गलकार्यत्वमावश्यकं कल्पनीयमिति गौरवमिति भावः ।

**विघ्नो मे निवर्ततामिति कामनयेति** । साऽवधारणोऽयं निर्देशः । अन्यथा विघ्नध्वंसद्वारैव समाप्तेर्मङ्गलफलतया समाप्तिकामनाऽधीनविघ्नध्वंसकामनाया अपि मङ्गलाचरणप्रयोजकतया विघ्नध्वंसकामनया मङ्गलाचरणस्य प्रकृताऽनुपयोगप्रसङ्गात् । अथ वा, ननु उभयोर्मङ्गलकार्यत्वे गौरवेऽपि विघ्नध्वंसस्यैव मङ्गलफलत्वं विघ्नध्वंसकामनया मङ्गलाननुष्ठानान्न सम्भवति, यस्य यत्फलकत्वं, तत्कामनया तदनुष्ठाननियमादित्याशङ्कां निराकुरुते—**विघ्नो मे निवर्ततामित्यादिना** । ननु "विघ्नध्वंस एव मङ्गलफलं" इति मूलोक्तिरयुक्ता, फलपदस्य जन्याऽर्थकतया मङ्गलध्वंसस्याऽपि मङ्गलजन्यतया एवकाराऽसङ्गतेरित्याशङ्कां निराकुर्वन् फलपदं व्याचष्टे—**फलमिति । आकस्मिकीति** । यत्किञ्चित्कारणाऽनियम्येत्यर्थः । नन्वेवं कारीरियागस्याऽपि वृष्टिः फलं न स्यात्, यागेनाऽवग्रहनिवृत्तौ स्वकारणादेव वृष्टिसम्भवादित्याशङ्कामिष्टापत्त्या परिहरति—**अनयैवेति** । अवग्रहः वृष्टिप्रतिबन्धको दुरितविशेषः ।

**श्रुतेः कारणताबोधकत्वमिति** । विध्यर्थः केषाञ्चिन्मते शाब्दी भावना, केषाञ्चिदपूर्वं, न्यायमते त्विष्टसाधनत्वम् । तथा च मङ्गले विघ्नध्वंसकारणताया बाधितत्वेन शिष्टाचाराऽनुमितायाः "विघ्नध्वंसकामो मङ्गलमाचरेत्" इति श्रुतेरप्रामाण्याऽऽपत्तिः । न्यायमते तत्र विधिना मङ्गले विघ्नध्वंसकारणताया

(१) अयं भावः । विघ्नसन्देहस्य मङ्गलाचरणे प्रवर्त्तकत्वे विघ्नानामतीन्द्रियत्वेन तत्सङ्ख्याऽज्ञानाऽसम्भवेन तत्समसङ्ख्याकमङ्गलाचरणानुपपत्तिरिति । वस्तुतस्तु भक्तिश्रद्धातिशयपूर्वकमेव मङ्गलानुष्ठानाद्विघ्नोपशमः । तादृशातिशयाभावाच्च कादम्बर्यादौ विघ्नानुपशम इति ज्ञेयम् ।

मुक्तावली।

चारात्। न च तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम्। सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्। मङ्गलं च विघ्नध्वंसविशेषे कारणम्, विघ्नध्वंसविशेषे च विनायकस्तवपाठादि। क

दिनकरी।

कर्तुर्मते शङ्कां निरस्यति—**न चेति**। तस्य—निर्विघ्नपुरुषानुष्ठितमङ्गलस्य। **तद्बोधकेति**। मङ्गलविघ्नध्वंसयोः कार्यकारणभावबोधकेत्यर्थः। **सति विघ्न इति**। तथा चोपदर्शितस्थले प्रतियोगिरूपकारणाऽभावेन विघ्नध्वंसरूपकार्याऽनुदयोपपत्तौ कारणताया अबाधितत्वेन न कारणताबोधकवेदाऽप्रामाण्यमिति भावः। अत एव—नाशं प्रति प्रतियोगिनः कारणत्वादेव। **तद्बोधकवेदाप्रामाण्यमिति**। प्रायश्चित्तस्य पापनाशकत्वबोधकवेदाप्रामाण्यमित्यर्थः।

ननु मङ्गलं न विघ्नध्वंसे कारणम्, विनायकस्तवपाठादिजन्यविघ्नध्वंसे व्यभिचारात्, विनायकस्तवस्य मङ्गलत्वेऽपि तदनुकूलकण्ठाऽभिघातरूपस्य तत्पाठस्य मङ्गलत्वाभावात्। न च पाठकतासम्बन्धेन विनायकस्तव एव विघ्ननाशकः, स च मङ्गलमेवेति न व्यभिचार इति वाच्यम्। "सर्वे विघ्नाः शमं यान्ति" इत्यादिना तत्पाठस्याऽपि विघ्ननाशकत्वबोधनात्, प्रायश्चित्तजन्यविघ्नध्वंसे व्यभिचाराच्चेत्यत आह—**मङ्गलं चेति**। **स्तवपाठादीति**। आदिना प्रायश्चित्तपरिग्रहः। तथा च मङ्गलस्य स्वाऽव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन मङ्गलविशिष्टविघ्नध्वंसत्वं विजातीय-विघ्नध्वंसत्वं वा कार्यतावच्छेदकम्। एवं विनायकस्तवपाठादेरुपदर्शितसम्बन्धेन विनायकस्तवपाठादिविशिष्ट-विघ्नध्वंसत्वं विजातीय-विघ्नध्वंसत्वं वा कार्यतावच्छेदकमिति न व्यभिचार इति भावः।

ननु विघ्नध्वंस एव यदि मङ्गलस्य फलं तदा समाप्तिकामस्य मङ्गले प्रवृत्तिर्न स्यादतः समाप्तिसाधनविघ्नध्वंससाधनत्वान्मङ्गले प्रवृत्तिर्वाच्या, तच्च न सम्भवति, स्वतःसिद्धविघ्नविरहस्थले व्यभिचारेण विघ्नध्वंसस्य समाप्तिसाधनत्वाभावादिति शङ्कां निरस्यति—क

रामरुद्री।

एव प्रत्येतव्यत्वादिति भावः। ननु "सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्" इति मूलमसङ्गतम्, "स्वर्गकामो यजेत" इत्यादिवत् "विघ्नध्वंसे"त्यादावपि विघ्नध्वंसकारणत्वमेव विध्यर्थो वाच्यः, न तु "सति विघ्ने" इत्यपि, तद्बोधकपदाभावात्, अतस्तन्मूलतात्पर्यमाह—**तथा चेति**। "सति विघ्ने" इति मूले मङ्गलादिति शेषः। तथा च केवलदण्डात् घटाऽनुत्पत्तावपि "दण्डो घटकारणं" इति वाक्यस्य नाऽप्रामाण्यम्, सर्वदा दण्डे घटाऽव्यहितपूर्वत्वस्य तात्पर्याऽविषयत्वात्, किन्तु दण्डेतरयावद्घटकारणसत्त्वे दण्डे घटाऽव्यवहितपूर्वत्वमेव तात्पर्यविषयस्तद्वत्प्रकृतेऽपीति मूलाशयः।

**शमं यान्तीत्यादिनेति**। आदिना "गणेशस्तवपाठत" इत्यस्य सङ्ग्रहः। ननु स्तवपाठस्य विघ्नध्वंसकारणतायास्तादृशवाक्यबोधितत्वेऽपि पाठजन्यविघ्नध्वंसे मङ्गलस्य व्यभिचारो दुर्घट एव, स्तुतिरूपमङ्गलस्य पाठकतासम्बन्धेन कार्याऽधिकरणे वृत्तेरित्यतः स्थलान्तरे व्यभिचारं दर्शयति—**प्रायश्चित्तजन्येति**। विशेषपदार्थमेव प्रकटयन्नाह—**तथा चेति**। लाघवादाह—**विजातीयेति**।

**प्रवृत्तिर्न स्यादिति**। यद्धि यस्य फलं भवति तत्कामस्यैव तत्र प्रवृत्तिनियमादिति भावः। **प्रवृत्तिर्वाच्येति**। तृप्तिकामस्य तृप्तिसाधनौदनसाधने पाके प्रवृत्तिरिवेति शेषः। **व्यभिचारेणेति**।

मुक्तावली ।

**चिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनम् । प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात् । इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतः सिद्धविघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इति प्राहुः ॥**

॥ इति मङ्गलवादः ॥

दिनकरी ।

**चिदिति** । नन्वेवमननुगमः, अतोऽनुगतेन रूपेण कारणत्वे बीजमाह—**प्रतिबन्धकेति** । संसर्गाभावस्य—संसर्गाभावत्वेन संसर्गाभावस्य । तथा च विघ्नसंसर्गाभावत्वेन हेतुत्वान्न पूर्वोक्तव्यभिचार इति भावः ।

अत्र च तत्तद्विघ्नाभावत्वेन हेतुता, न तु विघ्नाभावकूटत्वेन । अन्यथा विघ्नप्रागभावादीनामेकत्राऽसम्भवेन समाप्तिर्न स्यादिति बोध्यम् ।

यत्र च मङ्गलं विनाऽपि समाप्तिस्तत्र विघ्नध्वंसाभाववति समाप्तेर्दर्शनाद् व्यतिरेकव्यभिचारमाशङ्क्य निषेधति—**इत्थं चेति** । दुरितध्वंसकल्पने तज्जनकीभूतमङ्गलकल्पने च गौरवादाह—**स्वतःसिद्धेति** ।

रामरुद्री ।

व्यतिरेकव्यभिचारेणेत्यर्थः । **संसर्गाभावत्वेन संसर्गाभावस्येति** । संसर्गाभावत्वावच्छिन्नस्येति पर्यवसितोऽर्थः । इदं च विवरणं संसर्गाभावस्य ध्वंसत्वादिना कारणत्वेऽपि न व्यभिचारनिरास इति यथाश्रुतमूलवाक्यस्योक्तशङ्काया अनिरासकत्वादिति बोध्यम् ।

ननु तत्तद्विघ्नाभावानां यदि विघ्नसंसर्गाभावत्वेन हेतुता, तदा यत्किञ्चिद्विघ्नसत्त्वेऽपि विघ्नप्रतियोगिकसंसर्गाभावस्य सत्त्वेन समाप्त्यापत्तिः । यदि विघ्नत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेन हेतुता, तदा ध्वंसप्रागभावयोर्न हेतुता, तयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाऽनङ्गीकारात् । यदि च विघ्नप्रतियोगिकसंसर्गाभावकूटत्वेन(१) हेतुता, तदा क्वाऽपि समाप्तिर्न स्यात्, ध्वंसप्रागभावादीनामेकदा एकत्राऽसत्वेन कूटाऽधिकरणत्वस्य कदाऽप्यसम्भवादित्याशङ्कां परिहर्तुमाह—**अत्र चेति** । **तत्तद्विघ्नाभावत्वेनेति** । तत्तद्विघ्नप्रतियोगिकसंसर्गाभावत्वेनेत्यर्थः । तेन भेदमादाय न विघ्नसत्त्वेऽपि समाप्त्यापत्तिः । न चैवमपि विघ्नसत्त्वे समाप्त्यापत्तिर्दुर्वारा, तत्तद्विघ्नव्यक्तेरपि द्वित्वादिनाऽत्यन्ताभावरूपसंसर्गाभावसत्त्वादिति वाच्यम् । तत्तद्विघ्नत्वेतरधर्मानवच्छिन्न–तत्तद्विघ्ननिष्ठ–प्रतियोगिताकसंसर्गाभावत्वेनेत्यर्थविवक्षयोक्तदोषप्रतीकारसम्भवात् । ध्वंसप्रागभावयोरपि विशेषधर्मावच्छिन्नप्रतियोगिताकत्वाङ्गीकारे तु तत्तद्विघ्नत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेनेत्यर्थकरणेऽपि न क्षतिरिति मन्तव्यम् ।

**विघ्नध्वंसाऽभाववतीति** । विघ्नसंसर्गाभावसामान्याभाववतीत्यर्थः । अन्यथा यथाश्रुते विघ्नध्वंसाभाववत्यऽपि विघ्नात्यन्ताभावसम्भवेन विघ्नसंसर्गाभावत्वेन हेतुत्वे व्यतिरेकव्यभिचाराऽसम्भवेनाऽसंलग्नतापत्तेः । तथा च यत्र मङ्गलं विनैव समाप्तिस्तत्र विघ्ननाशकमङ्गलाऽसत्त्वेन विघ्नस्यैव सत्त्वात् निरुक्ततद्विघ्नप्रतियोगिकस्य कस्याऽपि संसर्गाभावस्याऽसत्त्वेन तद्विघ्नसंसर्गाभावस्य व्यतिरेकव्यभिचारो दुर्वार एवेति भावः ।

---

(१) विघ्नप्रतियोगिकसंसर्गाभावत्वव्यापककूटत्वेनेति तदर्थः ।

दिनकरी ।

यत्र च मङ्गले सत्यपि न समाप्तिस्तत्र मङ्गलाद्विघ्नध्वंसो भवत्येव, समाप्त्यभावस्तु विघ्नभूयस्त्वात् तन्मङ्गलानन्तरोत्पन्नाद्विघ्नाद्वेत्यवधेयम् ।

अथ समाप्तिविघ्नध्वंसयोराकाशात्मनिष्ठयोः कथं कार्यकारणभावः ? इति चेत्-

उच्यते । स्वप्रतियोगिप्रयोजकत्वसम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति विशेषणतासम्बन्धेन विघ्नसंसर्गाभावत्वेन हेतुत्वमिति ।

वस्तुतस्तु "आहु" रित्येन सूचितामन्यथासिद्धिं प्रकटयति—**क चिच्चेति** । "विघ्नात्यन्ताभाव एव" इत्येवकारेण विघ्नध्वंसस्य तद्द्वारकमङ्गलस्य च व्यवच्छेदः । **समाप्तिसाधनम्**—समाप्त्यव्यवहितपूर्ववृत्तितया निश्चितः । तथा च तेनैव मङ्गलस्थलीयसमाप्तिनिर्वाहे मङ्गलस्य तज्जन्यविघ्नध्वंसस्य चाऽन्यथासिद्धिः । ध्वंसप्रागभावयोरत्यन्ताभावेन विरोधे मानाभावात् ध्वंसस्थलेऽप्यत्यन्ताभावसत्त्वादिति भावः । नन्वन्योन्याभावभिन्नाभावत्वेनैव लाघवाद्धेतुताऽस्त्वत आह-**प्रतिबन्धकसंसर्गेति** । प्रतिबन्धकसत्त्वेऽपि सम्बन्धान्तरावच्छिन्नाभावस्य सत्त्वात् कार्योत्पादवारणाय तत्तत्संसर्गावच्छिन्नप्रतियोगिताकाभावत्वेनैव हेतुत्वस्य वाच्यत्वेन न ध्वंसस्य हेतुता, तस्य संसर्गावच्छिन्नत्वे मानाभावा-

रामरुद्री ।

ननु यत्र सत्यपि मङ्गले न समाप्तिर्दृश्यते तत्र मङ्गलाद्विघ्नध्वंस एव न जात इत्यवश्यमङ्गीकरणीयं, अन्यथा तत्तद्विघ्नसंसर्गाभावानां सत्त्वेन समाप्तिविरहस्योपपादयितुमशक्यत्वात् , तथा चाऽन्वयव्यभिचारेण मङ्गलस्य विघ्नध्वंसफलकत्वं न शक्यते वक्तुमित्याशङ्कां निराकुरुते—**यत्र चेति** । **विघ्नभूयस्त्वादिति** । ननु मङ्गलानन्तरोत्पन्नविघ्नादपि तत्र समाप्त्यभावसम्भवेन नानाविघ्नव्यक्तीनां तत्कारणीभूतप्रागभावादीनां च कल्पने गौरवमतस्तथैऽऽवाह—**मङ्गलानन्तरेति** ।

**स्वप्रतियोगिप्रयोजकत्वेति** । स्वप्रतियोगिचरमवर्णाऽनुकूलकृतिमत्त्वसम्बन्धेनेत्यर्थः । न च स्वप्रयोजकत्वसम्बन्धेनेत्येव कुतो नोक्तम्, जीवात्मनि स्वानुकूलकृतिमत्त्वासम्भवेऽपि स्वजनकचरमवर्णजनककृतिजनकत्वरूपस्य स्वप्रयोजकत्वस्य सम्भवादिति वाच्यम् । निरुक्तप्रयोजकत्वस्य नानाजनकताघटितत्वेन गौरवादिति भावः ।

"क चिच्च" इत्यादि प्रकारान्तरेण व्याचष्टे—**वस्तुतस्त्वित्यादिना** । "समाप्तिसाधनं" इत्यस्य समाप्तिकारणमित्यर्थकत्वे "क चित्" इत्यस्याऽसङ्गतिः, तत्तद्विघ्नसंसर्गाभावत्वेन हेतुताया व्यवस्थापिततया सर्वत्रैवाऽभावत्रयस्याऽपि कारणत्वात् , नियतपूर्ववर्तितावच्छेदकधर्मवत्त्वस्यैव कारणतारूपत्वादतस्तत्पदं व्याचष्टे—**समाप्त्यव्यवहितेति** । ननु मङ्गलाद्विघ्नध्वंसस्थले ध्वंसप्रागभावाभ्यामत्यन्ताभावस्य विरोधात् विघ्नात्यन्ताभावस्यैवाऽसत्त्वेन कथं तेन विघ्नध्वंसस्याऽन्यथासिद्धिरित्यत आह—**ध्वंसप्रागभावेत्यादि** । **अन्योन्याभावभिन्नाभावत्वेनेति** । सर्वत्र विघ्नात्यन्ताभावसत्त्वेऽपि न विघ्नात्यन्ताभावत्वेन हेतुता सम्भवति, विघ्नसंसर्गाभावत्वापेक्षया नित्यत्वघटितस्य तस्य गुरुत्वात् , सति च लघुधर्मे गुरुधर्मस्य कारणतावच्छेदकत्वाऽनङ्गीकारात् , तथा चाऽऽयातमेव त्रयाणामपि कारणत्वेनेति भावः । **तत्तत्संसर्गेति** । प्रतिबन्धकतावच्छेदकसंसर्गेत्यर्थः । **वाच्यत्वेनेति** । तथा च "प्रतिबन्धकसंसर्गाभावस्य" इति मूलस्य प्रतिबन्धकतावच्छेदकसंसर्गावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थ इति भावः । **मानाऽभावादिति** । समवायेन घटाऽधिकरणे संयोगेन घटो नास्ति, संयोगेन घटाऽधिकरणे समवायेन घटो नास्तीति प्रतीत्या संयोग-समवाय-सम्बन्धावच्छिन्नघटाभावयोर्भेदोपपत्तये ह्यत्यन्ताभावप्रतियोगितायां सम्बन्धावच्छिन्नत्वमङ्गीक्रियते । ध्वंसे च तादृशयुक्त्यसम्भवेन संसर्गावच्छिन्नप्रतियोगिताकत्वमप्रामाणिकमेवेति भावः । नन्वेवं विघ्नध्वंसस्याऽकारणत्वे "दुरितध्वंसः स्वतःसिद्धविघ्नात्यन्ताभावो वा"

सङ्गः (१), अतः क चिद्विश्रामो वाच्यः, यत्र तु विश्रामः, तस्याऽनित्यत्वेऽसमवेत(भाव)कार्योत्पत्तिप्रसङ्गात् तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाऽणुपरिमाणतारतम्यस्याऽपि क चिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः (२)। न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम्। त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनु-

दिनकरी।

परिमाणकारणीभूताया अवयवसङ्ख्याया उभयत्र साम्यादिति भावः। न च मेर्ववयवानां सर्षपतुल्यपरिमाणवत्त्वं, न तु सर्षपावयवानां सर्षपतुल्यपरिमाणवत्त्वमित्यवयवपरिमाणविशेषाद्विशेष इति वाच्यम्। मेर्ववयवसर्षपावयवयोरप्यनन्तावयवत्वेन तत्परिमाणतारतम्याभावस्याऽप्यापादनीयत्वात्। न च मेरुसर्षपयोरवयवगतप्रचयाख्यसंयोगविशेषात्तद्विशेष इति वाच्यम्। प्रचयविशेषस्याऽपि सङ्ख्याविशेषनियम्यत्वेन सङ्ख्याविशेषाभावे तद्विशेषानुपपत्तेरिति। ननु तथाऽपि विश्रामाश्रयस्य नित्यत्वे मानाभाव इत्यत आह—**यत्र त्विति**। **असमवेतेति**। असमवेतभावकार्योत्पत्तिप्रसङ्ग इत्यर्थः। ननु तस्य नित्यत्वसिद्धावप्यणुत्वे किं मानमित्यत आह—**महत्परिमाणेति**। **चाक्षुषद्रव्यत्वादिति**। आत्मनि व्यभि-

रामरुद्री।

दिति भावः। **कारणीभूताया इति**। परमाणूत्कर्षापकर्षप्रयोजिकाया इत्यर्थः। **साम्यादिति**। **साम्यमत्र** उभयावयवनिष्ठाभावप्रतियोगित्वमेव, न त्वेकजातीयत्वम्, अवयवधाराया अविश्रान्तत्वे तत्सङ्ख्याया एवाऽसिद्धेरिति ध्येयम्। **संयोगविशेषादिति**। मुष्टिपरिमिततूलस्य यथा प्रचयविशेषेण परिमाणतारतम्यमनुभवसिद्धं, तथा मेरोरवयवेषु अत्यन्तशिथिलसंयोगात् मेरुपरिमाणस्योत्कर्षः, सर्षपावयवेषु च किञ्चिच्छिथिलसंयोगात्तत्परिमाणस्याऽपकर्ष इति भावः। **सङ्ख्याविशेषनियम्यत्वेनेति**। यद्यप्यवयवानां सङ्ख्यासाम्येऽपि प्रचयविशेषेण परिमाणतारतम्यमनुभूयते, तथाऽपि सर्षपावयवेषु दृढतरसंयोगेनाऽपि परिमाणापकर्षासम्भव इत्यत्र तात्पर्यम्। वस्तुतो मेरोरवयवेषु सर्षपावयवापेक्षयोत्कृष्टप्रचयाङ्गीकारे सर्षपापेक्षया मेरौ मार्दवापत्तिरेव बाधिकेति विभावनीयम्। **मूले—असमवेतेत्यादि**। ननु ध्वंसस्याऽसमवेतकार्यस्य सिद्धान्तिभिरप्युत्पादाङ्गीकारादापत्तिरियमसङ्गतेत्यत आह—**असमवेतभावेति**।

---

(१) मेरुर्यदि सर्षपविशिष्टः स्यात्सर्षपपरिमाणतुल्यपरिमाणवान् स्यादित्यापत्तिः। सर्षपवैशिष्ट्यं च स्वाश्रयत्व—स्वप्रयोजकावयवत्ववत्त्वोभयसम्बन्धेन। स्वाश्रयत्वं च स्वप्रयोजकावयवकूटवदवयवप्रयोज्यत्व—स्ववृत्तित्वोभयसम्बन्धेन। स्ववृत्तित्वमपि स्वप्रयोजकावयवप्रयोज्यत्वसम्बन्धेन। कूटवत्त्वं च स्वीयपरिमाणतुल्यपरिमाणवत्त्वसम्बन्धेन। स्वप्रयोजकावयवत्ववत्त्वं च स्वव्यापकतानवच्छेदकसङ्ख्याविभाजकधर्मावृत्तित्व—स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकसङ्ख्याविभाजकधर्मवृत्तित्वान्यतरसम्बन्धेन। प्रथमवृत्तित्वं स्वप्रयोजकावयवकूटत्वव्यापकतावच्छेदकत्वसम्बन्धेन। द्वितीयवृत्तित्वं स्वप्रयोजकावयवत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकत्वसम्बन्धेनेति तदर्थः। तेनाऽवयवधाराया अनन्तत्वेऽपि तादृशानन्तावयवारब्धानां त्रसरेणूनामेव साम्यं युक्तं, मेरुसर्षपयोस्त्वारम्भकत्रसरेणूनामेव सङ्ख्यातारतम्येन परिमाणतारतम्यमुपपद्यते इति मेरौ सर्षपसमानताऽऽपत्तिः कथमुक्ता मूलकारेणेति केषां चिदाशङ्का प्रत्युक्ता।

(२) अणुपरिमाणतारतम्यं क चिद्विश्रान्तं परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवदित्यनुमानम्। ननु परमाणोरसिद्धौ अणुपरिमाणस्यवाऽसिद्ध्या तत्तारतम्यरूपपक्ष।-

**मानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः । न चेदमप्रयोजकम् , अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकत्वात् । न चैवंक्रमेण तदवयवधाराऽपि सिद्ध्येदिति वाच्यम् । अनवस्थाभयेन तदसिद्धेरिति (१) । इति परमाणुसाधनम् ॥**

दिनकरी ।

चारवारणाय चाक्षुषपदम् । घटाभावे व्यभिचारवारणाय द्रव्यपदम् । **तदवयवसिद्धाविति** । त्रसरेण्ववयवसिद्धावित्यर्थः । **तदसिद्धेरिति** । अवयवधाराया असिद्धेरित्यर्थः ।

**अत्र नव्याः**,'त्रसरेणोरवयवाः सावयवाः-'इत्याद्यनुमानयोरुक्तयोरप्रयोजकत्वेन त्रुटावेव विश्रामः । न च चाक्षुषं प्रति महत्त्वं कारणं, तथा च त्रुटौ महत्त्वमावश्यकं, तच्चाऽवयवसङ्ख्याजन्यमित्यवयवं विना तन्नोत्पद्यत इत्यनुकूलतर्कसत्त्वान्नाऽप्रयोजकत्वं द्व्यणुकसाधकानुमानस्येति वाच्यम् । त्रसरेणुमहत्त्वस्य नित्यत्वस्वीकारेणोक्ततर्कानवतारात् । न चाऽणुव्यवहारस्याऽणुपरिमाणनिबन्धनतया तदाश्रयद्रव्यसिद्धिरावश्यकीति वाच्यम् । तस्याऽपकृष्टपरिमाणनिबन्धनत्वात् , महत्यऽपि महत्तमादणुव्यवहारात् । न चैवं त्रसरेणुपुञ्ज एवाऽस्त्ववयवीति वाच्यम् । विशकलितेष्वपि तेषु घट इत्यादिप्रत्ययप्रसङ्गात् । न च तत्संयोगवृत्त्यैव घटत्वं, घटो द्रव्यमित्यादिप्रतीतौ च परम्परया तद्भानमिति वाच्यम् । सम्भवति साक्षात्सम्बन्धविषयत्वे परम्परासम्बन्धविषयत्वकल्पने गौरवादित्याहुः ।

ननु परमाणुत्रयेण कुतो न द्रव्यान्तरोत्पत्तिः परमाणुद्वयेन द्व्यणुकवत् , एवं द्व्यणुकद्वयेन द्रव्यान्तरोत्पत्त्यापत्तिः त्रिभिर्द्व्यणुकैस्त्र्यणुकवदिति चेन्न। प्रमाणाभावेन तादृशद्रव्यासिद्धौ परमाणुत्रये द्व्यणुकद्वये च द्रव्यारम्भकसंयोगाकल्पनात् । अत्रेदं चिन्त्यम् । त्रिभिः परमाणुभिरेव त्र्यणुकमस्तु, परमाणुभ्यामनारम्भस्तु सिद्धान्तिनां द्व्यणुकाभ्यामनारम्भ इव मानाभावात् फलबलेन त्रयाणामेव युगपत् द्रव्यारम्भकसंयोगकल्पनात् ।

रामरुद्री ।

**मूले—अनेकद्रव्यवत्त्वस्येति** । स्वसमवेतसमवेतत्वसम्बन्धेन नानाद्रव्यवत्त्वस्येत्यर्थः, न तु समवेतत्वसम्बन्धेन तथात्वं तदर्थः, तथा सति परमाणुसाधकानुमानस्याऽप्रयोजकत्वशङ्काया अनिवृत्तेरिति ध्येयम् ।

**परम्परयेति** । घटो द्रव्यमित्यादिप्रतीतौ स्वाश्रयसमवायित्वसम्बन्धेन घटत्वभानमित्यर्थः । **'आहुः'** इत्यनेन विलक्षणसंयोगविशिष्टाणुपुञ्ज एव घटत्वाङ्गीकारे नैष दोष इत्यस्वरसः सूचितः ।

**प्रमाणाभावेनेति** । तादृशद्रव्ये इत्यादिः । त्र्यणुकस्य प्रत्यक्षसिद्धतया तदन्यथानुपपत्त्या द्व्यणु-

---

प्रसिद्धेरुक्तानुमाने दुर्वारता । यदि च महत्त्वापकर्ष एवाऽणुपरिमाणत्वेनाऽऽख्यायत इत्युच्यते, तदा तस्य त्रसरेणावेव विश्रान्तत्वेन परमाणोरसिद्धिरेव, अणुत्वत्व-महत्त्वत्वजात्योर्जातिसङ्करापत्तिश्च, इत्याशङ्क्य परमाणुसाधकप्रमाणान्तरोपन्यासाय शङ्कते—न चेत्यादिना ।

( १ ) परमाणोरवयवा वर्तन्ते, त्रयाणां परमाणूनां संयोगस्यैव तदनुमापकत्वात् , तथा हि परमाणुः परमाणुना सम्बध्यते चेदेकदेशेन वा कात्स्न्येन वा ? आद्ये तदवयवसिद्धिः, द्वितीये संयोगस्याऽव्याप्यवृत्तितानियमभङ्गादपसिद्धान्तः, द्व्यणुकस्य प्रथिमानुपपत्तिश्चेति यत् केषां चिन्मतं, तदत्यन्तमसत् । निरवयवेष्वीदृशशङ्कायाः स्वात्मलाभासम्भवात् । यथा हि निरवयवेनाऽऽकाशेन घटपटादयः सम्बद्ध्यन्ते परं, न तेनाऽऽकाशोऽवयवी, तथैव परमाणुष्विति ।

सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥
योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम्।

सा चेति। सा-कार्यरूपा पृथिवी त्रिविधा, शरीरेन्द्रियविषयभेदादित्यर्थः। तत्र देहमुदाहरति—योनिजादिरिति। योनिजमयोनिजं चेत्यर्थः।

योनिजमपि द्विविधं-जरायुजमण्डजं चेति। जरायुजं मानुषादीनाम्। अण्डजं-सर्पादीनाम्। अयोनिजं स्वेदजोद्भिज्जादिकम्।

स्वेदजाः-कृमिदंशाद्याः। उद्भिज्जाः-तरुगुल्माद्याः। नारकिणां शरीरमप्ययोनिजम्।

दिनकरी।

वस्तुतो गवाक्षरन्ध्रे दृश्यमानानां द्व्यणुकत्वमेव युक्तम्, अणुद्वयारब्धत्वे लाघवादिति ॥

इति परमाणुसाधनम् ॥

मूलस्थस्य 'देहमिन्द्रियं विषयस्तथा' इत्यस्य त्रैविध्ये हेतुपरत्वं सूचयितुमर्थमाह—सा-कार्यरूपेति।

योनिजं—शुक्रशोणितयोः परस्परमेलनजन्यं, तद्भिन्नमयोनिजम्। जरायुजमिति। गर्भवेष्टनचर्मपुटकं जरायुः। मानुषादीनामित्यादिना पशुमृगादीनां (१) परिग्रहः। सर्पादीनाम्'इत्यादिना विहङ्गमादिपरिग्रहः।

स्वेदजमुदाहरति—कृमिदंशाद्या इति। तच्छरीराणामुत्पत्तेरधर्मविशेषसहितेभ्योऽणुभ्य एव स्वीकारादिति भावः। 'उद्भिज्जादिकम्' इत्यादिना देवादिशरीरपरिग्रहः, तच्छरीराणामुत्पत्तेर्धर्मविशेषसहितेभ्योऽणुभ्य एव स्वीकारादिति भावः। तेषामयोनिजत्वे त्वा-

रामरुद्री।

कसिद्धिसम्भवेऽपि परमाणुत्रयारब्धद्रव्यादेः सिद्ध्यसम्भवादिति भावः। लाघवादिति। न चैवं तस्य त्र्यणुकपदवाच्यत्वानुपपत्तिरिति वाच्यम्। अप्रत्यक्षद्व्यणुकवासनावासितैरेव तथा व्यवह्रियमाणत्वात्।

"जालसूर्यमरीचिस्थं यत् सूक्ष्मं दृश्यते रजः।
प्रथमं तत् प्रमाणानां त्रसरेणुरिति स्मृतः—"

इति स्मृतौ त्रसरेणुपदस्यैव प्रयोगात्, तत्पदञ्च मण्डपादिपदवत् केवलरूढमेव। यद्वा त्रिभिः सहितो रेणुस्त्रसरेणुः, हितलोपः आर्ष इत्येव तत्राऽस्तु व्युत्पत्तिरिति भावः। एतदपेक्षयाऽपि त्र्यणुकनित्यतायामेव लाघवं, परमाण्वादिकल्पने गौरवादिति ध्येयम्। हेतुपरत्वं-कार्यपरत्वम्। परमाणोर्विषयत्वेऽपि 'विषयस्तथा' इत्यस्य जन्यविषयार्थकतया परमाणोस्तथात्वं नाऽस्त्येव, अत एव कारिकायामग्रेऽपि "विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्तः—" इत्येवं वक्ष्यतीति भावः॥ इति परमाणुसाधनम्॥

योनिजमित्यस्य योनिद्वारा निर्गतमित्यर्थकत्वे कदा चित् स्वेदजस्याऽपि योनिद्वारा निर्गमसम्भवादतिव्याप्तिरित्याशङ्कापरिहाराय व्याचष्टे—शुक्रेति। पशुमृगादीनामिति। यद्यपि पशुपदस्य लोमवल्लाङ्गुलवद्वाचकतया तेनैव मृगसंग्रहे पृथङ्मृगपदोपादानं व्यर्थं तथाऽपि गोवलीवर्दन्यायेन, लाङ्गूलरहितस्याऽपि मृगविशेषस्य सम्भवाभिप्रायेण वा तदुपादानमिति बोध्यम्। विहङ्गमादीत्यादिना वल्लीप्रभृतीनां परिग्रहः।

दंशाद्या इति। ननु कृम्यादीनामपि शरीरं शुक्रशोणितमेलनजमेव, शरीरमात्रस्य तथात्वादित्याशङ्कायामाह—तच्छरीराणामिति। तेषामिति। देवादिशरीराणामित्यर्थः, न तु कृम्यादिशरीराणा-

(१) ग्राम्याश्चतुष्पदः पशवः, आरण्याश्च ते मृगा इत्याख्यायन्ते।

न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम् । गन्धादिमत्त्वस्यैव प्रमाणत्वात् । न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम् । तथा सति जलत्वपृथिवीत्वादिना सङ्करप्रसङ्गात् । न च तर्हि जलीयत्वादिकमेवाऽस्तु, न तु पार्थिवत्वमिति वाच्यम् । क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात्, गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः, तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम् ।

शरीरत्वं न जातिः, पृथिवीत्वादिना साङ्कर्यात् । किन्तु चेष्टाश्रयत्वं वृक्षादीनामपि चेष्टाश्रयत्वान्नाऽव्याप्तिः । न च वृक्षादेः शरीरत्वे किं मान-

दिनकरी ।

गम एव—"ब्रह्मणो मानसा मन्वादयः पुत्राः" इत्यादिः प्रमाणम् । "योनिं विना न शरीरम्" इत्येवंविधागमे च योनिपदं कारणमात्रपदं, शरीरपदं मनुष्यदेहपरं वा ।

**'गन्धादि'** इत्यानिना शुक्लेतररूपपरिग्रहः । **'क्लेदोष्मादेः'** इत्यादिना व्यूहावकाशपरिग्रहः । **क्लेदः**—क्षरणं, स्वेद इति यावत् । **ऊष्मा**—पाकः औष्ण्यमिति यावत् । तच्च शरीरसम्बन्धेन पुष्पादौ रूपादिपरावृत्त्याऽनुमीयते, अनुष्णात् तदनुत्पत्तेः । **व्यूहः**—क्रिया । **अवकाशः**—मुखादावन्नादिगत्यप्रतिबन्धः । ननु कथं तर्हि शरीरे पाञ्चभौतिकत्वव्यवहार इत्यत आह—**तेनेति** । शरीरस्य पार्थिवत्वसाधनेनेत्यर्थः । एवं च शरीरे पाञ्चभौतिकत्वव्यवहारो न पञ्चभुतोपादानकत्वनिबन्धनः, किन्तु तज्जन्यत्वनिबन्धनः, तत्राऽप्येकैकस्योपादानत्वं, चतुर्णां निमित्तत्वमिति विवेकः ।

**किन्तु चेष्टेति** । चेष्टात्वं—जातिविशेषः, चेष्टत इतिप्रत्यक्षसिद्धः । न च शरीरत्वमेव पृथिवीत्वादिव्याप्यजातिः, चेष्टात्वं तु तत्क्रियात्वमिति वाच्यम् । पृथिवीत्वादिना

रामरुद्री ।

मित्यर्थः, उत्तरत्र वक्ष्यमाणप्रमाणस्य तेषामयोनिजत्वसाधकत्वाभावादिति ध्येयम् । **योनिं विनेति** । शुक्रशोणितमेलनं विनेत्यर्थः । **कारणमात्रपरमिति** । नन्वेवं कार्यमात्रस्यैव कारणं विनाऽसम्भवाच्छरीरमात्रस्य कारणं विनाऽनुत्पत्तिकथनं न युज्यते इत्याशङ्कायामाह—**शरीरपदमिति** । अत्र मनुष्यपदं पश्वादीनाप्युपलक्षकम् ।

ननु मानुषादिशरीरे पृथिवीत्वसाधनाय मूले **'गन्धादिमत्त्वात्'** इति हेतुरुपन्यस्तः, तत्र हेतौ आदिपदं व्यर्थं, केवलगन्धस्यैव पृथिवीत्वाव्यभिचारित्वात् । न चाऽऽदिपदं हेत्वन्तरसूचनायेति वाच्यम् । गुणान्तरस्यैव पृथिवीत्वव्यभिचारित्वेन तदभावादित्यत आह—**'गन्धादि' इत्यादिनेति** । तथा च नीलादिहेत्वन्तरसूचनायैवाऽऽदिपदमिति भावः । शरीरस्याऽद्रवत्वेन क्षरणासम्भवादाह—**स्वेद इतीति** । ननु पाको रूपपरावर्त्तकतेजःसंयोगः, स च पृथिवीत्वस्यैव साधकः, न तु तेजस्त्वस्य, पृथिवीभिन्ने पाकानङ्गीकारादत आह—**औष्ण्यमितीति** । उष्णस्पर्श इत्यर्थः । **व्यूहः—क्रियेति** । यद्यपि क्रियावत्त्वं न वायुत्वसाधकं, तस्य पञ्चद्रव्यसाधारणत्वात्, तथाऽपि वायोरेव सदागतिमत्त्वेन क्रियापदस्याऽत्र सर्वदा क्रियावत्त्वार्थकतया न तेन वायुत्वसाधनानुपपत्तिः । न च सुषुप्तिदशायां शरीरेऽपि क्रियाविरहात् स्वरूपासिद्धिरिति वाच्यम् । तदानीमपि श्वासादिप्रयुक्तक्रियासत्त्वादिति भावः । **चतुर्णामिति** । यद्यपि जलपरमाण्वादिसंयुक्तपार्थिवपरमाणुष्वेव घट इव शरीरमुत्पद्यत इति वाय्वन्तत्रयाणां तत्र कारणत्वं, जलसम्बन्धाभावे संश्लेषाभावेन अवयव्यनुत्पादादुष्णस्पर्शसर्वदागत्यभावापत्त्या च जलादीनां कारणतासम्भवादाकाशसंयोगस्याऽव्यावर्त्तकतया कथं तस्य कारणत्वं, तथाऽपि निविडपाषाणादौ भेकादीनामनुत्पत्त्याऽवकाशविधयाऽऽकाशस्य शरीरकारणत्वमिति मन्तव्यम् । **विवेक इति** । भेद इत्यर्थः ।

मिति वाच्यम्। आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात्। तत्रैव किं मानमिति चेत्, भग्नक्षतसंरोहणादिना तदुन्नयनात्। यदि हस्तादौ शरीर-व्यवहारो न भवति, तदाऽन्त्यावयवित्वेन विशेषणीयम्। न च यत्र शरीरे चेष्टा न जाता तत्राऽव्याप्तिरिति वाच्यम्। तादृशे प्रमाणाभावात्। अथ वा चेष्टावदन्त्यावयविवृत्ति-द्रव्यत्वव्याप्य-जातिमत्त्वम्, अन्त्यावयविमात्रवृत्ति-चेष्टावद्वृत्ति-जातिमत्त्वं वा तत्, मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः। न च नृसिंहशरीरे कथं लक्षणसमन्वयः? तत्र नृसिं-

दिनकरी।

सङ्करेण पृथिवीत्वादिव्याप्यानेकशरीरत्वकल्पने गौरवात्। **आध्यात्मिकेति। आध्यात्मिकवायुः**-प्राणाख्यः। शङ्कते-**तत्रैवेति। भग्नक्षतेति।** भग्नक्षतयोः-विभागविशेषविश्लिष्टावयवयोः, संरोहणादिकम्, आदिना वृद्धिसंग्रहः। वृद्धिश्चाऽवयवोपचयः। **तदुन्नयनादिति।** आध्यात्मिकवायुसम्बन्धानुमितेः। ननु भग्नक्षतसंरोहणादिहेतुगतवायोः प्राणत्वे प्रमाणाभाव इति चेन्न।

"नर्मदातीरसञ्जाताः सरलार्जुनपादपाः। नर्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम्॥
गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः। श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः-"

इत्यागमस्यैव तत्र मानत्वात्। **अन्त्यावयवित्वेनेति।** द्रव्यानारम्भकद्रव्यत्वेनेत्यर्थः। मृतशरीरे चेष्टाया अभावेनाऽव्याप्तेराह—**अथ वेति।** घटत्वमादाय घटेऽतिव्याप्तिवारणाय—**चेष्टावदिति।** हस्तादावतिव्याप्तिवारणायाऽ**न्त्यावयवीति।** न च हस्तत्वादिकं न जातिः, पृथिवीत्वादिना सङ्करादिति वाच्यम्। पृथिवीत्वादिव्याप्यनानाहस्तत्वाद्यङ्गीकारात्। पृथिवीत्वरूपतादृशजातिमति घटादावतिव्याप्तिरतो लक्षणान्तरमाह—**अन्त्यावयवीति।** 'अन्त्यावयविमात्रवृत्ति' इत्यनेन पृथिवीत्वजातिव्युदासः। 'चेष्टावद्वृत्ति' इत्यनेन घटत्वादिव्युदासः। चेष्टा च हिताहितप्राप्तिपरिहारार्था क्रिया ग्राह्या, न तु स्पन्दनमात्रं ग्राह्यं, घटादावपि सत्त्वात्। ननु देवत्वजातिमादाय लक्षणसमन्वय इत्यत आह—

रामरुद्री।

**न चेति।** विनिगमनाविरहेणेति शेषः। **तत्क्रियात्वं**-शरीरसमवेतक्रियात्वम्। **सङ्करेणेति।** पृथिवीत्वं विहाय शरीरत्वस्य जलशरीरादौ, शरीरत्वं विहाय पृथिवीत्वस्य घटादौ, उभयोश्च मानुषादिशरीरे सत्त्वेनेत्यर्थः। **उपचयः**—आधिक्यम्। **तत्रेति।** तादृशवायोः प्राणत्व इत्यर्थः। **मानत्वादिति।** धर्मविशेषेणोत्तमगतिप्राप्तेर्वृक्षस्य जीवशरीरत्वमावश्यकं, तच्छरीरिजीवस्यैवोत्तमगतिप्राप्तिसम्भवात्, जीवात्मनो भोगायतनस्य च प्राणवत्त्वनियमादिति भावः। **मृतशरीर इति।** न च मृतशरीरेऽपि पूर्वं चेष्टासत्त्वात् कथमव्याप्तिः? न हि यदा यस्य चेष्टावत्त्वं, तदा तस्य शरीरत्वमिति कालघटितं लक्षणमिति वाच्यम्। यत्र मरणानन्तरं खण्डशरीरान्तरमुत्पन्नं, तत्राऽव्याप्तौ तात्पर्यात्। **न चेति।** यद्यपि हस्तत्वस्य जातित्वाभावेऽपि पृथिवीत्वादिकमादायैवाऽतिव्याप्तिः प्रसज्यते एव, तथाऽपि पृथिवीत्वादिकमादायैतल्लक्षणे घटादावतिव्याप्तेर्वक्ष्यमाणतया तदादाय व्यावृत्तिप्रदर्शनमनुचितमिति हस्तत्वस्य जातित्वसाधनाय परिश्रमः। नन्वत्र शरीरलक्षणप्रविष्टं चेष्टात्वं यदि शरीरक्रियानिष्ठजातिविशेषः, तदा मन्त्रादिमहिम्ना नोदनं विनाऽपि यत्राऽचेतने घटादौ क्रियोत्पत्तिः, तत्राऽपि मन्त्रमहिम्ना घटश्चेष्टत इति प्रयोगात्तत्राऽपि तादृशजातेरङ्गीकरणीयतया घटत्वमादाय घटादावतिव्याप्तिः। यदि च शरीरक्रियात्वं चेष्टात्वं, तदाऽऽत्माश्रय इत्यतश्चेष्टात्वं प्रकारान्तरेण निर्वक्ति—**चेष्टा चेति। परिहारार्थेति।** अत्र इष्टत्वं स्वावच्छिन्ने-

हत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावात्, जलीयतैजसशरीरवृत्तितया देवत्वस्याऽपि जातित्वाभावादिति वाच्यम्। कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्।

इति पार्थिवशरीरनिरूपणम्॥

इन्द्रियमिति। घ्राणेन्द्रियं पार्थिवमित्यर्थः। पार्थिवत्वं कथमिति चेदित्थम्। घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाऽभिव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जक(गो)घृतवत्। न च दृष्टान्ते स्वीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यम्। परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात्॥ न च नवशराव(गत)गन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यम्। तस्य सक्तु-

दिनकरी।

**जलीयेति**। देवत्वस्याऽपीति, अपिना नृसिंहत्वपरिग्रहः। **जातित्वाभावादिति**। जातिसाङ्कर्यादिति भावः। जातिसाङ्कर्यस्याऽदोषत्वे देवत्वशरीरत्वादेर्नानाजातित्वाङ्गीकारे वा देवत्वशरीरत्वजातिमादायैव लक्षणसमन्वय इति ध्येयम्। इति पार्थिवशरीरनिरूपणम्॥

**रूपादिषु मध्ये इति**। रसगन्धस्पर्शा आदिपदार्थाः। नवशरावगन्धव्यञ्जकजले मनसि च व्यभिचारवारणाय 'एव'कारः, तद्दाने च सक्तुरसस्याऽप्यभिव्यञ्जकत्वान्न दोषः। घ्राणेन्द्रिये गन्धत्वाभिव्यञ्जकत्वाद्धेत्वप्रसिद्धिवारणाय हेतौ मध्यान्तम्। न चाऽसिद्धिवारकविशेषणं निरर्थकमिति वाच्यम्। व्यभिचारज्ञान इव हेत्वप्रसिद्धावपि व्याप्तिज्ञानाभावे व्याप्तिग्रहौपयिकाप्रसिद्धिवारकविशेषणोपादानस्य सर्वसिद्धत्वात्। **तदर्थत्वात्**—हेतुवाक्यघटकमध्यान्तपदसमभिव्याहृतैवकारार्थत्वात्। तथा च दृष्टान्ते स्वीयरूपादिव्यञ्जकघृतादावसिद्धिवारणाय परकीयत्वं रूपादौ विशेषणम् देयमिति भावः। **तस्येति**। नवशरावगन्धव्यञ्जकजलस्येत्यर्थः। न च येन नवशरावगन्धव्यञ्जकजलेन सक्तुरसो नाऽभिव्यञ्जितस्तत्र जलविशेषेऽनैकान्तिक इति वाच्यम्। परकीयरूपादिविषयकसाक्षात्कारस्वरूपायोग्य-

रामरुद्री।

च्छाविषयत्वम्, **अनिष्टत्वं**—स्वावच्छिन्नद्वेषविषयत्वं, तेन घटादिक्रियाया अपि कस्य चिदिष्टानिष्टप्राप्तिपरिहारानुकूलत्वसम्भवेऽपि न घटत्वादिकमादायाऽतिव्याप्तिः, **तदर्थत्वञ्च** तत्प्रयोजनकत्वं तदनुकूलत्वमिति यावत्। न च शरीरे कीदृशजातिमादाय लक्षणं सङ्गमनीयम्? पृथिवीत्वादेरतथात्वादिति वाच्यम्। मनुष्यत्वादिकमादायैव तत्सम्भवात्। न च मनुष्यत्वमपि न जातिः, नृसिंहत्वादिभिरेव साङ्कर्यादिति वाच्यम्। तत्र मनुष्यत्वाद्यनङ्गीकारादिति भावः। **अपिनेति**। नृसिंहत्वस्य जातित्वे बाधकमेकव्यक्तिकत्वं, न तु साङ्कर्यमिति बोध्यम्॥ इति पार्थिवशरीरनिरूपणम्॥

**नवशरावेति**। ननु **रूपाद्यव्यञ्जकत्वं**—तत्प्रत्यक्षानुपधायकत्वम्, तच्च परकीयरूपाद्यव्यञ्जकगन्धव्यञ्जकजलव्यक्तावक्षतमेवेत्येवकारेण न तत्र व्यभिचारवारणसम्भव इत्याशयेनाऽन्यत्र व्यभिचारवारकतां तस्य प्रदर्शयति—**मनसि चेति**। **मध्यान्तमिति**। 'एव'कारेण गन्धभिन्नाद्यव्यञ्जकत्वं लभ्यते, तच्च न गन्धत्वव्यञ्जकघ्राणेन्द्रियेऽपीति स्वरूपासिद्धिवारणाय—मध्यान्तं, तत्सहितैवकारेण च गन्धभिन्नरूपाद्यन्यतमाव्यञ्जकत्वं लभ्यते, अतो न गन्धत्वव्यञ्जकघ्राणेन्द्रियेऽपि स्वरूपासिद्धिरिति भावः। **निरर्थकमिति**। व्यभिचारावारकत्वादिति भावः। **व्याप्तिग्रहौपयिकेति**। व्याप्तिग्रहानुकूलेत्यर्थः। व्यभिचारवारकविशेषणस्य हि हेतौ सार्थक्यं व्याप्तिग्रहानुकूलत्वप्रयुक्तमेव, तथा च **मध्यान्तानुपादाने** हेतोरेव काऽप्यप्रसिद्ध्या व्याप्तिज्ञानासम्भवेन तस्याऽप्येतद्व्याप्ति-

विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥

रसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयम्, वायूपनीतसुरभिभागानां दृष्टान्तत्वसम्भवात्। न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्राभिव्यञ्जकत्वात्तत्र व्यभिचार इति वाच्यम्। द्रव्यत्वे सतीति विशेषणात्।

इति पार्थिवेन्द्रियनिरूपणम् ॥

विषयमाह—विषय इति। उपभोगसाधनं विषयः। सर्वमेव कार्यजातम-

दिनकरी।

त्वस्य विवक्षितत्वात्, नवशरावगन्धव्यञ्जकजलेऽपि रसव्यञ्जकतावच्छेदकजलत्वस्य सत्त्वादिति। परकीयेति विशेषणाप्रवेशे लाघवादाह—**यद्वेति**। तददाने हेतुमाह-**वायूपनीतेति**। इदमत्र बोध्यम्। 'रूपाद्यव्यञ्जकत्वे सति' इत्यस्य हेतुत्रये तात्पर्यं, शब्दाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वस्य नवशरावगन्धव्यञ्जकोदके व्यभिचारेण तत्र ग्रन्थकर्तुस्तात्पर्याभावात्। तत्र हेतुषु रूपरसस्पर्शानां परकीयत्वं विशेषणम्। न च प्रथमहेतौ नवशरावगन्धव्यञ्जकजले व्यभिचारः, लुप्ताक्षरमसीनीलरूपव्यञ्जकत्वात्। न च तृतीयहेतौ तत्र व्यभिचारः, एतदस्वरसेनाऽपि यद्वेतिकल्पान्तरप्रणयनात्, तत्राऽपि परकीयत्वविशेषणाघटितं हेतुत्रयमिति। तत्र—घ्राणेन्द्रियसन्निकर्षे। इन्द्रियत्वं न जातिः—तेजस्त्वादिना साङ्कर्यात्, किन्तु 'शब्देतर—'इत्यादिना वक्ष्यमाणं बोध्यम्। इति पार्थिवेन्द्रियनिरूपणम् ॥

ननु विषयत्वं न जातिः, सामान्यादौ सत्त्वादतस्तल्लक्षणमाह—**उपभोगेति**। यद्यपि साक्षादुपभोगसाधनत्वं द्व्यणुकादावव्याप्तं, साक्षात्परम्परासाधारणभोगसाधनत्वं परमाणावपीति 'द्व्यणुकादिर्ब्रह्माण्डान्तः—'इति ग्रन्थविरोधः, तथाऽपि साक्षात्परम्परासाधारणभोगसाधनत्वं विवक्षितं, परमाणुरपि विषय एव, कार्यरूपपृथिव्या एव त्रिप्रकारेण विभजनात् कार्यपृथिवीविषय एव 'द्व्यणुक—'इत्यादिना प्रदर्शित इति न तद्ग्रन्थविरोधः, अत एवोक्तं—'तदुपभोगं साक्षात् परम्परया वा जनयत्येव' इति। 'कार्यजातं' इत्यत्र 'जात'पदं सम्पा-

रामरुद्री।

ग्रहानुकूलत्वान्न तद्वैयर्थ्यमिति भावः। नन्वत्र हेतौ शब्दाव्यञ्जकत्वप्रवेशो निरर्थक एव, **'आदि'** पदेन रसगन्धस्पर्शानां ग्रहणेऽपि रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वमात्रस्य हेतुतासम्भवेन रूपस्पर्शयोरव्यञ्जकत्वस्य हेतुघटकत्वे प्रयोजनाभाव इत्यस्वरसात् प्रकारान्तरेण तद्ग्रन्थतात्पर्यं वक्तुमुपक्रमते—**इदमत्रेति**। **हेतुत्रय इति**। ननु रूपरसस्पर्शशब्दघटितत्वेन हेतोश्चातुर्विध्यात् **'त्रये'**इत्यसङ्गतमत आह—**शब्देति**। **कल्पान्तरेति**। परकीयत्वाघटितकल्पेत्यर्थः। तथा च तादृशजलस्याऽपि स्वीयस्पर्शव्यञ्जकत्वात् न तत्र तृतीयहेतौ व्यभिचार इति भावः। **'अपि'**शब्देन पूर्वोक्तलाघवसमुच्चयः। **'यद्वा—'**इत्यादिकल्पेऽप्येकत्र हेतौ रूपरसस्पर्शानां त्रयाणामुपादानं व्यर्थमित्यभिप्रायेणाऽऽह—**तत्राऽपीति**। ननु मूले देहविषययोरेव निर्वचनादिन्द्रियत्वं जातिरेवेत्याशयो लभ्यते, तच्च न सम्भवतीत्याशङ्क्य समाधत्ते—**इन्द्रियत्वमिति** ॥ इति पार्थिवेन्द्रियनिरूपणम् ॥

**उपभोगेतीति**। सुखदुःखसाक्षात्कार उपभोगः, **तत्साधनं**—तत्प्रयोजकमित्यर्थः, तत्र घटादेरकारणत्वादिति ध्येयम्। **कार्यरूपपृथिव्या इति**। **'सा कार्यरूपा'** इति विवरणादिति भावः। **प्रदर्शित इति**। तत्र **'विषयः'** इत्यस्य जन्यविषय इत्यर्थकत्वादिति भावः। यद्यपि **'सा'** इत्यस्य पृथिवीत्वावच्छिन्नपरत्वेऽपि न क्षतिः, परमाणोर्देहत्वाद्यसम्भवेऽपि विषयतया त्रिविधान्तर्गतत्वसम्भवात्, तथाऽपि **'सा च'** इत्यत्र चकारस्य जलादीनां त्रैविध्यस्याऽग्रे वक्ष्यमाणतयाऽर्थान्तरसमुच्चायकत्वासम्भवेन एव-

दृष्टाधीनं, यत् कार्यं यददृष्टाधीनं तत् तदुपभोगं साक्षात् परम्परया वा जनयत्येव, न हि बीज-प्रयोजनाभ्यां विना कस्य चिदुत्पत्तिरस्ति, तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति। शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥

इति पार्थिवविषयनिरूपणम् ॥ इति पृथिवीग्रन्थः ॥

दिनकरी।

तादायातम्। **अदृष्टाधीनमिति**। अत्र कार्यमात्रं प्रत्यदृष्टस्य हेतुता न समवायसम्बन्धेन, घटाद्यधिकरणे कपालादौ समवायेन तदभावाद्व्यभिचारात्। यत्तु 'स्वसमवायिसंयोगेनाऽदृष्टं कार्यमात्रे हेतुरिति' तन्न। शब्दरूपकार्याधिकरणे गगनेऽदृष्टसमवाय्यात्मसंयोगाभावेन व्यभिचारात्, परन्तु स्वसमवायिसंयुक्तसंयोगेन तस्य हेतुता बोध्या। इदन्तु बोध्यम्--अदृष्टस्य कार्यमात्रं प्रति हेतुता न साक्षात्, न हि सामग्रीसमवधानेऽदृष्टविलम्बेन कार्यविलम्बो दृष्टः, येन तत् साक्षाद्धेतुः स्यात्, परन्तु सामग्रीसम्पादकतया प्रायः परम्परयैव तदुपयोगः, क्व चित्तु मेघसञ्चारादौ साक्षादेव तद्धेतुः, अन्यथा सामग्रीसम्पादकत्वस्यैवाऽनुपपत्तेरिति, एतदर्थमेव साक्षात्परम्परासाधारणजन्यत्वबोधकं 'अधीन'पदमुपात्तम्। **यददृष्टाधीनं**—यत्पुरुषीयादृष्टाधीनम्। **तत्**-तत्कार्यमित्यर्थः। **तदुपभोगं**-तत्पुरुषस्योपभोगसाधनम्। **तेन**-द्व्यणुकादिकार्यस्य तत्तत्पुरुषस्योपभोगसाधनत्वेन। नन्वेवं सर्वस्यैव विषयत्वेन शरीरेन्द्रियभेदेन पृथिव्यास्त्रैविध्यं न सिद्ध्येदित्यत आह—**शरीरेन्द्रिययोरपीति** ॥ ३६ ॥ ३७ ॥ ३८ ॥ इति पार्थिवविषयनिरूपणम् ॥ इति पृथिवीग्रन्थः ॥

रामरुद्री।

कारार्थकताया एव स्वीकरणीयतया तस्य च जलादीनामपि त्रिविधत्वेन पृथिवीव्यतिरिक्तत्रैविध्यव्यवच्छेदकत्वासम्भवेन **'सा च'** इत्यस्य कार्यरूपाया एवेत्यर्थकताया आवश्यकत्वादिति भावः। **सम्पातादायातमिति**। **'सर्वम्'** इत्यनेनैवाऽशेषत्वलाभादिति भावः। नन्वदृष्टाधीनत्वम् अदृष्टजन्यत्वमेव तच्च न घटादिरूपकार्यस्य सम्भवतीत्याशङ्कते—**अत्रेति**। **व्यभिचारादिति**। इदमुपलक्षणम्। कालिक-दिक्कृत-विशेषणताभ्यां तथात्वेऽपि तत्रैव व्यभिचारो बोध्यः। **बोध्येति**। गगनेऽप्यात्मसंयुक्तपवनादिसंयोगसत्त्वेन विभुद्वयसंयोगानङ्गीकारेऽपि क्षतिविरहादिति भावः। अदृष्टजन्यमित्युपेक्ष्याऽदृष्टाधीनमित्युक्तौ फलं वक्तुमुपक्रमते—**इदन्त्विति**। **स्यादिति**। तदितरयावत्कारणसत्त्वे तदभावे कार्याभावरूपव्यतिरेकसहचाराभावादिति भावः। **तदुपयोगः**—अदृष्टोपयोगः। तज्जनकादृष्टाभावे तत्कारणानामेव जननानुपपत्तेरिति भावः। नन्वेवं कार्यमात्रेऽदृष्टस्याऽप्रयोजकत्वमेवेत्याशङ्कामपाकरोति—**क्वचिदिति**। **'आदिना'** औत्पातिकभूकम्पादिपरिग्रहः। **अन्यथा**-कार्यमात्रं प्रत्येव तस्याऽकारणत्वे। **सामग्रीसम्पत्तिः**-एकत्र सकलकारणतावच्छेदकावच्छिन्नसम्बन्धः। **अनुपपत्तेरिति**। सामग्रीसम्पत्तिरूपकार्यजनकत्वस्यैव सामग्रीसम्पादकतारूपत्वादिति भावः। **त्रैविध्यं**—विभाजकधर्मत्रयवत्त्वम्। परस्परासङ्कीर्णव्याप्यधर्माणामेव विभाजकत्वादिति भावः। मूले **'प्रकारान्तरेण'** इत्यस्य विषयत्वभिन्नदेहत्वादिनेत्यर्थः। **उपन्यासः**—कथनम्। **शिष्यबुद्धेर्वैशद्यं**-देहत्वाद्यवान्तरधर्मविषयकत्वं, **तदर्थः**—तत्प्रयोजकः। यद्यप्येतावता विभागव्याघातो न परिहृतः, तथाऽपि प्रकृते विषयत्वस्य देहेन्द्रियातिरिक्तोपभोगसाधनत्वरूपस्य विभाजकतावच्छेदकत्वोपगमेन न विभागानुपपत्तिरिति मन्तव्यम् ॥ ३६ ॥ ३७ ॥ ३८ ॥

॥ इति पार्थिवविषयनिरूपणम् ॥ इति पृथिवीग्रन्थः ॥

ननु स्नेहजनकतावच्छेदकतया जलत्वसिद्धावपि न तस्य जातित्वसिद्धिः, शब्दादिकारणतायां कारणतात्वस्य जात्यवच्छिन्नत्वव्यभिचारित्वेन हेतुना जलत्वावच्छिन्नत्वस्य साधनासम्भवादित्याशङ्कायामाह-

**वर्णः शुक्लो रस-स्पर्शौ जले मधुर-शीतलौ ।**

जलं निरूपयति—वर्णः शुक्ल इति । **स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः ।**

**यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं, तथाऽपि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्, तत्र जन्यस्नेहाभावात्, तस्य च नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमादिति चेन्न । जन्यस्नेहजनकतावच्छेदिकाया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धिः ।**

दिनकरी ।

जलत्वजातौ प्रमाणमाह—**स्नेहेति** । कारणतावच्छेदकतया धर्मसिद्धौ बाधकाभावात्तस्य जातित्वमिति भावः ।

नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वाभावेन स्नेहत्वस्य कार्यतावच्छेदकत्वं न सम्भवतीति शङ्कते—**यद्यपीति** । तथा-कार्यतावच्छेदकम् । वस्तुतस्तु नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे दोषाभावात् जन्यपदं न देयमेव । ननु यथाऽरण्यस्थदण्डादौ फलानुपधायके कारणतावच्छेदकतया दण्डत्वादिजातिः,तथाऽत्राऽपि भविष्यतीत्यत आह—**तस्येति** । दण्डादेः स्वरूपयोग्यतायां न काऽपि क्षतिः, तस्याऽनित्यत्वेन फलोपधायकत्वाभावादिति भावः । **जन्यजलत्वजातेः**-जन्यजलमात्रवृत्तिजातेः । **तदवच्छिन्नेति** । जन्यजलत्वजात्यवच्छिन्नेत्यर्थः । न चैवं जलान्त्यावयविनि जलत्वं न स्यादिति वाच्यम् । जलस्याऽन्त्यावयवित्वानुपगमात् ।

ननु जलत्वावच्छिन्नं प्रति समवायसम्बन्धेन स्नेहस्यैव कारणत्वमस्तु, अतिरिक्तजातिकल्पनापेक्षया लाघवादिति चेन्न । जलत्वावच्छिन्नं प्रति स्नेहत्वेन कारणत्वं, शीतस्पर्शत्वेन वेत्यत्र विनिगमनाविरहेणाऽतिरिक्तजलत्वजातिसिद्धेः,क्लृप्तमादाय कल्पनीयेन विनिगमनाविरहाभावादिति ।

रामरुद्री ।

**बाधकाभावादिति** । जातित्व इति शेषः । व्यक्त्यभेदादिरूपजातिबाधकविरहादित्यर्थः । **जातित्वमि**त्यस्याऽग्रे लाघवादिति शेषः । एतेन कारणतावच्छेदकीभूतं जलत्वं शीतस्पर्शवत्त्वमेव, न जातिः पदार्थान्तरकल्पने गौरवादिति प्रत्युक्तम् । शीतत्वरूपजातिविशेषाणामनेकेषां कारणतावच्छेदकत्वे गौरवाल्लाघवेन शुद्धजलत्वजातेरेव कारणतावच्छेदकत्वौचित्यादिति ध्येयम् ।

**दोषाभावादिति** । कालविशेषावच्छेदेन स्नेहवत्त्वावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकजलत्वधर्मकत्वरूपकार्यतायाः स्नेहत्वेऽनतिप्रसक्तत्वसम्भवादिति भावः । **अऽत्रापीति** । स्नेहानुपधायकपरमाणावपीत्यर्थः । **तथाऽत्राऽपि भविष्यतीति** । कारणतावच्छेदकजलत्ववत्ता निराबाधा भविष्यतीत्यर्थः । ननु जन्यजलत्वं जन्यत्वविशिष्टजलत्वं, विशिष्टञ्च न जातिरित्यत आह—**जन्यजलमात्रेति** । जलान्त्यावयवनि-जलान्तरजननायोग्यजलावयविनि । **न स्यादिति** । तादृशजले जनकतावच्छेदकजातिस्वीकारे तस्याऽयोग्यतैव न स्यादिति भावः । **अनुपगमादिति** । जलमात्र एव जलान्तरसंयोगेन वृहज्जलजननयोग्यतासत्त्वादिति भावः ।

**जातिसिद्धेरिति** । ननु जलत्वस्याऽपि ताभ्यां विनिगमनाविरह इत्यत आह—**क्लृप्तमिति** । **विनिगमनाविरहाभावादितीति** । कल्पनीयस्य हि कारणतावच्छेदकत्वं धर्मिग्राहकप्रमाणसिद्धं,

शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं—वर्णः शुक्ल इति (१), न तु शुक्ल-रूपवत्त्वं लक्षणम्। अथ वा नैमित्तिकद्रवत्ववदवृत्ति-रूपवद्वृत्ति-द्रव्यत्व-साक्षाद्व्याप्य-जातिमत्त्वं, अभास्वरशुक्लेतररूपासमानाधिकरण-रूपवद्वृत्ति-

दिनकरी।

केचित्तु धूमादिकं प्रत्यार्द्रेन्धनादेः कारणत्वं निर्विवादम्, आर्द्रत्वं च जलसंयुक्तत्वं, तथा च जलसंयुक्तेन्धनत्वेनेन्धनसंयुक्तजलत्वेन वा कारणतेत्यत्र विनिगमनाविरहाज्जल-त्वेन्धनत्वयोः पार्थक्येन कारणतावच्छेदकतया जलत्वजातिसिद्धिरित्याहुः।

परे तु स्थूलजलवृत्तिप्रत्यक्षसिद्धजलत्वरूपजात्यवच्छिन्नसमवायिकारणतावच्छेदकतया परमाणुसाधारणजलत्वजातिसिद्धिः, कार्यतावच्छेदक-कारणतावच्छेदकयोरैक्ये क्षत्यभावात्, नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे दोषाभावाच्चेत्याहुः।

न त्विति। पृथिव्यादावव्याप्तेरिति शेषः। शुक्लरूपवत्त्वस्य लक्षणत्वेऽपि न क्षतिरित्य-भिप्रेत्याऽऽह—अथवेति। द्रव्यत्वव्याप्यवायुत्वजातिमादाय वायावतिव्याप्तिवारणाय रूप-वद्वृत्तीति। यथा च वायुत्वं जातिस्तथाऽग्रे वक्ष्यते। पृथिवीत्वादिजातिमादाय पृथिव्यादा-वतिप्रसङ्गवारणाय नैमित्तिकद्रवत्ववदवृत्तीति। साक्षादिति पटत्वादिवारणाय। द्रव्यत्वसा-क्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्याव्याप्यत्वमात्रं, न तु द्रव्यत्वव्याप्यत्वस्याऽपि तत्राऽन्त-र्भावः, रूपवद्वृत्तित्वविशेषणेनैव रूपत्वादीनां वारणात्तन्निवेशे प्रयोजनाभावात्। यद्यप्य-श्योपस्थितिकद्रवत्वस्यैव रूपस्थाने प्रवेशो युक्तः, तेनाऽपि वायुत्वादेर्वारणात्, एवं च द्रव-

रामरुद्री।

क्लृप्तस्य तु न तथात्वमिति विनिगमकस्यैव सत्त्वादिति भावः।

निर्विवादमिति। अन्वयव्यतिरेकाभ्यामित्यादिः। पार्थक्येनेति। इदं च वस्तुगतिमनुरुध्योक्तम्, आर्द्रेन्धनत्वेन धूमकारणत्वेऽपि कारणतावच्छेदककोटिप्रविष्टतयैव जलत्वसिद्धिसम्भवादित्यवधे-यम्। 'आहुः' इत्यस्वरसोद्भावनं, तद्बीजं तु परमाणुरूपजलसंयोगस्य धूमप्रयोजकत्वे मानाभावेन उक्त-युक्त्या परमाणौ जलत्वासिद्धेरिति।

'परे तु—' इत्यादिकं तु स्वानुमतमेव, स्नेहत्वस्यैव जन्यतावच्छेदकत्वसम्भवेन जन्यत्वाप्रवेशेऽपि न क्षतिरित्यस्य स्वेनैव पूर्वमुक्तत्वादिति मन्तव्यम्। तत्राऽन्तर्भाव इति। ननु द्रव्यत्वव्याप्याव्याप्य-त्वमात्रस्य द्रव्यत्वसाक्षाद्व्याप्यतारूपत्वे तथाविधरूपत्वमादाय रूपादावतिव्याप्तिरित्यत आह—रूपवदि-त्यादि। अवश्योपस्थितिकेति। नैमित्तिकद्रवत्ववदवृत्तित्वस्य पृथिवीत्वादिवारणायाऽवश्यमुपात्ततया

---

(१) शुक्लमेव रूपमपामिति न सङ्गच्छते, कालिन्दीजलादौ नीलिमोपलब्धेः। औपाधिकं तच्चन्द्रमसीव शैत्यमिति चेन्न। प्रमाणाभावात्। वियति विक्षिप्तेषु जलेषु श्वैत्योपलब्धिर्बा-धिकेति चेन्न। तत्र तैजसस्यैव श्वैत्यस्योपलम्भात्। नीलिमाऽपि तर्हि प्रतीयेतेति चेन्न। स्फटिकादौ श्वैत्यनिराकरणेन रक्तरूपाद्युपलम्भवत्तदुपपत्तेः। तथा च कथमुक्तं-'वर्णः शुक्लः-इति ? इति चेन्मैवम्। जलस्य नीलरूपादिमत्त्वे वियति विक्षेपेऽपि जले नीलिमोपलम्भा-पत्तेः। स्फटिकादिवत्तदुपपत्तिरिति वाच्यम्। शुक्लरूपे एवेतररूपेणाऽभिभवस्य दृष्टत्वात्। स्फटिकं चाभास्वरशुक्लमेव। कालिन्दीजलादौ नीलरूपसत्त्वे पुनरवश्यं तत्प्रत्यक्षं वियति विक्षेपेऽपि जलस्य भवेत्। ननु अप्रयोजकत्वमुक्तनियमे, इतररूपाणामपि अभिभवसम्भवा-दिति चेन्न। इन्द्रनीलादौ वियत्यपि नीलरूपोपलम्भस्य दृष्टत्वेन तत्र तैजसेन रूपेण तद-भिभवाकरणेन तथा नियमकल्पनादिति सिद्धं शौक्ल्यं जले।

**द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः, तेन स्फटिकादौ नाऽतिव्याप्तिः ।**

**रस-स्पर्शाविति । जलस्य मधुर एव रसः (१) । शीत एव स्पर्शः(२) । तिक्तरसवदवृत्ति-मधुरवदवृत्ति-द्रव्यत्वसाक्षाद्व्याप्य-जातिमत्त्वं तदर्थः, तेन**

**दिनकरी ।**

त्ववद्वृत्तित्वाभावादेव पटत्वादीनां वारणसम्भवे द्रव्यत्वसाक्षाद्व्याप्येत्यपि न देयमिति लाघवम्, तथाऽपि मूले 'वर्णः शुक्लः–'इत्यादिना रूपघटितलक्षणस्योक्तत्वात्तदघटितलक्षणपरिष्कारे मूलविरोधः स्यादिति तथा न कृतमिति ध्येयम् । मूर्तत्वजात्यनभ्युपगमेन चेदं, तेन जलत्वस्य द्रव्यत्वव्याप्यमूर्तत्वव्याप्यत्वेऽपि न क्षतिः । जलघटान्यतरत्वमादाय घटादावतिव्याप्तिवारणाय जातीति । क्वचित् 'शुक्लरूपवदवृत्ति–'इति पाठः । तत्र 'शुक्ल'पदं रूपपदं वा सम्पातादायातम् । एवमेव च व्यावृत्तिरभास्वरशुक्लेतररूपेत्यत्र रूपवदवृत्ति-द्रव्यत्वसाक्षाद्व्याप्यपदयोर्बोध्या । पृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणायाऽभास्वरशुक्लेतररूपासमानाधिकरणेति । जलत्वस्य शुक्लरूपसामानाधिकरण्यादसम्भव इति शुक्लेतरेति । तेजस्त्वमादाय तेजस्यतिव्याप्तिवारणायाऽभास्वरेति ।

**शीत एवेति ।** यद्यपि 'शीतं गुणे–' इति कोशात् क्लीबतैवोचिता, तथाऽपि विशेष्यस्य स्पर्शशब्दस्य पुंलिङ्गत्वात्पुंल्लिङ्गतया निर्देशः, शुक्लं रूपमित्यादौ शुक्लपदस्य क्लीबतयैवेति ।

**रामरुद्री ।**

द्रवत्वस्याऽवश्योपस्थितिकत्वेन तत् परित्यज्याऽनुपस्थितरूपप्रवेशस्याऽनुचितत्वादिति भावः । **रूपघटितेति ।** तत्र वर्णपदस्य रूपार्थकत्वादिति भावः । यद्यप्येवमपि मूले 'शुक्ल' पदस्याऽप्युपात्तत्वेन तस्य चोक्तलक्षणाघटकतया मूलविरोधो दुर्वार एव, तथाऽपि शुक्लवदवृत्तित्वं रूपवदवृत्तित्वं वा प्रवेशनीयमित्यत्र विनिगमनाविरहेण लक्षणद्वये मूलतात्पर्यस्य विवक्षणीयतया न मूलविरोध इति भावः । **एवमेवेत्यादि ।** एकस्मिन् लक्षणे शुक्ल–रूप–पदयोरघटकत्वेनाऽपरितोषान्मूले कारिकानुसारिलक्षणान्तरमित्यवधेयम् । **बोध्येति ।** वायुत्वमादायाऽतिव्याप्तिवारणाय, पटत्वादिकमादाय तद्वारणाय च **रूपवदवृत्तित्व-साक्षाद्व्याप्यत्वयोः** प्रवेश इत्यर्थः । न च पटे नीलादिरूपस्याऽप्यनुभवसिद्धतयाऽ**समानाधिकरणान्ते**नैव, पटत्वादिवारणसम्भवात् शङ्खादावतिव्याप्तिवारणमेव **साक्षात्**पदप्रयोजनं तथा च**'एवमेव'** इति कीर्तनमसङ्गतमिति वाच्यम् । नीलपटादिस्थले नीलादिरूपं न पटस्य, अपि तु नीलयुक्तद्रव्यान्तरस्यैवेति सिद्धान्तात् ।

**क्लीबतयैवेति ।** 'गुणे शुक्लादयः पुंसि–' इति कोशसत्त्वेऽपि शुक्लं रूपमित्यादिप्रयोगो यथा चिन्तामण्यादौ दृश्यते, तथाऽत्राऽपीत्यर्थः । कोशस्य विशेष्यवाचकपदासमभिव्याहारस्थले एव प्रवृत्तिरिति

---

(१) मधुर एव रसोऽपामिति न सङ्गच्छते, प्रमाणाभावात्, न हि प्रत्यक्षेण कोऽपि रसस्तत्राऽनुभूयते, येन तत्र रसनिश्चयो भवेत् । तिक्तादिविलक्षणरसानुभवेन मधुररसकल्पनेति चेन्न । मधुरादिविलक्षणरससंवेदनेन तिक्तादेरेव कल्पयितुमुचितत्वेन विनिगमकाभावात्, जम्बीररसादावम्लादिरसोपलम्भाच्चेति चेन्न । निदाघपीतनिर्मलगङ्गाजलमाधुर्यस्य प्रत्यक्षसिद्धत्वादिति ।

(२) शीत एव स्पर्श इति न सङ्गच्छते–उष्णजलादावुष्णप्रतीतेरपि सम्भवात् । तेजसस्तदौष्ण्यमिति चेन्न । रूपवत्स्पर्शप्रत्यक्षस्य रूपप्रत्यक्षव्याप्यत्वेन तेजसोऽपि चाक्षुषापत्तेरिति चेन्न । ऊष्मादिषु रूपप्रत्यक्षमन्तरेणाऽपि स्पर्शप्रत्यक्षस्याऽऽनुभविकत्वेनोक्तनियमस्याऽप्रामाणिकत्वेन वह्निसंयोगाधिक्येन च तत्रौष्ण्याधिक्यप्रतीतेरनुभवसिद्धतया जले शीतस्पर्शकल्पनात् ।

शर्करादौ नाऽतिव्याप्तिः। ( शीतेतरस्पर्शवद्वृत्ति-स्पर्शवद्वृत्ति-द्रव्यत्व-साक्षाद्व्याप्य-जातिमत्त्वं तदर्थः )

ननु शुक्लरूपमेवेति कुतः ? कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न। नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासम्भवात्, कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी, अत एव वियति विक्षेपे धवलिमोपलब्धिः।

अथ जले माधुर्ये किं मानम् ? न हि प्रत्यक्षेण कोऽपि रसस्तत्राऽनुभूयते, न च नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यम्। तस्याऽऽश्रयौपाधिकत्वात्, अन्यथा जम्बीरजलादावम्लादिरसोपलब्धेरम्लादिमत्त्वमपि स्यादिति चेन्न। हरीतक्यादिभक्षणस्य जलरसाभिव्यञ्जकत्वात्। न च हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यम्। कल्पनागौरवात्,

दिनकरी।

द्रव्यत्वव्याप्या या पृथिवीत्वरूपा जातिस्तामादाय पृथिव्यामतिव्याप्तिवारणाय तिक्तावृत्तीति। तेजस्त्वादिजातिमादाय तेजआदावतिव्याप्तिवारणाय मधुरवद्वृत्तीति। शेषं दर्शितदिशाऽवसेयम्। **शीतेतरेति।** द्रव्यत्वरूपजातिमादायाऽतिव्याप्तिवारणाय शीतेतरस्पर्शवद्वृत्तीति। आत्मत्वादिकमादायाऽऽत्मादावतिव्याप्तिवारणाय स्पर्शवद्वृत्तीति। शेषं पूर्ववत्।

ननु जले नीलरूपाभावे कथं नीलरूपप्रतीतिरत आह—**कालिन्दीति।** स्वसमवायिसंयोगसम्बन्धेनोपष्टम्भकपार्थिवभागगतनीलरूपप्रतीतिः कालिन्दीजलादाविति भावः। **अत एवेति।** उपदर्शितसम्बन्धस्य जलं नीलमिति प्रतीतिनियामकत्वादेवेत्यर्थः। **वियतीति।** तदोपदर्शितसम्बन्धघटकसंयोगनाशादिति भावः।

**तत्र**–जले। **तस्य**–माधुर्यस्य। **अन्यथा**–आश्रयौपाधिकत्वाभावे। 'व्यञ्जकत्वात्'इत्युत्तरं हरीतकीभक्षणोत्तरं प्रत्यक्षेण माधुर्योपलम्भादिति पूरणीयम्। **कल्पनागौरवादिति।** अवयवरसाजन्यस्य पृथिवीरसस्याऽग्निसंयोगसाध्यत्वदर्शनादेतदनुरोधमात्रेण जलसंयोगस्याऽपि पृथिवीरसोत्पादकत्वस्वीकारेऽतिरिक्तकार्यकारणभावस्य, हरीतक्यां मधुररसस्य च

रामरुद्री।

भावः। द्रव्यत्वेत्यादिमूले शीतस्पर्शवत्वस्य जललक्षणत्वे काऽपि दोषाभावात्तन्निरुक्तिर्न कृतेति मन्तव्यम्। **शेषमिति।** वायुत्वमादायाऽतिव्याप्तिवारणाय **मधुरवद्वृत्तीति।** शर्करात्वमादायाऽतिव्याप्तिवारणाय **साक्षाद्व्याप्येति।** जलशर्करोभयत्वमादाय तद्वारणाय **जातीति**पदमिति भावः।

**उपष्टम्भकेति।** कालिन्दीजलसंयुक्तेत्यर्थः। इदं तु बोध्यम्। कालिन्दीजले नीलत्वप्रतीतावा**श्रयोपाधिकत्वं**—आश्रयविशेषसंयोगरूपदोषजन्यत्वमेव मूलग्रन्थकर्तुरभिप्रेतं, न तूक्तपरम्परासंसर्गकत्वं, तथा सति जले नीलत्वस्येव पृथिवीत्वस्याऽपि प्रतीतिप्रसङ्गात्। न च त्वन्मतेऽपि तादृशदोषबलात् कुतो न पृथिवीत्वप्रत्यय इति वाच्यम्। स्फटिकादिस्वच्छद्रव्ये रक्तपटादिसंयोगबलाद्रक्तत्वप्रतीतिरेव न तु पटत्वप्रतीतिरिति सर्वानुभवसिद्धमिति पित्तादिदोषस्य पीततामात्रभ्रान्तिजनकतामात्रकल्पनावदत्राऽप्यनुभवानुरोधेन नीलत्वभ्रान्तिजनकतामात्रस्यैव तादृशदोषे कल्पनीयत्वात्, दोषविशेषजन्यत्वादेव विशेषदर्शिनामपि समवायेनैव नीलत्वभ्रान्तिः,न हि नीलो घटो नीलं जलमिति प्रतीत्योर्वैलक्षण्यमनुभवसिद्धमिति कश्चिदुपैतीति।

**'हरीतकीभक्षणस्य'**—इत्यादिना हरीतकीभक्षणस्य जलरसव्यञ्जकत्वमुक्तं मूले,तत्र च हेतोरनभिधानान्मूलस्य न्यूनतामाशङ्क्य हेतुं पूरयति—**'व्यञ्जकत्वादीत्यादिना। हरीतक्यामिति।** यद्यपि हरीत-

**पृथिवीत्वस्याऽम्लादिजनकतावच्छेदकत्वाच्च जले नाऽम्लादिकम् । जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः ।**

दिनकरी ।

कल्पने गौरवादिति भावः । नन्वस्तु जले मधुरो रसः, तथाऽपि जम्बीरजलादौ प्रत्यक्षसिद्धस्याऽम्लरसस्याऽपि स्वीकारे बाधकाभाव इत्यत आह—**पृथिवीत्वस्येति । अम्लादिजनकतावच्छेदकत्वादिति ।** यद्यपि पृथिवीत्वस्याऽम्लादेर्जनकतावच्छेदकतावन्मधुरजनकतावच्छेदकत्वमप्यस्तीति तुल्यं, तथाऽपि हरीतक्यादिभक्षणोत्तरं जलेऽपि मधुरोपलब्धेस्तत्र मधुरस्वीकारस्याऽऽवश्यकत्वाजलत्वेनाऽपि मधुरं प्रति हेतुत्वं कल्प्यत इति भावः। ननु जम्बीरसलिलादावम्लप्रत्यक्षाजलत्वेनाऽम्लादिरसेऽपि तुल्यवद्धेतुत्वं स्यादत आह—**जम्बीररसादाविति ।** स्वसमवायिसंयोगेन जम्बीरगताम्लरसप्रतीतिस्तद्गतजले इत्यर्थः । शुष्केऽपि जम्बीरे अम्लप्रतीतेस्तत्राऽम्लरसस्याऽऽवश्यकत्वे तस्यैव तद्गतजले परम्परया प्रतीतिः, हरीतक्यां तु मधुररसाभावान्न हरीतकीगतमाधुर्यस्य जले प्रतीतिरिति भावः । कर्कटीभक्षणोत्तरं जलपाने तिक्तरसस्याऽनुभवातिक्तरसोऽपि जले स्यादिति तु न, जलपानात् पूर्वमपि कर्कट्यां तिक्तरसोपलब्धेः, कर्कटीभक्षणोत्तरं रसनाप्रवर्त्तिपित्तक्षोभे तदीयतिक्तोपलब्धेर्वैयर्थ्यकसिद्धत्वाच्च । वस्तुतो निदाघपीतनिर्मलगङ्गाजलमाधुर्यस्याऽनुभवसिद्धस्याऽपलापासम्भवान्मधुर एवेति युक्तम् ।

एतेन हरीतक्यादौ न जलसंयोगेन माधुर्यमुत्पद्यते येन कल्पनागौरवम् , परन्तु हरीतक्यां कषायवन्मधुररसोऽपि स्वीक्रियते, तद्व्यञ्जकश्च जलसंयोगः, न तु तद्गतरसान्तरस्य फलबलात् । यदि च चित्ररूपवच्चित्ररसे मानाभावाद्गुणविरोधेन नीरसैव हरीतकी रसप्रतीतिस्तु अवयवेषु रससत्त्वात् परम्परयेत्युच्यते, तदाऽस्तु जलसंयोगो हरीतक्यवयवगतमाधुर्यस्यैव व्यञ्जक इत्यपास्तम् ।

रामरुद्री ।

क्यां मधुररसकल्पनं सिद्धान्ते जले मधुररसकल्पनस्थानीयमितिगौरवात्तत्प्रदर्शनमनुचितं, तथाऽपि प्रतिवादिना मन्मते कार्यकारणभावस्यैकस्याऽधिक्यं त्वन्मते जले मधुररसकल्पनस्थानीयमिति यद्युच्यते, तदा जलेऽस्माकं तत्कल्पनं भवतो हरीतक्यां मधुररसकल्पनस्थानीयं कार्यकारणभावकल्पनं त्वन्मतेऽधिकमेवेति सूचयितुं तत्कीर्तनमिति ध्येयम् । अम्लजनकतावच्छेदकपृथिवीत्वस्य जलेऽभावान्नाऽम्लादिमत्त्वं जलस्येति मूलोक्तं न सङ्गच्छते, शर्करादौ मधुरजनकतावच्छेदकत्वेनाऽपि पृथिवीत्वस्य क्लृप्ततया तदभावाज्जले मधुररसस्याऽभावप्रसङ्गादित्याशङ्कते—**यद्यपीति । तत्र—**हरीतक्यां,**आवश्यकतया'** इत्यस्याऽनुभवानुरोधेनेत्यादिः, जलत्वेनेत्यस्य पृथिवीत्वेनेवेत्यादिः। ननु जम्बीरगतरसस्य जले भानं जलगतरसस्य जम्बीरे भानं वेत्यत्र विनिगमकं दुर्लभमित्याशङ्कायामाह—**शुष्केऽपीति ।** न चैवं हरीतकीगतमधुररसस्यैव जलेऽपि परम्परया भानस्वीकारेणैवोपपत्तौ जले मधुरो रसोऽपि न स्यादित्यत आह—**हरीतक्यामिति।**

**तद्व्यञ्जकश्चेति ।** हरीतकीमधुररसव्यञ्जकस्त्वित्यर्थः। **रसान्तरस्य**—कषायरसस्य, **फलबलात्**—तत्प्रत्यक्षरूपकार्यबलादित्यर्थः। **मानाभावादिति ।** चित्ररसस्याऽप्रामाणिकत्वे तत्र चित्ररूप इवाऽवयववगतनानारसानां हेतुत्वसम्भवेऽपि नीरसद्रव्यप्रत्यक्षे बाधकाभावेन चित्ररूपवच्चित्ररसानङ्गीकारे चतिविरहान्नानारसायवककद्रव्ये परस्परविरोधेन कस्याऽपि रसस्याऽनुत्पत्त्या नीरसैव हरीतकीति समुदायार्थः। न चैवं हरीतकीभक्षणे तस्यापि रसस्य प्रत्यक्षं न स्यात् , अनुभूयते च कषायरसः प्रत्यक्षमत आह—**रसप्रतीतिस्त्विति । परम्परया**—स्वाश्रयसमवेतत्वसम्बन्धेन । **अपास्तमिति ।** गङ्गाजले माधुर्यस्य प्रत्यक्षसिद्धत्वादिति भावः ।

**स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं तदवच्छिन्नजनकतावच्छेदकं जलत्वं बोध्यम् । घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव, तत्र पाकासम्भवात् ।

स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः,जलस्य स्नेहसमवायिकारणत्वात् , तेन जल एव स्नेह इति मन्तव्यम् ।

द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः तदेवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः । तैलादावपि जलस्यैव द्रवत्वं,(१) स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३९ ॥

॥ इति जलनिरूपणे जललक्षणकथनम् ॥

दिनकरी ।

जलत्वजातावनुमानान्तरं प्रमाणमाह–**एवमिति**। ननु जलत्वाभावेऽपि घृष्टचन्दनादौ शैत्योत्पत्तेर्व्यभिचारेण कथं जन्यजलत्वेन तत्र हेतुत्वमत आह—**घृष्टेति** । पूर्वं 'शीत एव स्पर्शः' इत्युक्तं, तत् साधयति–**तेजःसंयोगादिति** । तत्र–जले । विवेचयिष्यति च पाकासम्भवमुपरिष्टात् ।

'घृतादौ' इत्यादिपदेन तैलपरिग्रहः । 'जलस्यैव स्नेहः'–इत्यनन्तरं स्वाश्रयसंयोगेन प्रतीयत इति शेषः । तेन–घृतादौ समवायेन स्नेहनिरासेन । **जल एवेति** । स्नेहस्याऽवान्तरविशेषाभावात् स नोत्कीर्तितः ।

**तदवच्छिन्नजनकतावच्छेदकं** - सांसिद्धिकद्रवत्वावच्छिन्नजनकतावच्छेदकम् । **तदेव**–जन्यजलत्वमेव। तदवच्छिन्नजनकतावच्छेदकं जलत्वमिति भावः । अथैवंरीत्या परमाणुव्यावृत्तमाद्व्यणुकं जलत्वमेकं, परमाणुसाधारणं द्वितीयमिति जलत्वयोर्भेदे भेदाग्रहः कुतः ? इति चेत् , समनियतयोग्यव्यक्तिवृत्तित्वादिति । **एवमग्रेऽपि** । 'तैलादौ' इत्यादिपदेन क्षीरपरिग्रहः, न तु घृतस्य तत्र नैमित्तिकद्रवत्वस्य समवायेनैव सत्त्वात् । 'द्रवत्वं' इत्यनन्तरं स्वाश्रयसंयोगेन प्रतीयत इति शेषः । ननु तैले जलस्य सत्त्वे तैलस्य दहनानुकूल्यं न स्यात् , जलस्य दहनप्रतिकूलत्वादित्यत आह–**स्नेहप्रकर्षेणेति** । प्रकृष्टस्नेहस्य जलस्य दहनानुकूल्यमेव । अपकृष्टस्यैव तस्य दहनप्रतिकूलत्वादिति भावः । इति **वक्ष्यतीति** । स्नेहनिरूपणावसरे इति शेषः ॥ ३९ ॥ इति जलनिरूपणे जललक्षणकथनम् ॥

रामरुद्री ।

ननु 'घृतादावपि तदन्तर्गतजलस्यैव स्नेहः' इति मूलमसङ्गतं, घृतादेः पार्थिवत्वेन तत्र जलीयस्नेहासम्भवादतः पूरयति–**जलस्यैवेत्यादि** ।

**जन्यजलत्वमेवेति** । जन्यजलमात्रवृत्तिजातिरेवेत्यर्थः । परमाणौ जलत्वसिद्धयर्थमाह–**तदवच्छिन्नेति** । जन्यजलत्वावच्छिन्नेत्यर्थः । **समनियतेति** । अयमेव दोषो जात्योर्भेदग्रहप्रतिबन्धक इति भावः। **अग्र ऽपीति** । तेजोनिष्ठजात्योरपि भेदग्रहे प्रतिबन्धकमिदमेवेति भावः ॥ ३९ ॥

॥ इति जलनिरूपणे जललक्षणकथनम् ॥

---

( १ ) अत एवाऽतितप्ततैलादौ जलबिन्दुप्रक्षेपे सद्य एव ज्वालाजटिलस्याऽनेरुद्भवः ।

नित्यतादि प्रथमवत् , किन्तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः ॥ ४० ॥

प्रथमवदिति । पृथिव्या इवेत्यर्थः । तथा हि—जलं द्विविधं नित्यमनित्यं च, परमाणुरूपं नित्यं, द्व्यणुकादि सर्वमनित्यमवयवसमवेतं च । अनित्यमपि त्रिविधं-शरीरेन्द्रियविषयभेदात् । पृथिवीतो यो विशेषस्तमाह-किन्त्विति । देहमयोनिजं—अयोनिजमेवेत्यर्थः । जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धम् । ॥ इति जलीयशरीरनिरूपणम् ॥

इन्द्रियमिति । जलीयमित्यर्थः । तथा हि-रसनं जलीयं, गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत् । रसनेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । ॥ इति जलीयेन्द्रियनिरूपणम् ॥

विषयं दर्शयति-सिन्धुरिति । सिन्धुः-समुद्रः, हिमं-तुषारः, आदिपदात् सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः । न च हिमकरकयोः कठिनत्वात् पार्थिवत्वमिति वाच्यम् । ऊष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात् , यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः ।

दिनकरी ।

प्रथमवदिति । षष्ठीसमर्थाद्वतिरित्यभिप्रायेणाऽऽह-पृथिव्या इवेत्यर्थ इति । एवमग्रेऽपि । जलीयं शरीरमिति । तच्च पार्थिवावयवैरुपष्टब्धं बोध्यम् । तेन जलमात्रे हस्तपादादिव्यवस्थाया असम्भवेऽपि न क्षतिः । ननु तादृशशरीरे मानाभावोऽनुपलम्भादित्यत आह-वरुणलोक इति । तत्र च श्रुतिरेव प्रमाणमिति भावः । इति जलीयशरीरनिरूपणम् ।

गन्धेति । रसव्यञ्जके मनसि व्यभिचारवारणाय गन्धाद्यव्यञ्जकत्व इति ।

इति जलीयेन्द्रियनिरूपणम् ॥

कासारः—सरः, करकादिरित्यत्राऽऽदिपदात् कूपादिपरिग्रहः । कठिनत्वादिति । कठिनस्पर्शवत्त्वादित्यर्थः । विलीनस्य तस्येति सप्तम्यर्थे षष्ठी । क्व चित् 'विलीनयोः' इति पाठः । स तु ऋजुरेव, विलीनताया द्रवत्वरूपाया जलत्वव्यञ्जकत्वादिति भावः । ननु विलीनता नैमित्तिकद्रवत्वमेव, तदुक्तं ऊष्मणेति , तच्च न जलत्वव्यञ्जकम् , यदि च 'विलीने तस्मिन्' इत्यस्य तस्मिन् नष्टे सतीत्यर्थः, तथाऽपि करकादिनाशोत्तरं द्रव्यान्तरोत्पादात्तत्रैव द्रवत्वजलत्वयोः प्रत्यक्षं, न करकायां, नष्टत्वादत आह-यद्द्रव्यमिति । तथा च करकादिनाशोत्पन्नद्रव्यान्तरे जलत्वस्य प्रत्यक्षसिद्धत्वादुक्तव्याप्त्या करकादिषु जलत्वसिद्धिरिति भावः । ननु हिमकरकयोः पार्थिवत्वाभावे कथं काठिन्यप्रत्यय इत्यत आह—

रामरुद्री ।

षष्ठीसमर्थादिति । प्रथमाया इवेति षष्ठ्यन्ताद्वतिप्रत्यय इत्यभिप्रायेणेत्यर्थः । अग्रेऽपि—तेजोनिरूपणेऽपि । जलमात्रे—केवले जले ।

स त्विति । तादृशपाठस्त्वित्यर्थः । ऋजुः—स्पष्टार्थकः । इति जलीयशरीरनिरूपणम् ॥

तदुक्तं—नैमित्तिकद्रवत्वमुक्तम् । ऊष्मण एव निमित्तत्वप्रतिपादनादिति भावः । तच्च—नैमित्तिकद्रवत्वञ्च , सांसिद्धिकस्यैव तस्य जलत्वव्यञ्जकत्वादिति भावः । नष्टत्वादित्यस्य करकाया इत्यादिः । मूले—

उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।

अदृष्टविशेषेण द्रवत्वप्रतिरोधात् करकायां काठिन्यप्रत्ययस्य भ्रान्तित्वात् ॥ ४० ॥ इति जलीयविषयनिरूपणम् ॥ इति जलग्रन्थः ॥

तेजो निरूपयति उष्ण इति । उष्णत्वं-स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः । इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः, तस्य परमाणुवृत्तित्वं जलत्वस्येवाऽनुसन्धेयम् । न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम् । तत्राऽप्युष्णस्पर्शस्य सत्त्वात्, किन्तु तदन्तःपातिजलस्पर्शेनाऽभिभवादग्रहः । एवं रत्नकिरणादौ च पार्थिवस्पर्शेनाऽभिभवात्, चक्षुरादौ चाऽनुद्भूतत्वादग्रहः ।

रूपमित्यादि । वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाऽभिभवात्

दिनकरी ।

अदृष्टविशेषेणेति । ॥ इति जलीयविषयनिरूपणम् ॥ इति जलग्रन्थः ॥

इत्थं चेति । उष्णत्वजातिसिद्धौ चेत्यर्थः । ननु कथं तर्हि जन्योष्णस्पर्शसमवायिकारणभिन्नेषु परमाणुषु तेजस्त्वजातिसिद्धिरित्यत आह—तस्येति । तेजस्त्वस्येत्यर्थः । जलत्वस्येति । यथा च जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया जलपरमाणौ जलत्वजातिसिद्धिः, तथा जन्यतेजस्त्वावच्छिन्नजनजतावच्छेदकतया तेजःपरमाणावपि तेजस्त्वरूपजातिसिद्धिरित्यर्थः । इदमुपलक्षणम् । समवायेन विलक्षणनीलोत्पत्तित्वावच्छिन्नं प्रति समवायेन तेजःसंयोगत्वेन हेतुत्वात्तेजस्त्वजातिसिद्धिरित्यपि द्रष्टव्यम् । 'चन्द्रकिरणादौ' इत्यादिना रत्नकिरणादेः परिग्रहः । तत्राऽपि—चन्द्रकिरणादावपि । ननु तत्रौष्ण्यप्रतीतिः कुतो नेत्यत आह—किन्त्विति । तदन्तःपातिजलस्पर्शेनेति । चन्द्रकिरणान्तर्गतजलभाग(गत)शीतस्पर्शेनेत्यर्थः । ननु चक्षुरादिनिष्ठस्योष्णस्पर्शस्य केनाऽप्यनभिभूतत्वात्प्रत्यक्षापत्तिरत आह-चक्षुरादौ चेति । 'मरकतकिरणादौ' इत्यादिना सुवर्णपरिग्रहः ।

"स्याद्रूपं शुक्लभास्वरं', इति मूलम् । तत्र शुक्लेति स्वरूपकथनम्, भास्वररूपमात्रस्य लक्षणत्वेऽतिप्रसङ्गाभावात् । भास्वरत्वं-जातिविशेषः, स च तेजोरूपमात्रवृत्तिः, शुक्लत्वव्याप्यश्चेति । ननु रूपाविषयकद्रव्यप्रत्यक्षस्याऽभावाद्वैश्वानरादेश्चाक्षुषत्वानापत्तिरिति शङ्कते-

रामरुद्री ।

'अदृष्टविशेषेण' इत्यस्य दुरदृष्टबलेनेत्यर्थः (१)। प्रतिरोधः-अप्रत्यक्षं, तथा च प्रतिबन्धकबलात् द्रवत्वाग्रहे भ्रान्तिरूपैव काठिन्यप्रतीतिरिति भावः ॥ ४० ॥ इति जलीयविषयनिरूपणम् ॥ इति जलग्रन्थः ॥

विलक्षणेति । अवयवनीलाजन्येत्यर्थः । नीलेत्युपलक्षणं, पाकेन रक्तादेरप्युत्पत्तेः । अतिप्रसङ्गाभावमुपपादयति भास्वरत्वमिति । ननु तेजोगतरूपाणामनेकविधत्वात् पीतत्व-शुक्लत्वादिना साङ्कर्याद्भास्वरत्वस्य जातित्वं न सम्भवतीत्याशङ्कां निराकरोति-शुक्लत्वव्याप्यश्चेति । न च विद्युदादौ भास्वरपीतस्याऽप्यनुभवात् कथं शुक्लत्वं तस्येति वाच्यम् । तत्रत्यशुक्ल एव पीतत्वभ्रान्तेरेवोपगमादिति भावः । रूपाविषयकेति । न च निर्विकल्पके प्राथमिके घट इति प्रत्यक्षे च रूपविषयकत्वाननुभवात् कथमेतदिति वाच्यम् । घटत्वे सन्निकर्षदशायां रूपादावपि सन्निकर्षस्याऽऽवश्यकतया घट-घटत्वयोरिव

(१) अग्रे काठिन्यभ्रमस्यैव तत्र भावितया भ्रमस्य चाऽविद्यात्वेन तस्य दुरदृष्टजन्यताया एवोचितत्वादिति भावः ।

नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥

शुक्लरूपाग्रहः(१)। अथ तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न। अन्यदीयरूपेणैव धर्मिणो ग्रहसम्भवात् शङ्खस्येव पित्तपीतिम्ना। वह्नेस्तु शुक्लं रूपं नाऽभिभूतं; किन्तु तदीयं शुक्लत्वमभिभूतमित्यन्ये।

नैमित्तिकमिति। सुवर्णादिरूपे तेजसि तत्सत्त्वात्। न च नैमित्तिकद्रवत्ववत्त्वं दहनादावव्याप्तं, घृतादावतिव्याप्तं चेति वाच्यम्। पृथिव्यवृत्ति-नैमित्तिकद्रवत्ववद्वृत्ति-द्रव्यत्वसाक्षाद्व्याप्य-जातिमत्त्वस्य विवक्षितत्वात्।

॥ इति तेजोनिरूपणे तेजोलक्षणकथनम् ॥

पूर्ववदिति। जलस्येवेत्यर्थः। तथा हि-तद्द्विविधं, नित्यमनित्यं च, नित्यं परमाणुरूपं, तदन्यदनित्यमवयवि च। तच्च त्रिधा शरीरेन्द्रियविषयभेदात्। शरीरमयोनिजमेव, तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

इति तैजसशरीरनिरूपणम् ॥

दिनकरी।

तद्रूपाग्रह इति। वैश्वानरादेरचाक्षुषत्वे तद्गतसङ्ख्यादिगुणानामपि चाक्षुषत्वं न स्यादिति योग्यव्यक्तिमात्रवृत्तित्वाभावात्, इति 'अपि'ना सूचितम्। अन्यदीयरूपेणैवेति। पार्थिवरूपेणैवेत्यर्थः। मतान्तरमाह—वह्नेस्त्विति। सुवर्णादिरूपे तेजसि तत्सत्त्वादिति। तेन नाऽसम्भव इति भावः।

पृथिव्यवृत्तीति। नैमित्तिकद्रवत्ववद्वृत्तिपृथिवीत्वरूपजातिमादाय पृथिव्यामतिव्याप्तिवारणाय पृथिव्यवृत्तीति। पृथिव्यवृत्तिजलत्वजातिमादाय जले, पृथिव्यवृत्तिवायुत्वादिकमादाय वायावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति। वायुतेजोन्यतरत्वमादाय वायावतिव्याप्तिवारणाय जातीति ॥ ४१ ॥ इति तेजोनिरूपणे तेजोलक्षणकथनम् ॥

रामरुद्री।

रूप-रूपत्वयोरपि समूहालम्बननिर्विकल्पस्य प्राथमिकविशिष्टप्रत्यक्षस्याऽपि रूपत्वविशिष्टवैशिष्ट्यानवगाहिनो रूपविषयकत्वस्यैव स्वीकरणीयत्वादिति भावः। सूचितमित्यस्य वैश्वानरादेरित्यादिपदेनेति शेषः। पार्थिवेति। पाकजपार्थिवरूपेणेत्यर्थः। तस्यैव पाकजत्वात् वैश्वानरे यादृशरूपप्रतीतिस्तादृशं रूपं न काष्ठादिरूपपृथिव्यां पूर्वमनुभूतमतः पाकजत्वं प्रदर्शितमिति ध्येयम्।

ननु सुवर्णरूपतेजसि नैमित्तिकद्रवत्वसत्त्वं मूले प्रदर्शितं, तच्चाऽनर्थकमेव, तावताऽप्यव्याप्तेरपरिहारादित्याशङ्कायामाह—तेनेति। तत्कथनेनेत्यर्थः, तथा च तद्ग्रन्थस्याऽसम्भवपरिहारकत्वमेव, अव्याप्तिपरिहारस्तु उत्तरग्रन्थेनैव करणीय इति भावः। पृथिव्यवृत्तीति। अत्र जातिपदस्य द्रव्यत्वसाक्षाद्व्याप्यजातिपरत्वेऽपि न निस्तार इति सूचनायैव द्रव्यत्वसाक्षाद्व्याप्येत्युक्तम्। जलत्वेत्युपलक्षणं, वायुत्वादिकमादाय वाय्वादावप्यतिव्याप्तिसम्भवादिति द्रष्टव्यम् ॥ ४१ ॥

इति तेजोनिरूपणे तेजोलक्षणकथनम् ॥

---

(१) काष्ठादिसन्निकर्षेणैव भौमतेजस उपलम्भात् काष्ठादिगतस्यैव रक्तरूपस्य तत्रोपलब्धिः कथमन्यथा इन्धने सौरविद्युदादौ तेजसि श्वेत्यापलम्भः? अबिन्धनत्वात्तोयरूपं तत्र सङ्क्रान्तमिति चेन्न। तोयरूपस्येतरानभिभावकत्वादित्युक्तत्वात्। न हि जलमिश्रितानि नालीद्रव्याणि श्वेतन्ते जातु चिदपीति बोध्यम्।

वानिति ज्ञानादनुमित्युत्पत्तेः लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वम् ।

किञ्च धूमवान् पर्वत इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकस्य पक्षधर्मताज्ञानस्य सत्त्वात् ।

न च गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम् । चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानात् अनुमितिः स्यात् ।

यदि तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते, तदाऽनन्तकार्यकारणभावः । मन्मते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसम्बन्धेनाऽनुमितिं जनयतीति नाऽनन्तकार्यकारणभावः ।

यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारणमित्युच्यते-तदा कार्यकारणभावद्वयं, वह्निव्याप्यो धूम आलोकवांश्च पर्वत इति

दिनकरी ।

वेति सन्देहदशायां व्याप्यतावच्छेदकप्रकारकनिर्णयाभावेऽपीत्यर्थः । वह्निव्याप्यवानिति । वह्न्यभाववदवृत्तिमानित्यर्थः । न तु धूमसमानाधिकरणेत्यादिरूपव्याप्तिविशिष्टवानित्यर्थः, अत्र हेतुतावच्छेदकभाननैयत्यात् । अनुमित्युत्पत्तेरिति । तथा च व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य तत्र व्यभिचारान्न तेन रूपेण हेतुत्वमिति भावः । ननु तत्र फलबलाद्व्याप्यतावच्छेदकप्रकारकं ज्ञानं कल्पनीयमतो न व्यभिचार इत्यत आह-लाघवाच्चेति । व्याप्यतावच्छेदकप्रकारकत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वादित्यर्थः।

नन्वस्तु तवाऽवच्छेदकलाघवं, तथाऽपि पूर्वोक्तकल्पनालाघवमेव मीमांसकानां मूलयुक्तिर्भविष्यतीत्यत आह--किञ्चेति ।

न च गृह्यमाणेति । अत्र शानचा ग्रहस्य वर्त्तमानतयाऽभिधानान्न कालान्तरीयतादृशग्रहमादाय दोषः ।

व्याप्तिप्रकारकं ज्ञानमिति स्वतन्त्रमित्यनेनाऽन्वयि । इत्युच्यते इति । इत्थं च न तत्पुरुषीयत्वं निवेश्यते, चैत्रस्य व्याप्तिग्रहकाले तच्छून्यस्य मैत्रस्याऽनुमित्यापत्तेरभावात् , मैत्रात्मनि स्वतन्त्रहेतुभूतव्याप्तिज्ञानाभावादिति भावः ।

ननु व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन, पक्षधर्मताविषयकव्याप्तिप्रकारकज्ञानत्वेन वा हेतुतेत्यत्र विनिगमनाविरहेण हेतुताद्वयं तवाऽपीत्यत आह-वह्निव्याप्य इति । अनुमितिः

रामरुद्री ।

वह्निव्याप्यवानिति शाब्दपरामर्शोऽपि न सम्भवत्येव, धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादेरेव व्याप्तित्वादित्याशङ्कानिरासायाऽऽह—वह्न्यभाववदवृत्तीति । फलबलादिति । अनुमितिरूपकार्येण कारणानुमानसम्भवादिति भावः। लघुत्वादिति । उभयत्राऽपि व्यभिचारस्याऽविशिष्टतया लघुरूपेणैव कारणतायाः कल्पयितुमुचितत्वादिति भावः।

मूलयुक्तिरिति । व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानहेतुतासाधकयुक्तिरित्यर्थः ।

शानचेति । "लटः शतृशानचौ" इति सूत्रेण वर्तमानार्थकलस्थानिकत्वेन शतृशानचोर्विधानादिति भावः ।

तवाऽपीति । यद्यपि व्याप्यतावच्छेदकप्रकारकपक्षविशेष्यकनिश्चयत्वेन पक्षविशेष्यक-

**ज्ञानादप्यनुमितिः स्यात् । इत्थं च यत्र ज्ञानद्वयं, तत्राऽपि विशिष्टज्ञानं कल्पनीयं, फलमुखगौरवस्याऽदोषत्वात् ॥ इति परामर्शनिरूपणम् ॥**

दिनकरी ।

**स्यादिति** । न्यायनये तु व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालि ज्ञानत्वेन हेतुत्वस्य विवक्षितत्वात् । न तादृशज्ञानात् न वा धूमो वन्हिव्याप्यो धूमवान् पर्वत इति ज्ञानादनुमित्यापत्तिः, तत्र व्याप्तिप्रकारतानिरूपितधूमविशेष्यतायाः पर्वतविशेष्यतानिरूपितप्रकारतानात्मकत्वादिति भावः । ननु ज्ञानद्वयस्थले विशिष्टज्ञानकल्पने कल्पनागौरवं न्यायमते दूषणं भविष्यतीत्यत आह—**इत्थं चेति** । **फलमुखगौरवस्याऽदोषत्वादिति** । **फलं**-कार्यकारणभावग्रहः, तन्मुखं-तदधीनं, **गौरवं**-गौरवज्ञानमित्यर्थः । विशिष्टज्ञानत्वावच्छेदेन कारणत्वग्रहे विशिष्टज्ञानत्वधर्मिकगौरवनिश्चयो विरोधी वाच्यः, तच्च गौरवं प्रमाणान्तरासिद्धततदनुमित्यव्यवहितपूर्ववृत्तिस्वाश्रयकत्वमेव, तादृशगौरवनिश्चयो विशिष्टज्ञानत्वेन कारणत्वनिश्चयाधीनः स्वघटकीभूततत्तदनुमित्यव्यवहितपूर्ववर्त्तिस्वाश्रयनिर्णयं विना न सम्भवतीति कार्यकारणभावनिर्णयात् पूर्वं गौरवनिर्णयाभावान्न तादृशगौरवं दूषकमिति भावः ॥

॥ इति परामर्शस्याऽनुमितिहेतुत्वव्यवस्थापनम् ॥

मूले परामर्शलक्षणानन्तरं व्याप्तिनिरूपणे सङ्गतिमुपोद्घातं निरूपयन्नाह—**व्याप्यो नामेति** । **तत्रेति** । घटकत्वं सप्तम्यर्थः ।

रामरुद्री ।

व्याप्यतावच्छेदकप्रकारकनिश्चयत्वेन वा कारणत्वमित्यत्र विनिगमनाविरहेण मीमांसकमते कार्यकारणभावचतुष्टयापत्त्या न्यायमते विनिगमनाविरहेण कारणताद्वयापादनमसङ्गतं, तथाऽपि व्याप्तिप्रकारत्वहेतुप्रकारत्वपक्षविशेष्यत्वानां त्रयाणां विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुभूतकार्यकारणभावत्रयापत्त्या मीमांसकमते न गौरवमित्यर्थे तात्पर्यान्नाऽसङ्गतिरिति भावः । मूले—**आलोकवानिति** । यद्यपि व्याप्यतावच्छेदकानां धूमत्वादीनां निवेशे न तदापत्तिः, धूमत्वप्रकारकपक्षधर्मताज्ञानस्य धूमविशेष्यकव्याप्तिज्ञानसहकारेणैव फलजनकत्वस्योपगन्तव्यत्वात्, तथाऽपि व्याप्यतावच्छेदकानां निवेशे व्याप्यतावच्छेदकभेदेन अनन्तकार्यकारणभावापत्त्या गौरवमिति बोध्यम् । **व्याप्तिप्रकारतानिरूपितहेतुप्रकारतेति** । इदं च प्रकारताविशेष्यतयोरभेदवादिमताभिप्रायेण । भट्टाचार्यमते तु व्याप्तिप्रकारतानिरूपितविशेष्यतावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताशालित्वेन वक्तव्यम्, एकनिष्ठप्रकारताविशेष्यतयोर(भेदवादिनाऽ) वच्छेद्यावच्छेदकभावस्वीकारात्, विशेष्यताप्रकारतयोर्भेदास्वीकारे रक्तदण्डवानिति बुद्धौ रक्तरूपविशेष्यकदण्डाभावनिश्चयप्रतिबध्यत्वापत्तेः, दण्डप्रकारतानिरूपितरक्तरूपनिष्ठविशेष्यताशालित्वात्तादृशबुद्धेरिति ध्येयम् । वक्ष्यमाणगौरवस्य कारणतानिश्चयानधीनत्वादाह—**गौरवज्ञानमिति** । **प्रमाणान्तरेति** । कार्यलिङ्गकानुमानातिरिक्तप्रमाणेत्यर्थः । **स्वाश्रयकत्वं**-स्वाश्रयवृत्तित्वम् । **निश्चयाधीन इति** । तादृशकारणतानिश्चये सत्येव कार्यलिङ्गेन तत्तदनुमित्यव्यवहितपूर्ववृत्तित्वविशिष्टपरामर्शस्य निर्णयसम्भवादिति भावः । **स्वघटकीभूतेति** । गौरवघटकीभूतेत्यर्थः । **न तादृशेति** । स्वोत्तरोत्पन्नगौरवज्ञानस्य प्रतिबन्धकत्वासम्भव इति भावः ॥ इति परामर्शनिरूपणम् ॥

**उपोद्घातमिति** । व्याप्यपक्षोभयवैशिष्ट्यावगाहिज्ञानस्य व्याप्तिज्ञानसाध्यत्वेनोपोद्घातसङ्गत्या परामर्शनिरूपणानन्तरं व्याप्तिनिरूपणमिति भावः । **घटकत्वमिति** । स्वविषयकप्रतीत्यविषयत्वं तद्घटकत्वं, व्याप्यघटकीभूता व्याप्तिः केत्यर्थः पर्यवसितः । साध्यवदन्यावृत्तित्वलक्षणे साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वाविवक्षणे वन्हिमान् धूमादित्यादौ अव्याप्तिर्मूलोक्ता न सङ्गच्छते, साध्यवत्त्वाव-

**व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥ ६८ ॥**

**व्याप्यो नाम ? व्याप्त्याश्रयः, तत्र व्याप्तिः केत्यत आह व्याप्तिरिति । वह्निमान् धूमादित्यादौ साध्यो वह्निः, साध्यवान् महानसादिः, तदन्यो जलह्रदादिः, तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्नेः सत्त्वान्नाऽतिव्याप्तिः ।**

**अत्र येन सम्बन्धेन साध्यं, तेन सम्बन्धेन साध्यवान् बोध्यः, अन्यथा समवायसम्बन्धेन वह्निमान् वह्नेरवयवः, तदन्यो महानसादिः, तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् (१) ।**

दिनकरी ।

अव्याप्तिप्रसङ्गादिति । अव्याप्त्यभिधानमिदं येन केन चित्सम्बन्धेन साध्यवत्त्व-

रामरुद्री ।

च्छिन्नभेदस्य संयोगेन साध्यवति पर्वतादावसम्भवादित्यतस्तद्ग्रन्थभावमाह–येन केन चिदिति ।

---

( १ ) अथेदं न सम्भवति । लक्षणे साध्यवदन्यनिरूपितवृत्तित्वाभावस्यैव निवेशेन तादृशयत्किञ्चित्सम्बन्धेन साध्यवदन्यनिरूपितवृत्तित्वाभावस्याऽपि तद्घटकतया तथाविधसंयोगादिना साध्यवदन्यनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वेनैवाऽव्याप्तिविरहादिति चेन्न । धूमवान् वह्नेरित्यादावतिव्याप्तिः, कालिकेन धूमवदन्यनिरूपितवृत्तित्वाभावस्य हेतौ सत्वात्, अतः साध्यवदन्यनिरूपितवृत्तित्वसामान्याभाववत्त्वं निवेशनीयम् , एवं सति संयोगेन साध्यवदन्यायोगोलकनिरूपितवृत्तित्वाभावस्यैव हेतावसत्त्वान्नाऽतिव्याप्तिः, अव्याप्तिश्च निरुक्तस्थले, तत्र समवायेन साध्यवदन्यनिरूपितवृत्तित्वाभावस्यैव हेतावसत्त्वादिति नाऽसङ्गतिः । न च कोऽसौ साध्यवदन्यनिरूपितवृत्तित्वसामान्याभावः ? यदि साध्यवदन्यनिरूपितवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, तदा धूमवदन्यवृत्तित्व–जलत्वोभयाभावस्याऽपि तथात्वेन तस्यैव वह्नौ सत्त्वेन धूमवान् वह्नरित्यादावतिव्याप्तिः, यदि च साध्यवदन्यनिरूपितत्व–वृत्तितात्व–धर्मद्वयमात्रावच्छिन्नप्रतियोगिताकाभावः, तथाऽपि धूमवदन्यजलह्रदादिवृत्तित्वाभावमादाय पुनस्तत्रैवाऽतिव्याप्तिः, यदि च साध्यवद्भेदनिष्ठावच्छेदकताभिन्ना सती अधिकरणत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदता, तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिका याऽधिकरणनिष्ठा निरूपितत्वसम्बन्धावच्छिन्नाऽवच्छेदकता, तद्भिन्ना सती वृत्तित्वत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छदकता तदनिरूपिका, अथ चैत-दृशावच्छेदकताद्वयानिरूपिका या वृत्तित्वनिष्ठा प्रतियोगिता, तन्निरूपकोऽभावः स इत्युच्यते, तथाऽपि ह्रदवृत्तित्वविशिष्टधूमवद्भेदवन्निरूपितवृत्तित्वाभावमादाय प्रागुक्तातिव्याप्तिः स्थिरैव, अतः प्रतियोगित्वसम्बन्धावच्छिन्नसाध्यवन्निष्ठावच्छेदकताभिन्ना सती भेदत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिका या भेदनिष्ठावच्छेदकता, तद्भिन्ना सती अधिकरणत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिका या अधिकरणनिष्ठाऽवच्छेदकता, तद्भिन्ना सती वृत्तितात्वनिष्ठावच्छेदकता भिन्ना याऽवच्छेदकता तदनिरूपिका अथ चैतादृशावच्छेदकताद्वयनिरूपिका या वृत्तित्वनिष्ठा प्रतियोगिता तन्निरूपकोऽभाव एव वाच्यः । अत्र ह्रदवृत्तित्वविशिष्टधूमवद्भेदवन्निरूपितवृत्तित्वाभावमादायाऽतिव्याप्तिवारणाय प्रथमानिरूपकान्तप्रवेशः । धूमवद्भेदवज्जलह्रदादिवृत्तित्वाभावमादायाऽतिव्याप्तिवारणाय द्वितीयानिरूपकान्तप्रवेशः । धूमवदन्यवृत्तित्वजलत्वोभयाभावमादायाऽतिव्याप्तिवारणाय तृतीयानिरूपकान्तप्रवेशः । अत्र च तद्व्यक्तेः स्वरूपतो भानमते तद्व्यक्तिपदेन वह्निमद्भेदमुपादाय तद्व्य-

**साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः, तेन यत्किञ्चिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमसत्त्वेपि न क्षतिः (१) ।**

क्तिमन्निरूपितवृत्तित्वाभावस्य वन्हौ सत्त्वेन धूमवान् वन्हेरित्यादावतिव्याप्तिवारणाय प्रथमनिरूपकान्तम् । तत्राऽपि तद्व्यक्तेर्भेदस्वरूपत्वेन भेदत्ववत्तद्व्यक्तिमद्वृत्तित्वाभावमादाय तथैवाऽतिव्याप्तिवारणाय प्रथमनिरूपकताघटकसाध्यनिष्ठावच्छेदकतानिरूपकत्वमुपात्तम् । वह्निमान् जलादित्यादिविरुद्धव्यभिचारिणि तद्व्यक्तिपदेन साध्यतावच्छेदकसंसर्गमादाय प्रतियोगित्वसम्बन्धेन वह्निविशिष्टतद्व्यक्तिमद्वृत्तित्वाभावमादायाऽतिव्याप्तिवारणाय भेदत्वनिष्ठावच्छेदकतानिरूपकत्वस्याऽपि निवेशः । तद्व्यक्तिपदेन जलह्रदादिकमादायतद्व्यक्तिवृत्तित्वं नाऽस्तीत्यभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय द्वितीयनिरूपकान्तप्रवेशः । तत्राऽपि अधिकरणत्ववत्तद्व्यक्तिवृत्तित्वं नाऽस्तीत्यभावमादाय पुनस्तथैवाऽतिव्याप्तिवारणाय तद्घटकभेदनिष्ठावच्छेदकतानिरूपकत्वप्रवेशः । अधिकरणत्वनिष्ठावच्छेदकतानिरूपकत्वस्य चाऽखण्डाभावघटकतयैव सार्थक्यं बोध्यम् । अनुपादेयमेव वा तत्, प्रयोजनविरहात् । मीनशैवालादिनिष्ठवृत्तित्वमेव तद्व्यक्तिपदेनोपादाय तद्व्यक्तिर्नाऽस्तीत्यभावस्य हेतौ सत्त्वादतिप्रसङ्गवारणाय तृतीयनिरूपकान्तप्रवेशः । तत्राऽपि वृत्तितात्ववत्तद्व्यक्त्यभावमादायाऽतिप्रसङ्गवारणायाऽधिकरणनिष्ठावच्छेदकतानिरूपकत्वप्रवेशः । तद्व्यक्तिपदेन धूमनिष्ठप्रतियोगित्वमादाय धूमवद्भिन्ननिरूपिततद्व्यक्त्यभावमादाय पुनरतिव्याप्त्यापत्तिः, धूमाभावस्याऽपि धूमवद्भिन्नत्वात्, अतो वृत्तितात्वनिष्ठावच्छेदकतानिरूपकत्वनिवेशनमिति । एवं च धूमवान् वन्हेरित्यादावेवाऽतिव्याप्तिः, कालिकेन धूमवदन्यनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वात् । न तु वन्हिमान् धूमादित्यत्राऽव्याप्तिः, तत्र संयोगेन साध्यवदन्यनिरूपितवृत्तित्वाभावस्यैव हेतौ सत्त्वेन लक्षणसमन्वयात्, तथा च वह्निमान् धूमादित्यादावव्याप्तिप्रदर्शनपरोऽयं ग्रन्थोऽसङ्गत इति वाच्यम् । एतादृशवृत्तित्वसामान्याभावनिवेशेऽपि तद्व्यक्तिपदेन ह्रदादिकमादाय धूमवदन्यतद्व्यक्तिवृत्तित्वाभावमादाय धूमवान् वन्हेरित्यादावतिव्याप्तेर्दुरुद्धरत्वात् । किन्तु साध्यवदन्यनिरूपितवृत्तित्वाभावकूटवत्त्वमेव तादृशवृत्तित्वसामान्याभावो वाच्यः । एवं सति धूमवद्ह्रदवज्जलह्रदादिवृत्तित्वाभावस्य वह्नौ सत्त्वेऽपि तादृशकूटान्तर्गतस्य धूमवदन्यवृत्तित्वं नाऽस्तीत्याकारकाभावस्यैव तत्राऽसत्त्वान्नाऽतिव्याप्तिः । अव्याप्तिश्च वह्निमान् धूमादित्यादौ, तादृशकूटान्तर्गतस्य समवायेन वह्निमदन्यनिरूपितवृत्तित्वाभावस्यैव हेतावसत्त्वादिति नाऽव्याप्तिप्रदर्शनपरग्रन्थासङ्गतिरिति सङ्क्षेपः ।

(१) अथ किमिदं साध्यवदन्यत्वं नाम ? यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं, तदा साध्यवत्त्वस्य साध्यस्वरूपतया तद्वह्निमदन्यमहानसादिवृत्तित्वस्यैव धूमे सत्त्वादव्याप्तिप्रसङ्गः । यदि च साध्यतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वं, तथाऽपि तद्वह्निमद्ध्रदस्य वारणासम्भवः । यदि साध्यतावच्छेदकेतरानवच्छिन्नसाध्यतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वं, तदा प्रमेयाश्रयवान् धूमादित्यादौ साध्यतावच्छेदकेतराप्रसिद्ध्याऽव्याप्तिः । यदि च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्त्यवच्छेदकताकप्रतियोगिताकभेदवत्त्वं तत्, वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । अत्र महानसीयवह्नेः प्रतियोगितया साध्यतास्थले तद्व्यक्तित्वस्य हेतुतायां प्रतियोगितासम्बन्धेन वह्निमदन्यमहानसीयवन्ह्यभाववृत्तित्वस्य हेतौ सत्त्वादव्याप्तिवारणाय प्रथमपर्याप्तिनिवेशः । महानसीयवह्निमद्ध्रदादिकमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणाय द्वितीयपर्याप्तिनिवेश इत्युच्यते, तदाऽपि अव्यासज्यवृत्तिधर्मस्य पर्याप्त्यनभ्युपगमे वह्निमान्

धूमादित्यादौ साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यप्रसिद्ध्याऽव्याप्तिः, किञ्चाऽवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वानभ्युपगमे प्रमेयाश्रयवान् धूमादित्यादावव्याप्तिः। तत्र साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकस्य तादृशप्रमेयगतसमुदायत्वस्यैव वाच्यतया यावत्प्रमेयाश्रयवान्नेत्याकारकतादृशाभावस्याऽलीकत्वेन लक्षणाघटकत्वात्, अन्यभेदानाञ्च निरुक्तरूपवृत्त्यवच्छेदकताकप्रतियोगिताकत्वविरहेणैव लक्षणाघटकत्वात्साध्यवद्भेदस्यैवाऽप्रसिद्धेरिति चेदुच्यते। साध्यताविशिष्टावच्छेदकताविशिष्टप्रतियोगिताकभेद एव साध्यवद्भेदः। साध्यताविशिष्टत्वं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन। अवच्छेदकतावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतचतुष्टयसम्बन्धेन। स्ववृत्तित्वमपि स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन। अवच्छेदकतावैशिष्ट्यं च प्रतियोगितायां स्वनिरूपितत्व-स्वान्यावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन। तत्र चतुष्टयसम्बन्धमध्ये स्वरूपतो घटत्वविशिष्टस्य विषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वहेतौ स्वरूपतःपटत्वादिनिष्ठावच्छेदकताकावच्छेदकताकप्रतियोगिताकभेदमादायाऽव्याप्तिवारणाय स्वसामानाधिकरण्यप्रवेशः। तत्रैव घटत्वत्वेन घटत्वविशिष्टवद्भेदमादायाऽव्याप्तिवारणाय स्वानवच्छेदकतानवच्छिन्नत्वप्रवेशः। घटत्वत्वेन घटत्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वादित्यादौ स्वरूपतोघटत्वविशिष्टवद्भेदवारणाय स्ववृत्तित्वप्रवेशः। वह्निमान् धूमादित्यादौ विषयितया वह्नित्वविशिष्टवदन्यत्वमादायाऽव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशः। न च तथाऽपि विषयित्वसमवायान्यतरसम्बन्धेन रूपत्वविशिष्टस्य समवायेन साध्यतायां आत्मघटान्यतरत्वादिहेतौ विषयितया रूपत्वविशिष्टवद्भेदं घटे, समवायेन रूपत्वविशिष्टवद्भेदं चाऽऽत्मनि समादायाऽव्याप्तिः। यदि च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमेव स्वावच्छेदकसम्बन्धावच्छिन्नत्वपदार्थः, वह्निमान् धूमादित्यादौ तद्वह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टवद्भेदवारणाय संसर्गकोटावितरवारकपर्याप्तिनिवेशः प्रथमः, द्वितीयस्त्वेतदव्याप्तिवारणायैवेति विभाव्यते, तदाऽपि अव्यासज्यवृत्तिधर्मस्य पर्याप्त्यनभ्युपगमे शुद्धसमवायादेः साध्यतावच्छेदकताघटकतास्थले तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यप्रसिद्ध्याऽव्याप्त्यापत्तेरिति वाच्यम्। स्वावच्छेदकसम्बन्धावच्छिन्नत्वपदेन स्वानवच्छेदकसंसर्गतावच्छेदकावच्छिन्नावच्छेदकत्वानिरूपकत्व-स्ववृत्तित्वोभयस्यैव विवक्षितत्वात्। स्ववृत्तित्वमपि स्वानवच्छेदकसंसर्गतावच्छेदकावच्छिन्नावच्छेदकत्वानिरूपकत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेत्यादिकं बहुतरमूहनीयम्। एवं अवच्छेदकत्ववैशिष्ट्यघटकसंसर्गद्वये वह्निमत्पर्वतभेदमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणाय स्वान्यावच्छेदकत्वानिरूपकत्वमुपात्तम्। तद्व्यक्तेः स्वरूपतोभानमते तद्व्यक्तिपदेन घटादिभेदमादायाऽव्याप्तिवारणाय स्वनिरूपितत्वं निवेशितमिति विभावनीयम्। अथैवमपि समवायेन वह्निमद्भेदवारणासम्भव इति चेन्न। साध्यताविशिष्टेत्यादिनिरुक्तानुगमघटकीभूतसाध्यतावैशिष्ट्यस्य तादृशयथोक्तसम्बन्धेन स्वावच्छेदकसम्बन्धावच्छिन्नत्वसम्बन्धेन च विवक्षणीयत्वात्। स्वावच्छेदकसम्बन्धावच्छिन्नत्वमपि पूर्ववदेव बोध्यम्। नाऽतः समवायेन वह्निमद्भेदमादाय वह्निमान् धूमादित्यादौ विषयितासमवायान्यतरसम्बन्धेन रूपस्य साध्यतायां समवायेन रूपवद्भेदं चाऽऽदायाऽव्याप्तिः। पर्याप्तिनिवेशस्तु न सम्भवति, अव्यासज्यवृत्तिधर्मस्य पर्याप्त्यनभ्युपगमे वह्निमान् धूमादित्यादौ निरुक्तरीत्याऽव्याप्तिप्रसङ्गादिति विभावनीयम्।

येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन साध्यवदन्यावृत्तित्वं बोध्यं,तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः।

साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नाऽतिव्याप्तिः ।

अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात् साध्यवदन्यस्मिन् गुणादाववृत्तित्वं नाऽस्ति, तथाऽपि

दिनकरी ।

विवक्षणाभिप्रायेण । यदि च सम्बन्धसामान्येन साध्यवत्त्वं विवक्ष्यते, तदा धूमवान् वह्नेरित्यादावतिव्याप्तिर्बोध्या ।

अवृत्तित्वं नाऽस्तीति । विशिष्टाधेयताया अनतिरिक्तत्वादिति भावः । फलि-

रामरुद्री ।

यत्किञ्चित्सम्बन्धेनेति तदर्थः । तथा च समवायेन वन्हिमदन्यत्वस्य पर्वतादौ सत्त्वान्नाऽव्याप्त्यसङ्गतिरिति भावः । यद्यपि विषयतादिकृतविशेषणतादियत्किञ्चित्सम्बन्धेन साध्यवदन्यस्मिन् हेतोर्वृत्त्या सर्वत्राऽसम्भव एवेत्यव्याप्त्यभिधानं मूलकृतोऽसङ्गतं, तथाऽपि अयं(१) (२)सविषयकान्यत्वविशिष्टतद्रूपवान् (३) तद्घटभिन्नान्यत्वविशिष्टतद्रूपवान्वा तद्रसादित्यादौ लक्षणसम्भवादव्याप्त्यभिधानमिति बोध्यम् । ननु सम्बन्धसामान्येन साध्यवत्त्वं विवक्षणीयमतो नाऽव्याप्तिरित्यत आह—**यदि चेति । अतिव्याप्तिरिति** । धूमशून्यायोगोलकादेरपि सम्बन्धसामान्यान्तर्गतकालिकादिना धूमवत्त्वेन धूमासमानकालीनपदार्थस्यैव धूमवदन्यत्वात् वह्न्यधिकरणस्य धूमासमानकालीनस्याऽप्रसिद्धेरिति भावः । यदि च धूमासमानकालीनः प्रलयोत्पन्नपरमाणुक्रियादिरेव, तत्र हेतुतावच्छेदकसंयोगेन वृत्त्यप्रसिद्ध्यैव नाऽतिव्याप्तिरिति विभाव्यते, तदा तदभिप्रायेणैवाऽऽदिपदेन वह्निमत्त्वप्रकारकप्रमाविशेष्यत्वस्य स्वरूपसम्बन्धेन हेतोरुपसङ्ग्रह इति मन्तव्यम् ।

मूले-**साध्यवत्त्वावच्छिन्नेति** । साध्यतावच्छेदकावच्छिन्नपर्याप्तप्रतियोगितावच्छेदकताकभेदवानित्यर्थः । यथाश्रुते साध्यस्यैव साध्यवत्त्वरूपतया तत्तद्व्यक्तिमद्भेदस्य महानसीयवह्निमद्भेदस्य च वारणासम्भवात् । इदं च गुरुधर्मस्याऽपि प्रतियोगितावच्छेदकत्वमताभिप्रायेण, तेन द्रव्यत्वादिसाध्यकस्थले द्रव्यत्वत्वरूपसाध्यतावच्छेदकविशिष्टपर्याप्तावच्छेदकताया गुरुधर्मस्याऽनवच्छेदकतामतेऽप्रसिद्धावपि न क्षतिरिति ध्येयम् ।

एवं साध्यवदन्यवृत्तित्वत्वाच्छिन्नेति मूलस्यापि तादृशवृत्तित्वत्वपर्याप्तावच्छेदकताकेत्यर्थो बोध्यः । अन्यथा वह्निमदन्यह्रदवृत्तित्वाभावस्य वारणानुपपत्तेः, एवं साध्यवदन्यवृत्तित्वं साध्यवदन्यानुयोगिकत्वविशिष्टहेतुतावच्छेदकसम्बन्धप्रतियोगित्वमेव, न तु साध्यवदन्यनिरूपिततत्सम्बन्धावच्छिन्नाधेयत्वम्, वृत्त्यनियामकसम्बन्धेन हेतुतायां तदप्रसिद्धेः, तादृशाधेयतानवच्छेदकं हेतुतावच्छेदकमित्यत्राऽपि तादृशप्रतियोगितानवच्छेदकमित्येवाऽर्थ इति ध्येयम् ।

---

( १ ) 'इदम्' इत्यपि पाठः ।

( २ ) 'घटभिन्नसंयोगसंयुक्तसमवेतसविषयकान्यत्वविशिष्टतद्रूपवान्' इत्येव पाठः । स च प्रामादिक एव ।

( ३ ) तथा च सविषयकान्यत्वविशिष्टतद्रूपाधिकरणताया ज्ञानेऽसम्भव इति भावः । विशिष्टाधिकरणताया अतिरिक्तत्वात् । महाकालाद्यनुयोगिककालिकसम्बन्धेन महाकालस्यैव तत्र साध्यवत्त्वेन तद्भिन्ने तद्घटे हेतोर्वृत्तेरत्राऽपि लक्षणं नैव घटत इत्यतः स्थलान्तरमाह । तद्घटभिन्नान्यत्वेति इत्यवधेयम् ।

अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ।। ६९ ।।

हेतुतावच्छेदकरूपेणाऽवृत्तित्वं वाच्यं, हेतुतावच्छेदकं वृत्तितानवच्छेदकमिति फलितोऽर्थः ॥ ६८ ॥ इति व्याप्तिनिरूपणे पूर्वपक्षग्रन्थः ॥

ननु ,केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याऽप्रसिद्धत्वादव्याप्तिः, किञ्च सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन् सामान्यादौ हेतुतावच्छेदकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धत्वादत आह-अथ वेति । हेतुमति निष्ठा-वृत्तिर्यस्य स तथा विरहः-अभावः, तथा च हेत्वधिकरणवृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते ।

दिनकरी ।

**तोऽर्थ इति** । तथा च तन्निष्ठाधिकरणतानिरूपकतावच्छेदकस्यैव तन्निरूपिताधेयतावच्छेदकत्वनियमेन विशिष्टसत्तात्वस्य गुणाधेयतानवच्छेदकत्वान्नाऽव्याप्तिरिति भावः ॥ ६८ ॥

इति व्याप्तिनिरूपणे पूर्वपक्षग्रन्थः ॥

**'अथ वा-'** इत्यादिलक्षणमवतारयितुमाद्यलक्षणे दोषमाह-**नन्विति** । ननु केवलान्वयित्वज्ञानकाले पक्षतात्मक (१)(साध्य) संशयाभावान्नैवाऽनुमितिः, तच्छून्यकाले तु भ्रमात्मकव्याप्तिज्ञानादनुमितिर्भवत्येवेत्यत आह—**किञ्चेति** । 'इत्यादौ' इत्यादिना संयोगेन हेतुतायां गुणवान् घटादित्यादेः संग्रहः । ननु स्वाधिकरणावृत्तिसाध्यवदन्योन्याभावकत्वं लक्षणार्थः, तथा च नेयमव्याप्तिरिति चेन्न । वह्निमान् धूमादित्यादौ धूमाधिकरणे वन्हिमदन्योन्याभावस्य कालिकसम्बन्धेन वृत्तेरव्याप्त्यापत्तेः साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेनाऽवृत्तित्वस्याऽवश्यं विवक्षणीयतया सत्ताभाववान् जात्यभावादित्यादावव्याप्तेः, जात्यभावाधिकरणे साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धेः । न च सत्तावान् जातेरित्यादौ स्वाधिकरणेत्यादिव्याप्तिज्ञानं कारणं, सत्ताभाववान् जात्यभावादित्यादौ तु साध्यवदन्येत्यादिव्याप्तिज्ञानं कारणमिति वाच्यम् । तथापि संयोगसम्बन्धावच्छिन्नघटाभावे साध्ये विषयितया हेतौ घटे लक्षणद्वयस्याऽप्यव्याप्तिः, तत्र विषयितया हेत्वधिकरणज्ञाने साध्यवत्ताग्रहविरोधितानियामकसंयोगेन, घटाधिकरणे हेतुतावच्छेदकविषयितया वृत्तेरप्रसिद्धेः।

रामरुद्री ।

**विशिष्टाधेयताया इति** । यद्यपि विशिष्टस्याऽनतिरिक्तत्वादित्येव वक्तव्यम् । तच्च मूले उक्तमेव, तथाऽपि विशिष्टस्याऽतिरिक्तत्वेऽपि विशिष्टनिष्ठाधेयताया अतिरिक्तत्वेन शुद्धसत्तापर्याप्ताधेयताया गुणादिनिरूपितत्वेऽपि विशिष्टपर्याप्ताधेयताया न गुणादिनिरूपितत्वमित्याशङ्कानिरासायैव तदुक्तमिति बोध्यम् ।

॥ इति व्याप्तिनिरूपणे पूर्वपक्षग्रन्थः ॥

**केवलान्वयित्वेति** । भेदप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वनिश्चयकाल इत्यर्थः । **पक्षताघटकेत्यपपाठः** । साध्यसन्देहस्यैव पक्षतात्वात् , सिद्ध्यभावरूपपक्षतायाः सन्देहाघटित्वाच्च, किन्तु **पक्षतात्मकेत्येव** पाठः, तथा च वाच्यो न वेति संशयाभावादेव नाऽनुमितिरिति भावः । वस्तुतः सिद्धान्ते सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यैव पक्षतात्वोपगमात् मीमांसकमते केवलान्वयिसाध्यकानुमित्यनङ्गीकारादिद्वतीयदूषणाभिधानमिति युक्तमुत्पश्यामः । **न च सत्तावानित्यादि** । साध्यसाधन-

(१) 'पक्षताघटक'इत्यपि पाठः ।

अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं (१) तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः । न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम् । तत्तद्वह्न्यादेरप्युभयाभावसत्त्वात्, एकसत्त्वेऽपि द्वयं नाऽस्तीति प्रतीतेः । गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च ।

दिनकरी ।

नन्वतिरिक्तोभयाभावे मानाभाव इत्यत आह-**एक सत्त्वेऽपीति** । इदमुपलक्षणं, विशिष्टाभावमादायाऽव्याप्तिरित्यपि बोध्यम् । ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाऽभावविशेषणान्नाऽव्याप्तिरत आह—**गुणवानिति** । अत्र हेतोरेकव्यक्तिकतया समानाधिकरणयोरेव व्याप्तिरित्युक्तावपि न निस्तार इति भावः । एतद्रूपवानेतद्रसादित्यादौ लक्षणसत्त्वादसम्भवाभावादाह—**अव्याप्तिश्चेति** ।

रामरुद्री ।

भेदेन व्याप्तिभेदस्याऽऽवश्यकतया शब्दैक्यस्याऽनुपादेयत्वादिति भावः ।

**अतिरिक्तोभयाभाव इति** । प्रत्येकाभावातिरिक्तोभयाभाव इत्यर्थः । तथा च वह्निसत्त्वेऽपि वह्निघटोभयन्नास्तीति प्रतीत्या नाभावद्वयं तादृशप्रतीति विषयः । अपि त्वतिरिक्ताभाव एवेति भवत्येवाव्याप्तिरिति भावः । **विशिष्टाभावमिति** । महानसीयत्वविशिष्टवह्न्याभावमित्यर्थः । ननु वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोताकाभावनिवेशेऽपि वह्निमान् धूमादित्यत्रैव तत्तद्व्यक्तिभेदमादायाऽव्याप्तिसम्भवे स्थलान्तरेऽव्याप्तिप्रदर्शनं किमर्थमित्याशङ्कां निरस्यन्नाह-**अत्रेति** । अथ प्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्युक्तावपि नाऽव्याप्तिपरिहारः, हेत्वधिकरणपर्वतादौ महानसीयवन्ह्यभावादिसत्त्वेन तत्प्रतियोगितायां महानसीयत्वादिसहितस्य वह्नित्वादेरवच्छेदकत्वात् । न चानऽवच्छेदकत्वमवच्छेदकतापर्याप्त्यनधिकरणत्वम्, अवच्छेदकतापर्याप्तिश्चोभयस्मिन्, न तु प्रत्येकमतो नाऽव्याप्तिरिति वाच्यम् । प्रत्येकावृत्तेरुभयवृत्तित्वासम्भवेनोभयोरवच्छेदकतापर्याप्त्यधिकरणत्वे प्रत्येकस्य तथात्वस्याऽऽवश्यकत्वात् । न च प्रत्येकमवच्छेदकतासत्त्वेऽप्यवच्छेदकतायाः व्यासज्यवृत्तित्वेन प्रत्येकमुभयभेदवत्पर्याप्तिसम्बन्धेनाऽवच्छेदकत्वावच्छिन्नभेदो वह्नित्वे अक्षत एवेति वाच्यम् । तथा सति महानसीयवह्निमान् धूमादित्यादौ महानसीयवन्ह्यभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य प्रत्येकं महानसीयत्व-वह्नि-

---

(१) अथेदं विचारणीयम् । तत्तद्वन्ह्यभावस्य लक्षणघटकत्वे तादृशाभावप्रतियोगितावच्छेदकतायास्तद्व्यक्तित्व-वह्नित्वयोर्विद्यमानत्वेन वह्नित्वस्याऽपि तादृशाभावप्रतियोगितावच्छेदकतयाऽग्रे विवक्षणीयेन साध्यतावच्छेदके तादृशाभावप्रतियोगितानवच्छेदकत्वेनाऽप्युक्ताव्याप्तितादवस्थ्यमेवेति । न च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्यैव निवेशान्नैष दोष इति वाच्यम् । एवं सति धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः, साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके धूमत्वगतैकत्वे तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूत-घटत्व-पटत्व-धूमत्वादिगतसमुदायत्वभिन्नत्वस्य सत्त्वादिति चेन्मैवम् । हेतुसमानाधिकरणाभावविशिष्टान्यत्वस्यैव साध्यतावच्छेदकगतरूपे निवेशनीयत्वात् । वैशिष्ट्यञ्च स्वनिरूपप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

अथाऽत्र सर्वत्र घटघटान्यप्रमेयोभयाभावमादायाऽसम्भवसम्भवेऽव्याप्तिदानमनुचितमिति चेन्न । महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नाऽस्तीत्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वस्योपादेयतया तादृशाभावसङ्ग्रहासम्भवात् ।

तथाऽपि प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्न-सामानाधिकरण्यं व्याप्तिरिति वाच्यम् ।

ननु रूपत्वव्याप्यजातिमत्त्वान् (१) पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयः, तासां च शुक्लत्वादिस्वरूपाणां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न ।

तत्र परम्परया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात्, न

दिनकरी ।

इति वाच्यमिति । गुणत्वस्य द्रव्यत्वसमानाधिकरणा भावप्रतियोगितानवच्छेकत्वान्नाऽव्याप्तिरिति भावः ।

परम्परया-स्वाश्रयसमवायेन । तथा चोक्तपरम्परया यदवच्छेदकं तदन्यत्वस्य जा-

रामरुद्री ।

त्वयोः सत्त्वेनाऽतिव्याप्तिप्रसङ्गादिति चेन्मैवम् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यनवच्छेदकं साध्यतावच्छेदकतापर्याप्त्यवच्छेदकमित्यस्य विवक्षितत्वात्, वन्हिमान्धूमादित्यादौ वह्नित्वादेर्निरवच्छिन्नैव यद्यपि साध्यतावच्छेदकता, तथाऽपि साध्यतावच्छेदकतापर्याप्त्यवच्छेदकं वह्नित्वनिष्ठं तद्व्यक्तित्वं, तच्च न महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकं, व्यासज्यवृत्तिधर्मपर्याप्तेरेकमात्रवृत्तिधर्मस्याऽनवच्छेदकत्वात्, अन्यथाऽऽकाशाविति प्रयोगापत्तेः । न चैवं घटपटावित्यादौ घटमात्रवृत्तिधर्मस्य कथं घटपटगतद्वित्वपर्याप्त्यवच्छेदकत्वेन भानमिति वाच्यम् । एकमात्रोद्देश्यतावच्छेदकताकस्थल एव द्वित्वपर्याप्त्यनवच्छेकत्वस्योद्देश्यतावच्छेदके भानोपगमात्, अत्र तु महानसीयत्ववह्नित्वोभयत्वमेवेति नाऽव्याप्तिः, न वा महानसीयवन्हिसाध्यकव्यभिचारिण्यतिव्याप्तिरिति परमरहस्यमनुसन्धेयम् । परे तु हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं विशेषणमुपादायोक्ताव्याप्तिर्वारणीया, महानसीयवन्ह्यभावादिप्रतियोगिताया वह्नित्वतद्भिन्नमहानसीयत्वाभ्यामवच्छिन्नतया लक्षणघटकतया घटाद्यभावीयप्रतियोगिताया एव लक्षणघटकत्वात्, व्यभिचारिणि साध्याभावस्य लक्षणघटकत्वोपपत्तये तदितरेति । सद्धेतौ तथाविधप्रतियोगिताप्रसिद्धये च साध्यतावच्छेदकेति । न चैवमपि महानसीयवह्निवृत्तित्वविशिष्टवह्नित्ववान्नाऽस्तीति प्रतीतिविषयाभावमादाय तद्वारणमशक्यमेव, यदि च प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविशेषणमुपादीयते,, तदा तद्वह्नित्वेन वह्नित्वस्य साध्यतावच्छेदकतायां व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेकतादिभेदेन व्याप्तेर्भिन्नतया निरवच्छिन्नसाध्यतावच्छेदककस्थलीयलक्षण एव प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविशेषणस्योपादेयत्वात् । न चैवमपि वह्नित्वत्वावच्छिन्नसाध्यतावच्छेकताकस्थलीयसद्धेतौ तद्वह्निवृत्तित्वविशिष्टवह्नित्ववान्नाऽस्तीतिप्रतीतिविषयभावमादायाऽव्याप्तिरिति वाच्यम् । सावच्छिन्नसाध्यतावच्छेदककस्थलीयलक्षणे प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वविशेषणस्याऽप्युपादेयत्वात् । अथैवमपि यत्र प्रमेयस्यैव साध्यतावच्छेदकता, तादृशसद्धेतुस्थले प्रमेयरूपसाध्यतावच्छेदकेतराप्रसिद्धयोक्तविशेषणोपादानासम्भवः, तादृशस्थले तद्विशेषणानुपादाने च प्रमेयवद्घटाद्यभावमादायाऽव्याप्तिर्दुर्वारेति चेन्न । दण्ड्यादिसाध्यके परम्परया दण्डत्वस्येवाऽत्राऽपि परम्परया प्रमेयत्वस्यैव साध्यतावच्छेदकत्वोपगमादिति वदन्ति ।

ननु परम्परया रूपत्वन्यूनवृत्तिजातित्वस्य साध्यतावच्छेदकत्वेऽपि साक्षात्सम्बन्धेन तादृशजातित्वविशिष्टस्य पृथिव्यामभावसत्त्वेन साध्यतावच्छेदकं न तादृशाभावप्रतियोगितानवच्छेदकमिति कथमव्याप्तिनिरास इत्यत आह—तथा चेति । रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्ववतो

(१) जातिमत्त्वान् पृथिवीत्वादित्युक्तौ सत्त्वगुणत्वादिरूपजातीनामेव प्रतियोगितानवच्छेदकत्वाद्रूपत्वव्याप्येत्युपात्तम् । तद्व्यक्तित्वादिहेतुकस्थले तद्व्यक्तिवृत्तिनीलरूपादिगतनीलत्वादेरेवाऽनवच्छेदकत्वसम्भवात्पृथिवीत्वपर्यन्तानुधावनमिति मन्तव्यम् ।

**हि तादृशधर्मावच्छिन्नाभावः क्वाऽपि पृथिव्यामस्ति, रूपत्वव्याप्यजातिमान्नास्तीति बुद्धयापत्तेः ।**

**साध्यादिभेदेन व्याप्तेर्भेदात् तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति ।**

**दिनकरी ।**

तित्वे सत्त्वान्नाऽव्याप्तिरिति भावः । तादृशधर्मावच्छिन्नाभावः—उक्तपरम्परया रूपत्वव्याप्यजातित्वावच्छिन्नस्य समवायेनाऽभावः । 'नाऽस्ति' इत्यत्र पृथिव्यामित्यनुषज्यते ।

मतान्तरमाह-**साध्यादीति** । 'आदि'ना साधनादि (१)परिग्रहः । **व्याप्तेर्भेदादिति** । व्याप्तिज्ञानस्य कारणताभेदादित्यर्थः । पूर्वोक्तरीत्या निर्वाहे तत्र साध्यतावच्छेदकतावच्छेदकधर्मिकप्रतियोगितावच्छेदकतानवच्छेदकत्वप्रकारकज्ञानस्य हेतुत्वं नोचितं, कारणतावच्छेदकगौरवात् । न च पूर्वोक्तरीत्या जातिमानित्येवाऽनुमितिः स्यात् , न तु जातिमत्त्वानित्याकारिकेति वाच्यम् । पृथिवीत्वादिहेतुके जाति मानित्येवाऽनुमित्याकारः(२), जातिमत्त्वानित्याकारस्तु तद्व्यक्तित्वहेतुक इत्यदोषादित्यपि 'वदन्ति' इत्यनेनाऽस्वरसः सूचितः ।

**रामरुद्री ।**

नादेः समवायेनाऽभावस्य पृथिव्यामपि सत्त्वेनाऽव्याप्त्यापत्त्या प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया तादृशपरम्परासम्बन्धावच्छिन्नावच्छेदकताविरहस्य साध्यतावच्छेदकेऽसत्त्वान्नाऽव्याप्तिरिति भावः ।

ननु साध्यसाधनभेदेन व्याप्तेर्भेदोपगमो नोचितः, उक्तरीत्या व्याप्तेरेकशब्दाभिलप्यमानत्वसम्भवादित्यत आह—**व्याप्तिज्ञानस्येति** । अयं भावः, कदा चिद्रूपत्वन्यूनवृत्तिजातिमानित्याकारिका, कदा चिच्च तादृशजातिमत्त्वानित्याकारिकाऽनुमितिरिति सर्वानुभवसिद्धं, तच्च कारणवैलक्षण्यं विना न सम्भवतीति यदा तादृशजातित्वस्य विधेयतावच्छेदकतया भानं, तदा तादृशानुमितौ परम्परयाऽनवच्छेदकत्वस्य साध्यतावच्छेदकधर्मिकं ज्ञानं कारणं, यदा तु तादृशजातित्वस्य विधेयतावच्छेदकतावच्छेदकत्वेन भानं, तदा तादृशानुमितौ साध्यतावच्छेदकतावच्छेदकधर्मिकं प्रतियोगितावच्छेदकतानवच्छेदकत्वज्ञानं कारणमिति व्याप्तिज्ञानकारणताभेद एव पर्यवसानं, एवञ्च मूले **'साध्यसाधनभेदेन'** इत्यस्य साध्यतावच्छेदकसाधनतावच्छेदकभेदेनेत्येवाऽर्थ इति ध्येयम् । **जातिमानित्येवेति** । वह्निमानित्याद्यनुमितौ यद्धर्मिकमनवच्छेदकत्वज्ञानं, तस्यैव विधेयतावच्छेदकतया भाननियमादिति भावः । इष्टापत्त्या समाधत्ते—**पृथिवीत्वादीति** । न न्वेवं रूपत्वन्यूनवृत्तिजातिमत्त्वानित्याकारानुमितेः तन्मतेऽपलापापत्तिरित्यत आह—**जातिमत्वानिति । तत्तद्व्यक्तित्वेनेति** । नीलघटादिनिष्ठतद्व्यक्तित्वादेर्हेतुत्वे तद्व्यक्तिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य नीलत्वादिजातौ बाधितत्वादिति भावः ।

ननु मूले द्रव्यं विशिष्टसत्त्वादित्यत्राऽव्याप्त्यभिधानमसङ्गतं, समवायस्य हेतुतावच्छेदकसम्बन्धत्वे तेन सम्बन्धेन सत्ताऽभिन्नविशिष्टसत्तायाः साध्याभाववति गुणे सत्त्वेन व्यभिचारितयाऽलक्ष्यत्वात् । यदि च विशिष्टसत्तात्वावच्छिन्नाधिकरणतैव हेतुतावच्छेदकसम्बन्धः, तेन च गुणावृत्तित्वं तस्या इति लक्ष्यत्वम् । न चैवं तेन सम्बन्धेन सत्तामात्रस्यैव हेतुताऽस्तु, तेन सम्बन्धेन विशिष्टसत्त्वस्य हेतुत्वे व्यर्थविशेषणतापत्तिरिति वाच्यम् । शुद्धसत्ताप्रतियोगित्वस्य विशिष्टाधिकरणताया मनङ्गीकारादित्युच्यते, तदा

---

**(१) अत्राऽऽद्यादिना साध्यतावच्छेदक-साधनतावच्छेदकसम्बन्धयोरपि परिग्रहो बोध्यः।**

**(२) साध्यतावच्छेदकधर्मिकहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानादित्यर्थः । तेन साध्यवदन्यावृत्तित्वादिरूपव्याप्तिज्ञानात्पृथिवीत्वादिहेतुकतादृशानुमित्यभ्युपगमेऽपि न क्षतिरिति मन्तव्यम् ।**

हेत्वधिकरणं हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यम्। तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाऽव्याप्तिः(१)।

हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं बोध्यं, तेन समवायेन धूमाधि-

दिनकरी।

शुद्धसत्ताधिकरणेति। न च विशिष्टनिरूपिताधिकरणतायाः हेतुतावच्छेदकसम्बन्धत्वे कथं तेन सम्बन्धेन सत्ताधिकरणं गुणः? समवायस्य तथात्वे तु द्रव्यत्वे साध्ये वि-

रामरुद्री।

हेतुतावच्छेदकसम्बन्धनिवेशेनैवाऽव्याप्तिपरिहाराद्धेतुतावच्छेदकधर्मनिवेशो विफल इत्याशङ्क्य समवाय एव हेतुताया अवच्छेदकसम्बन्धः, तेन सम्बन्धेन साध्याभाववद्वृत्तित्वं न अलक्ष्यताप्रयोजको व्यभिचारः, किन्तु साध्याभाववन्निरूपिततत्सम्बन्धावच्छिन्नाधेयतावच्छेदकहेतुतावच्छेदकवत्त्वमेव तथा, तथा च न व्यभिचारित्वं विशिष्टसत्त्वस्येति समाधत्ते-न चेत्यादिना। नच हेतुतावच्छेदकविशिष्टेति। हेतुतावच्छे-

---

(१) अथैवमपि हेतुतावच्छेदकीभूतविशिष्टसत्तात्वविशिष्टसत्ताधिकरणत्वस्य गुणादौ सत्त्वाद्द्रव्यं विशिष्टसत्त्वादित्यत्राऽव्याप्तिः स्थिरैव। न च हेतुतावच्छेदकविशिष्टाधिकरणमित्यनेन हेतुतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्ववतो विवक्षिततया नैष दोष इति वाच्यम्। एवमपि तत्रैव हेतुतावच्छेदकीभूतगुणकर्मान्यत्ववैशिष्ट्य-सत्तात्वोभयघटकसत्तात्व-मात्रमादायाऽव्याप्तितादवस्थ्यात्। न च हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप-वृत्तिनिरूपकताकाधिकरणतावदेव तदर्थः। वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तत्र द्रव्यं विशिष्टसत्त्वादित्यत्राऽव्याप्तिवारणाय प्रथमपर्याप्तिनिवेशः। वह्न्यभावत्वस्य साध्यतायां प्रतियोगितासम्बन्धेन वह्निहेतुकस्थले प्रतियोगितासम्बन्धेन महानसीयत्व-वह्नित्व-धर्मद्वयावच्छिन्ननिरूपकताकाधिकरणतावन्महानसीयवह्न्यभावमादायाऽव्याप्तिवारणाय द्वितीयपर्याप्तिनिवेश इति वाच्यम्। अव्यासज्यवृत्तिधर्मस्य पर्याप्त्यनभ्युपगमे वह्निमान् धूमादित्यादौ तादृशपर्याप्त्यप्रसिद्ध्याऽव्याप्तेः। न च हेतुताविशिष्टत्वमेव तादृशाधेयतायां देयम्। वैशिष्ट्यञ्च स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वोभयसम्बन्धेन स्ववृत्तित्वमपि स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन। तत्र वह्न्यभावत्वसाध्यक-प्रतियोगितया वह्नि-हेतुकस्थले प्रागुक्तदिशाऽव्याप्तिवारणाय प्रथमसम्बन्धप्रवेशः। द्वितीयसम्बन्धप्रवेशस्तु द्रव्यं विशिष्टसत्त्वादित्यत्रैवाऽव्याप्तिवारणायेति वाच्यम्। एवमपि सामान्यधर्मावच्छिन्नाधिकरणतायां मानाभावेन वह्निमान् धूमादित्यत्र तादृशाधेयत्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः। तत्र तत्तद्धूमत्वावच्छिन्नाधेयताया एव ग्राह्यत्वेन तत्र निरुक्तोभयसम्बन्धेन हेतुतावैशिष्ट्यस्याऽसत्त्वात्। न च सामान्यधर्मावच्छिन्नाधिकरणत्वानभ्युपगमे धूमवानिति प्रतीतेः को विषय इति वाच्यम्। तद्धूमवानितिप्रतीतिसिद्धायास्तत्त्व-धूमत्व-धर्मद्वयावच्छिन्नाधिकरणताया एव धूमवानिति प्रतीतिविषयत्वोपपत्तेः। न चैवं तद्धूमवानितिप्रतीतेर्धूमवानितिप्रतीतेश्चाऽविशेषापत्तिरिति वाच्यम्। तद्धूमवानितिप्रतीत्या आधेयतायां तत्त्वावच्छिन्नत्व-धूमत्वावच्छिन्नत्वयोरवगाहनेन धूमवानितिप्रतीत्या च धूमत्वावच्छिन्नत्वमात्रस्याऽवगाहनेन तयोर्भेदसम्भवादिति चेन्न। यन्निष्ठाभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकं तस्यैव हेत्वधिकरणपदार्थत्वात्। न चैवमपि पर्वतादावपि नितम्बाद्यवच्छेदेन धूमाभावसत्त्वात्पर्वतादेरपि हेत्वधिकरणत्वानुपपत्तिरिति वाच्यम्। यन्निष्ठपदेन यन्निरूपितनिरवच्छिन्नवृत्तिताया एव विवक्षितत्वादित्यन्यत्र विस्तरः।

करणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाऽव्याप्तिः ।

अभावश्च प्रतियोगिव्यधिकरणो बोध्यः । तेन कपिसंयोग्येतद्वृक्षत्वादित्यादौ मूलावच्छेदेनैतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाऽव्याप्तिः ।

न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं, तदा तथैवाऽव्याप्तिः, प्रतियोगिनः कपिसंयोगस्याऽनधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षे मूलावच्छेदेन सत्त्वात् । यदि तु प्रतियोग्यधिकरणावृत्तित्वं, तदा संयोगी सत्त्वादित्यादावतिव्याप्तिः, सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वाच्यम् । हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात्, स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति निष्कर्षः ।

प्रतियोग्यनधिकरणत्वं च प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वाच्यम् । तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशि-

दिनकरी ।

शिष्टसत्ताया व्यभिचारित्वात्तत्राऽव्याप्त्यभिधानमसङ्गतमिति वाच्यम् । साध्याभाववद्वृत्तितावच्छेदकहेतुतावच्छेदकस्यैव व्यभिचारपदार्थतया शुद्धसमवायसम्बन्धस्य हेतुतावच्छेदकसम्बन्धत्वेऽपि विशिष्टसत्त्वस्य हेतोर्व्यभिचारित्वाभावात् । नाऽव्याप्तिरिति । न च हेतुतावच्छेदकविशिष्टसत्तात्वविशिष्टसत्त्वस्य गुणे सत्त्वादेवंविवक्षणेऽपि कथमव्याप्तिपरिहार इति वाच्यम् । हेतुतावच्छेदकावच्छिन्ननिरूपिताधिकरणत्वस्य विवक्षितत्वात्, विशिष्टसत्तात्वस्य गुणनिष्ठाधिकरणतानिरूपिताधेयतानवच्छेदकतया तदवच्छिन्ननिरूपिताधिकरणत्वस्य गुणेऽभावादिति ।

तथैव–तदवस्थैव । तस्यैव वृक्ष इति । अधिकरणभेदेनाऽभावभेदानभ्युपगमादिति भावः । प्रतियोग्यधिकरणावृत्तित्वं प्रतियोग्यधिकरणवृत्तिभिन्नत्वम् ।

विवक्षितत्वादिति । प्रतियोगिव्यधिकरणपदेन विवक्षितत्वादित्यर्थः । नन्वेवं हेतुसमानाधिकरणेत्यस्य वैयर्थ्यं, सत्तावान् जाते(१)रित्यादौ सत्ताद्यभावस्य निरुक्तप्रतियोगिवैयधिकरण्याभावादव्याप्तिविरहादत आह—स्वप्रतियोग्यनधिकरणेति । निष्कर्ष इति । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभाव इत्यन्तस्य निष्कर्षः । तथाच हेतुसमानाधिकरणत्वविशेषणबलादेव तादृशप्रतियोगिवैयधिकरण्यलाभान्न तद्वैयर्थ्यमिति भावः ।

रामरुद्री ।

दकीभूतविशिष्टसत्तात्वविशिष्टा सत्तैव, तदधिकरणं गुणोपीति भावः ।

प्रदर्शिताऽव्याप्तौ पूर्वोक्ताव्याप्तिभेदाभावेन तथैवेत्यस्य सादृश्यार्थकता न घटत इत्यत आह—तदवस्थैवेति ।

---

(१) प्रतियोगिवैयधिकरण्यस्याऽप्रवेशे हेतुसामानाधिकरण्यस्याऽप्रवेशे सत्तावान् जातेरित्यादावव्याप्तिः प्रथममुपादेया । न तु वन्हिमान् धूमादित्यादौ । तत्र हेतुसामानाधिकरण्यनिवेशेऽपि नितम्बाद्यवच्छेदेन पर्वते वन्ह्यभावसत्त्वेनाऽव्याप्तेस्तदुपादानेऽपि तादवस्थ्यात्, इति तद्दलाप्रवेशे यत्राऽव्याप्तिरिष्टा तत्रैव तामुद्भर्तुं वन्हिमान् धूमादितिप्रसिद्धस्थलं परित्यज्यैतादृशस्थलानुसरणमिति बोध्यम् ।

ष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वसत्त्वेऽपि न क्षतिः ।

अत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यं, तेन ज्ञानवान् सत्त्वादित्यादौ सत्ताधिकरणघटादेर्विषयतया ज्ञानाधिकरणत्वेपि न क्षतिः (१) ।

इत्थञ्च वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वे-

दिनकरी ।

**सत्ताधिकरणत्वेऽपीति** । तथा च विशिष्टसत्ताभावो न प्रतियोगिव्यधिकरणः, अभावान्तरप्रतियोगितायाश्चाऽनवच्छेदकमेव विशिष्टसत्तात्वमित्यतिव्याप्तिः । **न क्षतिः**-नाऽतिव्याप्तिः । एवमग्रेऽपि ।

ननु प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोग्यनधिकरणत्वमुच्यतां तावताऽपि ज्ञानवान् सत्त्वादित्यादावनतिप्रसङ्गादित्यत आह-**इत्थं चेति** । साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणे चेत्यर्थः ।

**वन्हिविरहसत्त्वेऽपीति** । तथा च प्रतियोगितावच्छेदकसमवायेन प्रतियोगिव्यधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वाद्वह्नित्वस्याऽव्याप्तिः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाऽग्रिमप्रतियोगिताविशेषणे तु सम्बन्धद्वयप्रवेशेन गौरवमिति भावः ।

रामरुद्री ।

**तथा चेति** । वस्तुतः प्रतियोगिव्यधिकरणत्वं हेतुविशेषणम् । तच्च प्रतियोग्यनधिकरणवृत्तित्वं, तदधिकरणवृत्तित्वमभावविशेषणम् । तथाच लाघवात्प्रतियोग्यनधिकरण-हेत्वधिकरण-वृत्तित्वमभावविशेषणं वक्तुमुचितमिति भावो मूलकारस्येति युक्तमुत्पश्यामः ।

**गौरवमितीति** । अथ यत्र वह्निप्रतियोगिकसंयोगेन वह्नेः साध्यता तत्र घटाभावादिर्न प्रतियोगिव्यधिकरणः, साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धेः । न च तत्तद्वह्निव्यक्त्यभाव एव लक्षणघटकोऽस्त्विति वाच्यम् । रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपवत्त्ववतोऽभावमादायाऽव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्याऽऽवश्यकतया तत्तद्व्यक्त्यभावप्रतियोगितावच्छेदकतायास्तत्सम्बन्धावच्छिन्नत्वाभावेन तस्य लक्षणाघटकत्वात् । न च तृणादिजन्यतावच्छेदकवैजात्यावच्छिन्नाभाव एव तथाविधः प्रसिद्ध्यतीति वाच्यम् । एवमपि तद्रूपप्रतियोगिकत्वविशिष्टसमवायेन तद्रूपसाध्यकसद्धेतावव्याप्तेः, साध्यस्यैव तेन सम्बन्धेनाऽधिकरणप्रसिद्धेरिति चेन्न । विशेषरूपेण संसर्गतानभ्युपगमात् । तदभ्युपगमे तु साध्यतावच्छेदकसम्बन्धसामान्ये यदभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः, तादृशाभाव एव हेत्वधिकरणे प्रतियोगिव्यधिकरण इति निर्वचनीयम् । एवञ्च घटाभावादिरेव तादृशः प्रसिद्ध्यति, यत्किञ्चिद्घटादिसंयोगे वह्नित्वावच्छिन्नप्रतियोगिकत्व-पर्वताद्यनुयोगिकत्वोभयाभावसत्त्वात् वह्न्यभावस्याऽपि हेत्वधिकरणे प्रतियोगिव्यधिकरणत्वापत्त्याव ह्निमान् धूमादित्यादावव्याप्तिरतः सामान्यपदम् । व्यभिचारिणि साध्याभावस्य लक्षणघटकत्वोपपत्तये यत्किञ्चित्पदं, तेनाऽयोगोलकं यत्किञ्चित्पदेनोपादायोभयाभावोपपत्तेर्लक्षणघटकता साध्याभावस्याऽपीति ध्येयम् । एवं विशेषरूपेण संसर्गताभ्युपगमे यत्र वह्नित्वप्रतियोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेद-

---

(१) अथैवमपि वन्हिप्रतियोगिकसंयोगेन वन्ह्यादिसाध्यकधूमादिहेतुकस्थलेऽव्याप्तिः । तत्र साध्यतावच्छेदकसम्बन्धेन निरुक्तप्रतियोग्यनधिकरणहेत्वधिकरणाप्रसिद्धेरिति चेन्न । साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोग्यधिकरणत्वाभावस्यैव प्रतियोग्यनधिकरणत्वपदार्थत्वात् ।

ऽपि न क्षतिः ।

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्य चित्प्रतियोगिनोऽनधिकरणत्वं (१), तत्सामान्यस्य वा (२), यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं (३) वा विवक्षितम्? आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यत्र तथैवाऽव्याप्तिः, कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि भवति, तदनधिकरणं वृक्ष इति ।

द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, सर्वस्यैवाऽभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । न च वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेः, तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति (४) वाच्यम् । घटाभावे यो वन्ह्यभावः, तस्य घटाभावात्मकत-

दिनकरी ।

न क्षतिः–नाऽव्याप्तिः । समवायेन वह्न्यभावस्य साध्यतावच्छेदकसंयोगेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वाभावादिति भावः ।

तत्सामान्यस्य–प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्य । यत्किञ्चिदिति । यत्किञ्चियत्प्रतियोगितावच्छेदकं तदवच्छिन्नसामान्यस्य वेत्यर्थः ।

पूर्वक्षणवृत्तित्वविशिष्टेति । पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्य घटाभावादेर्योऽभावस्तदात्मकेत्यर्थः । घटाभावाद्यधिकरणेऽपि पूर्वक्षणवृत्तित्वविशिष्टघटाभावादेरभावस्योत्तरक्षणावच्छेदेन सत्वादिति भावः । न च पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेरभावः स्वाभावस्य प्रतियोगी, न घटाभावादेरिति वाच्यम् । पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेर्योऽभावः, तदभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावानतिरेकितया विशिष्टघटाभावप्रतियोगिनस्तस्य शुद्धघटाभावप्रतियोगित्वात्, तथा च प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसम्भव इति भावः । घटाभावात्मकतयेति । अभावाधिकरणकाभावस्याऽधिकरणानति-

रामरुद्री ।

कता, तत्र हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाया अप्रसिद्ध्याऽव्याप्तिरतः प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं न निवेशनीयं, परन्तूक्ताव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकत्वाभावो विवक्षणीय इति विभावनीयम् । मूले—भिन्न इत्युच्यत इति । अन्यथा वन्हिमति घटशून्यदेशे वह्निर्नाऽस्तीति घटवति वह्निशून्ये घटो नाऽस्तीति प्रत्ययस्य चाऽऽपत्तेरिति भावः ।

---

(१) प्रतियोगितावच्छेदकावच्छिन्नविशिष्टत्वमित्यर्थः । वैशिष्ट्यञ्च स्वानधिकरणत्वसम्बन्धेन ।

(२) प्रतियोगितावच्छेदकावच्छिन्नविशिष्टान्यत्वमित्यर्थः । वैशिष्ट्यञ्च स्वाधिकरणत्वसम्बन्धेन ।

(३) प्रतियोगितावच्छेदकविशिष्टत्वमित्यर्थः । वैशिष्ट्यञ्च स्वावच्छिन्नानधिकरणत्वसम्बन्धेनेति । तेन नाऽननुगमः । (४) 'कथमप्रसिद्धिरिति' इत्यपि पाठः ।

या घटाभावस्य वह्निरपि प्रतियोगी, तदधिकरणं च पर्वतादिरित्येवंक्रमेण (१) प्रतियोगिव्यधिकरणस्याऽप्रसिद्धत्वात् । यदि च घटाभावादौ वन्ह्यभावादिर्भिन्न इत्युच्यते, तथाऽपि धूमाभाववान् वन्ह्यभावादित्यादावव्याप्तिः, तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः, तेन च सम्बन्धेन सर्वस्यैवाऽभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति ।

तृतीये तु कपिसंयोगाभाववानात्मत्वादित्यादावव्याप्तिः, तत्राऽऽत्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगः, तस्य च गुणत्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि, तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्याऽऽत्मन इति ।

मैवम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः, तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् (२) ।

दिनकरी ।

रिक्तत्वादिति भावः । 'इत्यादौ' इत्यादिना अभावसाध्यकसद्धेतुमात्रपरिग्रहः । स्वरूपसम्बन्ध इति । अभावीयविशेषणतेत्यर्थः । पूर्वक्षणवृत्तित्वविशिष्टस्वाभावेति । पूर्वक्षणवृत्तित्वविशिष्टं यत् स्वं—घटाभावादि, तदभावात्मकेत्यर्थः ।

प्राचां मते द्रव्ये संयोगसामान्याभावानङ्गीकारादाह—कपीति । घटाभावीययत्किञ्चित्प्रतियोगितावच्छेदकघटत्वावच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे सम्भवाच्च प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनाऽव्याप्तिः सम्भवतीति भावः । घटत्वहेतुके यत्किञ्चित्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वं हेत्वधिकरणस्य घटादेर्न सम्भवति, उत्पत्तिकाले घटे गुणसामान्याभावसत्त्वादत आत्मपर्यन्तानुधावनम् ।

तृतीयविवक्षानुसारेण समाधत्ते—यादृशेति । यादृश्याः प्रतियोगिताया अवच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितावच्छेदकतानाश्रयत्वमित्यर्थः । विवक्षितत्वात्-अप्रतियोगिपदेन विवक्षितत्वात् । कपिसंयोगाभाववानात्मत्वादित्यादौ गुणसामान्याभावत्वावच्छिन्नप्रतियोगिताया एव यादृशप्रतियोगितापदेनोपादातुं शक्यतया तदनवच्छेदकत्वस्य कपिसंयोगाभावत्वे सत्त्वान्नाऽव्याप्तिरिति भावः । अत्र च यद्धर्मविशिष्टान-

रामरुद्री ।

तृतीयविवक्षेति । यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वविवक्षानुसारेणेत्यर्थः । अप्रतियोगिपदेनेति । इदञ्च यथाश्रुतमूलाभिप्रायेणोक्तम् । वस्तुतस्तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके विवक्षणीयम् । अन्यथा वह्निमान् धूमादित्यत्रैवाऽव्याप्तेः पूर्वमुपदर्शितत्वादिति बोध्यम् । अत्र चेति । साध्यतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नवदन्यत्वं हेतुमतस्तदन्यसाध्यतावच्छेदकाव-

---

( १ ) 'पर्वतादीतिक्रमेण' इत्यपि पाठः ।

( २ ) प्रतियोगिता-विशिष्ट-प्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितार्थः । वैशिष्ट्यञ्च स्वतादात्म्य-स्वावच्छेदकावच्छिन्नानधिकरण-हेत्वधिकरणवृत्त्यभावीयत्वोभयसम्बन्धेन । तेन नाऽननुगमः ।

**ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामेवाऽभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात्।**

अत्र केचित्। **महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणः, महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात्, महाकाले महाकालभेदाभावात्।**

**वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूत–**

दिनकरी ।

धिकरणत्वं हेत्वधिकरणस्य, तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य लघोर्निर्दुष्टत्वसम्भवेऽपि यथासन्निवेशे न वैयर्थ्यमिति भावः ।

साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणेऽव्याप्तिमाशङ्कते—**नन्विति ।**

**महाकालभेदविशिष्टघटाभाव इति ।** अभावीयविशेषणताघटितसामानाधिकरण्यसम्बन्धेन महाकालभेदविशिष्टस्य घटस्याऽभाव इत्यर्थः । **महाकाले महाकालभेदाभावादिति ।** अभावीयविशेषणतासम्बन्धेन महाकालभेदाभावादित्यर्थः । सामानाधिकरण्यघटकीभुतविशेषणविशेष्यसम्बन्धाभ्यां यत्र विशेषणविशेष्योभयसत्त्वं तत्रैव विशिष्टाधिकरणत्वोपगमादिति भावः ।

ननु महाकालमात्रवृत्तिविशेषणतासम्बन्धेन साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि न प्रतियोगिव्यधिकरणः, तत्र तेन सम्बन्धेन महाकालान्यत्वविशिष्टघटाधिकरणाप्रसिद्धेरत आह—**वस्तुत इति ।** अत्र प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेत्वधिकरण–वृत्त्यभावीय–साध्यतावच्छेदकसम्बन्धावच्छिन्न–प्रतियोगितानवच्छेदकत्वघटितलक्षणकरणेऽपि कालो घटवान् कालपरिमाणादित्यादावव्याप्तिस्तदवस्थैव, साध्यतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रतियोगिताया अप्रसिद्धेः, अतः प्रतियोगिताधर्मिकोभयाभावपर्य-

रामरुद्री ।

च्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः । न च प्रतियोगितानवच्छेकाऽनन्तधर्मभेदनिवेशे गौरवमिति वाच्यम् । गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वमते गुरुधर्मघटितकम्बुग्रीवादिमद्भेदस्याऽप्यप्रसिद्ध्या साम्यादिति भावः ।

**अभावीयविशेषणतेति ।** दैशिकविशेषणतेत्यर्थः, न त्वभावप्रतियोगिकविशेषणतेति तदर्थः, तथा सति कालिकविशेषणताया अप्यभावप्रतियोगिकत्वेन तद्व्यावृत्तेरसम्भवात् । एवमग्रेऽपि बोध्यम्। **महाकालभेदाभावादित्यर्थं इति ।** ननु दैशिकविशेषणतया महाकाले महाकालभेदासत्त्वेऽपि कालिकसम्बन्धेन तत्र महाकालभेदविशिष्टघटसत्त्वे बाधकाभावः, तेन सम्बन्धेन तस्य जगदाधारत्वादित्याशङ्कायामाह—**सामानाधिकरण्येति । विशेषणेति ।** विशेषणविशेष्यप्रतियोगिकसंसर्गाभ्यामित्यर्थः ।

**महाकालमात्रवृत्तीति ।** महाकालानुयोगिकविशेषणतया साध्यत्व इत्यर्थः । **अप्रसिद्धेरिति ।** यद्यपि पूर्वोक्तोभयाभावघटितप्रतियोगिवैयधिकरण्यप्रवेशे(१) गगनाभाव एव तत्राऽपि प्रसिद्ध्यति, तथाऽपि गगनादेरपि कालिकसम्बन्धेन महाकालवृत्तित्वमस्त्येव, अन्यथा पूर्ववृत्तितावटितशब्दादिकारणत्वं

---

(१) 'प्रतियोग्यधिकरणवृत्तित्वात्'इत्यपि पाठः ।

(१) साध्यतावच्छेदकसम्बन्धसामान्ये यदभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व–हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभाव इत्यादिरीत्येति भावः ।

हेत्वधिकरण-वृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्वोभयाभावः, तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। (१) इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन घटाभावप्रतियोगिनोऽपि घटस्याऽनधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावः, तस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्व—घटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाऽव्याप्तिः।

ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं, गुरुधर्मस्याऽनवच्छेदकत्वादिति चेन्न। कम्बुग्रीवादिमान्नाऽस्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याऽप्यवच्छेदकत्वस्वीकारादिति सङ्क्षेपः॥ ६९॥ इति व्याप्तिनिरूपणे सिद्धान्तग्रन्थः॥

दिनकरी।

न्तानुधावनम्। समवायेन वन्ह्यभावप्रतियोगितायां वह्नित्वावच्छिन्नत्वसत्त्वात्, संयोगेन घटाभावप्रतियोगितायां साध्यतावच्छेदकसंयोगावच्छिन्नत्वस्य सत्त्वात् वह्निमान्, धूमादित्यादावव्याप्तिवारणाय यत्सम्बन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्वयोर्निवेशः। संयोगेन घटाभावप्रतियोगितायां धूमत्वावच्छिन्नत्वघटितोभयाभावसत्त्वादतिव्याप्तिवारणाय-**सामान्ये** इति।

**अप्रसिद्धमिति**। तथा चाऽव्याप्तिरिति भावः। यदि च कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादिमत्प्रतियोगिताकाभाव एव विषयः, न तु कम्बुग्रीवादिमत्त्वे तत्प्रतियोगितावच्छेदकत्वमपीत्युच्यते, तदा यत्किञ्चिद्घटवत्यपि कम्बुग्रीवादिमान्नाऽस्तीति वाक्यस्य प्रामाण्यापत्तिरिति हृदि निधाय सङ्क्षेप इ(त्युक्तमि)ति॥ ६९॥

इति व्याप्तिनिरूपणे सिद्धान्तग्रन्थः॥

रामरुद्री।

गगनादौ न स्यात्, अवृत्तित्वप्रवादस्तु कालिकदिक्कृतविशेषणतातिरिक्तसंसर्गेणाऽवृत्तित्वादेव। अत एव **'जगतामाश्रयो मतः'** इति मूलमपि सङ्गच्छत इति भावः। ननु प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमनर्थकम्, प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशे समवायादिना घटाद्यभावस्यैव प्रसिद्धिसम्भवादित्याशङ्क्य यथोक्तावपि समवायेन वन्ह्यभावमादायाऽव्याप्तिवारणायोत्तरत्र प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्याऽवश्यं निवेशनीयतया समवायेन घटाद्यभावीयतादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तितादवस्थ्यादिति समाधत्ते—**अत्रेति**। एकैकाभावनिवेशेऽव्याप्तिप्रदर्शनेनोभयाभावनिवेशं सार्थकयति--**समवायेनेति**। सामान्यपदमतिव्याप्तिवारकतया सार्थकयति-**संयोगेनेति**।

**हृदि निधायेति**। तथा चैतस्याऽर्थस्याऽनुक्तत्वादेवैतदर्थसूचनाय **'सङ्क्षेपः'** इत्युक्तमिति भावः।

---

(१) व्यापकसामानाधिकरण्यं च व्याप्तिः। यत्सम्बन्धः-साध्यतावच्छेदकसम्बन्धः। यद्धर्मः-साध्यतावच्छेदको धर्मः। तत्र यदि यद्धर्मावच्छिन्नत्वाभावमात्रमित्युच्यते, तदा समवायेन यो वन्ह्यभावस्तस्य प्रतियोगितावच्छेदकसम्बन्धः समवायस्तेन प्रतियोग्यनधिकरणपर्वतादिवृत्तिः स एव, तत्प्रतियोगितावच्छेदकं वह्नित्वमित्यव्याप्तिः स्यात्। यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमुच्यते, तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादत उभयमुपात्तम्।

**ब्दबोधविलम्बोऽसिद्ध इत्याहुः॥ ८२ ॥ ८३ ॥ इति योग्यतानिरूपणम् ॥**

**दिनकरी ।**

ऽप्रामाण्यनिश्चयाभावस्तत्र विशेषणम्, तदपेक्षया अप्रामाण्यज्ञानाभावविशिष्टायोग्यतानिश्चयाभावस्य हेतुत्वे लाघवमिति वाच्यम्। योग्यताज्ञानस्य हेतुत्वे तदभाववति तत्प्रकारकमित्येकविधाप्रामाण्यग्रहाभावनिवेशेन लाघवात्। अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तु तदभावाभाववति तदभावप्रकारकं, तद्वति तदभावप्रकारकमिति द्विविधाप्रामाण्यग्रहाभावनिवेशेन प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्यभावे प्रतियोगितासम्बन्धेन तत्प्रकारकमित्यप्रामाण्यग्रहाभावनिवेशेन च गौरवात्, बाधनिश्चयस्येव तदभावव्याप्यतदभावावच्छेदकनिश्चययोः प्रतिबन्धकत्वेनाऽतिगौरवाच्चेति। एवं योग्यताज्ञानस्य शाब्दबोधाजनकत्वे शाब्दसामग्रीकाले योग्यताज्ञानाभावविशिष्टात्मत्वमानसवारणाय तत्र शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति गौरवम्। योग्यताज्ञानस्य शाब्दबोधजनकत्वे तु तत्र योग्यताज्ञानाभावरूपविषयाभावादेव न तादृशमानसमिति तत्र शाब्दसामग्रीप्रतिबन्धकत्वं न कल्प्यते इति लाघवमित्याद्यवसेयम्(१) ॥८२-८३॥ ॥इति योग्यतानिरूपणम्॥

**रामरुद्री ।**

त्वानुमितित्वे निवेश्य लघुभूतप्रतिबध्यप्रतिबन्धकभावस्यैवोचितत्वादिति भावः। **अप्रामाण्यनिश्चयाभाव इति।** संसयनिश्चयसाधारणज्ञानं यत्र हेतुस्तत्राप्रामाण्यसन्देहो न कारणताविघटकः। ज्ञानेऽप्रामाण्यसन्देहेन विषयसंदेहस्यैव जननात् संदेहस्यापि कारणत्वादतस्तत्राप्रामाण्यनिश्चयस्यैव कारणताविघटकत्वेन निश्चयाभाव एव कारणतावच्छेदककोटौ निवेशनीय इति निश्चयत्वांशस्य निवेशनीयतया गौरवम्। अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तु अप्रामाण्यसन्देहस्यापि प्रतिबन्धकताविघटकत्वेनाप्रामाण्यज्ञानसामान्याभाव एव प्रतिबन्धकतावच्छेदककोटौ निवेशनीय इति निश्चयत्वांशानिवेशप्रयुक्तलाघवमिति भावः। यद्यप्ययोग्यतानिश्चयाभावत्वेन कारणत्वेऽपि निश्चयत्वांशनिवेश आवश्यक एव तथापि तदप्रकारकत्वे सति तदभावप्रकारत्वरूपायोग्यतानिश्चयत्वापेक्षया तदभाववति तत्प्रकारत्वरूपाप्रामाण्याभाववति तादृशाप्रामाण्यप्रकारकत्वरूपाप्रामाण्यनिश्चयत्वस्य गुरुतयाऽयोग्यतानिश्चयत्वमेव कारणतावच्छेदककोटौ निवेशयितुमुचितमिति भावः। **योग्यताज्ञानस्य हेतुत्व इत्यादि।** भूतलं घटवदित्यादिशाब्दबोधे भूतलविशेष्यकघटप्रकारकज्ञानं कारणम्। तत्र चाप्रामाण्यज्ञानं घटाभाववति घटप्रकारकमित्येकविधमेव। भूतलविशेष्यकघटाभावप्रकारकनिश्चयधर्मिकं चाप्रामाण्यज्ञानं घटाभावाभाववति घटाभावप्रकारकं घटवति घटाभावप्रकारकं प्रतियोगितया घटाभाववत्यभावे प्रतियोगितया घटप्रकारकमिति त्रिविधम्। तथाच त्रिविधाप्रामाण्यज्ञाननिवेशापेक्षया एकविधाप्रामाण्यनिश्चया एव लाघवमिति भावः। एवं यत्र यदभावनिश्चयः प्रतिबन्धकस्तत्र तदभावव्याप्यवत्तानिश्चयस्तदभावावच्छेदकत्वेन गृहीतो यो धर्मस्तन्निश्चयश्चप्रतिबन्धक इति तादृशनिश्चयाभावस्य कारणता अयोग्यत्वनिश्चयाभावहेतुता वादिना कल्पनीया। योग्यताज्ञानहेतुतावादिना तु न कल्पनीया। तादृशान्यतमनिश्चयसत्त्वे योग्यताज्ञानरूपकारणविरहादेव शाब्दबोधवारणसंभवादिति लाघवमित्याह—**बाधनिश्चयस्येवेति। शाब्दबोधाजनकत्व इति।** अयोग्यताज्ञानाभावस्यैव शाब्दबोधकारणत्वपक्ष इत्यर्थः। **शाब्दसामग्रीकाले** अयोग्यतानिश्चयाभावघटितसामग्रीसत्त्वे इत्यर्थः। **योग्यताज्ञानाभावेति।** एकपदार्थेऽपरपदार्थप्रकारकज्ञानाभाववानहमिति मानसप्रत्यक्षं प्रति भूतलं घटवदितिशाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमित्यर्थः। भिन्नविषयक शाब्दसामग्र्या बलवत्त्वादिति भावः। **कल्पनीयमिति।** योग्यताज्ञानघटितशाब्दसामग्रीसत्त्वे तदभावरूपविषयाभावादेव न प्रत्यक्षसामग्री, योग्यताज्ञानाभावे तु शाब्दसामग्र्यभावात्तादृशप्रत्यक्ष इष्टापत्तिरेवेति भावः॥ ८२ ॥ ८३ ॥ इति योग्यतानिनिरूपणम्।

---

(१) वस्तुतस्तु शाब्दधीसाधारणविशिष्टबुद्धिसामान्यं प्रत्येव बाधनिश्चयस्य प्रतिबन्ध

यत्पदेन विना यस्याऽननुभावकता भवेत् ।

आकाङ्क्षां निर्वक्ति यत्पदेनेत्यादि । येन पदेन विना यत्पदस्याऽन्वयान-

दिनकरी ।

तेन पदेन सह तस्येति । तत्पदविशिष्टत्वं तत्पदस्येत्यर्थः । घटमानयेत्यत्र घटपदं विना अम्पदस्याऽन्वयाननुभावकत्वाद्घटपदविशिष्टत्वमम्पदे आकाङ्क्षा । घटः

रामरुद्री

ननु मूले तेन पदेन सह तस्याकाङ्क्षेत्युक्तम् । नैतावताऽऽकाङ्क्षाज्ञानस्वरूपनिर्वाह इत्यस्वरसाद्व्याचष्टे—तत्पदविशिष्टत्वमिति । अव्यवहितपूर्ववृत्तित्वाव्यवहितोत्तरत्वान्यतरसंबन्धेनेत्यादिः ।

---

कत्वे मुखं चन्द्र इत्यादिमुखचन्द्राद्यभेदान्वयबोधकरूपकादौ प्रहसनादौ च बाधनिश्चयसत्त्वेऽपि अनुभवसिद्धस्य शाब्दबोधस्याऽपलापापत्तिः, कलहादौ मिथ्याभिशापवचनाच्छाब्दबोधानुपपत्तिश्च । न च तत्रेष्टापत्तिः कर्तुं शक्या, तत्र शाब्दबोधं विना क्रोधाद्यनुपपत्तेः । अत एवोक्तं—

'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।

बाधात्तु न प्रमा तत्र अतः प्रामाण्यनिश्चयः—'इत्यादि ।

बाधितत्वेन निश्चितेऽप्यर्थे शब्दो ज्ञानं जनयति, किन्तु तदानीं तज्ज्ञाने प्रामाण्याभावज्ञानमात्रं जायते, अतः प्रामाण्यनिश्चयो निष्कम्पप्रवृत्तिप्रयोजकः अन्यथा तत्राऽपि प्रवृत्त्यापत्तेरिति तदर्थात् । तथा च शाब्दान्यविशिष्टबुद्धिं प्रत्येव बाधनिश्चयस्य प्रतिबन्धकतया वह्निना सिञ्चतीत्यादौ बाधनिश्चयसत्त्वे शाब्दबोधवारणाय योग्यताधीः शाब्दधीहेतुरावश्यकी । न च योग्यताज्ञानस्य हेतुत्व एव बाधितार्थकरूपकादौ कथं शाब्दधीः ? बाधनिश्चयसत्त्वेन तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नवत्त्वरूपयोग्यताज्ञानस्यैवाऽसम्भवात्, अन्यथा वन्हिना सिञ्चतीत्यादावपि शाब्दबोधस्य दुर्वारत्वादिति वाच्यम् । बाधनिश्चयसत्त्वेऽप्याहार्ययोग्यताज्ञानादेव तत्र शाब्दबोधसम्भवात् । वह्निना सिञ्चतीत्यादावपि बाधनिश्चयसत्त्वेऽप्याहार्ययोग्यताज्ञानात् कदाचिच्छाब्दबोधस्येष्टत्वात् । न चैवं शङ्खो न पीत इत्यादिबाधनिश्चयेऽपि शङ्खः पीत इति दोषविशेषजन्ययोग्यताभ्रमेण शङ्खः पीत इति शाब्दबोधप्रसङ्गः, बाधनिश्चयविरहदशायां शङ्खः पीत इति दोषविशेषजन्ययोग्यताभ्रमाच्छङ्खः पीत इतिशाब्दबोधोदयाद्दोषविशेषजन्ययोग्यताज्ञानस्याऽपि हेतुत्वेनाऽभ्युपेयत्वादिति वाच्यम् । असत्यप्रामाण्यनिश्चये इष्टत्वात्, आहार्ययोग्यताज्ञानतुल्यत्वात् । एवं यदैकेन्द्रियजन्यबाधनिश्चयसत्त्वेऽप्यन्येन्द्रियजन्ययोग्यताज्ञानं, आनुमानिकबाधनिश्चयसत्त्वेऽपि लौकिकप्रत्यक्षात्मकयोग्यताज्ञानं च, तदा तत्राऽपि शाब्दबोधे इष्टापत्तिः आहार्ययोग्यताज्ञानतुल्यत्वात् । ननु बाधितार्थकरूपकादौ शाब्दबोध एवाऽऽहार्यात्मकोऽभ्युपेयताम्, तथा चाऽऽहार्यप्रत्यक्षेतरत्ववदाहार्यशाब्देतरत्वस्याऽपि बाधनिश्चयप्रतिबध्यतावच्छेदके प्रवेशादेव बाधितार्थकरूपकादौ बाधनिश्चयसत्त्वे शाब्दबोधस्य वह्निना सिञ्चतीत्यादौ शाब्दबोधाभावस्य च सम्भवे किं पृथग्योग्यताधीहेतुत्वेन ? तवाऽपि शाब्देतरत्वस्य प्रतिबद्ध्यतावच्छेदके प्रवेशस्याऽऽवश्यकत्वात् । न च मम शाब्देतरत्वं शाब्दत्वावच्छिन्नप्रतियोगिताकोऽखण्डो भेदः, तवाऽऽहार्यशाब्देतरत्वमाहार्यत्वस्याऽनुगतस्याऽभावात्तत्तच्छाब्दबुद्धिभेदकूटरूपमिति प्रतिबद्ध्यतावच्छेदकगौरवमिति वाच्यम् । अतिरिक्तकार्यकारणभावकल्पनामपेक्ष्य कार्यतावच्छेदककारणतावच्छेदकयोः शरीरगौरवस्य न्याय्यत्वात्, तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टयोग्यताज्ञानस्यैव शाब्दधीहेतुतया कार्यकारणभावान्तरकल्पनं पुनरधिकमिति चेन्न । शाब्दबोधस्याऽऽहार्यत्वाभ्युपगमेऽपसिद्धान्तात्, प्रत्यक्षेतरज्ञानस्याऽऽहार्यत्वानभ्युपगमादिति ध्येयम् ।

नुभावकत्वं, तेन पदेन सह तस्याऽऽकाङ्क्षेत्यर्थः। क्रियापदं विना कारक-पदं नाऽन्वयबोधं जनयतीति तेन तस्याऽऽकाङ्क्षा।

वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थम्। परं तु घटकर्मताबोधं प्रति घटपदोत्तरद्वितीयारूपाकाङ्क्षाज्ञानं कारणम्। तेन घटः कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः। अयमेति पुत्रो राज्ञः पुरुषोऽप-सार्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्यग्रहसत्त्वात् तेनैवाऽन्वय-

## दिनकरी।

कर्मत्वमित्यादौ कर्मत्वपदे घटपदवत्त्वं तु नाऽऽकाङ्क्षा, कर्मत्वपदे घटीया कर्मतेति शाब्द-बोधाननुभावकत्वस्य घटपदविरहाप्रयुक्तत्वात्। अत्र चाऽननुभावकत्वं तादृशपदपरिचायकं, न त्वाकाङ्क्षास्वरूपान्तर्गतम्। यद्वा अननुभावकत्वमप्याकाङ्क्षास्वरूपान्तर्गतम्, शाब्द-बोधे तस्य स्वरूपत एवोपयोगः तेन जनितान्वयबोधाद्वाक्यान्न पुनरन्वयबोधापत्तिः। एकपदेऽपरपदवत्त्वांशश्च ज्ञात एवोपयुज्यते। तेन—क्रियापदेन। तस्य—कारकपदस्य।

अत्र चैकपदेऽपरपदवत्त्वं—अपरपदाव्यवहितोत्तरत्वम्। तत्र चाऽव्यवधानांशस्याऽऽ-सत्त्यैव लाभः। आसत्तेः पदाव्यवधानरूपतायाः पूर्वमुपवर्णितत्वात्। उत्तरत्वं च क्रिया-कारकपदयोर्नाऽपेक्षितम्। चैत्रः पचति, पचति चैत्र इति वाक्यद्वयादप्यन्वयबोधात्, अतः क्रियाकारकपदयोराकाङ्क्षा नाऽस्त्येव, किन्तु प्रकृतिप्रत्यययोरेव। तत्राऽप्यव्यवधानांश-स्याऽऽसत्त्या लाभात् प्रत्यये प्रकृत्युत्तरत्वरूपाकाङ्क्षाज्ञानं कारणमित्याह—वस्तुतस्त्वि-

## रामरुद्री।

तथाच येन पदेन विना यत्पदस्य यादृशशाब्दबोधाजनकत्वमुक्तान्यतरसंबन्धेन तत्पदविशिष्टतत्पदत्वं तादृशशाब्दबोधप्रयोजकाकाङ्क्षेति भावः। **अत्र चेति**। अम्पदे घटपदाव्यवहितोत्तरत्वज्ञानसत्त्वे अम्पदे घटपदं विना शाब्दबोधाजनकत्वज्ञानविलम्बेन शाब्दबोधविलम्बस्याननुभवादम्पदस्यघटपदा-व्यवहितोत्तरत्वमेवाकाङ्क्षा। अम्पदे घटपदज्ञानं विना शाब्दबोधाजनकत्वं नाऽऽकाङ्क्षाश-रीरे निविष्टम्। तदुक्तिस्तु अम्पदघटपदादीनां विशिष्यज्ञानार्थमेव। घटपदकर्मत्वपदयोस्तु न तादृ-शत्वं कर्मत्वपदस्य घटीया कर्मतेतिशाब्दबोधाजनकताया घटपदविरहाप्रयुक्तत्वात्। घटपदस-त्त्वेऽपि तस्य तथाविधशाब्दबोधाजनकत्वादिति भावः। नन्वेवमपि जनितान्वयशाब्दबोधस्थले पुनः शाब्दबोधापत्तिरित्यस्वरसादाह—**यद्वेति**। **स्वरूपत एवेति**। तज्ज्ञानस्य शाब्दबोधे नोपयोगि-त्वमिति भावः।

ननु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थमिति मूलमसङ्गतम्। अव्यवधानरूपसन्निधान-स्याकाङ्क्षात्वानुपगमात्। किन्तूक्तान्यतरसंबन्धेनैकपदेऽपरपदवत्त्वस्यैवाऽऽकाङ्क्षारूपत्वेन पूर्वमभ्युपगत-त्वादतस्तद्ग्रन्थं सङ्गमयितुमाह—**अत्रेति**। **अव्यवहितोत्तरत्वमिति**। अव्यवहितोत्तरत्वादीनां संबन्धत्वे मानाभावादिति भावः। ननु पदाव्यवधानस्यासत्तिरूपत्वेऽपि उत्तरत्वांशस्याकाङ्क्षात्वं स्वीकरणीय-मित्यत आह—**उत्तरत्वं चेति**। इदं च पदयोरव्यवधानमासत्तिरिति प्राचीनमताभिप्रायेणोक्तम्। ग्रन्थ-कृन्मते तु पदज्ञानयोरव्यवधानस्यैवासत्तित्वेन तस्य च स्वरूपत एव शाब्दबोधकारणत्वेनाव्यवधानांशस्यापि नासत्त्या चरितार्थता। परंतु क्रियाकारकपदज्ञानयोरव्यवधानेनैव शाब्दबोधनिर्वाहे क्रियाकारकपदयोः

बोधः। पुरुषेण सह तात्पर्यग्रहे तु तेन सहाऽन्वयबोधः स्यादेव।

॥ इत्याकाङ्क्षानिरूपणम् ॥

दिनकरी।

**त्यादिना।** नन्वयमेति पुत्रो राज्ञ इत्यादावजनितान्वयबोधदशायां राजपदस्य पुत्रपदेनेव पुरुषपदेनाऽप्याकाङ्क्षासत्त्वाद्राज्ञः पुरुष इत्यन्वयबोधः स्यादत आह। **अयमेतीति।** तथा च राजपदपुरुषपदयोराकाङ्क्षायाः सत्त्वेऽपि तात्पर्याभावान्न तथाऽन्वयबोध इति भावः। **स्यादेवेति।** भवत्येवेत्यर्थः। ननु पुरुषेण पुत्रेण च राजपदस्य तात्पर्यज्ञानेऽपि पुत्रपदराजपदयोरेव यत्रैकवाक्यतानिश्चयः, पुरुषपदराजपदयोरेकवाक्यत्वाभावनिश्चयश्च, तत्र पुरुषपदेन सह निरुक्ताकाङ्क्षायाः सत्त्वाद्राज्ञः पुरुष इति बोधापत्तिरिति चेन्न। यत्पदं विनेत्यस्य समभिव्याहृतयत्पदं विनेत्यर्थकतया समभिव्याहारस्याऽप्याकाङ्क्षाशरीरे प्रवेशात्। समभिव्याहारश्चेदं पदमेतत्पदेन सहाऽन्वयं बोधयत्विति पदतात्पर्यम्। प्रकृते च तज्ज्ञानाभावात्तद्घटिताकाङ्क्षाज्ञानाभाव इति। समभिव्याहारस्य नाऽऽकाङ्क्षाशरीरे प्रवेशः, किन्तु स्वातन्त्र्येण तज्ज्ञानं शाब्दबोधे कारणमित्यन्ये। नव्यास्तु अर्थतात्पर्यज्ञानस्य राजपदं पुरुषविषयकराजसंसर्गप्रतीतीच्छयोच्चरितमित्याकारकज्ञानत्वादिना हेतुत्वादेवाऽतिप्रसङ्गाभावे समभिव्याहारज्ञानस्य हेतुत्वे मानाभावः। निरुक्ततात्पर्यनिश्चये पूर्वोक्तसमभिव्याहारस्य पदतात्पर्यरूपस्य संशये व्यतिरेकनिश्चये वा भवत्येव शाब्दबोध इत्याहुरित्यन्यत्र विस्तरः। **इदं तु बोध्यम्।** आकाङ्क्षालक्षणे तत्पदं तत्पदज्ञानपरम्, मौनिश्लोकानुरोधात्, अत एवाऽध्याहृतपदेनाऽप्याकाङ्क्षानिर्वाहः। अध्याहारश्चाऽश्रुतपदानामनुसन्धानम्,

रामरुद्री।

पौर्वापर्यस्यानियमेन च तत्रैव नाकाङ्क्षाज्ञानस्योपयोग इति। वस्तुतो मौनिश्लोकानुरोधेनाग्रे एकपदज्ञानेऽपरपदज्ञानवत्त्वस्यैवाकाङ्क्षात्वेनोपगन्तव्यतया तदभिप्रायेणैवाव्यवधानांशस्यासत्त्वा चरितार्थतोक्तेत्यवधेयम्। **अन्वयबोधः स्यादिति।** इदं च यत्पदेन विना यत्पदस्य नान्वयानुभावकत्वमित्यंशस्य पदद्वयपरिचायकत्वपक्षमादृत्योक्तम्। तदंशस्याप्याकाङ्क्षाशरीरान्तर्गतत्वे तु तस्य स्वरूपतः शाब्दबोधकारणत्वेन पुरुषपदं विना पुत्रपदेन सह राजपदस्य जनितान्वयबोधजनकत्वेन नेयमापत्तिः संभवतीत्यवधेयम्। **मूले अयमित्यादि।** पुत्रराज्ञोर्वक्तुः संबन्धबोधेच्छायां पुत्रेण सहैव राजपदार्थस्यान्वयबोधः। यदा तु पुरुषराज्ञोः संबन्धबोधेच्छा वक्तुस्तदा पुरुषराज्ञोरेवान्वयबोधो भवत्येव। तथा च तात्पर्यमेव कदाचित्पुत्रेण कदाचित्पुरुषेण बोधे नियामकं न त्वाकाङ्क्षेति भावः। **नन्वित्यादि। तात्पर्यज्ञान इति।** पुरुषे पुत्रे च राजसंबन्धबोधो भवत्विति वक्तुरिच्छाज्ञान इत्यर्थः। **एकवाक्यतानिश्चय इति।** राज इतिपदं पुत्रपदार्थेनान्वयबोधेच्छयोच्चरितं नतु पुरुषपदार्थेनान्वयेच्छयोच्चरितमिति निश्चयकाल इति समुदायार्थः।

मतान्तरमाह—**समभिव्याहारस्य नाऽऽकाङ्क्षाशरीर इत्यादि। हेतुत्वादेवेति।** ननु राजपुरुषयोः संसर्गज्ञानं भवत्विति वक्तुरिच्छाज्ञानत्वेन तात्पर्यज्ञानं शाब्दबोधे हेतुरिति भावः।

**पूर्वोक्तसमभिव्याहारस्येति।** इदं पदमेतत्पदेनान्वयबोधं जनयत्वित्याकारकवक्तुरिच्छारूपपदतात्पर्यस्येत्यर्थः। **आकाङ्क्षालक्षण इति।** तत्पदस्याव्यवहितोत्तरत्वसंबन्धेन तत्पदवत्त्वमाकाङ्क्षेत्याकाङ्-

आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥

तात्पर्यं निर्वक्ति—वक्तुरिच्छेति । यदि तात्पर्यज्ञानं कारणं न स्यात्, तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोध इति न स्यात् । न च तात्पर्यग्राहकाणां प्रकरणादीनां शाब्दबोधे कारणत्वमस्त्विति वाच्य-

दिनकरी

अत एव सर्वापेक्षया जघन्यत्वं तस्य, यतः स्वस्थानस्थितस्य पुनरनुसन्धानमावृत्तिः, नेदीयःस्थानान्तरस्थितस्याऽनुसन्धानमनुषङ्गः, दवीयः स्थानान्तरस्थितस्याऽनुसन्धानमनुवृत्तिः । इदं च सिंहावलोकित—मण्डूकप्लुति—गङ्गास्रोतोवत्त्रिधेति । निराकाङ्क्षत्वज्ञानस्य प्रतिबन्धकत्वं, न त्वाकाङ्क्षाज्ञानस्य हेतुत्वमिति तु न सत् । तथा सत्याकाङ्क्षाभाव—तद्व्याप्य—तदवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वे गौरवादित्यलम् । ॥ इत्याकाङ्क्षानिरूपणम् ॥

वक्तुरिच्छेतीति । घटमानयेत्यादौ कर्मत्वविशेष्यकाधेयतासंसर्गकघटप्रकारकप्रतीतीच्छा वक्तुस्तात्पर्यं, तादृशेच्छयोच्चरितमिदं वाक्यमित्याकारकं श्रोतुस्तात्पर्यज्ञानं शाब्दबोधे कारणमित्यर्थः । तत्र युक्तिमाह । सैन्धवेति । आदिना श्वेतो धावतीत्यादिपरिग्रहः । तत्र कदाचिच्छ्वेतगुणविशिष्टस्य, कदाचित् कुक्कुरादेर्बोधस्य तात्पर्यज्ञाननियम्यत्वात् । क्वचिल्लवणस्येति । क्वचित्तदुभयोरित्यपि बोध्यम् । इति न स्यादिति । इति नियमो न स्यादित्यर्थः । इदमुपलक्षणम् । तात्पर्यसंशये व्यतिरेकनिश्चये वा शाब्दबोधानुदयाच्छाब्दबोधे तात्पर्यज्ञानं कारणम्, 'यत्संशय–' इति व्याप्तेरित्यपि बोध्यम् । प्रकरणेति ।

रामरुद्री ।

त्तालक्षण इत्यर्थः । तत्पदज्ञानपरमिति । तत्पदज्ञानस्याव्यवहितोत्तरत्वसंबन्धेन तत्पदज्ञानवत्त्वमेवाकाङ्क्षेत्यर्थः । अन्यथा मौनिश्लोके पदाभावादाकाङ्क्षानुपपत्तिरिति भावः । सर्वापेक्षयेति । अनुषङ्गापेक्षयेत्यर्थः । तेषु श्रुतपदस्यैवानुसन्धानकल्पनादिति भावः । सिंहावलोकितेत्यादि । सिंहस्तु स्वगृहान्निर्गत्य दूरं गत्वा पुनः परावृत्त्य स्वगृहं पश्यति तद्वदुत्तरत्र केषुचिद्वाक्येषु पूर्वतनपदस्यान्वयो नास्ति कचिदुत्तरवाक्ये पूर्वतनपदस्यान्वयः सा सिंहावलोकना । उत्तरवाक्येषु एकत्र पूर्वपदस्यान्वयः एकत्र नान्वयः पुनर्वाक्यान्तरे च तदन्वयस्तत्र मण्डूकप्लुतिः । उत्तरवाक्येषु क्रमेण सर्वत्र पूर्वपदान्वयो गङ्गास्रोत इति विभागो बोध्यः । इत्याकाङ्क्षानिरूपणम् ।

ननु मूले वक्तुरिच्छायास्तात्पर्यत्वं प्रतिपादितम् । तज्ज्ञानं शाब्दबोधे हेतुर्वाच्यः । तत्र च घटमानय पटमानयेति वाक्यद्वयप्रयोगस्थले वक्तुरिच्छाद्वयज्ञानात्कस्माद्वाक्यात्कीदृशार्थस्य बोधो भवतीति निर्णेतुमशक्यमतस्तात्पर्यज्ञानाकारं दर्शयति—तादृशेच्छयेति । तथात्र स्वप्रयोज्योच्चरितत्वसंबन्धेन यादृशवाक्यविशेष्यकं वक्तुरिच्छारूपतात्पर्यज्ञानं भवति तत् तादृशवाक्यजन्यशाब्दबोधे कारणमिति नानियम इति भावः । तत्र कदाचिदिति । श्वेतः श्वेतवर्णो धावतीत्यर्थस्तात्पर्यविषयः, कदाचित् श्वा कुक्कुर इतो धावतीत्यर्थस्तात्पर्यविषय इत्यर्थः । उभयोरित्यपीति । इदं च सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति नियमानभ्युपगमेनोक्तम् । अन्यथा सैन्धवपदस्यावृत्त्यभिप्रायेणेदमुक्तमिति मन्तव्यम् । यत्संशयेति । यत्संशयव्यतिरेकनिश्चयौ यदुत्पत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितौ व्याप्तिरिवेति चिन्तामणावुक्तत्वादिति भावः । संयोगः सान्निध्यम् । वियोगो दूरत्वम् । साहचर्यम् एकदेशवृत्तित्वम् । घटोऽपसारणीय इत्यादौ समीपस्थे घटे तात्पर्यग्रहः सामीप्यात् । घटमत्रानयेत्यादौ घटपदस्य दूरस्थे घटे तात्पर्यग्रहो दूरत्वात् । घटं पटं चानयेत्यादौ घटपटपदयोरेकदेशवृत्तिघटपटयोस्ता-

म् । तेषामननुगमात् । तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात् कारणमस्तु ।

इत्थञ्च वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते । न च तत्राऽध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम् । सर्गादावध्यापकाभावात् । न च प्रलय एव नाऽस्ति, कुत्र सर्गादिरिति वाच्यम् । प्रलयस्याऽऽगमेषु प्रतिपाद्यत्वात् ।

इत्थञ्च शुकवाक्येऽपीश्वरीयतात्पर्यज्ञानं कारणम् । विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणं वाच्यम् ।

## दिनकरी ।

आदिना संयोग–वियोग–साहचर्यादीनां परिग्रहः । प्रकरणादीनां क्लृप्तनियतपूर्ववर्तिताकत्वेन अनन्यथासिद्धत्वमात्रकल्पने लाघवादिति भावः । **अननुगमादिति** । तथा च परस्परजन्यशाब्दबोधे परस्परव्यभिचारेण न हेतुत्वसम्भव इति भावः । **इत्थञ्चेति** । शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य हेतुत्वे चेत्यर्थः । एवमग्रेऽपि । प्रलयस्य–कार्यद्रव्यानधिकरणकार्याधिकरणकालविशेषात्मकखण्डप्रलयस्य । **आगमेष्विति** । 'नाऽहो न रात्रिर्न नभो न भूमिर्नाऽऽसीत्तमो ज्योतिरभून्न चाऽन्यत्–' इत्याद्यागमेष्वित्यर्थः ।

शुकवाक्येऽपि—संवादिशुकवाक्यजन्यबोधेऽपि । **शिक्षयितुरेवेति** । ईश्वरेच्छायां

## रामरुद्री ।

त्पर्यग्रहः साहचर्यात् । आदिना आभिमुख्यादिपरिग्रहः । **क्लृप्तनियतपूर्ववृत्तितकत्वेनेति** । तात्पर्यज्ञानहेतुतावादिनापि तात्पर्यज्ञानार्थमेव शाब्दबोधोत्पत्तेः पूर्वं प्रकरणादीनामवश्यं स्वीकरणीयत्वादिति भावः । **न हेतुतासम्भव इति** । तत्तदव्यवहितोत्तरत्वस्य तत्तत्कार्यतावच्छेदककोटौ निवेशेन व्यभिचारवारणे तु अतिगुरुभूतानेककार्यकारणभावापत्तिरिति भावः ।

**अध्यापकाभावादिति** । ईश्वरातिरिक्ताध्यापकाभावादित्यर्थः । तेनाध्यापकाभावे वेदात्मकवाक्यज्ञानाभावेन शाब्दबोधस्यैवासंभवेऽपि न क्षतिः । मूले महाप्रलयस्यागमप्रतिपाद्यत्वमुक्तम् । तच्चायुक्तम् । महाप्रलयस्यागमेनाप्रतिपादितत्वात् । 'धाता यथापूर्वमकल्पय'दित्यादिना आगमे खण्डप्रलयस्यैव सूचितत्वात् । अतएव महाप्रलयविवादोऽपि सङ्गच्छते, आगमप्रतिपादितत्वे विवादासंभवादित्यतः प्रलयपदस्य खण्डप्रलयपरतामाह—**कार्यद्रव्येति** । **कार्याधिकरणेति** । अदृष्टादिरूपकार्याधिकरणेत्यर्थः । यद्यपि लाघवाद्द्रव्याधिकरणत्वमेव वक्तुमुचितम् तथापि प्रलये नित्यद्रव्यवृत्तितायां प्रमाणान्तरविरहेण तथा नोक्तम् । नच नित्यद्रव्याणां सदातनत्वरूपनित्यत्वानुपपत्तिरेव तत्र मानमिति वाच्यम् । ध्वंसप्रागभावाप्रतियोगित्वस्यैव नित्यतारूपत्वात् । अदृष्टस्य तु प्रलयवृत्तित्वमुत्तरसर्गानुपपत्त्या सिद्धमिति भावः । आगमे नभःशब्दार्थोऽन्तरिक्षादिलोक एव नभसो नित्यत्वात् । तमःशब्दार्थोऽपि परिच्छिन्नतम एव तेजोभावरूपतमसोनित्यत्वात् । ननु वह्निना सिञ्चतीत्यादिशुकवाक्ये ईश्वरीयतात्पर्यज्ञानं न कारणम् । ईश्वरेच्छाया विसंवादित्वापत्तेः । इत्थं च शुकवाक्येऽपीश्वरीयतात्पर्यज्ञानं कारणमिति मूलमसङ्गतम् । तादृशशुकवाक्ये तात्पर्यज्ञानस्याहेतुत्वादित्यतस्तदर्थमाह—**संवादीति** । प्रमाजनकेत्यर्थः । इदं च वह्निना सिञ्चतीति शुकवाक्यजन्यशाब्दबोधे ईश्वरीयतात्पर्यज्ञानं न हेतुः ईश्वरस्य विसंवादीच्छापत्तेरित्यतस्तादृशवाक्यव्युदासार्थमुक्तम् । न च वक्तुरिच्छायास्तात्पर्यरूपत्वेन ईश्वरस्य शुकवाक्यवक्तृत्वाभावेन कथमीश्वरेच्छायास्तात्पर्यरूपतेति वाच्यम् । वाक्यानुकूलप्रयत्नवत एव वक्तृत्वेन ईश्वरप्रयत्नस्य कार्यमात्रानुकूलत्वेन शुकवाक्यानुकूलत्वादिति भावः । शुकीयतात्पर्याभावेन अगत्या ईश्वरस्यैव वक्तृत्वस्वीकारादिति मन्तव्यम् । एवं शिक्षयितुः प्रयत्नस्य परम्परया शुकवाक्यानुकूलत्वेन शिक्षयितुरिच्छाया अपि तात्पर्यरूपता बोध्या ।

अन्ये तु–नानार्थादौ क्वचिदेव तात्पर्यज्ञानं कारणम् । तथा च शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः । वेदे त्वनादिमीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः ॥ ८४ ॥ इति तात्पर्यनिरूपणम् ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां शब्दखण्डम् ॥ ४ ॥



## दिनकरी ।

विसंवादित्वाभावादिति भावः । **अन्ये त्विति** । 'क्वचित्' इत्यस्य विवरणं नानार्थादाविति । गृहीतनानार्थवृत्तिकादावित्यर्थः । तेन गृहीतनानार्थशक्तिकस्य गृहीतनानार्थलक्षणाकस्य गृहीतविभिन्नार्थशक्तिलक्षणाकस्य च सङ्ग्रहः । आदिना एकार्थगृहीतलक्षणाकस्य सङ्ग्रहः। मीमांसा–लाघवज्ञानात्मकस्तर्कः । **परिशोधितेति** । सहकृतेत्यर्थः । तर्कः–अनुमानम् । 'आहुः' इत्यस्वरसोद्भावनम् । तद्बीजं तु गृहीतनानार्थवृत्तिकपदजन्यानुभवत्वापेक्षया लाघवेन पदजन्यानुभवत्वस्यैव तात्पर्यज्ञानजन्यतावच्छेदकत्वमुचितमित्यन्यत्राऽधिकमनुसन्धेयम् ॥ ८४ ॥ इति तात्पर्यनिरूपणम् ॥

इति श्रीमद्भारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टारब्धे तत्पुत्रदिनकरभट्टप्रपूरिते मुक्तावलीप्रकाशे शब्दपरिच्छेदाख्यः षष्ठः परिच्छेदः ।



## रामरुद्री ।

सर्वत्र नानार्थस्थले तात्पर्यज्ञानस्य हेतुत्वोपगमात्क्वचिदित्यसङ्गतमित्यभिप्रायेणैव क्वचिदित्यस्यैव विवरणं नानार्थादावितीत्याह–**क्वचिदिति** । ननु नानार्थत्वं यदि नानार्थशक्तत्वं तदा नानार्थलाक्षणिकस्थले कदाचित्कस्यचिदर्थस्य बोधतात्पर्यनियमो न स्यादतो नानार्थगृहीतवृत्तिकत्वमेव नानार्थत्वमित्याह—**गृहीतेति** । गृहीतपदं तु नानार्थकहर्यादिपदस्यापि यदा एकस्मिन्नेवार्थे शक्तिग्रहस्तदा शक्तिग्रहेणैव शाब्दबोधनियमसंभवात्तात्पर्यज्ञानस्य शाब्दबोधनियामकत्वाभावादुपात्तम् । **विभिन्नार्थेति** । एकस्मिन्नर्थे गृहीतशक्तिकस्यान्यस्मिन्नर्थे गृहीतलक्षणाकस्येत्यर्थः । नन्वेवमादिपदग्राह्यं किमित्यत आह–**आदिनेति** । नच शक्यसम्बन्धस्यैव लक्षणात्वेन लक्षणाज्ञाने शक्तिज्ञानमावश्यकमेव तथाच विभिन्नार्थगृहीतशक्तिलक्षणाकस्येत्यनेन पूर्वोक्तेन गतार्थमिदमिति वाच्यम् । विभिन्नार्थस्य बहुवचनान्ततया गृहीता विभिन्नार्थेषु शक्तिर्लक्षणा यस्येति विग्रहेणानेकार्थेषु गृहीतशक्तिकस्य गृहीतलक्षणाकस्य पदस्यैव पूर्ववाक्यार्थत्वात्। मीमांसाशब्दार्थमाह–**लाघवज्ञानात्मकस्तर्क इति** । "कपिञ्जलानालभेते"त्यत्र प्रथमोपस्थितत्वलाघवेन त्रित्वस्यैव बहुवचनार्थतानिश्चयः । ननु परिशोधितेत्यस्य सहकृतार्थकत्वे लाघवतर्कसहकृततर्कान्तरं किमित्याकाङ्क्षायामाह–**तर्कोऽनुमानमिति** । अनुमानाकारश्च कपिञ्जलानितिबहुवचनार्थस्त्रित्वादिः बहुवचनवाच्यत्वादित्येवं रूपः । तत्र च लाघवज्ञानं सहकारि चतुष्ट्वादीनामपि बहुवचनवाच्यत्वादिति । एवं च वेदस्थले तात्पर्याज्ञानेनार्थनिर्णय इति । **अन्यत्राधिकमिति** । तात्पर्यसंशयादिस्थले शाब्दबोधाननुभवादपि शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुत्वमावश्यकमिति भावः ॥८४॥ इति तात्पर्यनिरूपणम् ॥

इति श्रीरामरुद्रभट्टाचार्यविरचितायां मुक्तावलीप्रकाशदिनकरीतरङ्गिण्यां शब्दतरङ्गः समाप्तः ॥



# अथ स्मरणनिरूपणम् ।

**पूर्वमनुभवस्मरणभेदाद् बुद्धेर्द्वैविध्यमुक्तं तत्राऽनुभवप्रकारा दर्शिताः स्मरणं तु सुगमतया न दर्शितम् । तत्र हि पूर्वानुभवः कारणम् ।**

**दिनकरी ।**

**सुगमतयेति ।** सुगमस्य स्वयमप्यूहितुं शक्यतया दुरूह एवाऽऽदौ सुधियां जिज्ञासोदयादिति भावः । तथा चावसरसङ्गत्याऽनुभवानन्तरं स्मरणनिरूपणमिति भावः । तत्र हि—स्मरणे हि ।

## अथ पण्डितराजश्रीराजेश्वरशास्त्रिप्रपूरिता—
## रामरुद्री

अमरगणकिरीटस्फारमाणिक्यमालारुचिरुचिरतडागद्योति पङ्केरुहश्रि ।
असिततुलसिमालाभृङ्गवृन्दश्रितं तत् कलयतु कुशलं नः श्रीपतेः पादयुग्मम् ॥१॥

श्रीरामरुद्रभट्टाचार्यैः शब्दाख्यखण्डपर्यन्ता ।
मुक्तावलीप्रकाशे तरङ्गिणीति व्यधायि या टीका ॥ २ ॥
पूरणमस्याः कुर्वे तांस्तानालोच्य तार्किकग्रन्थान् ।
श्रीरामचन्द्रचरणध्यानविनिर्धूतविघ्नोऽहम् ॥ ३ ॥

ननु '**बुद्धिस्तु द्विविधा मता, अनुभूतिः स्मृतिश्च स्यात्-(५१)**'इत्यादिकारिकायामनुभवस्मरणभेदेन बुद्धेर्द्वैविध्यमुक्तम्, तत्राऽनुभवप्रकारास्तावदेतावत्पर्यन्तं निरूपिताः, स्मरणं तु कारिकावल्यां कुतो न व्याख्यातमित्याशङ्क्योक्तं मूले-**पूर्वमित्यादि । सुगमतयेति ।** अयं भावः । अनुभवस्य प्रत्यक्षादिभेदेन बहुविधतया शिष्यैर्दुरूहत्वेनाऽशक्यज्ञानतया प्रथमतः स्मृतिनिरूपणमकृत्वा तन्निरूपणमेतावता ग्रन्थेन कारिकावल्यां कृतम्, स्मरणस्य त्वेकविधतयाऽदुरूहत्वेन शक्यज्ञानतयोत्कटजिज्ञासाऽविषयत्वेन न तन्निरूपणं कारिकावल्यां कृतमिति स्मरणनिरूपणं न ग्रन्थकृतां दोषावहमिति भावः । **अवसरसङ्गत्येति ।** प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तावनन्तरवक्तव्यत्वम**वसरः**, प्रतिबन्धिका चाऽत्राऽनुभवविषयिणी शिष्यजिज्ञासेति बोध्यम् । इदं पुनरिहाऽनुसन्धेयम् । अवसरसङ्गतिलक्षणे प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तावित्यंश उपलक्षणविधयैवाऽनन्तरवक्तव्यत्वे निविष्टः, न तु विशेषणविधया, तथा सति तत्र सङ्गतिलक्षणाव्याप्तेः, अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वं हि सङ्गतित्वम्, तच्चाऽवसरे व्याहन्येत । तत्र हि अनुभवनिरूपणानन्तराभिधानप्रयोजकीभूता जिज्ञासा अनन्तरवक्तव्यं किमित्याकारिकैव ग्राह्या, अन्यस्या असम्भवात्, तादृशजिज्ञासाजनकं चाऽनन्तरवक्तव्यत्वज्ञानमिति तद्विषयः केवलानन्तरवक्तव्यत्वमेव, तत्र च प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालीनत्वं न विषय इति कथं तत्र सङ्गतिलक्षणसमन्वयो भवेत् ? तस्मात्प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तावित्यस्योपलक्षणत्वमवश्यमङ्गीकरणीयम् । तथा च केवलानन्तरवक्तव्यत्वे तादृशज्ञानविषयत्वसत्त्वान्न कश्चिद्दोष इति । **स्मरणनिरूपणमिति ।** मुक्तावल्यामिति शेषः । वस्तुतस्तु 'अनुभूतिः स्मृतिश्च स्यात्-' इत्यनेनाऽनुभवस्यैव पूर्वमुद्दिष्टतया तदनुसारेण पूर्वमनुभवं निरूप्योद्देशक्रमानुसारेणेदानीं स्मृतिनिरूपणमिति ध्येयम् । 'अनुभूतिः स्मृतिश्च स्यात्-'इत्यत्र अनुभवस्मृत्युद्देशपौर्वापर्यनियामकं किमिति ।शङ्कायां तूपर्युक्तं अनुभवस्य दुरुहत्वेनोत्कटजिज्ञासाविषयत्वं, स्मरणस्य चाऽदुरूहत्वं नियामकमिति विभावनीयम् ।

ननु स्मृतित्वं तावज्जातिरूपमेव ग्रन्थकृदभिमतं प्रतीयते, अन्यथा पूर्वमुपपादितस्य अनुभवस्मरण-

रामरुद्री।

भेदेन ज्ञानद्वैविध्यस्य वक्तुमशक्यत्वात्, स्मरणानामनन्तत्वात्, जातिरूपत्वे तु स्मृतित्वस्यैक्येन **'अनुभूतिः स्मृतिश्च स्यात्-'**इत्यस्य भावप्रधाननिर्देशतयाऽनुभवत्वस्मरणत्वे ज्ञानविभाजकौ द्वौ धर्माविति-बोधसम्भवान्न काचिदापत्तिरिति वक्तव्यम्, तच्च तदैव सम्भवति, यदि तस्याऽखण्डधर्मत्वं सिद्ध्येत्, तदेव तु न सम्भवति, तत्साधकप्रमाणाभावात्। न चाऽनुगतप्रतीतिरेव तत्साधिकेति साम्प्रतम्, तस्या अनुभवभिन्नज्ञानत्वावगाहितयाऽप्युपपत्तेः। न च तर्ह्यनुभवभिन्नज्ञानत्वमेव तदस्तु, तावताऽपि अनुभवत्वावच्छिन्नप्रतियोगिताकभेदस्याऽखण्डस्यैक्येन ज्ञानविभाजकधर्मद्वैविध्यस्य न व्याहतिरिति वाच्यम्। अनुभवत्वस्य स्मृतिभिन्नज्ञानत्वरूपत्वेन तदन्यत्वस्यैव स्मृतित्वस्योक्तावन्योन्याश्रयापत्तेः, स्मृतित्वादेरखण्डधर्मत्वविरहेऽनुगतत्वाभावेन सामान्यधर्मावच्छिन्नप्रतियोगिताकभेदनिवेशासम्भवात्तत्तत्स्मृतित्वावच्छिन्नभेदकूटस्यैवाऽनुभवत्वादिरूपताया अवश्यवक्तव्यतया ज्ञानविभाजकधर्मद्वैविध्यकथनस्याऽपि व्याहतत्वापत्तेस्तादवस्थ्याच्चेत्याशङ्कां परिजिहीर्षुरादौ तन्निरासायाऽऽवश्यकेऽनुगतस्मृतित्वसाधन उपयुक्तं पूर्वानुभवस्य स्मृतिहेतुत्वमाह मूले-**तत्र हीत्यादिना। पूर्वानुभव इति।** स्वसमानविषयक इत्यादिः। तेन न घटानुभववतः पटस्मरणापत्तिः। यद्यपि घटाद्यनुभवमात्रस्य स्मृतिहेतुत्वे न काचिदापत्तिः, उद्बुद्धसंस्कारस्याऽपि स्मृतिहेतुत्वेन घटाद्यनुभवजनितसंस्कारस्याऽनुद्बुद्धत्वादेव तदा पटादिस्मरणापत्तिवारणसम्भवात्, तथाऽपि घटादिस्मरणस्य पटादिविषयकत्वापत्तिरेव तथा बोध्या, न हि तत्र संस्कारोऽनुद्बुद्ध इति वक्तुं शक्यम्, घटस्मरणस्याऽप्यनुत्पादप्रसङ्गात्। अथ तत्तद्विषयकस्मृतौ तत्तद्विषयकोद्बुद्धसंस्कारत्वेन हेतुतयैव स्मृतेर्विषयनियमे ज्ञानत्वेनैव स्मृतित्वावच्छिन्नं प्रति हेतुताऽङ्गीकर्तव्या, अतः स्वसमानविषयकपूर्वानुभवत्वेन स्मृतित्वेन च कार्यकारणभावे मानाभावः। न चैवं स्वजन्यसंस्कारसम्बन्धेन ज्ञानमात्रस्य स्मृतिं प्रति हेतुत्वे तत्संशयात्तत्स्मरणवारणाय तत्र स्मृतौ तन्निश्चयत्वेन हेतुत्वमावश्यकम्, तन्निश्चयत्वं च तदभावप्रकारत्वानिरूपिततत्प्रकारतानिरूपिततद्धर्मिनिष्ठविशेष्यताकज्ञानत्वमिति ज्ञाननिष्ठस्मृतिकारणतायां विषयनिवेशो दुर्वारः. यतोऽन्यविषयकज्ञानादन्यविषयकसंस्कारोत्पत्तिवारणाय तत्तद्विषयकसंस्कारं प्रत्यपि तत्तद्विषयकज्ञानत्वेनैव हेतुताया आवश्यकतया तत्र च कारणतावच्छेदककोटौ गुरुशरीरनिश्चयत्वनिवेशे प्रयोजनविरहेण ज्ञानमात्रस्यैव हेतुतया तद्विषयकसंशयात्तद्विषयकसंस्कारोत्पत्तेरावश्यकत्वात्तत्र संशयजन्यसंस्कारस्याऽपलपितुमशक्यतया संशयसमानविषयकस्मरणापत्तेर्दुर्वारत्वम्, यद्यप्येतादृशापत्तिवारणाय ज्ञाननिष्ठस्मृतिकारणतायामिव ज्ञाननिष्ठसंस्कारहेतुतायामेव जनकतावच्छेदककुक्षौ निश्चयत्वनिवेशनं युक्तं, तावतैव संशयस्य निश्चयत्वविरहेण संस्काराजनकतया ततः संस्कारानुत्पादादेव तत्संशयात्तत्स्मरणापत्तिवारणसम्भवात्, एवञ्च ज्ञाननिष्ठस्मृतिहेतुतावच्छेदककुक्षौ निश्चयत्वनिवेशनमनावश्यकमेवेति क्व तत्र विषयनिवेश इति वक्तुं शक्यम्, तथाऽपि ज्ञाननिष्ठसंस्कारहेतुतायामिव तन्निष्ठस्मृतिहेतुतायामपि तन्निवेशनमावश्यकमेव, फलव्यापारयोरेकेनैव रूपेण कारणत्वमिति नियमाद्यादृशरूपेण व्यापारीभूतसंस्कारहेतुता कल्प्यते, तेनैव स्मृतिनिरूपफलहेतुताया अपि कल्पनीयत्वात्, तथा च ज्ञाननिष्ठस्मृतिहेतुतायां विषयनिवेशो दुर्वार इति वाच्यम्। फलव्यापारयोरित्यादिनियम एव मानाभावात्, तत्संस्कारस्य तद्धर्मिविशेष्यकतद्धर्मप्रकारकस्मरणे तद्धर्मिधर्मिकतदभावप्रकारकान्यतद्धर्मिकतत्प्रकारकसंस्कारत्वेन हेतुतयैव तद्गोचरसंशयात्तत्स्मरणापत्तिवारणसम्भवात्, संशयजन्यसंस्कारस्य विरोधिप्रकारकत्वनियमेन तदभावप्रकारकान्यत्वाभावात् इति संस्कारहेतुतावच्छेदककोटौ निश्चयत्वनिवेशे प्रयोजनविरहात् फलव्यापारयोरित्यादिनियमाङ्गीकारेऽपि ज्ञाननिष्ठस्मृतिहेतुतायां विषयविशेषस्याऽवच्छेदकत्वाकल्पनाच्च नाऽनुभवत्वेन कारणतेति चेन्न। संस्कारस्य संस्कारत्वेनैव हेतुता, ज्ञानस्य तु तद्गोचरस्मृतौ तत्तन्निश्चयत्वेनेत्यस्याऽपि सम्भवेन विनिगमकाभावात् ज्ञानत्वेन हेतुतायामपि विषयनिवेशस्याऽप्रत्याख्येयत्वात्। न च तद्गोचरज्ञानजन्यस्य संस्कारस्य कालादिना नाशे अन्यगोचरसंस्कारात्तद्गोचरस्मरणवारणाय संस्कारहेतुतायां विषयनिवेशनमावश्यकमिति वाच्यम्।

रामरुद्री ।

संस्कारहेतुतायां विषयानिवेशेऽप्युक्तस्थले तन्निश्चयरूपकारणजन्यतत्संस्काररूपव्यापारविरहेण तत्स्मरणाप्रत्ययसम्भवात्, तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारत्वेन अन्यगोचरसंस्कारस्य तदजन्यतया तद्व्यापारत्वासम्भवात्, तज्जन्यसंस्कारस्य च विनष्टत्वादिति ध्येयम् । वस्तुतोऽन्वयव्यतिरेकाभ्यां तद्गोचरस्मृतौ तद्गोचरनिश्चयत्वेन हेतुतासिद्धौ तन्निर्वाहकतया व्यापारीभूतसंस्कारकल्पना, संस्कारे प्रमाणान्तराभावादिति कथमक्लृप्तेन साधनीयेन संस्कारेण तद्गोचरनिश्चयत्वावच्छिन्नस्याऽन्यथासिद्धिः? यतस्तद्रूपावच्छिन्नमहेतुः स्यात्, न हि यदुपजीव्य यत्सिद्ध्यति तत्तद्व्याघातकम् । एतेन संस्कारहेतुतायां विषयानिवेशे तदंशे उपेक्षात्मकज्ञानजन्यादन्यगोचरसंस्कारात्तत्स्मरणापत्तिवारणाय तत्तद्विषयकस्मृतौ तत्तद्विषयकसंस्कारत्वेन हेतुत्वमावश्यकमिति ज्ञानहेतुतायां विषयनिवेशो व्यर्थ इति प्रत्युक्तम् । तथाविधसंस्कारस्य स्मृतिहेतुत्वनिश्चयात्प्रागेव तत्तद्विषयकनिश्चयस्य स्मृतिहेतुत्वसिद्ध्या तदुत्तरभाविनो गौरवज्ञानस्य पूर्वज्ञानं प्रत्यकिञ्चित्करत्वादिति । करणस्य फलव्यापारौ प्रति एकेनैव रूपेण हेतुत्वमितिप्राचीनसम्मतनियमभङ्गभियाऽपि तत्तद्विषयकनिश्चयत्वेन स्मृतिहेतुत्वं वक्तव्यमित्यवधेयम् । यद्यप्येवमपि अनुभवत्वेन कारणत्वे न किञ्चित्प्रमाणमुपन्यस्तम्, तथापि विशेषरूपेण कारणत्वे सम्भवति सामान्यरूपेण न कारणत्वमित्यग्रे वक्ष्यमाणमेव प्रमाणमनुसन्धेयम् । मूले—**कारणमिति** । तथा च तादृशानुभवजन्यतावच्छेदकतयैव स्मृतित्वजातिसिद्धिरिति भावः । यद्यपि स्मरामीति प्रतीत्यैव स्मृतित्वजातिसिद्धिः सम्भवति, तथाऽपि स्वात्मपरात्मसाधारणस्मृतिमात्रविषयिण्या अबाधिताया एतादृशप्रतीतेः सत्त्वे प्रमाणाभावात्स्मृतित्वजातावनुमानरूपप्रमाणकथनमित्यवधातव्यम् । यद्यपि यावदाश्रयप्रत्यक्षस्याऽसत्वेऽपि जातिसिद्धौ न किञ्चिद्बाधकं, अन्यथाऽनुगतप्रतीत्या घटत्वादिजातीनामप्यसिद्धिप्रसङ्गात्, तत्राऽपि यावद्घटत्वाश्रयाप्रत्यक्षतायास्तुल्यत्वात्, तथाऽपि स्मृतित्वरूपधर्मसिद्धेः प्रत्यक्षेण सम्भवेऽपि तेन तस्य सकलस्मृतिसाधारणत्वं न सिद्ध्येत्, तत्तद्व्यक्तिवृत्तित्वज्ञाने तत्तद्व्यक्तिज्ञानस्याऽपि हेतुत्वात्, तस्य चाऽभावात्, ततश्च सकलस्मृतिसाधारणस्मृतित्वसिद्ध्यसम्भवेऽनुभवस्मरणभेदेन ज्ञानद्वैविध्यं निरङ्कुशतया ज्ञातुमशक्यं, कदाचित्स्मृतित्वानाश्रयस्याऽप्यनुभवभिन्नज्ञानस्य सम्भवशङ्काया अनिरासात्, अनुमानकथने च सर्वस्यैवाऽनुभवजन्यत्वावगमान्निरङ्कुशं ज्ञानद्वैविध्यं निश्चेतुं शक्यं, अनुभवजन्यतावच्छेदकतया कल्प्यमानायाः स्मृतित्वजातेः सर्वत्रैवाऽनुभवजन्यज्ञाने कल्पनस्याऽऽवश्यकत्वात्, अन्यथा स्मृतित्वस्य जन्यतान्यूनवृत्तितया जन्यतावच्छेदकत्वासम्भवादित्यतः कारणात् तत्राऽनुमानमुपन्यस्तम् । अत एव पृथिवीनिरूपणे परमाणौ पृथिवीत्वस्य प्रत्यक्षेणाऽसिद्धिं, आत्मनिरूपणे च परात्मनि आत्मत्वासिद्धिमाशङ्क्य तत्र तत्राऽनुमानमुपन्यस्तं मन्तव्यम् । पूर्वमुपपादितं ज्ञानद्वैविध्यं स्मृतित्वस्य सकलस्मृतिसाधारण्यमजानद्भिर्न ज्ञातुं शक्यमिति तदुपपादनैदम्पर्येणाऽनुभवत्वेन स्मृतित्वेन च कार्यकारणभावो दर्शित इति तु परमार्थः । एतेन स्मृतिपदशक्यतावच्छेदकतया स्मृतित्वजातिसिद्धिरित्यपि प्रत्युक्तम् । शक्यतावच्छेदकतादिनैव जातिसिद्धौ तत्र तत्र ग्रन्थेषु जातिसाधकप्रमाणोपन्यासवैयर्थ्यात्, पृथिव्यादिनिरूपणे पृथिवीत्वादेर्गन्धादिसमवायिकारणतावच्छेदकतया साधनस्य सन्दर्भविरुद्धत्वापातात् । यद्यपि पुष्पादिषु आपामरसाधारणपृथिवीतिव्यवहारविरहेण पृथिवीत्वस्य शक्यतावच्छेदकतया साधनमसम्भवीति तत्र प्रमाणोपन्यासः कृत इति वक्तुं शक्यं, तथाऽपि जलत्वादिजातिसाधनस्य तन्मतावलम्बने सन्दर्भविरुद्धत्वं दुर्वारमेव । तस्मान्न कुत्रचिदपि शक्यतावच्छेदकतादिना जातिसिद्धिसम्भवः, शक्यतावच्छेदकतासाधकव्यवहार एव विप्रतिपत्तेः, एवं च सर्वासु पृथिवीव्यक्तिषु पृथिवीतिव्यवहारस्य वादिप्रतिवाद्युभयमतसिद्धस्याऽभावेन यथा तत्र पृथिवीत्वसिद्धयेऽनुमानमुपन्यस्तं, तथैव जलादिष्वपि सर्वत्र जले तथाविधव्यवहारस्याऽभावात् शक्यतावच्छेदकतया जातिसाधनस्य शशविषाणसोदरतया तत्तज्जातिसाधनाय तत्र तत्र प्रमाणोपन्यासो युक्त एवेति वक्तव्यम् । एवञ्च न कदाचिदपि स्मृत्यादिपदशक्यतावच्छेदकतया स्मृतित्वजातिसिद्धिः सम्भवति, अत्राऽपि तादृशव्यवहारे विप्रपत्तिसम्भवादिति विभावयन्तु । वस्तुतस्तु स्मृत्यादिपदशक्यतावच्छेदकत्वमनुभवजन्यज्ञानत्व एव स्वीकर-

रामरुद्री ।

णीयमिति कथं स्मृतित्वजातिसिद्धिसम्भवः ? न च विशिष्टबुद्धिमात्रस्यैव विशेषणज्ञानादिजन्यतया सविकल्पकादेरपि निर्विकल्पकादिजन्यस्य स्मृतिपदार्थतापत्तिरिति वाच्यम् । स्वजन्यसंस्कारसम्बन्धावच्छिन्नस्वसमानविषयकानुभवत्वावच्छिन्नजनकतानिरूपितजन्यताशालिज्ञानत्वस्यैव स्मृतिपदशक्यतावच्छेदकत्वात् । न चैतादृशगुरुभूतधर्मस्य तथात्वकल्पनामपेक्ष्य लाघवात्स्मृतित्व एव तत्कल्पनं युक्तमिति वाच्यम् । प्रामाणिकगौरवस्य दोषावहत्वाभावात् , स्मृतित्वरूपजातिसिद्धौ तत्र शक्यतावच्छेदकत्वस्य कल्पनीयतया तस्याश्च स्मृतित्वसिद्ध्यपेक्षित्वेऽन्योन्याश्रयात् । न च स्मृतिपदशक्यता किञ्चिद्धर्मावच्छिन्ना, शक्यतात्वात्, घटपदशक्यतावदित्यनुमानेन शक्यतावच्छेदकतया तत्सिद्धिरिति वाच्यम् । निरुक्तानुभवजन्यज्ञानत्वरूपधर्ममादायाऽर्थान्तरात् । न च लाघवादतिरिक्तस्यैव धर्मस्य तत्कल्पनं युक्तं, अन्यथा यावत्स्मृतिगतान्यतमत्वादेरपि विनिगमनाविरहेण शक्यतावच्छेदकत्वापातादिति वाच्यम् । यावत्स्मृत्यन्यतमत्वस्य तत्तत्स्मृतिव्यक्तिभेदकूटावच्छिन्नभेदस्वरूपतया तत्प्रतियोगितावच्छेदकभेदकूटस्य च तत्तत्स्मृतिव्यक्तीनामनन्ततयाऽसर्वज्ञदुर्ज्ञानतया तद्घटितान्यतमत्वरूपधर्मिण एवाऽज्ञाने तत्र शक्यतावच्छेदकत्वग्रहस्याऽप्यसम्भवादेव तादृशान्यतमत्वस्य शक्यतानवच्छेदकत्वे विनिगमकत्वेन निरुक्तानुभवजन्यज्ञानत्वस्य शक्यतावच्छेदकत्वौचित्यादतिरिक्तकल्पनायां मानाभावात् । न चैवं घटादिपदशक्यतावच्छेदकताऽपि कपालद्वयसंयोगादिजन्यद्रव्यत्व एव स्वीकरणीयेति घटत्वादेस्तदवच्छेदकत्वं व्याहन्येतेति वाच्यम् । यतो हि घटत्वं न घटपदशक्यतावच्छेदकतया सिध्यति, किन्तु कपालद्वयसंयोगजन्यतावच्छेदकतया, अनुगतप्रत्यक्षेण वा, तथा च प्रमाणान्तरेण सिद्धे घटत्वे लाघवात्तत्रैव घटपदशक्यतावच्छेदकत्वकल्पने न किञ्चिद्बाधकमिति तत्तत्र कल्प्यते, कपालद्वयसंयोगजन्यद्रव्यत्वस्य तथात्वे गौरवात् । प्रकृते तु स्मृतित्वस्य प्रमाणान्तरासिद्धतयाऽक्लृप्तत्वेन कथं क्लृप्तस्याऽनुभवजन्यज्ञानत्वस्याऽक्लृप्तेन तेन सह विनिगमनाविरहावकाशः स्यात् ? तस्मात् स्मृतित्वसाधकप्रमाणविरहेण स्मृतिपदशक्यतावच्छेदकत्वस्याऽनुभवजन्यज्ञानत्वेऽबाधिततया तेनैव निर्वाहेऽतिरिक्तस्मृतित्वजातिसिद्धिकथा दूरोत्सारितैव भवेत् । ननु अनुभवजन्यतावच्छेदकतया सिद्ध एव स्मृतित्वरूपाखण्डधर्मे शक्यतावच्छेदकत्वं लाघवात्कल्पनयीमिति चेदायातं मार्गेण । एवं सति स्मृतित्वजातिरनुभवजन्यतावच्छेदकतयैव साधनीया, न पुनः स्मृतिपदशक्यतावच्छेदकतयेति । अत एव भूतपदशक्यतावच्छेदकतयाऽपि न भूतत्वादिजातिसिद्धिः, अन्यथाऽऽत्मावृत्तिविशेषगुणवत्त्वरूपस्य भूतत्वस्य शक्यतावच्छेदकत्वकल्पनमपेक्ष्य लाघवादतिरिक्तधर्म एव तत्कल्पनप्रसङ्गात् । न च क्रियाजनकतावच्छेदकतया सिद्धया मूर्तत्वजात्या सह साङ्कर्यभयान्न तस्य जातित्वं साधयितुं शक्यमिति वाच्यम् । वैपरीत्यस्याऽपि सम्भवात् , भूतत्वस्याऽपि भूतपदशक्यतावच्छेदकतया सिद्धयोभयत्र प्रमाणतौल्यात् , तस्मादक्लृप्ते शक्यतावच्छेदकत्वं क्लृप्ते सम्भवति न कल्प्यत इति वक्तव्यम् । तथा च भूतत्वस्याऽक्लृप्ततया न तत्र शक्यतावच्छेदकत्वं कल्पयितुं शक्यमिति आत्मावृत्तिविशेषगुणवत्त्वे शक्यतावच्छेदकत्वकल्पनं सङ्गतमेव । अत एव च न यावद्भूतान्यतमत्वमादायाऽत्र विनिगमनाविरहोऽपि सम्भवति, प्रागुक्तरीत्या तस्याऽसर्वज्ञदुर्ज्ञेयत्वात् । न चैवं मूर्तत्वस्य कथं जातित्वमङ्गीक्रियत इति वाच्यम् । मूर्तत्वजातेर्मूर्तपदशक्यतावच्छेदकतयाऽकल्पनात् , क्रियाजनकतावच्छेदकतयैव तत्कल्पनात् , क्रियाजनकतावच्छेदकतया सिद्धे तु मूर्तत्वे मूर्तपदशक्यतावच्छेदकत्वकल्पनं पुनर्लाघवप्रतिसन्धानाधीनमित्यन्यदेतत् । मूर्तत्वजातिस्तु न मूर्तपदशक्यतावच्छेदकतया प्रसाधिता कुत्रचिदपीत्येव तु वक्तव्यम् । तथा च भूतत्वसाधकप्रमाणान्तरविरहेण आत्मावृत्तिविशेषगुणवत्त्वे भूतपदशक्यतावच्छेदकत्वकल्पनं युक्तमेवेति वक्तव्यम् । एवं सति स्मृतित्वजातेरपि तथैवाऽसिद्धौ तत्र जाग्रत्यां तत्र शक्यतावच्छेदकत्वकल्पनस्यैवाऽसम्भवेन स्मृत्यादिपदशक्यतावच्छेकतया स्मृतित्वादिजातिसाधनमुपहासास्पदमेवेति मन्तव्यम् । किञ्च शक्यतावच्छेदकतायास्तत्तत्पदजन्यबोधविषयत्वप्रकारकेश्वरेच्छीयविशेष्यतावच्छेदकत्वरूपत्वेन विषयतात्वेन तस्य गुरुधर्मेऽपि सम्भवात्तदनुपपत्त्या धर्मान्तरकल्पनमयुक्तमिति वक्तुं शक्यम् । कारणतावच्छेदकत्वस्य तु स्वरूपसम्बन्धविशेषरूपस्य गुरुधर्मे कल्प-

**अत्र केचित् । अनुभवत्वेन न कारणत्वं, किन्तु ज्ञानत्वेनैव, अन्यथा स्मरणोत्तरं स्मरणं न स्यात् समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात् ।**

दिनकरी ।

स्मरणं न स्यादिति । अनुभवस्य नष्टत्वादिति भावः । ननु अनुभवस्य व्यापारद्वारा कारणत्वं, तच्च कार्याव्यवहितपूर्वक्षणवृत्ति–स्वस्वव्यापारान्यतरकत्वं, तच्चाऽनुभवनाशेऽपि तज्जन्यसंस्कारस्य सत्त्वान्निराबाधमत आह । समानप्रकारकेति । विनष्टत्वा-

रामरुद्री ।

नमसम्भवि, गौरवरूपान्यथासिद्धिज्ञानस्यैव तत्र प्रतिबन्धकत्वादित्यादिकमूहनीयम् । इदमत्राऽऽकूतम् । अनुभवजन्यज्ञानत्वे ईश्वरेच्छीयविशेष्यतावच्छेदकत्वं तावत्क्लृप्तमेव, स्मृतिपदादनुभवजन्यज्ञानबोधो भवत्वितीश्वरेच्छाऽपि क्लृप्तैव, तस्याः सर्वविषयकत्वात्, केवलं तत्र पदपदार्थसंसर्गत्वमेव कल्पनीयं, कारणतावच्छेदकत्वं तु न तथाविधम्, तत्र प्रथमतोऽक्लृप्तायाः कारणतायास्तदवच्छेदकत्वस्य चोभयस्य कल्पनीयत्वात्, एवमनुभवजन्यज्ञानत्वस्य कारणतावच्छेदकत्वेऽनुभवत्वादाववच्छेदकतावच्छेदकतावच्छेदकतादिकं कल्पनीयमिति महद्गौरवम्, तदपेक्षया कारणतावच्छेदकीभूतातिरिक्तधर्मकल्पने तु तत्रैव कारणतावच्छेदकतायाः कल्पनसम्भवात्, तस्याश्च निरवच्छिन्नतया तदवच्छेदकत्वादिकल्पनाया अनावश्यकतया लाघवादतः कारणतावच्छेदकतया धर्मसिद्धौ न किञ्चिद्बाधकमिति ध्येयम् । अथैवमपि पूर्वानुभवजन्यतावच्छेदकतयैव स्मृतित्वसाधने प्रत्यभिज्ञाया अपि संस्कारकार्यतया पूर्वानुभवजन्यत्वेन तस्या अपि स्मृतित्वापत्तिः । न चेष्टापत्तिः, तथा सति स्मृतित्वस्य प्रत्यक्षत्वादिना साङ्कर्यादिति चेदत्र केचित्, स्वजन्यसंस्कारसम्बन्धावच्छिन्नानुभवत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकतया कल्प्यमाना स्मृतित्वजातिः स्मृतावेवोपेया, न तु प्रत्यभिज्ञायाम्, तस्याः संस्कारत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वेऽपि स्वजन्यसंस्कारसम्बन्धावच्छिन्नानुभवत्वाच्छिन्नजनकतानिरूपितजन्यतायाः प्रत्यभिज्ञायामभावात् । तादृशानुभवत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकतया कल्प्यमानाया जातेस्तत्र कल्पने मानाभावात् । अत एव मूलेऽपि–'तत्र हि पूर्वसंस्कारः कारणम्' इत्यनुक्त्वा '**पूर्वानुभवः कारणम्**' इत्युक्तम् । संस्कारस्य तद्धेतुत्वकथने संस्कारजन्यताया अतिप्रसक्तत्वेन स्मृतित्वसाधनानुपपत्तिमवगत्यैवाऽनतिप्रसक्तानुभवजन्यतायाः स्मृतित्वसाधनाय ग्रन्थकृतामभिमतत्वादिति प्राहुः । तत्तुच्छम् । संस्कारस्य स्मृतिजनकत्वेनैव सिद्ध्या प्रत्यभिज्ञां प्रति यस्य 'अन्यं प्रति—' इत्यादितृतीयान्यथासिद्ध्याक्रान्तत्वेनाऽकारणत्वात् । इदमत्र तत्त्वम् । यद्यपि 'अन्यं प्रति–'इत्याद्यन्यथासिद्धिलक्षणस्य यथाश्रुतेऽपूर्वं प्रति पूर्ववृत्तित्वं पूर्वं गृहीत्वैव यागस्य स्वर्गं प्रति पूर्ववर्तित्वग्रहात्तन्नाऽतिव्याप्तिरतः प्रकृतकार्याननुगुणं प्रतीति 'अन्यं प्रति–' इत्यनेन विवक्षितमतो नोक्तदोष इति वक्तव्यम्, एवं च स्मरणस्य विशेषणज्ञानविधया प्रकृतप्रत्यभिज्ञारूपकार्यानुगुणत्वात्तत्पूर्ववर्तित्वग्रहो नाऽन्यथासिद्धिप्रयोजक इति वक्तुं शक्यते, तथाऽपि यागस्य हेतुतानिर्वाहाय 'अन्यं प्रति–'इत्यस्य स्वनिष्ठप्रकृतकार्यपूर्ववर्तित्वानुपपादकं यं प्रति पूर्ववर्तित्वं गृह्यत इति वक्तव्यतया संस्कारस्य तृतीयान्यथासिद्धत्वं दुष्परिहरमेव, अन्यथा पूर्वोक्तमतावलम्बने गगनस्य शब्दाश्रयत्वादिना कारणत्वे तृतीयान्यथासिद्ध्यभावप्रसङ्गादिति । अपि च यादृशस्थलविशेषे चरमस्मृत्यनन्तरतृतीयक्षणे प्रत्यभिज्ञा, तत्र प्रत्यभिज्ञायाः ज्ञानलक्षणासन्निकर्षत्वमावहन्त्या स्मृत्याऽपि सम्भवात् तत्पूर्वक्षणे च चरमस्मृत्याऽव्यवहितोत्तरक्षणविनाशितत्वेन संस्कारस्याऽप्यभावात् व्यतिरेकव्यभिचारादपि संस्कारस्य न प्रत्यभिज्ञाहेतुत्वं सम्भवतीति ध्येयम् । कुतस्तर्हि प्रत्यभिज्ञानमिति चेत, सुरभि चन्दनमित्यादिवत्संस्कारजन्यया ज्ञानलक्षणासन्निकर्षत्वमावहन्त्या स्मृत्यैव सर्वत्र तत्सम्भव इति गृहाण । तथा च प्रत्यभिज्ञायाः स्वजन्यसंस्कारसम्बन्धेनाऽनुभवाजन्यतया न स्मृतित्वमिति ध्येयम् । मूले 'तत्र हि पूर्वसंस्कारः कारणम्'इत्युपेक्ष्य '**पूर्वानुभवः कारणम्**' इति कथनं तु संस्कारस्य व्यापारविधया कल्पनीयस्याऽनुभवनिष्ठकारणतावच्छेदककुक्षौ विषयनिवेशे बाधकत्वाभावसूचनायेति ध्येयम् ।

मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुः। तन्न। यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट, सकलविषयकस्मरणं तु नाभूत्, तत्र फलस्य संस्कारनाशकत्वाभावात् कालस्य, रोगस्य, चरमफलस्य वा सर्वत्र संस्कारनाशकत्वं वाच्यम्। तथा च न क्रमिकस्मरणानुपपत्तिः। न च पुनः पुनः स्मरणाद् दृढतरसंस्कारानुपपत्तिरिति

दिनकरी।

दिति। तथा च तादृशमपि कारणत्वमनुभवे न सम्भवतीति भावः। ज्ञानत्वेन कारणतावादिनस्तु न काऽप्यनुपपत्तिरित्यत आह। **मन्मते त्विति**। **तेनैव**—संस्कारनाशकेन समानप्रकारकस्मरणेनैव। **संस्कारान्तरद्वारेति**। स्मरणस्य तृतीयक्षणे नाशेन स्वरूपतो हेतुत्वासम्भवादिति भावः।

**फलस्य**-प्रत्येकविषयकक्रमिकस्मरणरूपस्य। **संस्कारनाशकत्वाभावादिति**। समानप्रकारकत्वाभावादिति भावः। **कालस्य- रोगस्येति**। अन्यथा उक्तसमूहालम्बनसंस्कारस्याऽनाशप्रसङ्गादिति भावः। न चेष्टापत्तिः, जन्यभावत्वेन विनाशित्वनियमात्। ननु कालादेः कालत्वादिना नाशकत्वे संस्कारमात्रस्य क्षणिकत्वापत्तिः, तत्तद्व्यक्तित्वेन तथात्वे गौरवमत आह। **चरमफलस्य वेति**। चरमफले वैजात्यं कल्पयित्वा तेन रूपेण नाशकत्वं वाच्यमिति भावः। **न क्रमिकेति**। स्मरणोत्तरस्मरणेत्यर्थः।

रामरुद्री।

**स्व-स्वव्यापारान्यतरकत्वमिति**। स्वजन्यव्यापार—समवायान्तरसम्बन्धेन कार्याव्यवहितप्राक्क्षणवृत्तित्वमित्यर्थः। **न सम्भवतीति**। अनुभवस्य कार्यसमानाधिकरणाभावप्रतियोगित्वनिश्चयेन तदभावरूपकारणत्वनिश्चयस्य प्रतिबन्धादिति भावः। **न काऽप्यनुपपत्तिरिति**। पूर्वानुभवस्य कार्यसमानाधिकरणाभावप्रतियोगित्वेऽपि ज्ञानस्याऽतथात्वात्, तत्र स्मरणान्तरस्यैव सम्भवात् ज्ञानसामान्याभावस्य धर्तुमशक्यत्वादिति भावः। **स्वरूपतो हेतुत्वासम्भवादितीति**। अयं भावः। यत्र प्रथमदिने घटानुभवः, द्वितीयदिने च घटस्मरणम्, तृतीयदिने च पुनस्तत्स्मरणम्, तत्र द्वितीयदिनोत्पन्नस्मरणेन संस्कारस्य नाशात्तृतीयदिनोत्पत्स्यमानस्मरणाव्यवहितपूर्वक्षणे समवाय-संस्कारान्यतरसम्बन्धेनाऽपि पूर्वानुभवस्याऽविद्यमानत्वात्तत्स्मरणानुपपत्तिरतो ज्ञानत्वेन स्मृतिहेतुता वाच्या, साऽपि खलु न सम्भवति, तृतीयदिवसोत्पन्नस्मरणपूर्वक्षणे ज्ञानस्याऽनुभवरूपस्य वाऽसम्भवादतो द्वितीयदिवसोत्पन्नस्मरणस्यैव स्वजन्यसंस्कारसम्बन्धेन तत्र कल्पनमावश्यकम्, तच्च द्वितीयस्मृत्या संस्कारोत्पत्तिकल्पन एव सम्भवतीति तादृशस्मृत्या संस्कारोत्पत्तिमङ्गीकृत्यैव तत्र निर्वाहः कार्य इति।

मूले-**नाऽभूदिति**। कदाचिदपीति शेषः। अयमाशयः। एतादृशस्थले संस्कारस्यानाशप्रसङ्गः, संस्कारनाशत्वावच्छिन्नं प्रति स्वसमानविषयकस्वजन्यस्मरणस्यैव हेतुत्वात्। न च तद्विषयकसंस्कारनाशं प्रति तद्विषयकस्मरणत्वेन हेतुत्वोपगमेनैव सामञ्जस्ये समानविषयकत्वेन नाश्यनाशकभावोपगमो व्यर्थं इति वाच्यम्। तथा सति तादृशस्थले क्रमिकस्मरणान्तरानुत्पत्तिप्रसङ्गात्, प्रथमस्मरणेनैव संस्कारस्य नाशादिति। ननु स संस्कारोऽविनाश्येवाऽस्तु, तथा च नेयमापत्तिरित्याशङ्क्याऽऽह। **जन्यभावत्वेनेति**। ध्वंसे व्यभिचारवारणाय भावत्वनिवेशो बोध्यः। **क्षणिकत्वापत्तिरिति**। संस्कारोत्पत्तेः प्राक् नाशत्वावच्छिन्नं प्रति सिद्धकारणभावस्य प्रतियोगिरूपकारणस्य विरहेण तदसम्भवेऽपि संस्कारोत्पत्तिक्षणे तत्सम्भवात्संस्कारस्य द्वितीयक्षण एव नाशापत्तिरिति भावः। **गौरवमिति**। तत्तद्व्यक्तिभेदेन कार्यकारणभावानन्त्यादिति शेषः। **वैजात्यं कल्पयित्वेति**। संस्कारनाशकतावच्छेदकतया च तत्सिद्धिरिति भावः। मूले-**पुनःपुनरिति**। नानेत्यर्थः। **दृढेति**। **दृढत्वं**-जातिविशेषः।

**वाच्यम् । झटित्युद्बोधकसमवधानस्यैव दार्ढ्यपदार्थत्वात् । नच विनिगमनाविरहादेव ज्ञानत्वेनाऽपि जनकत्वं स्यादिति वाच्यम् । विशेषधर्मेण व्यभिचाराज्ञाने सामान्यधर्म्मेणान्यथासिद्धत्वात्, कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम् । न चाऽऽन्तरालिकस्मरणानां**

**दिनकरी ।**

दार्ढ्यपदार्थत्वादिति । तथा च पुनःपुनःस्मरणान्न दृढतरसंस्कारोत्पत्तिः, किं तु विद्यमानसंस्कारस्यैव पुनः पुनः स्मरणेन झटित्युद्बोधकसमवधानं जायते, उद्बुद्धाच्च

**रामरुद्री ।**

तच्च दृढ–दृढतर–दृढतमादिव्यवहारान्नैकं, किन्तु नानैव । तथा च तत्तद्दृढसंस्कारं प्रति तत्तत्स्मृतीनां कारणत्वं सर्वाभ्युपेतं न सिद्ध्येत्, संस्कारस्य स्मृत्यजन्यत्वादिति भावः । दृढत्वं न जातिः, न वा तत्तद्दृढत्वावच्छिन्नं प्रति तत्तत्स्मृतीनां हेतुत्वमङ्गीकार्यमित्याह । **झटित्युद्बोधकसमवधानस्येति ।** अविलम्बितक्षणावच्छेदेनोद्बोधकसम्पत्तेरित्यर्थः । तत्तत्स्मरणानामेव संस्कारोद्बोधकत्वेन तैरुद्बोधकसमवधानस्योपपादनात्, तथा हि उद्बोधकानां **समवधानं** नाम सम्बन्धः, स च 'झटिति'इत्युक्त्याऽविलम्बितकालावच्छेदेनैवाऽर्थाद्ग्राह्यः, तदुपपादकत्वं च परम्परया तत्प्रयोजकत्वम् । तच्च विभिन्नकालीनयोः, सम्बन्धविरहात् समानकालीनत्वस्य तत्र प्रयोजकत्वात्तत्तत्स्मरणस्य च तद्वत्त्वादुपपन्नमिति ध्येयम् । वस्तुतस्तु पूर्वानुभवस्य स्मृतिहेतुत्वे आन्तरालिकस्मृतिभ्यो दृढदृढतरादिसंस्कारोत्पत्तावपि न किञ्चिद्बाधकम् । न चान्तरालिकस्मरणेन दृढसंस्कारोत्पत्तौ पूर्वानुभवजनितादृढसंस्कारस्य विनष्टत्वादेकस्मरणानन्तरस्मरणपूर्वक्षणे स्वजन्यसंस्कारसम्बन्धेन पूर्वानुभवस्याऽभावाद्व्यभिचारापत्तिरिति वाच्यम् । आन्तरालिकस्मरणेभ्यः संस्कारान्तरोत्पादेऽपि पूर्वसंस्कारनाशानभ्युपगमात् । कालादिना दृढसंस्कारविनाशेऽपि ध्यानवशाददृढसंस्कारादेवोद्बुद्धात्स्मरणोत्पत्तेर्दृष्टत्वात् । जीवनादृष्टबलेन प्राक्तनजन्मानुभूतस्येष्टसाधनत्वादेर्दृढतरसंस्कारविरहेऽपि स्तन्यपानादिस्थले स्मरणस्य सर्वैरङ्गीकरणीयत्वात् । न हि दृढ एव संस्कारः कालेनाऽदृढो जायत इति वक्तुं शक्यं, तथा सति दृढत्वादृढत्वयोः साङ्कर्यप्रसङ्गादित्यवधेयम् । न चैवं दृढतरादिसंस्कारकल्पनं निरर्थकं स्यात्, प्राक्तनसंस्कारेणैवाऽनुभवस्य फलोपधायकत्वादिति वाच्यम् । तेषां प्राक्तनसंस्कारोद्बोध एवोपयोगित्वादित्यलं पल्लवितेन । न च तर्हि पूर्वानुभवजन्यसंस्कारस्याऽनाशप्रसङ्ग इति वाच्यम् । चरमफलस्यैव तन्नाशकत्वोपगमात् । प्रत्येकं जन्मनि जायमानस्याऽऽद्यस्मरणस्यैव चरमफलत्वकल्पनात् । न च तर्हि भाविजन्मान्तरे इष्टसाधनतास्मरणानुपपत्तिरिति वाच्यम् । एतज्जन्मनि पुनरपि स्तन्यादिपानानन्तरं तत्रेष्टसाधनत्वानुभवसम्भवेन तत एव दृढसंस्कारान्तरोत्पत्त्या तत्सम्भवात् । केचित्तु स्वप्रयोज्यसंस्कारसम्बन्धेनैवाऽनुभवस्य स्मृतिं प्रति हेतुत्वादान्तरालिकस्मरणात्पूर्वसंस्कारविनाशेऽपि न क्षतिः, अनुभवप्रयोज्यसंस्कारेणैव कार्योत्पत्तिसम्भवादित्याहुः । मूले—**विशेषधर्मेणेति ।** व्याप्यधर्मेणेत्यर्थः । **सामान्यधर्मेणेति ।** व्यापकधर्मेणेत्यर्थः । **अन्यथासिद्धत्वादिति ।** कारणत्वाभावव्यवहारविषयत्वादित्यर्थः । एतादृशानुभवत्वजातिश्चाऽनुभवामि न स्मरामीतिप्रतीतिसाक्षिकैवेति ज्ञेयम् । वस्तुतो विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य कारणतया विशेषणज्ञानकार्यतावच्छेदकतया तत्सिद्धिः । 'तच्चाऽनुभवत्वं प्रत्यक्षादिज्ञानचतुष्टयवृत्त्यभ्युपेयम्, अनुमित्यादीनां वैशिष्ट्यावगाहित्वेन तासां तत्कार्यत्वाक्रान्ततया तत्र तत्स्वीकारस्याऽऽवश्यकत्वात् । प्रत्यक्षेऽपि सविकल्पकस्य तथात्वमावश्यकं, तस्य वैशिष्ट्यावगाहित्वात् । निर्विकल्पके वैशिष्ट्यानवगाहितया विशेषणज्ञानकार्यत्वानाक्रान्तेऽनुभवत्वानङ्गीकारे च प्रत्यक्षत्वचाक्षुषत्वादिनाऽनुभवत्वस्य साङ्कर्यापत्तिरतो निर्विकल्पकेऽपि तदभ्युपेयमिति । अनुभवामीति प्रतीतौ विवादाच्च न प्रत्यक्षं प्रमाणत्वेनोपन्यस्तमिति ध्येयम् । यद्यपि अनुभवत्वं स्मृतिभिन्नज्ञानत्वमेव प्रागभ्यधायि, तथाऽपि वस्तुस्थितिमनुरुध्य तस्याऽखण्डत्वमुक्तम् । **मूले–कथमन्यथेति ।** ।तदेव चाऽनुभवत्वं स्मृतिजनकताच्छेदकं, न ज्ञानत्वं, अगुरुव्याप्यधर्मस्याऽवच्छेदकत्वसम्भवे लघुभूतस्याऽपि

**संस्कारनाशकत्वसंशयात्तु व्यभिचारसंशय इति वाच्यम्। अनन्तसंस्कारत-**

दिनकरी।

तस्मात् स्मरणान्तरमिति भावः। **व्यभिचारसंशय** इति। अनुभवत्वेन हेतुत्वे व्यभिचारसंशय इत्यर्थः। **व्यभिचारसंशयाभावादिति**। तथा च न विशेषधर्मेण व्यभिचारज्ञानमिति भावः। सकृदनुभूतस्थले संस्कारनाशकचरमस्मृतेस्तदानीमभावेन संस्कारनाशाभावादनुभवत्वेन हेतुत्वेऽपि न व्यभिचारसन्देह इति भावः। यद्यप्यनन्तसंस्कारतन्नाशकल्पनागौरवस्य फलमुखत्वेन न दोषत्वम्, अन्यथा विशिष्टज्ञानकल्पनागौरवभि-

रामरुद्री।

व्यापकधर्मस्याऽवच्छेदकत्वाकल्पनात्। अन्यथा घटादिजनकतावच्छेदकत्वं दण्डत्वे विहाय द्रव्यत्व एव कल्प्येतेति भावः। न च द्रव्यत्वस्य कारणतावच्छेदकत्वे तादृशकारणतावच्छेदकावच्छिन्नात्पटादेरपि घटोत्पादापत्तिः स्यादित्यस्मात् कारणादेव द्रव्यत्वेन दण्डस्य घटहेतुत्वं नाऽभ्युपेयते, न तु अगुरुव्याप्यधर्मसत्त्वे व्यापकधर्मेऽवच्छेदकत्वं न कल्प्यत इतिनियमभङ्गभयेनेति त्वदुक्तनियमोऽयमप्रयोजक इति वाच्यम्। सामान्यतो घटत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुत्वेऽपि तद्दण्डव्यक्तेरपरघटोत्पादवारणार्थमवश्यकल्पनीयेन तत्तद्व्यक्तिं प्रति तत्तद्व्यक्तेः कारणत्वेनैव पटादेर्घटोत्पादवारणसम्भवात्, तत्र सामान्यधर्मावच्छिन्नसामग्रीसत्त्वेऽपि विशेषधर्मावच्छिन्नसामग्रीविरहस्य वक्तुं शक्यत्वात्, तद्विरहस्य च फलबलकल्प्यत्वात्, तथा चोक्तनियमानभ्युपगमे दण्डादेर्घटादिहेतुत्वं द्रव्यत्वादिनाऽप्यव्याहतमेवेति तत्राऽपि तत्कल्प्येत, अत उक्तनियमाङ्गीकार आवश्यक इति तु हृदयम्। मूले—**व्यभिचारसंशय इति**। यद्यप्येतदापाततः—कारणे कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणाभावप्रतियोगित्व–तदभावरूपकोटिद्वयावगाहिनो व्यभिचारसन्देहस्य ग्राह्यसंशयपर्यवसन्नतया अनुभवनिष्ठस्मृतिकारणत्वानुमितावविरोधित्वेनाऽकिञ्चित्करत्वात्, तथाऽपि स्मृतिहेतुता ज्ञानत्वावच्छिन्ना, उताऽनुभवत्वावच्छिन्नेति संशये सामान्यधर्मे नियतपूर्ववर्तितावच्छेदकत्वं क्लृप्तम्, विशेषरूपे तु कल्पनीयमितिकल्पनागौरवभयादेव विशेषरूपावच्छिन्नत्वं तत्र न कल्प्यते इति सूचयितुं व्यभिचारसंशयो मूले दर्शितोऽनुभवत्वेन हेतुतायामिति ध्येयम्। मूलेऽनन्तसंस्कारादिकल्पनागौरवभियाऽनुभवत्वेन स्मृतिहेतुत्वमङ्गीकृतं, तच्च न सम्भवति, कल्पनायाः फलमुखत्वेनाऽदोषत्वादित्याशङ्कते—**यद्यपीत्यादि**। **फलमुखत्वेनेति**। **फलं**-कार्यकारणभावग्रहः, **तन्मुखस्य**—तदधीनस्येत्यर्थः। **न दोषत्वमिति**। ज्ञानत्वेन स्मृतिहेतुत्वनिश्चयानन्तरमेव तत्तत्संस्कारादिकल्पनागौरवस्य ज्ञानादुत्तरभाविनो गौरवज्ञानस्य पूर्वज्ञानं प्रत्यकिञ्चित्करत्वस्य पूर्वमुक्तप्रायत्वादिति भावः। उत्तरभाविनो गौरवज्ञानस्य पूर्वज्ञानं प्रत्यविरोधित्वे ग्रन्थकृतां संमतिमाह। **अन्यथेति**। उत्तरभाविनो गौरवज्ञानस्याऽविरोधित्वानङ्गीकार इत्यर्थः। **विशिष्टज्ञानकल्पनागौरवभियेति**। व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानकल्पनागौरवभयेनेत्यर्थः। तत्र व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानेन व्याप्तिस्मरणेन चाऽनुमितिनिर्वाहाद्विशिष्टवैशिष्ट्यावगाहिज्ञानकल्पने गौरवादिति भावः। तथा च तत्र यथा विशिष्टज्ञानकल्पनगौरवं तत्राऽनुमितिहेतुतानिश्चयानन्तरभावीति न दोषावहमित्युच्यते, तथैवेहाऽपि स्यादिति भावः। वस्तुतस्तु **'अनन्त–'** इत्यादि—**'गौरवात्–'** इत्यन्तमूले संस्कारादिकल्पनागौरवं न दूषणतया प्रतिपिपादयिषितं, अपि तु आन्तरालिकस्मृतिषु संस्कारनाशकत्वकल्पनागौरवमेव, एवं चाऽऽन्तरालिकस्मरणेषु संस्कारनाशहेतुत्वनिश्चयात्प्रागेव गौरवज्ञानात्तत्र न तन्निश्चयः सम्भवतीति मूलोक्तिः समञ्जसैव। अत एव **'चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन–'** इत्याद्यग्रिमग्रन्थोऽपि स्वारस्येन सङ्गच्छते। अन्यथा 'चरमस्मरणादेव संस्कारनाशकल्पनेन' इति वक्तव्यत्वात्। **'अनन्तसंस्कारतन्नाशकल्पनापेक्षया—'** इति पूर्वमूलस्य तु अनन्ताः संस्काराः, तन्नाशाश्च याभ्यस्तदपेक्षयेति व्युत्पत्त्या अनन्तसंस्कारतन्नाशहेतुकल्पनापेक्षयेत्यर्थः। आन्तरालिकस्मरणानां संस्कारतन्नाशकत्वकल्पनापेक्षयेत्यर्थः पर्यवसितः। तथा च हेतुत्वकल्पनागौरवस्यैव मूलोक्तत्वात् तस्य हेतुत्वकल्पनाविरो-

साक्षात्कारे सुखादीनां करणं मन उच्यते ।

नाशकल्पनापेक्षया चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात् ॥ इति स्मृतिकारणनिरूपणम् । इति स्मृतिप्रक्रिया ॥ ८४ ॥

इदानीं क्रमप्राप्तं मनो निरूपयितुमाह—साक्षात्कारे इति । एतेन

दिनकरी ।

या अनुमितिं प्रति विशिष्टज्ञानत्वेन हेतुताविलयप्रसङ्गात्, तथाऽपि ज्ञानत्वेन हेतुत्वे उपेक्षात्मकतत्तत्स्मृतिव्यक्तिभेदस्य कारणतावच्छेदककोटिनिवेशेन गौरवम्, अनुभवत्वेन स्मृतिहेतुत्वे तु तत्तत्स्मृतिव्यक्तिभेदानिवेशे लाघवमिति लाघवज्ञानरूपोत्तेजकसत्त्वाद्व्यभिचारशङ्काऽकिञ्चित्करीत्यत्र तात्पर्यम् ॥ इति स्मृतिकारणनिरूपणम् ॥

इति श्रीमद्भारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभहारब्धे तत्पुत्रदिनकरभट्टप्रपूरिते मुक्तावलीप्रकाशे स्मृतिप्रक्रियाख्यः सप्तमः परिच्छेदः ॥

---

रामरुद्री ।

धित्वं दुर्वारमेव, परामर्शस्थले तु विशिष्टज्ञानहेतुता न कल्पनीया कुत्रचिदपि, कालान्तरभावितादृशविशिष्टस्मरणान्यथानुपपत्त्या क्लृप्तहेतुभावात्संस्कारादेव तदुत्पत्तिसम्भवादिति न तत्रैतादृशदोषप्रसक्तिरिति तु परेषामपरः पन्थाः । उपेक्षात्मकतत्तत्स्मृतिव्यक्तिभेदस्येति । उपेक्षात्वं हि न जातिः, प्रत्यक्षत्वादिना साङ्कर्यात्, उपेक्षात्वस्य प्रत्यक्षत्वं विहायाऽनुमितौ, प्रत्यक्षत्वस्य चोपेक्षात्वं विहाय निर्विकल्पके सत्त्वादुभयोश्च सविकल्पके समावेशात् । यद्यप्येवमपि चाक्षुषत्वादिव्याप्यान्युपेक्षात्वानि नानाविधान्यभ्युपेत्यैतादृशदोषवारणं सम्भवति, तथाऽपि एकस्मिन्नेव ज्ञाने कुत्रचिदुपेक्षात्वतदभावयोर्व्यवहारादांशिकत्वपर्यवसानात्वं न जातित्वेनाऽभ्युपगन्तुं शक्यमिति ध्येयम् । नाऽप्युपाधिस्वरूपमनुगतं तद्वक्तुं शक्यम्, तादृशस्य धर्मस्याऽभावात् । न च स्मृत्यजनकज्ञानत्वमेव तदिति वाच्यम् । स्मृतिजनकतावच्छेदकस्यैवाऽनिर्णयेन तदृशधर्मनिश्चयस्याऽपि तन्निश्चयसापेक्षस्याऽसम्भवात् । तथा च तत्तदुपेक्षाव्यक्तिभेदकूटा एव कारणतावच्छेदककोटौ निवेशनीया इति ज्ञानमात्रस्यैव कारणत्वे उपेक्षात्मकतत्तत्स्मृतिव्यक्तिभेदकूटस्य कार्यतावच्छेदककोटौ निवेशाद्गौरवमिति भावः । इदमुपलक्षणम् । ज्ञानत्वेन कारणत्वे चरमस्मृत्यनन्तरमपि स्मृत्यन्तरापत्तिः । न च स्मृतिजनकस्य संस्कारस्य तत्र विनष्टत्वादेव न तदुत्पत्तिरिति वाच्यम् । करणस्य फलव्यापारौ प्रति समानरूपेण कारणत्वनियमभङ्गभयेन ज्ञानत्वेन स्मृतिहेतुत्वाङ्गीकारे तेनैव रूपेण संस्कारहेतुत्वस्याऽप्यङ्गीकरणीयत्वात् तत्र तयैव स्मृत्या संस्कारान्तरोत्पादनसम्भवात् । न च तत्तत्स्मृतिव्यक्तीनां संस्कारप्रतिबन्धकत्वकल्पनान्नैष दोषः, तथा च चरमस्मृतीनां संस्कारप्रतिबन्धकतया तदनन्तरं संस्कारस्यैव हेतुभूतस्य तत्राऽभावेन अग्रे स्मृतिवारणसम्भवादिति वाच्यम् । एवं सति अनुभवत्वेन हेतुताकल्पने तथाविधानन्तप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवाभावस्यैव विनिगमकस्य सम्भवेनाऽनुभवत्वेन हेतुतासिद्धेरिति विभावनीयम् । ॥ इति स्मृतिकारणनिरूपणम् ॥

इति श्रीरामरुद्रभट्टाचार्यारब्धायां राजेश्वरशास्त्रिप्रपूरितायां महामहोपाध्यायजटापाठयुपाह्वश्रीलक्ष्मणशास्त्रिसंशोधितायां मुक्तावलीप्रकाशतरङ्गिण्यां स्मृतिप्रक्रियाख्यः सप्तमस्तरङ्गः ।

मूले—इदानीमिति । आत्मनिरूपणानन्तरमित्यर्थः । क्रमप्राप्तमिति । विभागवाक्यघटकपदजन्योपस्थित्यव्यवहितोत्तरस्मृतिविषयत्वप्रकारकशिष्यज्ञानविषयमित्यर्थः । तथा चाऽऽत्मस्वरूपाज्ञाने शिष्याणां आत्मोपस्थित्यव्यवहितोत्तरस्मृतिविषयत्वप्रकारकज्ञानस्यैवाऽसम्भवात्प्रथमतः शिष्याणां आत्मस्वरूपज्ञानं विशदतया यथा भवेत्तथा निरूपणं कृतम्, इदानीं चाऽऽत्मस्वरूपज्ञानात्तत्स्मृत्यव्यवहितोत्तरस्मृतिविषयत्वप्रकारकज्ञानं तेषां सम्भवति, तज्ज्ञानजन्यजिज्ञासाधीनं मनोनिरूपणमिति भावः । एवं च

**अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहोच्यते(१) ॥ ८५ ॥**

**मनसि प्रमाणं दर्शितम्। तथाहि—सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वाच्चाक्षुषसाक्षात्कारवदित्यनुमानेन मनसः करणत्वसिद्धिः। न चैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यम्। लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया सिद्धेः। एवं सुखादीनामसमवायिकारणसंयोगाश्रयतया मनसः सिद्धिर्बोद्धव्या।**

**तत्र मनसोऽणुत्वे प्रमाणमाह-अयौगपद्यादिति। ज्ञानानां चाक्षुषरासना-**

**दिनकरी।**

जन्यसाक्षात्कारत्वादिति। ईश्वरीयसाक्षात्कारे व्यभिचारवारणाय। **जन्येति**। नन्वतिलाघवात्त्वगिन्द्रियस्य, प्राणस्य वा कारणत्वमस्त्वत आह। **एवमिति असमवायिकारणसंयोगाश्रयतयेति**। भावकार्यस्य सासमवायिकारणकत्वनियमादिति भावः।

इति मनसि प्रमाणकथनम् ॥

**रामरुद्री।**

क्रमप्राप्तेरुपोद्घातादिपञ्चकभिन्नसङ्गतिरूपे प्रसङ्ग एवाऽन्तर्भावः। **निरूपणं** च प्रतिपत्त्यनुकूलव्यापार इति ध्येयम्। **एतेनेति**। मनसः सुखादिसाक्षात्कारकरणत्वकथनेनेत्यर्थः। **प्रमाणं**—अनुमानरूपमित्यर्थः। मनसोऽतीन्द्रियत्वेन प्रत्यक्षायोग्यत्वात्तस्य प्रत्यक्षेण सिद्ध्यसम्भवान्न प्रत्यक्षं मानमत्रोपन्यस्तमिति भावः। **सुखसाक्षात्कार इतीति**। अत्र साक्षात्कारमात्रस्य पक्षत्वे सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यतायां चाक्षुषादिसाक्षात्कारे चक्षुरादिकरणकत्वसिद्ध्या सिद्धसाधनम्, अवच्छेदकावच्छेदेन तथात्वे तु ईश्वरप्रत्यक्षे बाध इति हृदि दोषं निधाय **'सुख'** इत्युक्तम्। तथा च सामानाधिकरण्येनैव साध्यसिद्धेरुद्देश्यत्वमिति न बाधः, ईश्वरसाक्षात्कारस्याऽतथात्वेऽपि जन्यसाक्षात्कारस्यैव तथात्वेन तत्र बाधासम्भवात्, कुत्राऽपि सुखसाक्षात्कारेऽनुमानात्प्राक् यत्किञ्चित्करणकत्वासिद्ध्या च न सिद्धसाधनमिति ध्येयम्। मूले—**सकरणक इति**। एतादृशानुमितौ च साधनतावच्छेदके करणे नित्यत्वं लाघवज्ञानसहकारेण, इतरविशेषबाधसहकारेण चाऽष्टद्रव्यातिरिक्तत्वं भासत इति ध्येयम्। **व्यभिचारवारणायेति**। तत्र साक्षात्कारत्वस्य सत्त्वेऽपि तस्य सकरणकत्वाभावादिति शेषः। **जन्येतीति**। तथा च तस्य नियत्वान्न व्यभिचार इति भावः। तत्रेतरविशेषबाधनिश्चयमेव द्रढयितुं प्रथमतस्त्वगिन्द्रियादीनां तथात्वमाशङ्क्य निराचष्टे—**अतिलाघवादिति**। क्लृप्तत्वगाद्यतिरिक्ताक्लृप्तमनःकल्पनमपेक्ष्येत्यर्थः। **त्वगिन्द्रियस्येति**। त्वङ्मनोयोगस्य ज्ञानसामान्यहेतुतामते त्वच एव मनोरूपत्वे स्वस्य स्वेन सह संयोगासम्भवादाह—**प्राणस्य वेति**। इदमप्यापातत एव, सुषुप्त्यवच्छेदेन ज्ञानोत्पत्त्यापत्तेस्तथाऽपि वज्रलेपत्वात्, तत्राऽपि प्राणात्मसंयोगस्य सत्त्वेन कारणाभावात्कार्यानुत्पत्तिनिर्वाहस्याऽत्र कल्पयितुमशक्यत्वात्, अतस्त्वक्प्राणाद्यतिरिक्तमेव मनोऽभ्युपेतव्यम्। यद्यपि मनःस्वीकर्तॄणामपि तेन सहाऽऽत्मनः संयोगस्य नियततया सुषुप्ति-काले ज्ञानोत्पादापत्तिरबाधितैव, तथाऽपि त्वङ्मनःसंयोगस्य ज्ञानहेतुत्वाङ्गीकारादस्मन्मते सुषुप्तिकाले च तदसम्भवान्निर्वाहः सम्भवति, मनसस्तदा पुरीतति प्रवेशेन त्वङ्मनोयोगाभावात्, इतरेषां तु प्राणस्य संयोगस्त्वचा सह सुषुप्तावपि वर्तत तत्र एवेति तत्र ज्ञानोत्पादापत्तिरिति त्वङ्मनोयोगस्य ज्ञानहेतुत्वं स्वीकृत्य सुषुप्तौ ज्ञानवारणं न तैः कर्तुं शक्यमतस्तन्मते एष दोषः स्थिर एवेति। तथा चेदमत्राऽनुमानं फलितम्—सुखादिप्रतीतिस्त्वगिन्द्रियप्राणाद्यतिरिक्तकरणिका, त्वगिन्द्रियाद्यन्वयव्यतिरेकाननुविधायित्वादिति विभावनीयम्। ॥ इति मनसि प्रमाणकथनम् ॥

---

(१) 'तस्याऽणुत्वमिहेष्यते', 'तस्याऽणुत्वमिहोच्यते' इति पाठद्वयम्।

दीनां, यौगपद्यमेककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम्। तत्र नानेन्द्रियाणां सत्यपि विषयसन्निधाने यत्सम्बन्धादेकेनेन्द्रियेण ज्ञानमुत्पद्यते यदसम्बन्धाच्च परैर्ज्ञानं नोत्पाद्यते तन्मनसो विभुत्वे चासन्निधानं न सम्भवतीति न विभु मनः। न च तदानीमदृष्टविशेषोद्बोधकविलम्बादेव तज्ज्ञानविलम्ब

दिनकरी।

विभुत्वे चेति। तदसन्निधानं मनसो विभुत्वे न सम्भवतीत्यर्थः।

रामरुद्री।

नन्वात्मकरणकत्वमादाय पूर्वोक्तानुमानेऽर्थान्तरम्। न चाऽऽत्मनः करणत्वे सुषुप्तिकालेऽपि ज्ञानोत्पादप्रसङ्ग इति किञ्चिदणु मनो ज्ञानकरणं स्वीकरणीयं, येन तस्य तदानीं पुरीतत्प्रवेशान्न ज्ञानाद्युत्पत्तिप्रसङ्ग इति वक्तुं शक्येतेति वाच्यम्। एवमपि निदाघे जलनिमग्नस्य जनस्य सर्वाङ्गीणशैत्यानुभवस्याऽनुभवसिद्धतया तत्करणस्य मनसोऽविभुनोऽपि मध्यमपरिमाणस्यैवाऽऽवश्यकतया तस्याऽणुत्वासिद्धेः, सुषुप्तौ विषयानवभासोपपादनं च दृष्टकारणविरहेऽपि कालविशेषस्य अदृष्टविशेषस्य वा ज्ञानादिप्रतिबन्धकत्वकल्पनया करणीयमित्यत आह मूले—**तत्रेत्यादि**। मनोनिरूपण इत्यर्थः। घटकत्वं सप्तम्यर्थः। अन्वयश्चाऽस्य **'प्रमाणम्'** इत्यनेन। तस्य च निरूपणघटकत्वं निरूपणस्य लक्षणप्रमाणस्वरूपादिप्रतिपत्त्यनुकूलव्यापारत्वादुपपन्नम्। **'मनसः'**इत्यत्र च निष्ठत्वं षष्ठ्यर्थः, अन्वयश्चाऽस्याणुत्वपदार्थे बोध्यः। **'अणुत्वे'**इत्यत्र च सप्तम्यर्थो विषयत्वम्। अन्वयोऽस्य **'प्रमाण'**पदार्थतावच्छेदके प्रमायां बोध्यः। तथा च मनोनिरूपणघटकमनोनिष्ठाणुत्वविषयकप्रमाकरणप्रतिपत्त्यनुकूलव्यापारवानिति वाक्यार्थः। मनोऽणुत्वविषयकज्ञाने प्रमात्वप्रयोजकं करणमाहेति तु परमार्थ इति ध्येयम्। तेन निरूपणात् पूर्वं मनोऽणुत्वविषयकज्ञाने प्रमात्वप्रतिपत्त्यसम्भवेन निरुक्तवाक्याच्छाब्दबोधासम्भवेऽपि न क्षतिः। तथा च मनोऽणुत्वज्ञानं प्रमा न वेति प्रथमा विप्रतिपत्तिः, तदङ्गतया च मनोऽणु न वेतीति। तत्र विधिकोटिर्नैयायिकानां, निषेधकोटिर्मीमांसकादीनामिति मन्तव्यम्। कारिकास्थस्य **'ज्ञानानां'**इति पदस्य ज्ञानमात्रार्थकत्वे मानसादिज्ञानद्वयस्याऽयौगपद्यं सन्दिग्धं, मनसो विभुत्ववादिभिस्तत्स्वीकारसम्भवादतस्तदयौगपद्यहेतुनाऽणुत्वसिद्ध्यनुपपत्तिरित्यतस्तदर्थमाह। **चाक्षुषेति**। परस्परमिति शेषः। **'आदि'**पदात् स्पार्शनादिपरिग्रहः। **'यौगपद्य'** पदार्थं निर्वक्ति। **एककालेत्यादि**। स्वाधिकरणक्षणध्वंसानधिकरणस्वाधिकरणक्षणसम्बन्ध इत्यर्थः। **अनुभवसिद्धमिति**। नृत्यादिस्थले चाक्षुषमात्रस्य, गीते श्रावणमात्रस्य, मृदुशय्यादौ च स्पार्शनमात्रस्य, अत्युत्कटसुरभिगन्ध—तथाविधमधुरादौ च क्रमेण घ्राणजरासनयोः, कामातुरस्य कामिनीपरिभावनादिस्थले मानसकामिनीमात्रप्रत्यक्षस्यैवोत्पत्तेर्दृष्टत्वादिति भावः। **तत्र**—तादृशस्थले इत्यर्थः। **नानेन्द्रियाणामिति**। तत्तत्पुरुषीयनानेन्द्रियाणामित्यर्थः। तेन पुरुषान्तरीयेन्द्रियमादाय न दोषः। **विषयसन्निधान इति**। विषयसन्निकर्ष इत्यर्थः। मनःसंयोगेतरयावत्कारणसामग्र्या उपलक्षणमेतत्। तेन कामिनीजिज्ञासादिस्थले मनःसंयोगादितरज्ञानाभावेऽपि न क्षतिः। तत्र मनःसंयोगातिरिक्तसामग्र्या एवाऽसत्वात्, कामिनीजिज्ञासायाः कामिनीज्ञानान्यज्ञानत्वावच्छिन्नं प्रति स्वातन्त्र्येण प्रतिबन्धकत्वेन प्रतिबन्धकाभावविधया तदभावस्यैव सामग्रीघटकस्य तत्राऽभावादिति मन्तव्यम्। **यत्सम्बन्धादिति**। यत्संयोगादित्यर्थः। **तन्मन इति**। तदेव मन इत्यर्थः। मनःस्वरूपमेतादृशमिति यावत्। **विभुत्वे चेति**। मनस इति शेषः। अत्र क्वचित् पुस्तके **'तत्र नानेन्द्रियाणां सत्यपि विषयसन्निधाने यत्सम्बन्धादेकेन्द्रियेण ज्ञानं जन्यते, यदसम्बन्धाच्च परैर्ज्ञानं नोत्पाद्यते, तन्मनसो विभुत्वे च'** इति पाठः, स च क्लिष्टत्वादनादरणीयः। **न सम्भवतीति**। सर्वमूर्तसंयोगवत्त्वस्यैव विभुत्वपदार्थत्वादिति भावः। अत्रेदमनुमानशरीरम्—तत्तदिन्द्रियजन्यज्ञानाश्रयः कालः स्वपूर्वक्षणावच्छेदेन तत्तदिन्द्रियाश्रयशरीरवृत्तितत्तदितरेन्द्रियासंयुक्तमनस्कः, तत्तदिन्द्रियविशिष्टेन्द्रियजन्यज्ञानानाश्रयत्वात्, तत्तदिन्द्रियाश्रयशरीरावच्छिन्नात्मसुषुप्तिक्षणवदिति।

इति वाच्यम्। तथा सति चक्षुरादीनामपि-अकल्पनापत्तेः। न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजाञ्च कथमेकदा नानेन्द्रियजन्यज्ञानमिति वाच्यम्। मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः। उत्पलशतपत्रभेदादाविव यौगपद्यप्रत्ययस्य भ्रान्तत्वात्। न च मनसः सङ्को-

## दिनकरी।

**तथा सतीति**। दृष्टसामग्रीसत्त्वेऽप्यदृष्टविलम्बात्कार्यविलम्बाङ्गीकार इत्यर्थः। **चक्षुरादीनामपिति**। चाक्षुषतद्विरहयोरदृष्टतद्विरहाभ्यामुपपत्तेरिति भावः। **भ्रान्तत्वादिति**। अव्य

## रामरुद्री।

हेतुतावच्छेदके वैशिष्ट्यं स्वेतरत्व-स्वसामानाधिकरण्योभयसम्बन्धेन। तथा चोक्तानुमानेन तत्तदिन्द्रियजन्यज्ञानाश्रयकालपूर्वकालत्वावच्छेदेन तत्तदितरेन्द्रियसंयुक्तत्वाभावस्य मनसि सिद्धौ तेनैव हेतुना मनः पक्षीकृत्य तत्र विभुत्वाभावः साधनीयः। तथा चाऽनुमानम्—मनो न विभु, तत्तदितरेन्द्रियजन्यज्ञानकालपूर्वक्षणावच्छेदेन तत्तदिन्द्रियसमानाधिकरणतत्तदिन्द्रियभिन्नेन्द्रियासंयुक्तत्वात्, तद्वदिति। विभुत्वाभावे सिद्धे च मनोऽणु, विभुभिन्नत्वे सति नित्यपरिमाणाश्रयत्वात्, परमाणुवदित्यनुमानेन तस्याऽणुत्वं साध्यम्। नित्यपरिमाणाश्रयता च नित्यद्रव्यत्वेन साधनीयेति सर्वमनवद्यम्। नित्यत्व-द्रव्यत्वे तु लाघवज्ञानसहकारेण **'सुखसाक्षात्कारः सकरणकः-'**इत्यादिपूर्वोक्तानुमितावेव भासेते इति ध्येयम्। अत एव 'तदभावादणु मनः'इति वैशेषिकसूत्रेऽपि विभुत्वाभावेनाऽणुत्वं साधितमिति ध्येयम्। मूले मीमांसकः शङ्कते। **न चेति**। **तदानीमिति**। पूर्वोक्तताद्दृशकालावच्छेदेनेत्यर्थः **उद्बोधविलम्बादिति**। उद्बोधाभावादित्यर्थः। **तज्ज्ञानविलम्ब इति**। तज्ज्ञानाभाव इत्यर्थः। मूले **'चक्षुरादीनामप्यकल्पनापत्तेः'**इत्युक्तम्, तदयुक्तम्, चाक्षुष-तद्विरहनियमायैव तत्कल्पनादित्यतस्तद्ग्रन्थभावार्थमाह टीकायाम्-**चाक्षुषेत्यादिना**। यद्यपि चाक्षुष-तदभावादिव्यवस्थापकतयाऽदृष्टविशेषकल्पने चक्षुरादिकल्पने च विनिगमनाविरहः। न चाऽक्लृप्तयोस्तयोः कथं विनिगमनाविरह इति वाच्यम्। चाक्षुष-तद्विरहव्यवस्थापकतया सिद्धेऽपि कस्मिंश्चिदतीन्द्रिये वस्तुनि तैजसत्व-गुणत्वयोर्विनिगमनाविरहसम्भवात्, 'चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्'इत्यादिप्रागुक्तानुमानस्य तैजसत्वे विनिगमकत्वसम्भवाच्च, मनसि तु नैषा स्थितिः, तस्याऽतिरिक्तद्रव्यत्वे युक्तिविरहादिति वक्तुं शक्यत्वात्, तथाऽपि मनःस्थलेऽपि तस्य गुणत्वाङ्गीकारेऽदृष्टस्य जन्यत्वावश्यकतया तत्तदात्मभेदेनाऽनन्तादृष्टकल्पने गौरवम्, नित्यगुणत्वस्वीकारेऽपि तस्याऽऽत्मसमवेतत्वं तत्तत्काले उद्बोधश्च कल्पनीयः, अन्यथा सुषुप्तिकालेऽपि ज्ञानोत्पादापत्तेः, चाक्षुषरासनादेर्यौगपद्यापत्तेश्च, तस्याऽविशेषादिति गौरवम्। अस्माकं तु मनसो द्रव्यत्वेन तत्संयोग-तदभावाभ्यामेव ज्ञानोत्पादानुत्पादनिर्वाहादुद्बोधाकल्पनात्तस्याऽसमवेतत्वादपि लाघवमिति मनःसिद्धिर्निष्प्रत्यूहैवेति ध्येयम्। ननु द्विखिछिन्नगोधाभुजगादावेककालिकचलनानुपपत्तिः, खण्डत्रयेऽपि मनसोऽभावेन तदवच्छेदेन भुजगात्मनः प्रयत्नासम्भवात्, तत्रत्यक्रियायाश्च प्रयत्नं विनाऽनुपपन्नत्वात्। न च तत्र प्राणक्रिययैव कम्पः, नाऽऽत्मप्रयत्नात्, तज्जनकस्य मनसोऽभावादिति वाच्यम्। एवमपि दीर्घशष्कुलीभक्षणादौ-एककालिकचाक्षुषरासनाद्यनुत्पत्तिप्रसङ्गादित्यत आह मूले-**अतिलाघवादिति**। वेगप्रकर्षवत्त्वादित्यर्थः। **झटितीति**। अविलम्बेनेत्यर्थः। तथा च तत्रत्यप्रत्ययेषु एककालिकत्वप्रत्ययो भ्रान्तिरिति भावः। ननु प्रतीतेर्भ्रान्तित्वं दोषजन्यत्वप्रयोज्यमिति दीर्घशष्कुलीभक्षणादिस्थलीयैककालिकत्वप्रत्ययानां भ्रान्तित्वं तदैव सिद्ध्येद्यदि तस्य दोषजन्यत्वं सिद्ध्येत्, तदेव तु न सिद्ध्यति, तज्जनकदोषानिरूपणादित्याशङ्कयाऽऽह टीकायाम्-**अव्यवहितकालोत्पत्तिकत्वस्येति**। इत्थञ्चाऽस्य दोषत्वमुपपादयितुमेव मूले-**'उत्पलशतपत्रभेदादाविव-'** इति दृष्टान्तः प्रदर्शित इति ध्येयम्। साङ्ख्यः शङ्कते मूले- **न चेत्यादिना**। टीकायां-

चविकासशालित्वादुभयोपपत्तिरस्त्विति वाच्यम् । नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः कल्पनादिति

दिनकरी ।

वहितकालोत्पत्तिकत्वस्य दोषत्वादिति भावः । उभयोपपत्तिरिति । सङ्कोचे एकेन्द्रियमात्रसम्बन्धादेकमेव ज्ञानं, विकासे तु–नानेन्द्रियैर्मनसः सम्बन्धाद्युगपन्नानाज्ञानानामुपपत्तिरिति भावः ।

यद्यपि नानेन्द्रियैर्मनःसन्निकर्षकाले चाक्षुषाद्युत्पत्तिकाले रासनाद्यनुत्पादस्य रासनादिकं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वेनैवोपपत्तेर्मनसो विभुत्वेऽपि बाधकाभावः, तथाऽपि तथा प्रतिबन्धकत्वे गौरवमित्यभिप्रायः । न च त्वङ्मनोयोगस्य ज्ञानमात्रहेतुत्वाचाक्षुषसामग्रीकाले स्पार्शनसामग्र्या नियमतः सत्त्वात् स्पार्शनापत्तिर्मनसोऽणुत्वपक्षेऽपि दुर्वारैवेति वाच्यम् । अनन्यगत्या स्पार्शनं प्रति चाक्षुषादिसामग्र्याः प्रतिबन्धकत्वस्वीकारात्, एवमपि रासनादिप्रत्यक्षे चाक्षुषादिसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवस्याऽणुत्वपक्षे निष्प्रत्यूहत्वात् । यद्वा ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगस्याऽहेतुत्वमित्यभिप्रायः । अत एव 'यदसम्बन्धाच परैर्ज्ञानं नोत्पाद्यते–' इत्युक्तं प्राक् । यथा च त्वङ्मनो-

रामरुद्री ।

सङ्कोच इति । अल्पपरिमाणतापत्तावित्यर्थः । विकासे त्विति । महत्परिमाणतापत्तावित्यर्थः । मूले–गौरवादिति । परिमाणतारतम्यस्याऽवयवतारतम्यं विनाऽसम्भवादिति शेषः ।

उपपत्तेरिति । रसनादिभिः सह मनःसंयोगसत्त्वेऽपि चक्षुर्विषयसंयोगादिचाक्षुषसामग्रीकाले रासनानुत्पादस्य सर्वानुभवसिद्धत्वात्, यदा तु चक्षुषो विषयासन्निकर्षस्तदा तत्र रसनादिसन्निकर्षाद्रासनादिकं जायत एवेति भावः । एवमपि रासनघ्राणजयोरेककालिकोत्पत्तिर्दुर्वारैव । न च रासनसामग्र्याः घ्राणजं प्रति घ्राणजसामग्र्या वा रासनं प्रति प्रतिबन्धकत्वाङ्गीकारान्नैष दोष इति वाच्यम् । आद्ये मुखवर्तिलालादिद्रव्यगतरससन्निकर्षस्य सार्वदिकत्वेन घ्राणजप्रत्यक्षस्यैवाऽसम्भवात्, द्वितीये च घ्राणगतसिङ्घाणादिमलवृत्तिगन्धसन्निकर्षस्य घ्राणे सार्वदिकत्वेन रासनानुत्पत्त्यापत्तेस्तुल्यत्वात्, तस्मान्मनोऽङ्गीकरणीयमेव, तदङ्गीकारे च तत्सम्बन्धस्याऽसार्वदिकत्वेन न तत्तत्प्रत्यक्षापत्तिरिति मादृशामपरः पन्थाः । गौरवमितीति । मनःस्वीकर्तृभिस्तथा प्रतिबन्धकत्वस्याऽनङ्गीकरणीयत्वात्तदपेक्षयैतन्मते गौरवादिति भावः । ननु मनोऽङ्गीकारेऽपि चाक्षुषसामग्रीकाले स्पार्शनसामग्र्या नियतत्वात्तदुत्पत्त्यापत्त्या चाक्षुषसामग्र्यास्तत्प्रतिबन्धकत्वं कल्पनीयमिति त्वन्मतेऽपि गौरवं तदवस्थमेवेति शङ्कते–न चेत्यादिना । एवमपि रासनादिप्रत्यक्ष इति । इदं च स्पार्शनत्व-रासनत्वादिना चाक्षुषसामग्रीप्रतिबध्यत्वमभिप्रेत्योक्तम् । न चाक्षुषसामग्र्याः चाक्षुषेतरज्ञानत्वावच्छिन्नं प्रति प्रतिबन्धकत्वाङ्गीकारेणैव चाक्षुषसामग्रीकाले स्पार्शनरासनाद्यनुत्पादनिर्वाहादिदमसङ्गतमिति वाच्यम् । एवं सति रासनसामग्रीदशायां स्पार्शनाद्यनुत्पादनिर्वाहाय तत्तत्सामग्र्या अपि रासनेतरप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकत्वस्य वक्तव्यतया रासनसामग्रीकाले चाक्षुषस्याऽप्यनुत्पादप्रसङ्गात् । न च रासनादिसामग्र्याश्चाक्षुषातिरिक्तरासनादिभिन्नप्रत्यक्षत्वावच्छिन्नं प्रत्येव प्रतिबन्धकत्वं वक्तव्यम्, चाक्षुषसामग्र्यास्तु चाक्षुषेतरप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकत्वं स्वीकरणीयमिति नैष दोष इति वाच्यम् । एवमपि चाक्षुषादिसामग्रीकाले रासनादीच्छासत्त्वे रासनाद्युत्पादनिर्वाहाय तत्तदिच्छानामुत्तेजकत्वस्याऽऽवश्यकतया तत्तदिच्छाविरहविशिष्टचाक्षुषादिसामग्र्या एव चाक्षुषेतरप्रत्यक्षे प्रतिबन्धकत्वेऽपि चाक्षुषसामग्रीकाले रासनं जायतामितीच्छाकाले रासनस्येव स्पार्शनादेरपि उत्पत्त्यापत्तेश्चाक्षुषादिसामग्र्याश्चाक्षुषेतरत्वाद्यवच्छिन्नं प्रति प्रतिबन्धकत्वं परित्यज्य रासनत्वादितत्तद्धर्मावच्छिन्नं प्रत्येव तत्तदिच्छाविरहवि-

दिनकरी।

योगस्य ज्ञानसामान्यं प्रत्यजनकत्वेऽपि सुषुप्तौ ज्ञानानुत्पादनिर्वाहः, तथोपपादितमधस्तात्।

एवं मनसो विभुत्वे आत्ममनःसंयोगानुपपत्तिः, आत्ममनसोः कर्माभावेन कर्मजन्य-संयोगस्य विभुत्ववादिमतेऽसम्भवात्।

यदपि भौतिका एव परमाणवो मनांसि, अनन्तधर्मिणामतिरिक्तायाश्च जातेः कल्पनामपेक्ष्य क्लृप्तानामेव धर्मिणां तद्रूपेण हेतुत्वस्य युक्तत्वात्, नियमस्त्वदृष्टोपग्रहादिति नव्यैरुक्तं, तदपि न। यत्संयोगव्यतिरेकात् सुषुप्तिकाले कार्यानुत्पादः, तस्य मनसोऽवश्य-मङ्गीकरणीयत्वात्। न च कालविशेषस्य प्रतिबन्धकत्वादेव सुषुप्तिकाले कार्यानुत्पाद इति वाच्यम्। अनन्तानां कालविशेषाणां प्रतिबन्धकत्वे गौरवात्। न चोदासीनमनःसंयोगस्य सुषुप्तिप्राक्काले सत्त्वादापत्तिस्तदवस्थैवेत्यदृष्टविशेषाकृष्टं मन एव ज्ञानादिहेतुत्वेन वक्तव्यं, तदपेक्षया चाऽदृष्टविशेषाकृष्टभौतिकपरमाणूनामेव तद्धेतुत्वमुचितमिति वाच्यम्। तस्य

रामरुद्री।

शिष्टतत्तत्सामग्र्याः प्रतिबन्धकत्वावश्यकतया गौरवस्य दुर्वारत्वादिति ध्येयम्। इत्युक्तं **प्रागिति**। अन्यथा त्वङ्मनोयोगतोऽपि ज्ञानोत्पादात् **'परैर्ज्ञानं नोत्पाद्यते'** इति कथनमयुक्तं स्यादिति। भावः। एतच्च यथाश्रुतमूलस्वारस्यावगतिनिबन्धनं, अन्यथा **यदलम्बन्धात्'**–इतिपञ्चम्यन्तरस्य प्रयोजकत्वमर्थं स्वीकृत्य मनोऽसम्बन्धात्परैर्ज्ञानं नोत्पाद्यते इत्यर्थकरणे बाधकाभावात्। मनःसंयोगविरहदशायां त्वङ्मनः संयोगतोऽपि ज्ञानोत्पादस्य सिद्धान्तेऽनभिमतत्वादिति द्रष्टव्यम्। **अधस्तादिति**। **'द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम्**—(का० ५५)' इतिकारिकाव्याख्यानावसर इत्यर्थः।

**संयोगानुपपत्तिरिति**। क्रियाजन्यतावच्छेदकतया सिद्धायाः संयोगत्वजातेरजन्यवृत्तित्वासम्भवादिति भावः। इदमुपलक्षणम्। मनसो विभुत्वे तत्संयोगस्याऽपि नित्यत्वेन सार्वदिकतया सुषुप्तावपि विषयावभासप्रसङ्ग इत्यपि दूषणं बोध्यम्। न च त्वङ्मनःसंयोगाभावान्नैवमिति वाच्यम्। मनसो विभुत्वेन तत्कालेऽपि तत्सम्भवादिति।

नव्यमतमाह। **भौतिका इति**। भूताभिन्ना इत्यर्थः। **युक्तत्वादिति**। लाघवज्ञानविषयत्वादित्यर्थः। **अदृष्टोपग्रहादिति**। अदृष्टबलादित्यर्थः। **अवश्यमङ्गीकरणीयत्वादिति**। अन्यथा भौतिकपरमाणूनामेव तथात्वे तन्मनः पृथिवी जलं वेत्यत्र विनिगमनाविरहेण पञ्चविधानामपि परमाणूनां मनःस्वरूपत्वावश्यकतया तेषाञ्च कदाचित्परस्परं विप्रकृष्टानां रसनाचक्षुरादिनानेन्द्रियसन्निकर्षसम्भवेन पुनश्चाक्षुषकाले रासनाद्युत्पादप्रसङ्गादिति मनोऽतिरिक्तताया अवश्याङ्गीकरणीयत्वादिति भावः। एवञ्च न नानेन्द्रियसन्निकर्ष इति न ज्ञानद्वयापत्तिरिति ध्येयम। **अनन्तानां कालविशेषाणामित्यादि**। इदमत्राऽवधेयम्। कालविशेषाणां प्रतिबन्धकत्ववादिभिः क्लृप्ताः कालविशेषाः प्रतिबन्धका इत्युच्यन्ते, अक्लृप्ता वा? आद्ये कालविशेषाणां तत्तत्कालोपाधिरूपत्वेन विनिगमकाभावादनन्तकालोपाधीनां प्रतिबन्धकत्वकल्पनया नव्यानामेव गौरवम्। यद्यक्लृप्तास्तर्हि अक्लृप्तमनःकल्पनैव लघीयसी, कल्पनाया उभयमते तुल्यत्वात्, भवद्भिर्भौतिकपरमाणूनां ज्ञानजनकत्वकल्पनेन महागौरवांच्चेति। इतोऽपि नव्यमतमनुपपन्नं, ये किल परमाणवो मनःशब्देनाऽभिधीयन्ते तत्र निरर्थकपृथिवीत्वादिजातिकल्पनायाः रूपरसादिकल्पनायाश्च तैरेव करणीयत्वात्' न हि किञ्चिदपि तादृशं प्रमाणं पश्यामो यन्मनसःरूपादि साधयेत्, अस्मन्मते तु तत्र रूपाद्यकल्पनेन महालाघवम्। न हि तेऽपि परमाणवः क्लृप्ता ये मनांसीत्युच्यन्ते, अनादिकालमारभ्य प्रत्यात्मनियतानां तत्तन्मनसां तैरपि कल्पनीयतया तेषामनादिकालमारभ्य तत्तदात्मनियतत्वासम्भवात्, तस्मात्कल्पनीयेषु मनस्त्वमनुपपन्नमेव, तादृशकारणतानिर्वाहाय मनःसंयोगव्यक्तिषु वैजात्यकल्पनस्याऽऽवश्यकतया तादृशवैजात्यावच्छिन्नमनःसंयोगाभावादेव तदानीं ज्ञानानुदयनिर्वाहादित्यवधेयम्। **तदपेक्षया चेत्यादि**। इदमप्यनुपपन्नमेव।

अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः।

सङ्क्षेपः॥ ८५॥ इति मनोनिरूपणम्॥

इति सिद्धान्तमुक्तावल्यां द्रव्यपदार्थव्याख्या समाप्ता॥

## अथ गुणनिरूपणम्।

द्रव्यं निरूप्य गुणान्निरूपयति—अथेत्यादिना। गुणत्वजातौ किं मानमिति चेत्, द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् निरवच्छिन्नकारणताया असम्भवात्। नहि रूप-

दिनकरी।

भौतिकत्वे पृथिवीत्वं जलत्वादिकं वेत्यत्र विनिगमकाभावात्। उभयकल्पने च जातिसाङ्कर्यम्, तदेतदभिप्रेत्योक्तं-सङ्क्षेप इति॥ ८५॥ इति मनसोऽणुत्वकथनम्॥

॥ इति द्रव्यपदार्थव्याख्यानम्॥

इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रवालकृष्णभट्टात्मजमहादेवभट्टारब्धे तत्पुत्रदिनकरभट्टप्रपूरिते मुक्तावलीप्रकाशे मनोनिरूपणाख्योऽष्टमः परिच्छेदः।

अवसरसङ्गतिमभिप्रेत्याह। द्रव्यं निरूप्येति। तस्मिन्निरूपिते प्रतिबन्धकीभूतजिज्ञासानिवृत्तेरिति भावः। 'इति चेदिदम्' इत्यपि पाठः। ननु रूपत्वस्य सत्ताया वा गुणनिष्ठकारणतावच्छेदकत्वं स्यादित्याशङ्क्याऽऽह। न हीति। 'रूपत्वादिकं' इत्यादिना रस-

रामरुद्री।

युक्तिस्तुप्रागभिहिता। जातिसाङ्कर्यमिति। वस्तुतस्तु सुषुप्तिकाले पुरीततिमनःसंयोगस्य ज्ञानप्रतिबन्धकत्वकल्पनेन त्वङ्मनःसंयोगस्य चर्ममनःसंयोगस्य वा ज्ञानकारणत्वकल्पनेनैव वा सुषुप्तिकाले ज्ञानानुत्पादनिर्वाहान्नैष दोषे नव्यैरुद्भावयितुं शक्यः। न चैवंविधायाः कल्पनाया नवीनमतेऽपि सम्भव इति वाच्यम्। जाग्रदवस्थायामपि कैश्चित्परमाणुभिः पुरीतता सह संयोगात् तदानीमपि। ज्ञानानुत्पादापत्तेः, सुषुप्तावपि ज्ञानोत्पादापत्तेश्च, तन्मतानुसारेण त्वङ्मनःसंयोगस्य च सुषुप्तौ सत्त्वात्। न च विजातीयपरमाणूनामेव मनस्त्वमिति तादृशवैजात्यावच्छिन्नमनःसंयोगाभावादेव न सुषुप्तौ ज्ञानोत्पत्तिर्जाग्रद्दशायां ज्ञानप्रतिबन्धो वा, तदानीं तथाविधसंयोगानभ्युपगमादिति वाच्यम्॥ विजातीयपरमाणूनामेव मनस्त्वेन तत्र पार्थिवत्वादिकल्पने तवैव गौरवात्। न च कालविशेषस्यैव ज्ञानप्रतिबन्धकत्वकल्पनात् न सुषुप्तौ ज्ञानोत्पत्त्यापत्तिः, भवन्मते पुरीतन्मनसंयोगस्य ज्ञानप्रतिबन्धकत्ववदस्मन्मते तथा कल्पने गौरवाभावादिति वाच्यम्। एवमपि एकस्य सुषुप्तौ सर्वेषामेव सुषुप्त्यापत्तेः, प्रतिबन्धकीभूतकालस्याऽविशेषात्। तत्तदात्मसुषुप्तिं प्रति तत्तत्कालस्य हेतुत्वोपगमे च महागौरवमिति न भौतिकाः परमाणवो मन इति सिद्धमिति सर्वमवदातम्॥ ८५॥ ॥ इति मनोनिरूपणे मनसोऽणुत्वकथनम्॥

॥ इति श्रीरामरुद्रभट्टाचार्यारब्धायां राजेश्वरशास्त्रिप्रपूरितायां महामहोपाध्याय-जटापाठ्युपाह-श्रीलक्ष्मणशास्त्रिसंशोधितायां मुक्तावलीप्रकाशतरङ्गिण्यां मनोनिरूपणाख्योऽष्टमस्तरङ्गः॥

॥ इति द्रव्यपदार्थो व्याख्यातः॥

अवसरेति। निरूपिततत्त्वमेतत्। रूपत्वस्येति। अतीन्द्रियरूपादाविति। परमाणुगते इन्द्रियादिगतें

दिनकरी ।

त्वादिपरिग्रहः । यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणं, रूपादिषु संयुक्तसमवेतसमवायेन गुणत्वप्रत्यक्षसम्भवात्, तथाऽप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासम्भवेन तत्साधारण्यं गुणत्वस्य न घटत इत्यनुमानं प्रदर्शितम् । न च रूपत्वादिना साङ्कर्यभियाऽतीन्द्रियरूपादौ गुणत्वसिद्धिः, गुरुत्वादौ तु धर्मिग्राहकमानेन तत्सिद्धिरित्यनुमानप्रदर्शनं व्यर्थमिति वाच्यम् । रूपादावप्यापामरसाधारण-'गुणः'-इति प्रत्यक्षस्याऽप्रसिद्धेः ।

रामरुद्री ।

चेत्यर्थः । **न घटत इति** । न सिद्ध्यतीत्यर्थः । प्रत्यक्षे महत्त्वोद्भूतरूपयोः कारणत्वेन परमाण्विन्द्रियादौ तदभावान्न प्रत्यक्षसम्भव इति भावः । **साङ्कर्यभियेति** । रूपत्वं विहाय गुणत्वं रसादौ, गुणत्वं विहाय च रूपत्वं परमाण्वादिरूपे वर्तते, उभयोश्च प्रत्यक्षरूपे समावेश इति तत्प्रयुक्तसाङ्कर्यभियेत्यर्थः । तथा च गुणत्वं रूपत्वसमानाधिकरणात्यन्ताभावाप्रतियोगि, रूपत्वविशिष्टजातित्वात्, सत्त्वावदित्यनुमानेन गुणत्वे रूपत्वव्यापकत्वं प्रथमतः साधनीयम् । वैशिष्ट्यञ्च स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभयसम्बन्धेनेति । ततश्च गुणत्वमतीन्द्रियरूपवृत्ति, रूपत्वव्यापकत्वादित्यनुमानेन गुणत्वस्याऽतीन्द्रियरूपे सिद्धिरिति ध्येयम् । ननु जातिसाङ्कर्यादिभयेनाऽतीन्द्रियैन्द्रियकसाधारणजातीयगुणेषु गुणत्वजातिसिद्धावपि अतीन्द्रियमात्रजातीये गुरुत्वादौ कथं तत्सिद्धिरित्यत आह । **गुरुत्वादाविति** । 'आदि'पदात् धर्माधर्मपरिग्रहः । **धर्मिग्राहकमानेनेति** । अतीन्द्रियत्वसहकृतेनेति शेषः । इदमत्र तत्त्वम् । गुरुत्वस्य हि आद्यपतनासमवायिकारणत्वेनैव सिद्धिः । तथा च गुरुत्वं गुणः, द्रव्यकर्मभिन्नसामान्यवत्त्वात्, रूपवदित्यनुमानेन गुरुत्वे गुणत्वं प्रसाधनीयम् । द्रव्यकर्मभिन्नत्वं तु अतीन्द्रियत्वसहकृतासमवायिकारणत्वेनेति भावः । अतीन्द्रियत्वं च विषयतासम्बन्धावच्छिन्नप्रत्यक्षत्वावच्छिन्नप्रतिवध्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतिबन्धकतावत्त्वम् । नाऽतः परमाणुकर्मणि व्यभिचारः । गुरुत्वादिप्रत्यक्षवारणाय चैतादृशप्रतिवध्यप्रतिबन्धकभावः स्वीकरणीय इति भावः । धर्माधर्मयोस्तु विभुवृत्तित्वविशिष्टातीन्द्रियत्वेन द्रव्यकर्मभिन्नत्वं साधनीयमिति विभावनीयम् । **अप्रसिद्धेरिति** । रूपादिषु पामराणां गुणत्वव्यवहाराभावादिति भावः ।

अत्र केचित्—पामराणां गुणत्वप्रत्ययाभावेऽपि न तावता गुणत्वं नाऽस्तीति वक्तुं शक्यम् । रत्नपरीक्षाशास्त्राभ्याससहकृतेनेन्द्रियेण रत्ने रत्नत्वग्रहणवत्, वंशपरम्परया ब्राह्मणत्वग्राहकोपदेशसहकृतेन ब्राह्मणे ब्राह्मणत्वादिग्रहणवच्च शास्त्रकारोपदेशसहकृतेन तेनैव चक्षुषा गुणत्वग्रहणात् । न हि दृष्टिपातमात्रेण रत्नत्वं काचादिविलक्षणमविदितरत्नपरीक्षाशास्त्रेण ज्ञातुं शक्यम्, ब्राह्मणत्वादिकमेव वा क्षत्रियादिविलक्षणं ज्ञातुं शक्यम्, चाकचक्यादेरुपवीतादिधारणस्य चोभयत्र तुल्यत्वात्, तदेवं गुणेऽपि द्रव्यकर्मविलक्षणं गुणत्वमश्रुतशास्त्रेण न ज्ञातुं शक्यम्, द्रव्याद्याश्रितत्वस्य तुल्यत्वात् । इत्थं च कथं पामराणां गुणत्वग्रहणसम्भवः ? द्रव्याश्रितत्वादेर्दोषस्य प्रतिबन्धकत्वात्, पण्डितानां तु भवत्येवेति न गुणत्वासिद्धिः । यदि हि दुष्टेनेन्द्रियेण न गृह्यत इति वस्तु सदपि नाऽस्तीत्युच्यते, तथासति दूरत्वादिदोषेण घटाग्रहेऽपि घटाद्यभावसिद्ध्यापत्तिः । टीकायां तु तत्प्रत्यक्षं द्रव्यकर्मभिन्नसामान्यवत्त्वरूपोपाधिनैव सम्भवतीत्याशयेनैव गुणत्वप्रत्यक्षासम्भव उक्तः । एतादृशोपाधेस्तादृशप्रतीतिविषयतावच्छेदकत्वकल्पने गौरवात्, द्रव्याद्यज्ञानेऽपि गुणत्वग्रहणाच्च गुणत्वमतिरिक्तमेवेति तु वयम् । यद्यपि द्रव्यकर्मभेदस्य तादृशभेदत्वेन ग्रहण एव प्रतियोगिग्रहणस्याऽपेक्षा, गुणत्वत्वेन ग्रहणे तु नेति कुतो गौरवमित्युच्यते, तथाऽपि गुणत्वत्वं नाम किञ्चिद्वस्तु भवद्भिः कल्पनीयमेवेति तदपेक्षया गुण एव गुणत्वरूपधर्मकल्पने लाघवम् । न च भेदनिष्ठं गुणत्वत्वं तद्गतं तद्व्यक्तित्वमेवेति वाच्यम् । तथा सति सामान्यादावपि गुण इतिप्रत्ययप्रसङ्गात्, तत्र द्रव्यकर्मभेदस्य सत्त्वात् । न च द्रव्यकर्मभेदसामान्योभयपर्याप्तं गुणत्वत्वमतिरिक्तमेवेति चेत्तत्रैव पर्याप्त्यादिकल्पनप्रयुक्तं गौरवम् । न च तद्गतमुभयत्वमेव तदिति वाच्यम् । भेदसामान्यादिगतस्योभयत्वस्य धीविशेषविषयत्वरूपत्वेन धीभेदेन भिन्नतयाऽनन्तो-

त्वादिकं सत्ता वा तत्रावच्छेदिका, न्यूनाधिकदेशवृत्तित्वात्, अतश्चतुर्विंश-

दिनकरी ।

इदमत्र बोध्यम् । सकलगुणसाधारणी एका कारणता नाऽस्त्येवेति कथं तदवच्छेदकतया गुणत्वजातिसिद्धिः ? न च चतुर्विंशतिगुणेषु प्रत्येकं याः कारणतास्तासामेव पक्षतया तादृशसकलकारणतावच्छेदकतया गुणत्वजातिसिद्धिरिति वाच्यम् । तथा सति द्रव्यकर्मरूपभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्नेत्यनुमानेन रूपभिन्नत्रयोविंशतिगुणसाधारणवैजात्यस्याऽपि सिद्धिप्रसङ्गात्, परिमाण्डल्यस्य काऽप्यकारणतया गुणत्व-

रामरुद्री ।

भयत्वानां विनिगमनाविरहेण तथात्वकल्पनाया गुरुत्वापादकत्वात्, एतादृशोभयत्वाग्रहेऽपि गुणत्वत्वप्रतीतेश्च । न च द्रव्यकर्मभेदविशिष्टं सामान्यमेव गुणत्वमिति न कश्चिद्दोषः, भेदस्य च तद्व्यक्तित्वेनैव प्रकारत्वमिति न गुणत्वग्रहणे द्रव्यादिज्ञानमपेक्षितम्, तद्व्यक्तित्वं च तादात्म्येन सैव व्यक्तिः, तस्याश्च स्वरूपतोभानमङ्गीक्रियत इति वाच्यम् । सामान्यविशिष्टतादृशभेदस्तादृशभेदविशिष्टसामान्यं वा गुणत्वमित्यत्र विनिगमनाविरहेण द्वयोस्तथात्वाङ्गीकारे महागौरवापत्त्याऽतिरिक्तगुणत्वकल्पनाया एव लघीयस्त्वादित्याहुः ।

तन्न । रत्नादिषु रत्नत्वादेरुपदेशासहकारेऽपि ग्रहणात् । न च तदुपदेशाभावे पद्मरागादिषु पद्मरागादिबुद्धिः कुतो न जायते इति वाच्यम् । इतररत्नविलक्षणाया जातेः पद्मरागादौ ग्रहणेऽपि तत्र पद्मरागादिपदवाच्यत्वस्यैवाऽप्रतीत्या पद्मरागादिव्यवहाराभावसम्भवात् । अयं मणिः पद्मरागपदवाच्य इत्याद्युपदेशे हि तत्तत्पदवाच्यत्वमेव प्रतीतं, न तु जातिरिति भवतामपि कथमुपदेशेन तद्ग्रहणसम्भवः? न चैवं ब्राह्मणत्वादिकमप्यापातत एव कुतो न ज्ञायत इति वाच्यम् । ब्राह्मणत्वादेरतीन्द्रियत्वेन तद्ग्रहणस्य कदाऽप्यसम्भवात् । न च तदुपदेशानन्तरं कथं तद्ग्रहणमिति वाच्यम् । उपदेशानन्तरं तत्प्रत्यक्षस्य तद्विषये उपनीतभानात्मकस्यैव स्वीकारात् । एवं च तुल्ययुक्त्या गुणत्वस्याऽपि प्रत्यक्षमेव नाऽस्तीति न तत्सिद्धिस्तेनेति विभावनीयम् ।

यत्तु गुणपदशक्यतावच्छेदकतया गुणत्वजातिसिद्धिरिति कश्चिदाह । तत्तुच्छम् । शक्यतावच्छेदकतया जातिसाधनस्य प्रागेव दूषितत्वादिति विभावनीयम् ।

एतेन पाकेन रूपादेर्नाशदशायां नीरूपपरमाणौ क्रियानुत्पादात् क्रियाजनकतावच्छेदकतया गुणत्वजातिसिद्धिरित्युक्तिः परास्ता । पाकेन रूपादिनाशकाले सङ्ख्यादिसत्त्वात् गुणत्वावच्छिन्नाभावाभावेन क्रियोत्पत्त्यापत्तेर्वज्रलेपतया तादृशजाते रूपरसगन्धस्पर्शादिगततत्तद्वैजात्यरूपताया एवाऽङ्गीकारसम्भवेऽपि चतुर्विंशत्यनुगतजात्यसिद्धेर्जागरूकत्वात् ।

**प्रसङ्गादिति** । इदमत्राऽवधेयम्—पूर्वपक्षिमते हि रूपादिनिष्ठकारणताः पक्षीकृत्य किञ्चिद्धर्मावच्छिन्नत्वं साधनीयम्, तत्तु न सम्भवत्येव, तादृशकारणतानां रूपत्वाद्यवच्छिन्नत्वस्योभयवादिसिद्धतया तत्साधने सिद्धसाधनात् । न च तादृशकारणतात्वावच्छेदेन यत्किञ्चिद्धर्मावच्छिन्नत्वं साधनीयम्, रूपत्वादे रूपादिनिष्ठतत्तत्कारणतावच्छेदकत्वेऽपि कारणतासामान्यानवच्छेदकत्वादेव सिद्धसाधनविरहादिति वाच्यम् । तथा सति बाधप्रसक्तेः । तादृशकारणतानां रूपत्वाद्यवच्छिन्नतया चतुर्विंशत्यनुगतविलक्षणधर्मावच्छिन्नत्वासम्भवात्, गुणत्वस्य तत्तत्कारणतातिरिक्तवृत्तित्वादवच्छेदकत्वासम्भवाच्च । यदि च रूपत्वाद्यनवच्छिन्नचतुर्विंशत्यनुगतकारणता पक्षीकर्तव्येत्युच्यते, तदा तादृशकारणत्वस्यैवाऽभाव इति पक्षाप्रसिद्धिरिति प्राक्तनशङ्का असमाहितैव । टीकायां तु प्रौढ्यैव परोक्तमङ्गीकृत्य परमते त्रयोविंशतिसाधारणजातिसिद्धिप्रसञ्जनमिति ध्येयम् । चतुर्विंशतिसाधारणकारणतासाधकप्रमाणाभाव एव पूर्वमुक्तः इदानीं बाधकप्रमाणमपि दर्शयति । **परिमाण्डल्यस्येत्यादिना** ।

अत्र ब्रूमः । प्रलयाद्यवच्छिन्नगगनदिक्कालेषु मुक्तेषु जीवेषु भगवति च क्रियाऽजन्यजन्यद्रव्यकर्म-

रामरुद्री।

भिन्नसत्तावन्तो नोत्पद्यन्त इत्यनुभवसिद्धम्। तदनुत्पत्तिप्रयोजकं किमिति जिज्ञासायां पाकजापाकजादि-भेदविभिन्नरूपत्व—रसत्वादिप्रत्येकधर्मावच्छिन्नानन्तजन्यतानिरूपितानन्तजनकतावच्छेदकीभूतानन्तत-त्तद्धर्मावच्छिन्नप्रतियोगिताकाभावकूटस्य तत्प्रयोजकत्वं वक्तव्यम्। अस्माकं तु जन्यमात्रवृत्तिजन्यगुण-त्वावच्छिन्नं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन गुणस्य, आत्मवृत्तिविशेषगुणत्वावच्छिन्नं प्रति चाऽऽ-त्ममनःसंयोगस्य हेतुत्वाच्छब्दं प्रति च गगनस्य हेतुतायाः सिद्धत्वेन प्रसक्तोऽयमभावचतुष्टयस्य तत्प्र-योजकतामुपगम्य वारयितुं शक्यते इति लाघवम्। तथा हि क्रियाऽजन्यजन्यगुणास्तज्जन्यविलक्षणसंयो-गविभागवेगरूपत्रितयभिन्नाः सर्वं एव, तत्र जन्यमात्रवृत्तिगुणाः रूप-रस-गन्ध-स्पर्शाः, जन्यवृत्तिस-ङ्ख्या-परिमाण-पृथक्त्व-संयोगविभाग-गुरुत्व-द्रवत्व-स्नेह-भावनान्यसंस्काराश्चेति त्रयोदश, आत्म-वृत्तिविशेषगुणाश्च बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माऽधर्मरूपा अष्टौ भावना चेति नव, मिलित्वा द्वाविंशतिर्जाता, तेषां कारणीभूतौ गुणात्ममनःसंयोगौ तत्र स्वसमवायिसमवेतत्व—समवायरूपसम्बन्धा-भ्यां न स्त इति तदभावप्रयोजकौ द्वावभावौ जातौ, अवशिष्टाः विभुमात्रवर्तिनी सङ्ख्यापृथक्त्वे अपेक्षा-बुद्धिजन्ये, शब्दश्च। तत्र सङ्ख्या—पृथक्त्वयोरपेक्षाबुद्ध्यभावादभावः, शब्दस्य च तादात्म्येन गगनाभा-वादिति, तथा च कालदिगादिषु क्रियाऽजन्यजन्यद्रव्यकर्मभिन्नसत्तावदनुत्पत्तिप्रयोजका गुणाऽऽत्ममनः-संयोगापेक्षाबुद्धिगगनानां तत्तत्सम्बन्धावच्छिन्नप्रतियोगिकाभावाश्चत्वार इत्यस्माकं लाघवम्। एतादृश कार्यकारणभावानङ्गीकर्तॄणां तु पाकजापाकजरूपत्वादिप्रत्येकधर्मावच्छिन्नानां कारणानामनन्ता अभावा-स्तत्प्रयोजकतयाऽभ्युपेया इति महद्गौरवम्। तथा च लाघवज्ञानसहकारेणैतादृशकार्यकारणभावसिद्धौ गुणत्वजातिसिद्धिरपि सम्भवति। तथा हि—जन्यमात्रवृत्तिजन्यगुणत्वावच्छिन्नं प्रति स्वसमवायिसम-वेतत्वसम्बन्धेन गुणः कारणमिति प्रथमः कार्यकारणभावः, अयं च 'कारणगुणाः कार्यगुणानार-भन्ते' इति प्रवादमूलकः। तत्र च कार्यतावच्छेदककोटौ गुणत्वानिवेशे घटादीनामपि कपालिकारूपादिका र्यत्वापत्तिः, इष्टापत्तौ च पिठरपाकवादिमते श्यामादिरूपनाशे तन्नाशापत्तिः, असमवायिकारणनाशस्य कार्यद्रव्यनाशकत्वात्, पीलुपाकवादिमते तु द्व्यणुकनाशानन्तरं क्रमेण तन्नाशापत्तिर्बोध्या, गुणत्व-स्थाने द्रव्यभिन्नत्वप्रवेशे च क्रियाया अपि तत्कार्यतापत्तिः, इष्टापत्तौ च 'कारणगुणाः कार्यगुणानारभन्ते' इत्येतादृशोपजीव्यप्रवादविरोधः तत्र गुणानामेव स्वसमवायिसमवेतत्वसम्बन्धेन गुणजन्यताबोधनात्, तद्भेदस्याऽपि निवेशे ध्वंसस्य कार्यत्ववारणार्थं सत्वनिवेशोऽप्यावश्यक इति त्रयाणां विशेषणविशेष्य-भावे विनिगमनाविरहेण कार्यकारणभावत्रयाधिक्यप्रसङ्ग इति महद्गौरवम्, अतो गुणत्वप्रवेशो युक्त इति एतादृशकार्यतावच्छेदकतया गुणत्वजातिसिद्धिः। अत्र द्वित्वादिसङ्ख्याद्विपृथक्त्वक्रियाजन्यसंयोगविभाग-पाकजरूपादिषु स्वसमवायिसमवेतत्वसम्बन्धेन कारणगुणजन्यत्वाव्यवहारात् अपेक्षाबुद्ध्यजन्यत्व-क्रियाऽ जन्यत्व-पाकाजन्यत्वानां कार्यतावच्छेदककोटौ प्रवेश आवश्यक इति केचित्। तत्तु न सम्यक्। 'वि-भूनां तु ये स्युर्वैशेषिका गुणाः। अकारणगुणोत्पन्ना एते—' इत्यादिना विभुगुणानामेवाऽकार-णगुणोत्पन्नत्वकथनेन जन्यवृत्तिद्वित्वादीनां कारणगुणपूर्वकत्वे क्षतिविरहस्य सूचनादिति ध्येयम्। कारणतावच्छेदकं च गुणत्वं जातिरूपमुपाधिरूपं वेत्यन्यदेतत्। नन्वेतादृशरीत्या सिद्ध्यन्ती जाति-र्जन्यवृत्ति-जन्यगुण एव स्वीक्रियतां, तथा च तादृशजातेः शब्दे नित्यवृत्तिद्वित्वादिषु नित्येषु चाऽसि-द्ध्याऽर्थान्तरमिति चेन्न। नित्यसजातीयजन्येषु वर्तमानायास्तस्या नित्यादावनङ्गीकारे प्रत्येकं रूपत्वा-दिना साङ्कर्यापत्त्या तस्या रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्वा-संयोग-विभाग-परत्वा-परत्व-गुरुत्व-द्रवत्व-स्नेह-संस्कारेषु स्वीकारस्याऽऽवश्यकत्वे पञ्चदशसु गुणत्वसिद्धौ, बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्माधर्मेषु आत्ममनःसंयोगस्य आत्मवृत्तिविशेषगुणत्वावच्छिन्नं प्रति जनक-त्वात् तत्कार्यतावच्छेदकतया तत्सिद्धेः। घटात्मगतसंयोग—द्वित्वादीनां मनःसंयोगकार्यत्वापत्त्या व्यभि-चारवारणाय विशेषगुणत्वस्य कार्यतावच्छेदककोटौ निवेशः, आत्मवृत्तित्वस्य च रूपादौ व्यभिचारवा-रणाय निवेश इति ध्येयम्। अथाऽऽत्ममनःसंयोगकार्यतावच्छेदकतया बुद्ध्यादिष्वेवैषा जातिः सिद्ध्ये-

त्यनुगतं किञ्चिद्वाच्यं तदेव गुणत्वमिति सिद्धम्। इति गुणत्वजातिसाधनम्।

दिनकरी।

स्याऽप्यतिप्रसक्ततयाऽनवच्छेदकत्वाच्चेत्यन्यत्र विस्तरः॥ इति गुणत्वजातिसाधनम्॥

रामरुद्री।

दिति जातिद्वयसिद्ध्याऽर्थान्तरं दुर्वारमिति चेन्न। तथा सति मनःसंयोगजन्यतावच्छेदिकाया जातेः संस्कारत्वेन सह साङ्कर्यापत्त्या यावत्संस्कारवृत्तित्वावश्यकत्वे साधितजातिद्वयस्य परस्परं साङ्कर्यापत्त्या तयोः समनियतत्वरूपयाऽप्यावश्यकत्वे तुल्यव्यक्तिवृत्तित्वेनाऽभेदानुमानात् रूपादि—बुद्ध्यादिसाधारणजातिसिद्धेरप्रत्यूहत्वात्। अथैवमेषा जातिः शब्दे कथं सिद्ध्येदिति चेत्—स्वोत्तरवर्तिगुणनाश्यताव-च्छेदकत्वस्य योग्यत्व—विभुसमवेतत्वविशिष्ट—विशेषगुणत्वरूपयोग्यविभुविशेषगुणत्व एव स्वीकाराद् शब्दस्य च स्वोत्तरवर्तिगुणनाश्यतया तत्र तत्स्वीकारस्याऽऽवश्यकत्वात् तत्र तत्सिद्धिरिति गृहाण। विशेषगुणत्वस्य च वक्ष्यमाणस्य गुणत्वघटितत्वान्न विशेषत्वमात्रनिवेशेन गुणत्ववैयर्थ्यं वक्तुं शक्यमिति मन्तव्यम्। यदि च क्रियासंयोगोक्तकार्यकारणभावः स्वीक्रियते, तदाऽऽद्यकार्यकारणभावे घटाकाशसंयोगादौ व्यभिचारवारकस्य जन्यवृत्तित्वापेक्षया गुरुभूतस्य जन्यमात्रवृत्तित्वस्य प्रवेशो न करणीय एव। नन्वेवं द्वितीयकार्यकारणभावेऽपि आत्मघटसंयोगवारकस्य विशेषगुणपदस्य निष्प्रयोजनकतया तदनिवेशे बुद्ध्यादिषु गुणत्वजातिरनयाऽपि रीत्या न सिद्ध्येदिति चेन्न। आत्ममनःसंयोग एव व्यभिचारवारणाय विशेषगुणत्वस्य तत्राऽवश्यनिवेश्यत्वादिति ध्येयम्।

यद्वा द्वित्वादीनामपि कारणगुणपूर्वकत्वं न स्वीक्रियत एव, अतः स्वसमवायिसमवेतत्वसम्बन्धेन गुणजन्यतावच्छेदककोटौ अपेक्षाबुद्धि—क्रिया—पाकेतरत्वितयाजन्यत्वनिवेश आवश्यक एव। अथैवमनया रीत्या सिद्ध्यन्ती जातिः परत्वापरत्वयोर्न सिद्ध्येदिति चेन्न। परत्वापरत्वयोः कारणगुणाग्निसंयोगकर्माजन्यमूर्तगुणत्वावच्छिन्नं प्रति अपेक्षाबुद्धेः कारणतयाऽपेक्षाबुद्धिजन्यतया गुणत्वजातिसिद्धेः। तत्र च गुणत्वाप्रवेशे क्रियाया अपि धीजन्यत्वापत्तिरतस्तत्प्रवेश आवश्यकः। अत एव त्रिक्षणवृत्तित्वावच्छिन्नं प्रतीत्यपि न कार्यकारणभावः सम्भवति, त्रिक्षणावस्थायिरूपादीनामपि तत्कार्यत्वापत्तेरिति। तथा च परत्वापरत्वयोरपि गुणत्वजातिसिद्धिरबाधितैव। नन्वेतादृशकार्यकारणभावेषु मानाभावः। अन्यथा रूपभिन्नगुणत्वावच्छिन्नं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन तद्भिन्नगुणत्वादिनाऽपि कारणत्वापातादिति चेन्न। यतो हि अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववर्तित्वमेव कारणत्वं, तथा च निरुक्तरूपविशिष्टेषु नियतपूर्ववर्तित्वस्याऽवश्यक्लृप्ततयाऽनन्यथासिद्धत्वमात्रस्यैव कल्पनीयतया तस्य च प्रामाणिकव्यवहाराधीनत्वेन, निरुक्तकार्यकारणभावानां च मध्ये 'कारणगुणाः कार्यगुणानारभन्ते' इतिप्राचीनव्यवहारमूलकस्याऽऽद्यस्य, 'आत्मगुणानां मनःसंयोगासमवायिकारणकत्वम्' इतिव्यवहारमूलकस्य द्वितीयस्य, 'योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वम्' इतिव्यवहारमूलकस्य तृतीयस्य, 'परत्वापरत्वद्वित्वद्विपृथक्त्वादयो बुद्ध्यपेक्षाः' इतिभाष्यमूलकस्य चतुर्थस्य चाऽवश्याङ्गीकरणीयत्वात्। रूपभिन्नादेश्च रूपभिन्नादिकारणत्वमप्रामाणिकमिति न तादृशकार्यकारणभावसिद्धिः। ननु द्वित्वद्विपृथक्त्वपरत्वादिगतं वैजात्यं स्वीकृत्य तस्यैव कार्यतावच्छेदकत्वं वाच्यम्, न तु निरुक्तधर्मस्य, गौरवादिति चेन्न। तादृशधर्मस्यैकत्वादिसाधारणत्वे गुणत्वजात्या साङ्कर्यापातात्, गुणत्वं विहाय तस्य परत्वादौ, तद्विहाय गुणत्वस्य रूपादौ वर्तमानस्यैकत्वैकत्वे समावेशात्। यदि चैकत्वाद्यवृत्त्येव तदङ्गीक्रियत इत्युच्यते, तथाऽपि सङ्ख्यात्वादिना साङ्कर्यं दुर्वारमेव, तस्माद्गुणत्वमेव निरुक्तोपाधिविशिष्टं कार्यतावच्छेदकमभ्युपेतव्यमिति परत्वादौ गुणत्वसिद्धिः। न च कार्यतावच्छेदककुक्षिप्रविष्टापेक्षाबुद्ध्यादिषु कस्याऽप्यनुगतत्वाभावेन तत्तदजन्यत्वकूटप्रवेशेन गौरवं दुर्वारमिति वाच्यम्। तादृशकूटप्रवेशेऽपि अपाकजरूपत्वाद्यनन्तधर्मावच्छिन्नजनकतावच्छेदकीभूतानन्तधर्मावच्छिन्नाभावानां क्रियाऽजन्यजन्यगुणानुत्पत्तिप्रयोजकत्वाकल्पनेन लाघवस्याऽस्मन्मतेऽबाधितत्वादिति। तदेवमुभयमतेऽपि चतुर्विंशत्यनुगतगुणत्वजातिसिद्धिरित्येष परैरपरिशीलितः पन्थाः॥

॥ इति गुणत्वजातिसाधनम्॥

द्रव्याश्रिता इति। यद्यपि द्रव्याश्रितत्वं न लक्षणम् कर्मादावतिव्याप्तेस्तथापि द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं तदर्थः। भवति हि गुणत्वं

दिनकरी।

कर्मादावतिव्याप्तेरिति। आदिना सामान्यपरिग्रहः। लक्ष्ये लक्षणसत्त्वं प्रतिपादयति। भवति हीति। द्रव्यत्वव्यापकतावच्छेदकेत्यस्य फलमाह।

रामरुद्री।

मूले—द्रव्यत्वव्यापकतावच्छेदकेति। द्रव्यत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकसत्ताभिन्नजातिमत्त्वं पर्यवसितार्थः। अत्र द्रव्यत्वसामानाधिकरण्यमभावे निरवच्छिन्नत्वस्वरूपेण बोध्यम्। तेनाऽऽद्यक्षणावच्छेदेन घटे गुणाभावसत्त्वेऽपि न क्षतिरिति ध्येयम्। अत्र यद्यपि 'अथ द्रव्याश्रिताः—' इति मूले द्रव्येष्वेव आश्रिता एवेति व्युत्पत्त्या द्रव्येतरावृत्तित्वे सति द्रव्यत्वव्यापकत्वमर्थो लभ्यते, द्रव्येतरनिरूपितवृत्तितानवच्छेदकद्रव्यत्वव्यापकतावच्छेदकजातिमत्त्वमिति तु पर्यवसितोऽर्थः। तथा च गुणत्वस्य तथात्वात्तमादाय लक्षणसमन्वयः सम्भवति, तथाऽपि द्रव्येतरवृत्तितानवच्छेदकत्वापेक्षया सत्ताभेदप्रवेशे लाघवमनुसृत्यैव निरुक्तलक्षणमनुसृतमिति मन्तव्यम्।

अत्रेदं चिन्त्यम्। एतादृशलक्षणस्याऽसम्भव एव, सर्वेषामेव गुणानामुत्पन्नविनष्टघटवृत्त्यभावप्रतियोगित्वात्। न चोत्पन्नविनष्टे घटे मानाभावान्नैष दोष इति वाच्यम्। यत्र प्रथमं घटारम्भककपालयोर्मध्ये एकस्य क्रिया, ततो विभागः, ततः पूर्वदेशसंयोगनाशः कपालान्तरे क्रिया च, तत उत्तरकपालद्वयसंयोगः कपालान्तरे विभागश्च, ततो घटोत्पत्तिः, कपालद्वयसंयोगनाशश्च, ततो घटनाशावश्यकतया तस्यैव घटस्य क्षणमात्रावस्थायित्वावश्यकत्वात्। न चाऽसमवायिकारणस्य कार्यसहभावेन हेतुत्वोपगमान्नैवमिति वाच्यम्। घटोत्पत्तिक्षणे यत्र कपालनाशः, तत्र स्वसमवायिसमवेतत्वसम्बन्धेन कपालरूपस्य घटेऽसिद्धेस्तत्रत्यघटरूपाद्यनुत्पादप्रसङ्गात्। न च समवायिकारणस्याऽपि कार्यसहभावेनैव हेतुत्वमभ्युपगन्तव्यमिति नैष दोष इति वाच्यम्। एवमपि यत्र घटोत्पत्तिद्वितीयक्षणे कपालनाशस्तत्रैव घटे निर्गुणत्वसम्भवात्, तत्पूर्वक्षणे स्वसमवायिसमवेतत्वसम्बन्धेन कारणे गुणसत्त्वेऽपि तत्काले तदसम्भवात्, असमवायिकारणस्य च कार्यसहभावेन हेतुत्वोपगमात्, तस्य चाऽसमवायिकारणत्वादिति चेत्,—

अत्र केचित्,—द्रव्यत्वपदेन संयोग एव विवक्षितः, तद्व्यापकतावच्छेदकत्वं च गुणत्वेऽक्षतमिति नैष दोषः। न च संयोगव्यापकतायाः क्रियायामपि सत्त्वेन तत्राऽतिव्याप्तिरिति वाच्यम्। संयोगाधिकरणविभुवृत्त्यभावप्रतियोगित्वेन क्रियायास्तदव्यापकत्वादिति वदन्ति।

वस्तुतस्तु द्रव्यत्वव्यापकत्वमत्र न समवायसम्बन्धमात्रेण, अपि तु समवाय—स्वसमवायिसमवेतत्वान्यतरसम्बन्धेन। तथा चोत्पन्नविनष्टद्रव्येऽपि स्वसमवायिसमवेतत्वसम्बन्धेन कपालगतगुणसत्त्वान्न कश्चिद्दोषः। एवं च द्रव्यवृत्तित्वस्याऽभावे निरवच्छिन्नत्वस्वरूपसम्बन्धेनाऽनिवेशेऽपि न क्षतिः, आद्यक्षणावच्छेदेनाऽपि घटादौ कपालरूपस्यैव निरुक्तसम्बन्धेन सत्त्वात् तत्राऽव्याप्तिविरहात्। एतेन द्रव्यत्वपदस्य पारिभाषिकत्वापत्तिशङ्काऽपि निरस्ता वेदितव्या। अथैवमपि समवायसम्बन्धावच्छिन्नप्रतियोगिताकगुणाभावस्यैव यः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तस्य यः स्वरूपेणाऽभावः, यश्च नित्यवृत्तित्वविशिष्टस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकगुणाभावस्य स्वरूपेणाऽभावाभावः, तयोः समवायसम्बन्धावच्छिन्नप्रतियोगिताकगुणाभावानतिरिक्ततया यथाक्रमं जन्यद्रव्यनित्यद्रव्योभयवृत्तितया गुणत्वस्य च तत्प्रतियोगितावच्छेदकत्वादसम्भवः। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य व्यापकताघटकाभावे निवेशेन गुणाभावस्य कथञ्चिद्वारणेऽपि तादृशाभावासिद्धिनिबन्धनासम्भवो दुर्वार एव, सर्वस्यैवाऽभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात्। न च यादृशप्रतियोगितावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं द्रव्यं, तादृशप्रतियोगितानवच्छेदकत्वमेव जातौ वाच्यम्। तथा च पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठाया गुणत्वावच्छिन्नायाः प्रतियोगिताया यादृशप्रतियोगितापदेन ग्रहणासम्भवान्न कश्चिद्दोषः। प्रतियोगिताविशि-

रामरुद्री।

ष्टप्रतियोगितानवच्छेदकत्वमिति तु निष्कृष्टोऽर्थः। वैशिष्ट्यं च स्वतादात्म्य-स्वावच्छेदकसम्बन्धावच्छिन्न-स्वावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभाववद्द्रव्यनिष्ठाभावीयत्वोभयसम्बन्धेनेति वाच्यम्। एवं सति आत्मत्व-मनस्त्वादिजातेरपि व्यापकतावच्छेदकत्वापत्त्या तद्वतोरात्ममनसोर्गुणलक्षणस्याऽतिव्याप्त्यापत्तेः, आत्मत्वाद्यवच्छिन्नप्रतियोगिताया यादृशपदेन ग्रहणे तदवच्छेदकावच्छिन्नाधिकरणाप्रसिद्ध्यापत्तेर्यादृशपदेन घटत्वाद्यवच्छिन्नप्रतियोगिताया एव धर्तव्यतया तदनवच्छेदकत्वस्याऽऽत्मत्वे सत्त्वात्। एतेन सर्वस्यैवाऽभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिनमादाय प्रतियोगिवैयधिकरण्याप्रसिद्धिः समवायेन स्वप्रतियोगिवैयधिकरण्यं निवेश्यैव वारणीया, पूर्वक्षणवृत्तित्वविशिष्टस्वाभावादिरूपप्रतियोगिनः समवायेनाऽधिकरणत्वाप्रसिद्ध्यैव च न प्रतियोग्यधिकरणतापदेन तदधिकरणतापरिग्रहसम्भवः, किन्तु शुद्धघटत्वाद्यधिकरणता एव धर्तव्या इति नाऽप्रसिद्धिरित्यपि निरस्तम्। तथाऽप्यात्ममनसोरतिव्याप्तेरनुद्धारात्। न च सम्बन्धसामान्यावच्छिन्नैव व्यापकताघटकाभावीयप्रतियोगिता निवेश्यताम्, तथा चाऽऽत्मभेदमादायैवाऽऽत्मत्वादेः प्रतियोगितावच्छेदकत्वसम्भव इति वाच्यम्। तथा सति तुल्ययुक्त्या गुणभेदमादायाऽसम्भवस्य दुर्वारत्वाद्व्यापकताघटकाभावीयप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वस्य प्रतियोगिवैयधिकरण्यघटकयादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य वा समवायेन विवक्षाया आवश्यकत्वे आत्मत्वस्य व्यापकतावच्छेदकत्वानतिवृत्तेः। यदि च द्रव्यत्वसमानाधिकरणवृत्तित्वे सति द्रव्यत्वव्यापकतावच्छेदकत्वं जातौ निवेशनीयमिति आत्मत्वमनस्त्वादेर्द्रव्यत्वसमानाधिकरणवृत्तित्वाभावादेव वारणसम्भव इत्युच्यते, तदाऽप्यग्रे जातिपदस्य समवायसम्बन्धेन वृत्तितालाभमात्रपरताया 'वक्ष्यमाणतया गुरुशरीरजातित्वस्य लक्षणे प्रवेशानौचित्यात्तदप्रवेशे आत्मघटोभयत्वस्य व्यापकतावच्छेदकत्वं दुर्वारम्, उभयत्वावच्छिन्नाधिकरणाप्रसिद्ध्या तदवच्छिन्नप्रतियोगिताया यादृशपदेन ग्रहणासम्भवात् घटादिनिष्ठायास्तस्या ग्रहणे तदनवच्छेदकत्वस्य, द्रव्यत्वसमानाधिकरणघटवृत्तित्वस्य च तादृशोभयत्वे सत्त्वात्। यादृशप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यस्थाने यादृशप्रतियोगिताश्रयवैयधिकरण्यस्य निवेशेनाऽऽत्मघटोभयत्वस्य वारणसम्भवेऽपि तुल्ययुक्त्याऽसम्भवप्रसङ्गः, प्रतियोगितायाः प्रतिव्यक्ति भिन्नत्वमते गुणाभावस्याऽपि ग्रहणसम्भवात्, यादृशप्रतियोगितापदेन तत्तद्गुणनिष्ठप्रतियोगिताव्यक्तीरादाय प्रातिस्विकरूपेण तत्तदाश्रयानधिकरणत्वस्य द्रव्ये सत्त्वाद् गुणत्वस्य च तदवच्छेदकत्वात्। यत्तु द्रव्यत्वसमानाधिकरणवृत्तित्वमित्यत्र वृत्तित्वं पर्याप्त्याख्यसम्बन्धेन वाच्यम्, तथा च आत्मघटोभयत्वस्य द्रव्यत्वसमानाधिकरणपर्याप्तत्वविरहान्नैष दोष इति। तन्न, प्रत्येकावृत्तेः समुदायावृत्तित्वनियमादुभयत्वस्याऽपि प्रत्येकवृत्तित्वावश्यकत्वात् तद्वारणायोगात्। न च द्रव्यनिरूपितवृत्तितायाः पर्याप्तिसम्बन्धेनाऽवच्छेदकत्वमेव तत्समानाधिकरणवृत्तित्वम्, तथा चाऽऽत्मघटोभयत्वस्य तादृशवृत्तितावच्छेदकत्वविरहान्नाऽतिव्याप्तिरिति वाच्यम्। एवमप्यव्यासज्यवृत्तिधर्मस्य पर्याप्तौ मानाभावेन गुणत्वादेस्तादृशवृत्तितानवच्छेदकत्वेनाऽसम्भवस्य दुर्वारत्वात्। न च तत्स्थाने व्यासज्यवृत्तिभिन्नत्वमेव तत्र निवेश्यमिति वाच्यम्। एवमपि ज्ञानादिकमादायाऽऽत्मन्यतिव्याप्तेर्वज्रलेपत्वात्। न च द्रव्यत्वसमानाधिकरणवृत्तित्वमपि निवेश्यतामिति नैष दोष इति वाच्यम्। ज्ञानादेरपि प्रमेयत्वादिना द्रव्यत्वसमानाधिकरणवृत्तित्वेनाऽतिव्याप्तेः स्थिरत्वात्। न च जातिमात्रवृत्तिधर्मपुरस्कारेण द्रव्यत्वसमानाधिकरणवृत्तित्वं निविष्टमिति नैष दोष इति वाच्यम्। एवमप्यात्मत्वादेर्जातित्वेन रूपेण तत्सत्त्वादतिव्याप्तेर्दुर्वारत्वात्। न चोभयावृत्तिरूपेणैव वृत्तित्वं वक्तव्यमिति नैष दोष इति वाच्यम्। एतादृशनिवेशे स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वरूपस्योभयावृत्तित्वस्य गुरुभूतस्य प्रवेशेन महागौरवापत्तेः। किञ्च स्वप्रतियोगिवृत्तित्व—स्वसामानाधिकरण्ययोः स्वरूपसम्बन्धेन वाच्यतया सत्तादेर्निरुक्तोभयावृत्तित्वेन तत्पुरस्कारेण द्रव्यत्वसमानाधिकरणवृत्तित्वं ज्ञानादावव्याहतमेवेत्यतिव्याप्तिरपि तदवस्थैव। तस्मात् द्रव्यत्वव्यापकतावच्छेदकेत्यादिपरिष्कारस्य कथञ्चिदप्यसम्भवाल्लक्षणमेतदसङ्गतमेवेति चेद्,—

**द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति। कर्मत्वं द्रव्यत्वं वा न द्रव्यत्वव्यापकतावच्छेदकं गगनादौ द्रव्यकर्मणोरभावात्। द्रव्यत्वत्वं सामान्यत्वादिकं वा न जातिरिति तद्व्युदासः।**

**दिनकरी।**

**द्रव्यत्वमिति।** जातिपदस्य कृत्यमाह। **द्रव्यत्वत्वमिति।** सत्तारूपजातिमादाय द्रव्यादावतिव्याप्तिवारणाय **सत्ताभिन्नेति।**

**रामरुद्री।**

मैवम्, यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं द्रव्यमित्यादिनिरुक्तेरेव करणीयत्वात्। प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं तु प्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभावः। आधेयता च समवायानवच्छिन्नत्व-समवेतनिष्ठत्वोभयाभाववती ग्राह्या। तथा च आत्मत्वावच्छिन्नतादात्म्यसम्बन्धावच्छिन्नाधेयताया अपि ग्रहणसम्भवात्तन्निरूपिताधिकरणत्वाभावस्य च गगनादौ सत्त्वान्न आत्मत्वादेस्तादृशप्रतियोगितानवच्छेदकत्वमिति न कश्चिद्दोषः। तस्मादीदृशनिवेश एव युक्तः। न चाऽऽत्मघटोभयत्वस्यैवमपि व्यापकतावच्छेदकत्वापत्तिर्दुर्वारैवेति वाच्यम्। समवेतनिष्ठत्वस्थाने असमवेतावृत्तित्वघटितोभयाभावस्यैवाऽऽधेयत्वे निवेशनीयतया कालिकसम्बन्धावच्छिन्नतादृशोभयत्वावच्छिन्नानधिकरणताया द्रव्ये सत्त्वादतिव्याप्तिविरहादिति कृतं पल्लवितेन।

केचित्तु स्वावच्छेदकावच्छिन्नप्रतियोगिताश्रयानधिकरणद्रव्यनिष्ठाभावप्रतियोगितानवच्छेदकद्रव्यत्वसमानाधिकरणवृत्तितादृशजातिमत्त्वमेव द्रव्यत्वव्यापकतावच्छेदकत्वम्। एवं चाऽऽत्मत्वस्याऽऽत्मघटोभयत्वस्य च यथाक्रमं द्रव्यत्वसमानाधिकरणवृत्तित्व-स्वावच्छेदकावच्छिन्नप्रतियोगिताश्रयानधिकरणद्रव्यनिष्ठाभावप्रतियोगितानवच्छेदकत्वयोर्विरहादेव व्युदासः। गुणाभावीयप्रतियोगितायाश्च न स्वपदेन ग्रहणसम्भवः, स्वावच्छेदकीभूतगुणत्वावच्छिन्नप्रतियोगिताश्रयानधिकरणत्वस्य कुत्राऽपि द्रव्येऽसत्त्वात्। तेन प्रतियोगितायाः प्रतिव्यक्ति भेदेऽपि न क्षतिः, सर्वासामेव प्रतियोगितानामेकधर्मावच्छिन्नत्वेनाऽनुगमसम्भवात्। न चाऽऽत्मनिष्ठप्रमेयत्वावच्छिन्नानधिकरणत्वस्य द्रव्येऽसत्त्वादेवमप्यतिव्याप्तिस्तदवस्थैवेति वाच्यम्। स्वावच्छेदकावच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरणताया एव निवेशनीयत्वात्। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्ववदधिकरणत्वस्याऽप्यनवच्छेदकत्वे तु स्वावच्छेदकमपेक्ष्य तदवच्छिन्नप्रतियोगिताया गुरुतयाऽनवच्छेदकत्वात्तदवच्छिन्नाधिकरणत्वाप्रसिद्धिनिबन्धनाऽव्याप्तिः तद्व्याप्यनिरूपकतानिवेशेन वारणीयेत्याहुः।

तत्तु व्याप्यत्वघटितत्वेन गुरुतया न समीचीनमिव प्रतिभाति।

वस्तुतस्तु द्रव्यनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य तादृशजातौ विवक्षणे न कश्चिद्दोषः। गुणाभावत्वस्य द्रव्यनिरूपितवृत्तितानवच्छेदकत्वादेव व्युदाससम्भवादित्यवधेयम्।

**सत्ताभिन्नजातिमत्त्वमिति।** ननु तादृशजातेर्व्यापकतावच्छेदकत्वं समवायेनैव वाच्यम्। अन्यथा कर्मत्वादेरपि कालिकादिना द्रव्यत्वव्यापकतावच्छेदकतया कर्मादावतिव्याप्तेः। तथा च जातिपदमनर्थकम्, जातिपदव्यावर्त्यसामान्यत्वादेः समवायेन व्यापकतावच्छेदकत्वविरहेणैव वारणादिति चेन्न। **व्यापकतावच्छेदकत्वपदार्थस्य** तत्समानाधिकरणाभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकत्वाभावरूपतया तस्य सामान्यत्वादावपि सत्त्वेन तादृशधर्मवति सामान्यादावतिव्याप्तिवारणाय जातिपदस्याऽऽवश्यकत्वात्। यद्यपि तादृशधर्मवत्त्वस्य समवायसम्बन्धेन विवक्षणेनैवैतद्दोषवारणसम्भवान्नित्यत्वे सत्यनेकसमवेतत्वरूपगुरुशरीरजातित्वप्रवेशोऽनुचितः, तथाऽपि एतादृशार्थलाभायैव जातिपदमुपात्तमिति न कश्चिद्दोषः। अत एव 'समवायसम्बन्धेन धर्मवत्त्वबोधनाय जातीति' इति दीधितिकृद्भिरपि गुणप्रकाशदीधितौ 'अगुणवत्त्वम्' इतिसाधर्म्यव्याख्यानावसरेऽभिहितमिति विभा-

निर्गुणा इति। यद्यपि निर्गुणत्वं कर्मादावपि, तथापि सामान्यवत्त्वे सति

रामरुद्री।

वनीयम्। अत्र यद्यपि घटत्वादिव्यापकतावच्छेदकतादृशजातिमत्त्वमपि गुणलक्षणं वक्तुं शक्यम्, तथाऽपि घटत्व—द्रव्यत्वयोः प्रवेशे विनिगमनाविरहात्, लक्षणस्य पारिभाषिकत्वापत्तेश्च तथा नोक्तमिति ध्येयम्।

**निर्गुणत्वमिति**। अथात्र यथाश्रुतार्थानुसरणे आद्यक्षणावच्छिन्ने घटे उत्पन्नविनष्टे वा तस्मिन् गुणसामान्याभावस्य विद्यमानत्वादतिव्याप्तिः। अत एव निरवच्छिन्नस्वरूपसम्बन्धेन गुणाभाववत्त्वस्य विवक्षणेऽपि न निस्तारः। न च समवाय—स्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकगुणसामान्याभाव एव निर्गुणत्वपदार्थोऽस्तु, तथा च तादृशेऽपि घटे कपालगुणानामेव स्वसमवायिसमवेतत्वसम्बन्धेन सत्त्वान्नाऽतिव्याप्तिरिति वाच्यम्। तथा सति गुण एवाऽसम्भवप्रसङ्गात्। सर्वेष्वेव गुणेषु स्वसमवायिसमवेतत्वसम्बन्धेन गुणान्तरस्य, अन्ततः स्वस्यैव वा सत्त्वेन कुत्राऽपि गुणे तादृशान्यतरसम्बन्धेन गुणाभावविरहात्। न च स्वसमवायिसमवेतद्रव्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव निवेशनीय इति न कश्चिद्दोष इति वाच्यम्। स्वसमवायिसमवेतत्व–द्रव्यत्वयोः परस्परं विशेषणविशेष्यभावे विनिगमनाविरहेण लक्षणद्वयापत्तेः। न चेष्टापत्तिरिति वाच्यम्। तथाऽपि तादृशसम्बन्धेन वस्तुसामान्याभावस्यैव लक्षणत्वसम्भवे गुणपदवैयर्थ्यापत्तेः। न चाऽखण्डाभावघटकतयात रसार्थक्यमिति वाच्यम्। एतादृशपरम्परायाः संसर्गत्वे मानाभावेन तथाऽपि लक्षणपरिष्कारासम्भवादिति चेदत्र केचित्। 'निर्गुणाः' इति मूले गुणवद्वृत्तिपदार्थविभाजकोपाधिशून्यत्वस्यैव विवक्षिततया न कुत्रचिद्दोषः। आद्यक्षणावच्छिन्नोत्पन्नविनष्टघटादौ च तादृशस्योपाधेर्द्रव्यत्वस्य विद्यमानत्वात्तत्राऽतिव्याप्त्यसम्भवात्। न च गुणवति कालिकेन गुणत्वादेरपि वृत्त्या तच्छून्यत्वस्य गुणेऽभावादसम्भवः, अनेनैव दलेन कर्मादिवारणसम्भवे तद्वारककर्मान्यत्व–सामान्यवत्त्वदलयोर्वैयर्थ्यप्रसङ्गश्चेति वाच्यम्। गुणव्यापकपदार्थविभाजकोपाधिशून्यत्वस्यैव विवक्षणीयत्वात्। गुणत्वादेश्च न कालिकादिनाऽपि गुणव्यापकत्वसम्भवः, नित्यद्रव्ये व्यभिचारादतो नाऽसम्भवः। स्वाश्रयाश्रयत्वादिरूपपरम्परासम्बन्धानभ्युपगमाच्च न तेन सम्बन्धेन गुणत्वस्य गुणव्यापकतायाः पुनः प्रसक्तिः। तादृशोपाध्यभावश्च व्यापकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। तेन गुणव्यापकतावच्छेदकस्याऽपि द्रव्यत्वस्य संयोगेनाऽभावमादाय द्रव्येनाऽतिव्याप्तिः। सम्बन्धविशिष्टप्रतियोगिताकाभाववत्त्वं निर्गुणत्वमिति फलितार्थः। वैशिष्ट्यं च स्वावच्छिन्नगुणवन्निष्ठाभावीयप्रतियोगितानवच्छेदकपदार्थविभाजकतावच्छेदकोपाध्यवच्छिन्नत्व-स्वावच्छिन्नत्वोभयसम्बन्धेनेति। पदार्थविभाजकोपाधित्वं च न पदार्थत्वव्याप्याव्याप्यत्वे सति तद्व्याप्यत्वम्। द्रव्यत्वादेरपि पदार्थत्वव्याप्यसत्ताव्याप्यतया पदार्थविभाजकताविरहेणाऽसङ्ग्रात्। न च सत्तैव पदार्थविभाजकोपाधिपदेन धर्तव्येति नैपोऽप्रसिद्धिदोष इति वाच्यम्। सत्ताया अपि पदार्थत्वव्याप्यसामान्यभेदव्याप्यत्वेन पदार्थविभाजकोपाधित्वासम्भवात्। समवायसम्बन्धेन यत् पदार्थत्वव्याप्यं तदव्याप्यत्वविवक्षणे कथञ्चित्तद्ग्रहणसम्भवेऽपि च तच्छून्यत्वस्य गुणेऽसत्त्वादसम्भवस्तदवस्थ एव स्यात्। न च पदार्थविभाजकोपाधिप्रवेशो न करणीय एव, गुणव्यापकयत्किञ्चिद्वस्त्वभाव एव निवेश्यः, तादृशद्रव्यत्वाभावमादाय लक्षणसमन्वयसम्भवादिति वाच्यम्। तादृशसंयोगाभावमादाय द्रव्येऽतिव्याप्त्यापत्तेः। निरवच्छिन्नस्वरूपसम्बन्धेन तादृशाभाववत्त्वनिवेशेऽपि न निस्तारः, उत्पन्नविनष्टद्रव्ये एवमप्यतिव्याप्तेरनिरासात्। अतः पदार्थविभाजकोपाधिप्रवेश आवश्यकः। द्रव्यत्वाद्यन्यतमत्वमेव च पदार्थविभाजकोपाधित्वमिति न कश्चिद्दोष इत्याहुः।

तन्न समीचीनम्। एतादृशार्थस्य 'निर्गुण' शब्दार्थत्वाभावेन पारिभाषिकत्वापत्तेः, तद्घटकतया द्रव्यत्वाद्यन्यतमत्वनिवेशेनैतादृशार्थेऽतिगौरवाच्च।

किन्तु गुणसमवायिकारणत्वाभाव एवाऽत्र 'निर्गुण' शब्दार्थः। तस्याश्च गुणसमवायिकारणतायाः समवायसम्बन्धावच्छिन्नगुणत्वावच्छिन्नजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजनकतारूपाया अन-

**कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम्। जात्यादीनां न सामान्यवत्त्वं कर्मणो न कर्मान्यत्वं द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः।**

**निष्क्रिया इति स्वरूपकथनं न तु लक्षणं गगनादावतिव्याप्तेः।**

इति गुणसामान्यलक्षणकथनम्।

दिनकरी।

तथाऽपि सामान्यवत्त्वे सति कर्मान्यत्वे सतीति। सत्यन्तयोर्विशेष्यस्य च फलमाह। **जात्यादीनामिति**। तत्र-तेषु।

**गगनादावतिव्याप्तेरिति**। आदिना कालादिपरिग्रहः। यथाश्रुते चैतत्, सामान्यवत्त्वे सति कर्मान्यत्वे च सति कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वेऽतिव्याप्तेरभावात्।

॥ इति गुणसामान्यलक्षणकथनम् ॥

रामरुद्री।

न्यथासिद्धनियतपूर्ववर्तितावच्छेदकधर्मस्वरूपत्वेन तस्य च प्रकृते द्रव्यत्वरूपस्योत्पन्नविनष्टघटेऽपि सत्त्वान्नाऽतिव्याप्तिः। गुणत्वस्य चाऽतथात्वान्नाऽसम्भवः। एतादृशार्थपरता च 'निर्गुण' पदस्य 'आयुर्घृतम्' इत्यादिवाक्यगतायुःपदस्य तत्साधने निरूढलाक्षणिकत्ववत् तात्पर्यानुपपत्तिरूपलक्षणाबीजसत्त्वेन गुणसमवायिकारणत्वाभाववति निरूढलाक्षणिकत्वादुपपन्नेति मन्तव्यम्।

यत्तु गुणवदवृत्तिपदार्थविभाजकोपाधिमत्त्वमेव निर्गुणत्वमिति नोत्पन्नविनष्टघटादावतिव्याप्तिरिति मतम्,

तत्तुच्छम्। यथाश्रुते गुणवदवृत्तिगुणत्वादिरूपपदार्थविभाजकोपाधेरपि कालिकादिना द्रव्ये सत्त्वादतिव्याप्तिरतः समवायेनैव तद्वत्त्वं वाच्यम्। तथा च तत एव सामान्यादेरपि वारणसम्भवे पृथक् तद्वारक **'सामान्यवत्त्वे सति'** इतिविशेषणानर्थक्यप्रसङ्गादिति ध्येयम्।

अस्मदुक्तार्थपरत्वादेव-**'निष्क्रियाः' इति स्वरूपकथनं, न तु लक्षणं, गगनादावतिव्याप्तेः-'** इत्याद्यग्रिमग्रन्थोऽपि स्वारस्येन सङ्गच्छते। अन्यथा तत्राऽपि कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वघटितलक्षणस्य कर्तुं शक्यतया **'निष्क्रियाः'** इत्यस्य लक्षणपरतया व्याख्यानं परित्यज्य तस्य स्वरूपप्रदर्शनपरताकथनस्य सन्दर्भविरोधापत्तेः। अस्मन्मते तु **'निर्गुणाः'** इत्यत्र गुणसमवायिकारणत्वाभावप्रतिपादनवत् **'निष्क्रियाः'** इत्यनेनाऽपि क्रियासमवायिकारणत्वाभावप्रतिपादनसम्भवेऽपि मूर्तत्वेनैव क्रियां प्रति समवायिकारणतया गगनादौ तदभावोऽतिप्रसक्त इति मत्वैव तस्य स्वरूपप्रदर्शनपरत्वकथनसङ्गतेः। **'निष्क्रियाः'** इत्यस्य परिष्कारेण गुणलक्षणत्वस्याऽपि सम्भवात् तस्य लक्षणत्वमुपवर्णितं टीकायाम्। सोऽपि टीकाग्रन्थो न विरुद्धः, तत्र **'यथाश्रुते चैतत्'** इत्युक्त्यैव **'निष्क्रियाः'** इत्यस्य स्वरूपकथनपरताया यथाश्रुत उपपादनात् अत एव च गुणव्यापकपदार्थविभाजकोपाधिशून्यत्वं निर्गुणत्वमित्यादिप्रथमपक्षोऽपि परास्तः। तथा सति तादृशार्थोपवर्णनस्य **'निष्क्रियाः'** इत्यत्राऽपि कर्तुं शक्यत्वेन तस्य स्वरूपप्रदर्शनपरत्वकथनासाङ्गत्यस्य दुर्वारत्वात्।

एतेन गुणव्यापकयत्किञ्चिज्जातिशून्यत्वे सति गुणत्वमित्युक्तिरपि परास्ता। दर्शितरीत्याऽग्रिममूलासाङ्गत्यस्य तन्मतेऽपि दुर्वारत्वादिति।

अत एव गुणवदवृत्तिपदार्थविभाजकोपाधिमत्त्वस्य समवायेन लाभार्थमेव सामान्यवत्त्वस्योपादाने बाधकाभावः, **'निष्क्रियाः'** इत्यस्याऽपि कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वरूपार्थकरणेन लक्षणत्वं सम्भवति, मूले तु एकेनैवोपपत्तौ लक्षणान्तरकरणं निष्प्रयोजनमिति मत्वा स्वरूपकथनमित्युक्तं, **गगनादावतिव्याप्तेरिति** तु यथाश्रुताभिप्रायकमितिपक्षोपि परास्तः, तथा सति द्रव्याश्रितत्वलक्षणकरणेनैवोपपत्तौ निर्गुणत्वलक्षणकरणस्याऽपि सन्दर्भविरुद्धत्वापत्तेरिति विभावनीयम्।

अथ गुणादीनां निर्गुणत्वे 'एकं रूपं रसात् पृथक्' इति व्यवहारः कथमुपपद्येतेति चेत्,

## रामरुद्री ।

अत्र केचित्, स्वाश्रयगतैकत्वादेरेव सामानाधिकरण्यसम्बन्धेन रूपादौ भानाभ्युपगमेन तन्निर्वाहः । न चैवमवयविमात्रे परमाणुगतैकत्वादिद्वारैणैवैकत्वप्रत्ययोपपत्तेरेकत्वादिकं न सिद्ध्येदिति वाच्यम् । परमाण्वेकत्वादेरयोग्यत्वेनाऽवयविनि तद्भानासम्भवात्तन्निर्वाहाय द्व्यणुकाद्यवयविनि तत्स्वीकारस्याऽऽवश्यकत्वात् । यद्यपि त्रसरेणुमात्रे एकत्वादिकमभ्युपेत्यैवैतादृशापत्तिवारणसम्भवात् चतुरणुकादिषु तत्स्वीकारोऽनावश्यक इति वक्तुं शक्यम्, न च त्र्यणुकमारभ्य महावयविपर्यन्तमनेकेष्ववयविषु एकत्वादिप्रत्ययप्रयोजकमेकविधं सामानाधिकरण्यं न वक्तुं शक्यं, केवलं चतुरणुक एव तत्प्रत्ययोपपादकं सामानाधिकरण्यं, तज्जन्यादौ तु सामानाधिकरण्यसामानाधिकरण्यमिति वैरूप्यप्रसङ्गादतो लाघवानवकाश इति वाच्यम् । कपाले घटोत्पादेऽपि कपालावयवेषु न घट इतिप्रत्ययानुत्पादात् कपाल इव तदवयवेष्वपि सर्वत्र घटस्वीकारावश्यकत्वात् सामानाधिकरण्येनैवैकत्वभाननिर्वाहात् । अत एव सहस्रतन्तुकपटस्थले मध्यवर्तितन्तुसंयोगनाशेऽपि तन्नाशनिर्वाहः । अन्यथा बहूनां तन्तुसंयोगानां तत्र हेतुत्वकल्पने गौरवात्तन्तुसंयोगत्वेन तत्र हेतुत्वकल्पने च तन्तुद्वयसंयोगतोऽपि तदुत्पादप्रसङ्गात् चरमसंयोगव्यक्तेरेव तद्धेतुत्वावश्यकत्वात् निरुक्तस्थले च मध्यसंयोगस्यैव नष्टत्वात्तद्विनाशानुपपत्तिः, अस्मन्मते तु आद्यतन्तुमारभ्य मध्यवर्तितन्तुपर्यन्तसमवेतस्य खण्डावयविनोऽपि तत्रोत्पत्तिस्वीकारात् तस्याऽपि च महापटावयवत्वेन मध्यतन्तुसंयोगनाशे खण्डपटनाशान्महापटनाश उपपन्नः । अत एव पाषाणादिषु सतीनामेव देवताप्रतिमानां आवरकभागापसारणेनाऽऽविर्भावो जायते इति व्यवह्रियते लोकैः, न हि तत्र तादृशप्रतिमानुकूलसंयोगादयो जाता इति । तथाऽपि त्र्यणुके गुणोत्पादान्यथानुपपत्त्या क्लृप्तहेतुभावस्य तत्तद्गुणस्य स्वसमवायिसमवेतत्वसम्बन्धेन चतुरणुकादावपि सत्त्वेन तत्र तदुत्पत्तेरव्याहतत्वात्तत्र तत्कल्प्यते । न चैवं तेन सम्बन्धेन तत्तद्गुणस्य गुणेऽपि सत्त्वात्तत्राऽपि गुणोत्पादापत्तिरिति वाच्यम् । तत्र द्रव्यात्मकसमवायिकारणविरहादेव तद्वारणसम्भवात् । न च स्वसमवाय्यतीन्द्रियसमवेतत्वसम्बन्धेन तत्तद्गुणस्यैव हेतुत्वं कल्प्यताम्, तेन द्व्यणुकत्रसरेण्वोरेव तदुत्पत्तिसम्भवः, अनन्तद्रव्येषु गुणकल्पनायां गौरवस्यैव विनिगमकत्वादतीन्द्रियत्वस्य सम्बन्धघटकतया निवेशे बाधकाभाव इति वाच्यम् । एवमपि त्र्यणुकैकत्वादेस्त्वगयोग्यतया प्रकृष्टमहत्त्ववत्यवयविनि त्वचैकत्वादिग्रहणानुपपत्तेः, प्रकृष्टमहत्त्ववत्यवयविनि त्वग्योग्यैकत्वाभावात्, भवता त्र्यणुक एवैकत्वादिस्वीकारात्, प्रकृष्टमहत्त्ववत्यवयविनि स्वसमवाय्यतीन्द्रियसमवेतत्वसम्बन्धेन एकत्वाद्यभावेन तत्र तदुत्पत्त्यसम्भवात् । न च स्वसमवायित्वगयोग्यसमवेतत्वस्यैव कारणताघटकसंसर्गत्वोपगमान्नैवम्, प्रकृष्टमहत्त्ववदवयविनोऽवयवानां त्वगयोग्यतया तादृशावयविनि निरुक्तसम्बन्धेनैकत्वादेर्वर्तमानतया तत्रैकत्वाद्युत्पत्तिसम्भवादिति वाच्यम् । स्वसमवायित्व-त्वगयोग्यत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुशरीरत्वगयोग्यत्वघटितकार्यकारणभावद्वयापत्तेरेतादृशकार्यकारणभावद्वयस्याऽनङ्गीकरणीयत्वात् । एवं स्थिते सामानाधिकरण्यसम्बन्धेनैवैकत्वादिकं रूपादिषु विषय इति न 'एकं रूपं–' इत्यादिप्रतीत्यनुपपत्तिः । न चैवं रूपावधिकस्य पृथक्त्वस्य घटे वर्तमानस्य सामानाधिकरण्यप्रत्यासत्त्या रूपेऽपि सत्त्वात् 'रूपं रूपात् पृथक्' इतिव्यवहारापत्तिरिति वाच्यम् । गुणगुणिनोरभेदाङ्गीकर्तृमत इवाऽस्मन्मतेऽपि रूपावधिकस्य पृथक्त्वस्य घटेऽनङ्गीकारमात्रेणैव निर्वाहसम्भवादिति वदन्ति ।

तन्मन्दम् । सामानाधिकरण्यसम्बन्धेन घटगतैकत्ववत् तद्गतबहुत्वादेरपि रूपे सत्त्वेन तत्र तत्प्रतीत्यापत्तेः । न च द्वित्वादेः स्वपर्याप्त्यनुयोगिनिरूपितवृत्तित्वमेव सम्बन्धः, तथा च रूपादेरेकमात्रवृत्तित्वेन द्वित्वपर्याप्त्यधिकरणोभयवृत्तित्वविरहादेव तत्र द्वित्वप्रत्ययापत्तिवारणसम्भव इति वाच्यम् । एवं सति 'शब्दाः' इतिप्रत्ययानुपपत्तेः । गगनस्यैकत्वेन शब्दे निरुक्तसम्बन्धेन बहुत्वाभावात् । न च घटगतैकत्ववत् बहुत्वमपि रूपादिष्वनुभूयत एव, अत एव रूपाणीति शब्द इव बहुत्वप्रत्ययः सार्वलौकिकः सङ्गच्छत इति वाच्यम् । तथा सति तद्रूपाणीतिप्रत्ययप्रसङ्गात्, प्रकारतावच्छेदकावच्छेदेन स्वपर्याप्त्यनुयोगिवृत्तित्वस्य संसर्गत्वोपगमेन तद्वारणे च शब्दा इति प्रत्ययस्याऽप्यनुपपत्तेः ।

**रामरुद्री।**

अपरे पुनरेवमाहुः, 'एकं रूपं–' इत्यादिप्रतीतिर्भ्रान्तिरेव। भ्रान्तिजनको दोषश्च तत्तत्सामानाधिकरण्यम्। एवञ्च यस्य गुणस्य गुणे प्रतीतिस्तत्सामानाधिकरण्यस्यैव दोषत्वं कल्प्यते। तेन रूपे एकत्वप्रतीत्यनुपपत्तिः, न वा बहुत्वप्रत्ययापत्तिः, नाऽपि शब्दे बहुत्वप्रत्ययानुपपत्तिरपीति।

तदसत्। 'एकं रूपं–' इत्यादिप्रतीतेः सर्वलोकानुभवसिद्धाया भ्रान्तित्वकथनस्य सर्वथाऽयुक्तत्वात् तत्तत्सामानाधिकरण्यानां दोषत्वकल्पने गौरवाच्चेति।

अत्र ब्रूमः। गुणादौ 'एकम्–' इत्यादिप्रतीतिविषयो द्रव्यगुणादिषु मध्ये कतरदिति प्रथमतो विवेक्तव्यम्। तत्र न तावत्तत् द्रव्यम्, गुणः, कर्म वा, समवायेन जन्यसत्त्वावच्छिन्नं प्रति तादात्म्येन कारणीभूतस्य द्रव्यस्य गुणादौ विरहेण तत्र द्रव्यगुणकर्मणामसम्भवात्। अत एव 'गुणेषु गुणयोगे च समवायिकारणत्वप्रसक्तौ द्रव्यत्वापत्तेर्गुणत्वव्याघात एव–' इति किरणावल्यामाचार्यैरप्युक्तम्। न च तस्य द्रव्यत्वे का हानिरिति वाच्यम्। तथा सति द्रव्यत्वगुणत्वयोः साङ्कर्यप्रसङ्गात् न च द्रव्यत्वगुणत्वयोरभेदोपगमान्नैवमिति वाच्यम्। तथा सति तुल्ययुक्त्या क्रियादावप्येकत्वादिप्रतीत्या द्रव्यत्वावश्यकत्वे द्रव्यत्वसत्त्वयोस्तुल्यव्यक्तिकत्वापत्त्या तयोरप्यभेदाङ्गीकारावश्यकत्वे सत्त्वेनैव कार्यकारणभावप्रसक्तौ क्रियाजन्यस्य संयोगस्याऽपि द्रव्यत्वेन तज्जनिकायाः क्रियाया नाशेन नाशापत्तेः, निरुक्तरीत्या कार्यत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुत्वमङ्गीकृत्य वारणीयाया नीले नीलोत्पत्तेर्वारणासम्भवाच्च। न चैतज्जातिरूपं, नित्यत्वे सत्यनेकसमवेतत्वविरहात्। विशेषसमवायावपि न, परतो व्यावृत्तेः, सम्बन्धत्वाभावाच्च। ध्वंसप्रागभावरूपमित्यपि न, गुणादिषु ध्वंसप्रागभावयोरभावात्। अतो धीविशेषविषयत्वरूपमेव तद्वाच्यम्। एवं सति विषयत्वरूपत्वे तस्य गुणत्वं कथं सम्भवेत्? तस्माद्गुणे गुणानङ्गीकार एवोचितः। अनयैव च रीत्या 'रूपं रसात् पृथक्' इति प्रत्ययोऽपि भेदविषयकत्वं कल्पयित्वोपपादनीय इति सर्वमवदातम्। **तत्र–तेष्विति**। गुणभिन्नेष्वित्यर्थः।

मूले–**'निष्क्रियाः' इति स्वरूपकथनम्, गगनादावतिव्याप्तेः'** इत्युक्तम्, तत्राऽऽदिपदग्राह्यं स्पष्टयति टीकायाम्–आदिनेत्यादि। **'गगनादौ'** इति मूलं निष्क्रियद्रव्यमात्रपरमिति भावः। तेनोत्पन्नविनष्टद्रव्ये, यत्र च कदाचिदपि क्रिया न जाता, तादृशे च घटादावप्यतिव्याप्त्यनभिधानान्मूलस्य न न्यूनत्वम्, तेषामप्यादिपदग्राह्यत्वादिति ध्येयम्। ननु द्रव्यमात्रस्यैव प्रथमक्षणावच्छेदेन क्रियारहितक्षणान्तरावच्छेदेन च क्रियारहितत्वात् कर्मादिश्च सर्वदैव क्रियारहितत्वादलक्ष्यमात्रेऽतिव्याप्तेदानं विहाय निष्क्रियद्रव्यमात्रेऽतिव्याप्तिकथनमनुचितमिति चेन्न। निरवच्छिन्नस्वरूपेण क्रियासामान्याभावस्यैव **'निष्क्रिय'** पदार्थत्वेन तस्य सर्वत्र द्रव्येऽभावात् द्रव्यमात्रे, पूर्ववत्सामान्यवत्त्वे सति कर्मान्यत्वे च सतीतिविशेषणद्वयप्रक्षेपेण कर्मादौ चाऽतिव्याप्तिवारणमनुसन्धायैव निष्क्रियद्रव्यमात्रसूचनाय **'गगनादौ'** इत्युक्तेरिति विभावनीयम्।

वस्तुतस्तु **'निर्गुणाः'** इतिवत् **'निष्क्रियाः'** इत्यत्राऽपि क्रियासमवायिकारणतारहितत्वस्यैव शब्दार्थतया स्वरसलभ्यतया तस्य च लक्षणस्य न द्रव्यमात्रेऽतिव्याप्तिः सम्भवति, क्रियां प्रति मूर्तमात्रस्य समवायिकारणत्वेन तादृशसमवायिकारणताविरहस्य कुत्राऽपि मूर्तेऽसम्भवात्, अतो विभुमात्रग्रहणसूचनायैव **'गगनादौ'** इति मूलेऽभिहितमिति मूलार्थः स्वारस्येन सङ्गच्छते, अन्यथा 'तादृशघटादौ' इति विहाय **'गगन'** ग्रहणे विनिगमकासम्प्रतिपत्तेः। न च तादृशसमवायिकारणताराहित्यस्य कर्मादावपि सत्त्वेनाऽतिव्याप्तिस्तत्राऽपि सम्भवतीति तत्परित्यागोऽयुक्त इति वाच्यम्। पूर्ववदत्राऽपि **सामान्यवत्त्वे सति कर्मान्यत्वस्याऽपि 'निष्क्रिय'** पदार्थघटकताभिप्रायेण तदनुक्तिसङ्गमनसम्भवात्, **'गगनादौ'** इत्यनेन कर्मसमवायिकारणतारहितस्य बोधनेन गगनादिवत् कर्मादावपि लक्षणातिव्याप्तेरिष्टत्वे बाधकाभावाच्च। अत एव **'यथाश्रुते–'** इत्याद्यग्रिमटीकाग्रन्थोऽपि सङ्गच्छते। एतत्तत्त्वं प्रागेव निरूपितमित्यवधेयम्।

यत्तु समवाय–स्वसमवायिसमवेतत्वान्यतरसम्बन्धेन क्रियासामान्याभाव एवाऽत्र **निष्क्रिय'** पदेन

रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥

रामरुद्री ।

विवक्षितः । तादृशाभाववत्त्वमपि निरवच्छिन्नस्वरूपेण विवक्षितम् । एवं च न मूर्तद्रव्ये कुत्राऽप्यतिव्याप्तिः सम्भवति, तदन्तर्गतेषु परमाणुषु समवायेन, अवयविषु च सर्वेष्वपि अवयवद्वयसंयोगं विनाऽवयव्यनुत्पत्तेस्तस्य च क्रियाधीनतया तदवयवेषु क्रियास्वीकारावश्यकत्वे स्वसमवायिसमवेतत्वसम्बन्धेन क्रियाया विद्यमानत्वात्तदभावासम्भवात्, क्रियाशून्यकालावच्छेदेन तदभावसत्त्वेऽपि तस्य निरवच्छिन्नस्वरूपेण तत्राऽसम्भवात् । क्रियादावपि स्वसमवायिसमवेतत्वसम्बन्धेन क्रियायाः सत्त्वेन तत्राऽप्यतिव्याप्तिर्न सम्भवति, इति परिचिन्त्यैव गगनादावतिव्याप्तिकथनं सङ्गच्छते । तत्र समवाय—स्वसमवायिसमवेतत्वरूपसम्बन्धद्वयेनाऽपि क्रियाविरहादिति नाऽसङ्गतिरिति ।

तत्तुच्छम् । एवं सति गुणेष्वपि स्वसमवायिसमवेतत्वसम्बन्धेन क्रियासत्त्वेन तत्रैव लक्षणागमनाद्व्याप्तिसम्भवेऽतिव्याप्तिदानस्य सन्दर्भविरुद्धत्वापत्तेरिति विभावनीयम् ।

**यथाश्रुते चैतदिति । यथाश्रुते**—उक्तवाक्यात् शक्तिभ्रमाजन्यनिरूढलक्षणेतरलक्षणाग्रहाजन्यशाब्दबोधाङ्गीकारे । **एतत्**—स्वरूपकीर्तनपरत्वकथनम् । **सामान्यवत्त्वे सतीत्यादि** । अत्र सामान्यादावतिव्याप्तिवारणाय **सामान्यवत्त्वे सतीत्युक्तम्** । कर्मण्यतिव्याप्तिवारणाय **कर्मान्यत्वे सतीत्युक्तम्** । द्रव्येऽतिव्याप्तिवारणाय च **कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्व**मित्युक्तम् । कर्मवद्वृत्तिधर्मशून्यत्वं, कर्मवद्वृत्तिजातिशून्यत्वमिति वा लक्षणकरणे तादृशसत्ताजातिमादाय तच्छून्यत्वस्य गुणेऽसत्त्वादसम्भवस्य वारणार्थं **पदार्थविभाजकोपाधिनिवेशः** । अथ कर्मवद्वृत्तिजातिप्रतियोगिकाभावनिवेशेनैवोपपत्तौ पदार्थविभाजकोपाधिपर्यन्तनिवेशोऽनुचितः । न च सत्तारूपायाः कर्मवद्वृत्तिजातेरभावस्य गुणेऽसत्त्वादसम्भववारणाय तदुपादानमावश्यकमित्युक्तमेवेति वाच्यम् । तादृशयत्किञ्चिज्जात्यभावस्यैव लक्षणे निविष्टतया तादृशस्य द्रव्यत्वाभावस्य गुणे सत्त्वादेव लक्षणसमन्वयसम्भवादिति चेन्न । तादृशघटत्वादिजातिमादाय तच्छून्ये गगनादावतिव्याप्तेरीदृशनिवेशासम्भवात् । पदार्थविभाजकोपाधित्वं चैतल्लक्षणघटकं विभागवाक्यबोधित—पदार्थत्वव्यापकसङ्ख्यावत्त्वम् । व्यापकत्वं च स्वाश्रयाश्रयत्वसम्बन्धेन । न तु पदार्थत्वव्याप्याव्याप्यत्वे सति पदार्थत्वव्याप्यत्वं तत्, गुणत्वादेरपि पदार्थत्वव्याप्यसत्ताव्याप्यत्वेन पदार्थविभाजकोपाधित्वानुपपत्त्याऽसम्भवापत्तेः । एवं च तादृशी सङ्ख्या द्रव्यत्वादिगतं सप्तत्वम् । अत्र च 'पदार्थाः' इति विभागवाक्यघटकपदबोध्यबहुत्वसङ्ख्यावतो गगनत्वादेरपि विभाजकत्वप्रसक्त्या गगनेऽतिव्याप्तिवारणाय सङ्ख्यायां पदार्थत्वव्यापकत्वप्रवेशः । आत्मत्वतद्भिन्नत्वगतद्वित्वस्याऽपि तथाविधतया तयोः पदार्थविभाजकोपाधित्वे तादृशात्मत्वमादायाऽऽत्मन्यतिव्याप्तिर्लक्षणस्य स्यात्, सा माभूदिति सङ्ख्यायां विभागवाक्यबोधितत्वनिवेशः । विभागवाक्यमपि एतच्छास्त्रीयमेव ग्राह्यम् । तेनाऽन्यैः 'पदार्थों द्विविधः, चेतनाचेतनभेदात्' इत्यादिविभागकरणेऽपि न क्षतिः । एवं च पदार्थविभाजकोपाधौ कर्मवद्वृत्तित्वं तादृशी सङ्ख्या विभागवाक्यजन्यबोधीययादृशप्रकारतावच्छेदिका तादृशप्रकारतावच्छेदकसम्बन्धेन विवक्षणीयम् । तेन गुणत्वादेरपि कालिकादिना कर्मवद्वृत्तित्वेऽपि नाऽसम्भवः । तथा च विभागवाक्यजन्यबोधीयप्रकारताविशिष्टप्रतियोगिताकाभाववत्त्वं गुणलक्षणघटक—'**कर्मवद्वृत्तित्व**' दलार्थः । प्रकारतावैशिष्ट्यं च स्वविशिष्टकर्मवन्निरूपितवृत्तित्वनिष्ठत्वसम्बन्धेन । स्ववैशिष्ट्यं च कर्मवन्निरूपितवृत्तितायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व—स्वसामानाधिकरण्योभयसम्बन्धेनेति विभावनीयम् ।

॥ इति गुणसामान्यलक्षणकथनम् ॥

(१)द्रवो गुरुत्वं स्नेहश्च वेगो मूर्तगुणा अमी ।

( वेगा इति । वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः )(२) ।

मूर्तगुणा इति । अमूर्तेषु न वर्तन्त इत्यर्थः । ( लक्षणं तु तावदन्यान्यत्वम् ।

दिनकरी ।

'वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः' इति पाठः । वेगपदस्य भावनान्यसंस्कारपरत्वादिति भावः इदमुपलक्षणं 'वेगाश्च' इत्यत्र चकारेणाऽनुक्तसमुच्चायकेन गुरुत्वस्यापि सङ्ग्रहात् । ननु मूर्तगुणत्वं मूर्तवृत्तिगुणत्वं, तच्च सङ्ख्यादावतिव्याप्तमत आह । अमूर्तेष्विति ।

रामरुद्री ।

इति पाठ इति । प्राचीनपुस्तकेषु-'वेगा इति । वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः-'इति पाठो नाऽस्त्येव । अयं च काचित्कोऽपि अन्वर्थत्वाद्ग्राह्यः, अन्यथा वेगस्य मूर्तगुणत्वमभिधाय स्थितिस्थापकस्य तदनुक्तौ मूलस्य न्यूनतापत्तेरिति भावः । भावनान्यसंस्कारपरत्वादितीति । भावनान्यसंस्कारत्वावच्छिन्ने वेगपदस्याऽजहत्स्वार्थलक्षणाबलादिति भावः । ननु 'रूप-रस-गन्ध-स्पर्श-परत्वापरत्व-गुरुत्व-द्रवत्व-स्नेह-वेगा मूर्तगुणाः-*' इति भाष्ये गुरुत्वमपि सङ्गृहीतं, तस्य च मूलेऽसङ्ग्रहान्न्यूनत्वमित्यतः स्वयं पूरयति । इदमुपलक्षणमिति। इदं तु 'द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी-' इति कारिकावलीपाठमनुसृत्योक्तम् । वस्तुतस्तु द्रवो गुरुत्वं स्नेहश्च वेगो मूर्तगुणा अमी-' इति पाठ एव साधुरिति मन्तव्यम् ।

इदं त्विह चिन्त्यते । अणुत्वादेरपि मूर्तगुणत्वसम्भवे तद्व्यतिरेकेण मूर्तगुणत्वकथने किं बीजम् ? न चैवं सङ्ख्यादीनामपि मूर्तवृत्तीनां मूर्तगुणत्वापत्तिरतोऽमूर्तवृत्तितानवच्छेदकगुणत्वसाक्षाद्व्याप्यजातिमत्त्वस्यैव मूर्तगुणत्वपदार्थत्वेन तस्याऽणुत्वेऽभावान्न तस्य मूर्तगुणेषु परिगणनमिति वाच्यम् । एवं सति वेगादेरपि तथात्वविरहेण तस्याऽपि मूर्तगुणत्वानुपपत्तेरमूर्तवृत्तितानवच्छेदकजातिमद्गुणस्यैव मूर्तगुणत्वपदार्थताया अभिधातुमुचितत्वेनाऽणुत्वादेर्मूर्तगुणत्वानतिवृत्तेः ।

मैवम् । अस्याः कारिकाया 'रूप-रस-' इत्याद्युदाहृतभाष्यानुसारित्वेन भाष्यार्थानुयायितया दूषणानवकाशात् । किमर्थं तर्हि भाष्यकार एवाऽणुत्वादीन् मूर्तगुणमध्ये न पर्यजीगणत् ? उच्यते । गुणविभाजकजातिमद्विभाजकावच्छिन्नमूर्तामूर्तनिरूपितवृत्तित्वसमानाधिकरणगुणविभाजकजातिमत्त्वमेवोभयगुणत्वमभिमन्यमानो भगवान् भाष्यकृदणुत्वादीन् गुणान् मूर्तगुणमध्ये न पर्यजीगणत्, अणुत्वमपि हि तादृशमहत्त्वस्वरूपजात्यवच्छिन्नमूर्तामूर्तनिरूपितवृत्तित्वसमानाधिकरणपरिमाणत्वरूपगुणविभाजकजातिमत्त्वादुभयगुणोदर एव निविशते, वेगस्थितिस्थापकभावनासु च न कोऽपि मूर्तामूर्तवृत्तिरिति वेगस्थितिस्थापकौ मूर्तगुणेषु, भावना चाऽमूर्तगुणेषु पन्तर्भाविताः, न हि मूर्तगुणामूर्तगुणशब्दौ मूर्तगुणतद्भिन्नगुणौ बोधयत इति वक्तुं शक्यम्, तथात्वे प्रत्येकं मूर्तामूर्तमात्रवर्तिसङ्ख्यादिगुणानामपि मूर्तगुणामूर्तगुणमध्ये परिगणनप्रसङ्गात् । यतस्तु भाष्यकारः पृथक् सङ्ख्यादीनुभयगुणत्वेन व्यवस्थापयाम्बभूव, तत एवैतज्ज्ञातुं शक्यं यत् उभयगुणत्वेन निरुक्तपरिष्कृतरूपविशिष्टाः, तद्भिन्नत्वेन च मूर्तगुणामूर्तगुणावभिप्रेताविति विभावनीयम् ।

मूलोक्तं मूर्तगुणत्वरूपसाधर्म्यमाक्षिपति-नन्वित्यादिना । मूले-अमूर्तेषु न वर्तन्त इत्यर्थ इति । अयं चाऽर्थो मूर्तानामेव गुणा इति व्युत्पत्त्या लभ्य इत्यनुशयेनेदमुक्तम् । अनया व्युत्पत्त्या मूर्तवृत्तित्वे सत्यमूर्तावृत्तित्वमर्थो लभ्यते, तत्र च मूर्तवृत्तित्वांशो विफलः, अमूर्तावृत्तित्वस्यैव सम्यक्त्वादतस्तत्परि-

---

( १ ) अयमेव पाठः प्राचीनपुस्तके उपलभ्यते । समीचीनश्च । आधुनिकपुस्तके तु—
"द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी ॥" इति वर्त्तते ।

( २ ) अयं पाठः प्राचीनपुस्तके नास्ति । असत्त्वमेवोचितम् ।

* प्रशस्तपादभाष्यम् । गुणनिरूपणम् ।

एवमग्रेऽपि(१) । ) ॥ इति मूर्तगुणकथनम् ॥

दिनकरी ।

तथा चाऽमूर्तावृत्तिगुणत्वं प्रदर्शितगुणानां साधर्म्यमित्यर्थः । न चैतदपि मूर्तमात्रवृत्तिसङ्ख्यायामतिव्याप्तमिति वाच्यम् । अमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य, मूर्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् ।

रामरुद्री ।

त्यागेन निष्कृष्टमर्थमाह टीकायाम्–तथा चेत्यादिना । प्रदर्शितेति । मूलेत्यादिः । एतदपीति । इदानीं निरुक्तं साधर्म्यमपीत्यर्थः । मूर्तमात्रवृत्तिसङ्ख्यायामिति । घटगतैकत्वादावित्यर्थः । मूर्तानामेव गुणा इति व्युत्पत्त्या गुणविभाजकवद्विभाजकरूपेण मूर्तमात्रवर्तित्वं द्योत्यते, एवं च सङ्ख्यादौ नाऽतिव्याप्तिः । एवंरूप 'मूर्तगुण' परिष्कृतार्थस्य लक्षणत्वे सकलदोषवारणेऽपि अस्य गुरुभूतत्वात्स्वयमाह । अमूर्तगुणवृत्तीत्यादि । अत्र तादृशजातिशून्यत्वं सामान्यादावप्यस्तीत्यतस्तद्वारणाय विशेष्यीभूतस्य गुणत्वस्य प्रवेशः । 'अमूर्तगुणवृत्ति' इत्यत्र 'गुण' पदं, 'गुणत्वव्याप्यजातिशून्य' इत्यत्र 'जाति' पदं च समवायसम्बन्धावच्छिन्नवृत्तितायाः, गुणवृत्तिभेदप्रतियोगितानिरूपिततादृशसम्बन्धावच्छिन्नावच्छेदकतायाश्च लाभायैवोपात्तम् । तेन न कालिकसम्बन्धेनाऽमूर्तवर्तिनि रूपादौ रूपत्वादेवर्तमानत्वेन, सत्ताया अमूर्तगुणवृत्तेः कालिकादिसम्बन्धेन गुणवृत्तिभेदप्रतियोगितावच्छेदिकाया वा वर्तमानतया तदभावस्य क्वाऽपि मूर्तगुणेऽसम्भवेऽप्यसम्भवः । न च समवायसम्बन्धावच्छिन्नत्वमनुक्त्वाऽनया भङ्ग्या तत्सूचने किं प्रयोजनमिति वाच्यम् । 'अमूर्तगुणवृत्ति' इत्युक्त्या अमूर्तनिरूपितसमवायसम्बन्धावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नावच्छेदकतावतः, 'गुणत्वव्याप्यजातिशून्य' इत्यनेन च गुणवृत्तिभेदीयप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकताविशिष्टप्रतियोगिताकाभाववतश्च लाभेन तत्र समवायसम्बन्धावच्छिन्नत्ववत् निरवच्छिन्नत्वादेरपि प्रवेशावश्यकतया तादृशविलक्षणार्थबोधनायैव तन्निवेशात् । अमूर्तनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताविशिष्टा या गुणवृत्तिभेदप्रतियोगितानिरूपितावच्छेदकता, तद्विशिष्टप्रतियोगिताकाभाववद्गुणत्वं मूर्तगुणत्वमिति तु निष्कृष्टार्थः । आद्यवैशिष्ट्यं स्वाभाववदवृत्तित्व–स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । द्वितीयं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेन । अमूर्तनिरूपिततादृशवृत्तितावच्छेदकता खलु प्रत्येकं सङ्ख्यात्वादावेव प्रसिद्धा, तद्विशिष्टा न तत्तन्निष्ठैव गुणवृत्तिभेदप्रतियोगितावच्छेदकता, तस्याः स्वाभाववदवृत्तित्वात्, स्वावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नत्वाच्च, तादृशावच्छेदकताविशिष्टा च सङ्ख्यात्वत्वाद्यवच्छिन्ना सङ्ख्यात्वादिनिष्ठा समवायावच्छिन्ना प्रतियोगितेति तन्निरूपकाभावो रूपादौ वर्तत एवेति लक्षणसमन्वयः । अयं च निवेशः करणीय एव । अन्यथा अमूर्तनिरूपितरूपत्वसङ्ख्यात्वान्यतरत्वाद्यवच्छिन्नावच्छेदकताकवृत्तितावच्छेदकताया रूपत्वादावपि सत्त्वात्तच्छून्यत्वस्य रूपादौ विरहेणाऽसम्भवापत्तेः । तादृशाभावकूटवत्त्वं चाऽत्र विवक्षितम् । तेन न विशिष्टाभावादिकमादायाऽतिव्याप्तिरित्यवधेयम् ।

लाघवमभिप्रेत्य लक्षणान्तरमाह । मूर्तत्वव्याप्यतावच्छेदकेत्यादि । अमूर्तनिरूपितवृत्तितानवच्छेदकगुणवृत्तिजातिमत्त्वस्येति यथाश्रुतार्थः । अथाऽत्राऽमूर्तनिरूपितवृत्तितानवच्छेदगुणवृत्त्यणुत्वत्वादिजातिमति परिमाणादावतिव्याप्तिः । न च तत्राऽतिव्याप्तिवारणाय परिमाणावृत्तित्वमेव निवेश्यतामिति वाच्यम् । एवमपि शब्दजनकतावच्छेदकवैजात्यावच्छिन्नसंयोगविभागादावतिव्याप्तेरनुद्धारात् । न च तादृशगुणत्वसाक्षाद्व्याप्यजातिमत्त्वमेव विवक्षितं, तथा चाऽणुत्वत्वादेर्गुणत्वसाक्षाद्व्याप्यत्वविरहादेव नाऽतिव्याप्तिः । गुणत्वसाक्षाद्व्याप्यत्वं च गुणत्वव्याप्यजात्यव्याप्यत्वे सति गुणत्वव्याप्यत्वमेव, व्याप्यत्वं च तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वमिति वाच्यम् । रूपत्वादेरपि गुणत्वव्याप्यं यद्रसत्वादि

(१) अयमपि पाठो नाऽस्ति । असत्त्वमेवोचितम् ।

दिनकरी ।

अत्र चाऽऽद्ये शून्यान्तेन सङ्ख्यादेर्बुद्ध्यादेश्च व्युदासः । वेगस्थितिस्थापकोपग्रहाय संस्कारत्वान्येति । द्वितीयेऽवच्छेदकान्तेन सङ्ख्यात्वादेः, वृत्तित्वान्तेन कर्मत्वादेर्व्युदासः ।

॥ इति मूर्तगुणकथनम् ॥

रामरुद्री ।

तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वविरहेण निरुक्तगुणत्वसाक्षाद्व्याप्यत्वपदार्थस्यैवाऽप्रसिद्ध्यापत्तेः। न च गुणत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं यद्गुणत्वसमानाधिकरणं तदन्तर्गतयत्किञ्चिद्व्यक्तिसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमेव तदिति वाच्यम्। तथा सत्यगुणत्वत्वादेरपि गुणत्वसमानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकं यत्स्वात्मकं यत्किञ्चिद्वस्तु, तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वेन गुणत्वसाक्षाद्व्याप्यतया ईदृशनिवेशस्य 'भक्ष्याशयाऽहिमञ्जूषां-'इत्यादिकथनगोचरतापत्तेः । न च गुणत्वविशिष्टविशिष्टान्यत्वे सति गुणत्वविशिष्टत्वमेव तत्, प्रथमवैशिष्ट्यं स्वसामानाधिकरण्य—स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन, द्वितीयवैशिष्ट्यं च स्वसामानाधिकरण्य—स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन, तृतीयवैशिष्ट्यं च स्वसामानाधिकरण्य—स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनेति वाच्यम्। शान्तिकर्मणि वेतालावेशवत् लाघवानुसन्धानेन ईदृशलक्षणानुसरणे महागौरवापत्तेः, वेगत्वादेस्तथात्वेन वेगेऽव्याप्त्यापत्तेश्च । न च गुणत्वसाक्षाद्व्याप्यत्वस्थाने रूपत्वाद्यन्यतमत्वमेव निवेश्यम्, एवं चाऽन्यतमत्वघटकभेदप्रतियोगितावच्छेदककोटौ संस्कारत्वाप्रवेशाल्लाघवमपीति वाच्यम् । तथा सति तत्कोटौ सङ्ख्यात्वाद्यनिष्टधर्माप्रवेशस्याऽप्यनतिप्रयोजनकत्वेन तन्निवेशस्याऽयुक्ततया तदघटितरूपत्वाद्यन्यतमत्वनिवेशे च अमूर्तनिरूपितवृत्तितानवच्छेदकत्वांशवैयर्थ्यप्रसक्त्या लक्षणपरिष्कारस्य कथञ्चिदप्यसम्भवादिति। न चाऽमूर्तनिरूपितवृत्तितावच्छेदकीभूतगुणत्वव्याप्यसंस्कारत्वान्यजातिशून्यगुणत्वमेव तत्त्वम्, तत्र चैकस्य गुणपदस्याऽप्रवेशात्पूर्वलक्षणतो लाघवमपीति वाच्यम्। पूर्वपरिष्कारेऽपि गुणत्वनिवेशस्य तथाविधपरिष्कारौपयिकतया एवाऽभिहितत्वेनाऽस्य पूर्वलक्षणभेदादिति चेत्,

मैवम्। व्याप्यत्वपदेन न्यूनवृत्तित्वस्यैवाऽत्राऽभिहितत्वात्। तथा च मूर्तवृत्तिभेदप्रतियोगितावच्छेदकत्वे सति मूर्तवृत्तिर्यस्तद्वृत्तिगुणवृत्तिजातिमत्त्वं निर्गलितार्थः। रूपादीनां च तादृशमनःप्रभृतिमूर्तवृत्तिभेदप्रतियोगितावच्छेदकतया पृथिव्यादिरूपमूर्तवृत्तित्वेन च तद्वृत्तिरूपत्वादिरूपगुणवृत्तिजातिमादाय लक्षणसमन्वयः। बुद्ध्यादीनां मूर्तवृत्तिभेदप्रतियोगितावच्छेदकत्वेऽपि मूर्तवृत्तित्वविरहेण, सङ्ख्यादीनां मूर्तवृत्तित्वेऽपि मूर्तवृत्तिभेदप्रतियोगितावच्छेदकत्वविरहेण च तत्र नाऽतिव्याप्तिः। न चाऽत्र परत्वापरत्वयोरव्याप्तिः, तयोर्मूर्तवृत्तिभेदप्रतियोगितावच्छेदकत्वविरहादिति वाच्यम्। यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तद्वृत्तिभेदमादायैव तत्र लक्षणसमन्वयात्। अथैवमणुत्वादेरपि तथात्वेन तत्राऽतिव्याप्तिरिति चेन्न। मूर्तवृत्तिभेदप्रतियोगितावच्छेदकतावच्छेदकत्वे सती मूर्तवृत्तितावच्छेदको यो गुणविभाजकोपाधिस्तद्वत्त्वस्यैव निवेशितत्वेन तत्राऽतिव्याप्त्यभावात्। सङ्ख्यापरिमाणादिमद्भेदस्य कुत्राऽपि मूर्तेऽसम्भवात्। गुणविभाजकोपाधित्वं चाऽस्माभिः प्राङ्निरूपितं पदार्थविभाजकोपाधित्वमिवाऽवगन्तव्यं तत एव अवच्छेदकतावच्छेदकसम्बन्धविशेषाश्च यथायथं समवायादयो निवेशनीयाः। मूर्तत्वं पुनरिह परिच्छिन्नपरिमाणवत्त्वमेव, न तु क्रियाजनकतावच्छेदकतया सिद्धो जातिविशेषः, तथा सति तस्योत्पन्नविनष्टघटादावपि सत्त्वेन तत्र च सङ्ख्यादिमद्भेदस्याऽपि सत्त्वेन सङ्ख्यादावतिव्याप्त्यापत्तेरित्यादिकं बहुतरमूहनीयम्। **आद्ये**–आद्यपरिष्कारे। **सङ्ख्यादेर्बुद्ध्यादेश्चेति**। मूर्तामूर्तगुणत्वामूर्तगुणत्वरूपविशेषापेक्षया द्विधा सङ्कीर्तनम्। **द्वितीये**–द्वितीयपरिष्कारे। इति मूर्तगुणकथनम् ॥

**धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥**
**एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः ।**
**सङ्ख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥**

अमूर्तगुणा इति । **मूर्तेषु न वर्तन्ते इत्यर्थः** । इत्यमूर्तगुणकथनम् ।

दिनकरी ।

मूले 'एतेऽमूर्तगुणाः' इत्यत्राऽकारप्रश्लेषो बोध्यः । ननु 'धर्म–' इत्यादिमूलेनैतेषाममूर्तवृत्तिगुणत्वं साधर्म्यमुक्तम्, तत्सङ्ख्यादावतिव्याप्तमत आह । **मूर्तेष्विति** । मूर्तावृत्तिगुणत्वमेव तेषां साधर्म्यमित्यर्थः । न च तथाऽप्यमूर्त्तमात्रवृत्तिसङ्ख्यादावतिव्याप्तिरिति वाच्यम् । मूर्त्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य, मूर्तत्वाभावव्याप्यतावच्छेदकपरिमाणावृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् । आद्ये शून्यान्तेन सङ्ख्यादिरूपादिव्युदासः । सत्तामादायाऽसम्भववारणाय गुणत्वव्याप्येति । कर्मण्यतिव्याप्तिवारणाय विशेष्यीभूतगुणत्वस्य निवेशः । द्वितीये परममहत्त्वत्वजातिमादायाऽतिव्याप्तिवारणाय परिमाणावृत्तीति । इत्यमूर्तगुणकथनम् ।

ननु 'उभयेषां गुणाः–' इति मूलेन सङ्ख्यादिपञ्चानामुभयवृत्तिगुणत्वं साधर्म्यमुक्तम्, तच्च रूपादावतिव्याप्तमत 'उभय' पदं मूर्त्तामूर्त्तपरतया व्याचष्टे । **मूर्तामूर्तेति** । न च

रामरुद्री ।

**अकारप्रश्लेष इति** । अन्यथा मूर्तगुणा इति भ्रमः स्यादिति भावः । मूले–**मूर्तेषु न वर्तन्त इति** । अत्राऽपि अमूर्तानामेव गुणा इति व्युत्पत्त्या एतादृशेऽर्थे मूलाशयो निष्कर्षणीयः । मूलोक्तं साधर्म्यमाक्षिपति–न **चेत्यादिना** । **अमूर्तमात्रवृत्तिसङ्ख्यादाविति** । गगनगतैकत्वादावित्यर्थः । **मूर्तगुणवृत्तीत्यादि** । अत्राऽपि गुणपदं पूर्ववदेव सार्थकतां नेयम् । शेषं पूर्ववत् । **मूर्तत्वाभावव्याप्यतावच्छेदकेत्यादि** । अस्याऽपि परिष्कारः **'मूर्तत्वव्याप्यतावच्छेदक–'** इत्यादिपूर्वसाधर्म्यव्याख्यानावसरोक्तदिशाऽवसेयः । अत्र च पूर्ववदेवाऽमूर्तवृत्तिभेदप्रतियोगितावच्छेदकत्वे सति अमूर्तवृत्तिर्यस्तद्वृत्तिजातिमत्त्वमेव निर्गलितार्थो वक्तव्यः । तत्र च तादृशपरममहत्त्वत्वमादाय परिमाणेऽतिव्याप्तिवारणाय **परिमाणावृत्तित्वमेव जातौ** विशेषणं देयम्, न तु गुणविभाजकत्वं, गौरवात् । अत्र परिमाणान्यस्य तथाविधस्य व्यावर्त्यस्याऽभावेन तन्निवेशस्याऽकिञ्चित्करत्वात् । अत एव मूर्तगुणत्वसाधर्म्यव्याख्यानावसरे जातौ गुणवृत्तित्वमात्रमुपात्तम्, न तु परिमाणावृत्तित्वम्, इह तु परिमाणावृत्तित्वमेवेत्युक्त एवाऽर्थो दृढ इति मन्तव्यम् । गुणवृत्तित्वं त्वत्र न निवेश्यम्, कर्मादेर्व्यावर्त्यस्याऽत्राऽसम्भवादिति ध्येयम् । अमूर्तत्वं तु परममहत्परिमाणवत्त्वमेव, न तु परिच्छिन्नपरिमाणवत्त्वाभावः, तथा सति घटादेरप्युत्पत्तिक्षणावच्छेदेन तच्छून्यतया तद्वृत्तीनां रूपादीनामप्यमूर्तगुणत्वापत्तेः । वस्तुतस्तु तादृशद्रव्यत्वव्याप्यतावच्छेदकत्वमेव विवक्षितम् । उत्पन्नविनष्टानङ्गीकाराच्च न तमादाय रूपादावतिव्याप्तिः । तेन कण्ठतो मूर्तत्वाभावव्याप्यत्वोक्तावपि न क्षतिः । भेदस्य व्याप्यवृत्तित्वाद्देव च नोत्पत्तिक्षणावच्छिन्नघटादिकमादाय रूपादावतिव्याप्तिः । उत्पन्नविनष्टाङ्गीकारे तु अमूर्तत्वं परममहत्परिमाणरूपमेव ग्राह्यमिति न दोषः । शेषमन्यत्सुगमम् । इत्यमूर्तगुणकथनम् ॥

---

(१) अत्र 'मूर्तवृत्तिवृत्त्यमूर्तवृत्तिवृत्तिगुणत्वव्याप्य(व्याप्य)जातिमत्त्वं तत्त्वम् । (सङ्ख्या)(द्वित्व)त्वादिकमादाय लक्षणसमन्वयः।'इत्यधिकः पाठः प्राचीनपुस्तके दृश्यते । परं तु टिप्पणीस्थ इवाऽयं प्रतिभाति ।

उभयेषामिति । **मूर्तामूर्तगुणा** इत्यर्थः(१) ॥८६॥८७॥८८॥

इति मूर्तामूर्तगुणकथनम् ।

**दिनकरी ।**

मूर्तमात्रवृत्तिसङ्ख्यादावव्याप्तमिति वाच्यम् । कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य, द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वस्य वा विवक्षितत्वात् ॥ ८६ ॥ ८७ ॥ ८८ ॥

॥ इति मूर्तामूर्तगुणकथनम् ॥

**रामरुद्री ।**

**'उभयेषां गुणा मताः'** इति मूलम् । तत्रोभयवृत्तिगुणत्वं उभयनिरूपितवृत्तित्वमित्युक्ते परिमाणादावव्याप्तिरत उभयनिरूपितगुणनिष्ठवृत्तितावच्छेदकधर्मवत्त्वमुभयगुणत्वमिति वक्तव्यम्, तदाक्षिपति-**नन्वित्यादिना । रूपादावतिव्याप्तमिति ।** तेषामपि रूपत्वादिनोभयवृत्तित्वादिति भावः । **मूर्तमात्रेत्यादि ।** घटगतैकत्वादावित्यर्थः । तस्या उभयवृत्तित्वविरहादिति भावः । **कालवृत्तिवृत्तीत्यादि ।** कालवृत्तयः सङ्ख्यादयः पञ्च, तद्वृत्तिर्या गुणत्वव्याप्या जातिस्तद्वत्त्वं तेषामिति लक्षणसमन्वय इति भावः। सत्ताजातिमादायाऽतिव्याप्तिवारणाय **गुणत्वव्याप्येति ।** तत्त्वं च गुणवृत्तिभेदप्रतियोगितावच्छेदकत्वम् । आद्यं वृत्तित्वं समवायेन बोध्यम् । तेन रूपादेरपि कालिकविशेषणतादिना कालवृत्तित्वेऽपि न क्षतिः । द्वितीयवृत्तित्वं धर्मवत्त्वं च समवायेन बोध्यमिति सूचनाय **जातिपदम् ।** तेन कालवृत्तिद्रव्यत्वादिनिरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावद्द्रव्यत्ववति द्रव्यादौ, कालिकेन तादृशसङ्ख्यात्वादिमति रूपादौ च नाऽतिव्याप्तिः ।

ननु एतादृशस्य उभयगुणत्वस्य पारिभाषिकत्वमित्यत आह-**द्रव्यत्वेत्यादि ।**

केचित्तु नव्यमते कालादेरीश्वरानतिरिक्ततया ज्ञानादावतिव्याप्तिरतो लक्षणान्तरमित्याहुः । तन्न । तन्मते सङ्ख्यादेर्गुणत्वानङ्गीकारेण तद्घटितस्य परिष्कारस्य नव्यमताभिप्रायकत्वानौचित्यात् ।

**द्रव्यत्वसमव्यापकतावच्छेदकेत्यादि ।** ननु तादृशजातिपदेन गुणत्वस्याऽपि सङ्ग्रहात् तद्वति रूपादावतिव्याप्तिः । न च गुणत्वव्याप्यतादृशजातिमत्त्वमेव विवक्षितमतो नाऽतिव्याप्तिरिति वाच्यम् । तथा सति द्रव्यत्वव्यापकतावच्छेदकतादृशजातिमत्त्वमित्युक्तावेव सामञ्जस्ये द्रव्यत्वसमव्यापकतावच्छेदकत्वपर्यन्तनिवेशवैयर्थ्यापत्तेः । न च व्यापकत्वमत्र येन केनाऽपि सम्बन्धेन विवक्षितम्, तथा च विषयतया ज्ञानादेरपि व्यापकत्वात्तद्वारणायैव द्रव्यत्वव्याप्यतावच्छेदकत्वसङ्ग्राहकसमव्यापकतावच्छेदकत्वप्रवेशः, ज्ञानादेर्निरुक्तसम्बन्धेन गुणादावपि सत्त्वेन च द्रव्यत्वव्याप्यत्वविरहान्नाऽतिव्याप्तिरिति तत्प्रवेशः सफल एवेति वाच्यम् । तथा सति सङ्ख्यादीनामपि तादात्म्येन स्वनिष्ठानां द्रव्यत्वव्याप्यत्वविरहेणाऽसम्भवप्रसङ्गात्, यत्किञ्चित्सम्बन्धेन व्याप्यत्वव्यापकत्वयोः प्रवेशे तादात्म्येन द्रव्यस्याऽपि द्रव्यत्वव्याप्यत्वेन तव्द्यापकत्वेन च द्रव्यादावतिप्रसङ्गादिति चेन्न । अत्र द्रव्यत्वव्यापकतावच्छेदकत्वं द्रव्यवृत्तिभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वम्, न तु द्रव्यवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वम्, तथा सति सर्वत्रैव जन्यद्रव्य उत्पत्तिक्षणाद्यवच्छेदेन सङ्ख्यात्वाद्यवच्छिन्नाभावसत्त्वेनाऽसम्भवप्रसङ्गात् । भेदघटितव्यापकत्वनिवेशे तु भेदस्य व्याप्यवृत्तितया आद्यक्षणावच्छेदेन तदसम्भवान्न दोषः । एवञ्च निरुक्तव्यापकतावच्छेदिका या गुणत्वव्याप्या जातिस्तद्वत्त्वमेव वाच्यम् । अन्यथा तादृशसत्तागुणत्वादिजातिमादाय रूपादावतिव्याप्त्यापत्तेः । गुणत्वव्याप्यत्वं तु गुणवृत्तिभेदप्रतियोगितावच्छेदकत्वमात्रम्, न तु गुणत्वसमानाधिकरणत्वमपि तत्र निवेश्यं, वैयर्थ्यात् । तथा च आत्मवान्नेति भेदाप्रसिद्ध्याऽऽत्मत्वस्याऽपि द्रव्यवृत्तिभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वेन गुणवृत्तिभेदप्रतियोगितावच्छेदकत्वरूपगुणत्वव्याप्यत्ववत्त्वेन च तद्वत्यात्मादावतिव्याप्तिवारणाय समव्यापकतावच्छेदकत्वनिवेशः । न च द्रव्यत्वसमव्यापकतावच्छेदकत्वनिवेशोऽपि न सङ्गच्छते, उत्पन्नविनष्टद्रव्ये सङ्ख्यात्वाद्यवच्छिन्नाभावसत्त्वात्, समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन व्यापकत्वनिवेशे च भेदगर्भव्यापकत्वानुसरणं निर्युक्तिकमिति वाच्यम् । उत्पन्नविनष्टद्रव्यानभ्युपगन्तृमत एवैतल्लक्षणकरणात्, द्रव्यत्वपदेन संयोगस्य, गुणवत्त्वस्य

**संयोगश्च विभागश्च सङ्ख्या द्वित्वादिकास्तथा ।**
**द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥**
**अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ।**

अनेकाश्रिता इति । **संयोगविभागद्वित्वादीनि द्विवृत्तीनि; त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ॥ ८९ ॥** इत्यनेकाश्रितगुणकथनम् ।

अत इति । **रूप-रस-गन्ध-स्पर्शैकत्व-परिमाणैकपृथक्त्व-परत्वापरत्व-**

**दिनकरी ।**

नन्वनेकाश्रितत्वं संयोगादावव्याप्तम्, अनेकपदस्य बहुत्वविशिष्टे शक्तत्वादत आह । **संयोगेति** । तथा चैकत्वभिन्नसङ्ख्याविशिष्टवाचकत्वमनेकपदस्येति न तत्राऽव्याप्तिरिति, भावः । स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वस्य विवक्षितत्वान्न तत्राऽव्याप्तिरित्यपि केचित् ॥ ८९ ॥ इत्यनेकाश्रितगुणकथनम् ।

'एकैकवृत्तयः-' इति मूलस्य **स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकै-**

**रामरुद्री ।**

वा विवक्षिततया तादृशद्रव्यस्य निरुक्तद्रव्यत्वविरहाच्च । वस्तुतस्तु द्रव्यवृत्तिप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपमेव व्यापकतावच्छेदकत्वमिहाऽभिप्रेतम् । प्रतियोगित्वं च समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नं ग्राह्यम् । अन्यथोत्पन्नविनष्टद्रव्यमादायाऽसम्भवप्रसङ्गात् । व्यापकत्वस्य प्रतियोगिवैयधिकरण्याघटितस्य विवक्षणे संयोगादेरव्याप्यवृत्तेरनधिकरणदेशावच्छेदेनाऽभावस्य द्रव्ये सत्त्वादव्याप्त्यापत्तेः । तथा चाऽऽत्मत्वादेः प्रतियोगिव्यधिकरणतादृशाभावप्रतियोगितानवच्छेदकतया आत्मादावतिव्याप्तिवारणाय समव्यापकतावच्छेदकत्वनिवेशः । अत्र व्यापकत्वतदवच्छेदकतयोर्व्याप्यत्वतदवच्छेदकतयोश्च समवायवच्छिन्नत्वलाभाय जातिपदमिति विभावनीयम् ॥ ८६ ॥८७ ॥८८॥

॥ इति मूर्तामूर्तगुणकथनम् ॥

**संयोगादावव्याप्तमिति** । तेषां द्विनिष्ठत्वादिति भावः । **अनेकपदस्येति** । पदत्वोक्त्या वक्ष्यमाणशक्ते रूढिरूपत्वं सूचितम् । अन्यथा तस्य वाक्यत्वेन पदत्वानुपपत्त्या तदुक्त्यनुपपत्तेः । तेनाऽनेकपदस्य योगेन वस्तुद्वयवाचकत्वेऽपि न क्षतिः, योगाद्रूढेर्बलीयस्त्वादिति ध्येयम् । **बहुत्वविशिष्ट इति** । बहुत्वावच्छिन्न इत्यर्थः । **एकत्वभिन्नसङ्ख्याविशिष्टवाचकत्वमिति** । एकत्वभिन्नसङ्ख्यावच्छिन्नबोधकत्वमित्यर्थः । **अनेकपदस्येति** । तादृशानुपूर्वीघटकपदद्वयस्येत्यर्थः तेन नाऽसङ्गतिः । इदं त्ववधेयम् । एतादृशलक्षणस्य द्रव्ये सामान्ये चाऽतिव्याप्तिः । न चैकत्वभिन्नसङ्ख्यावच्छिन्नपर्याप्तिकत्वमेव विवक्षितमिति वाच्यम् । तथा सति संयोगादेरेकत्वभिन्नसङ्ख्याविशिष्टनिष्ठत्वेऽपि तादृशसङ्ख्यावच्छिन्नपर्याप्तिकत्वविरहेणाऽव्याप्त्यापत्तेः । मैवम् । अनेकाश्रितगुणत्वस्यैव साधर्म्यतया दोषवारणसम्भवादिति । **स्वाश्रयप्रतियोगिकेत्यादि** । सामान्यादावतिव्याप्तिवारणाय गुणत्वप्रवेशो बोध्यः । केचिदित्यस्वरससूचनाय, तद्बीजं तु उभयभेदमादाय रूपादावतिव्याप्तिः, तद्वारणाय व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य प्रतियोगितायां निवेशे तु एकत्वानवच्छिन्नपर्याप्तिकत्वरूपव्यासज्यवृत्तित्वनिवेशाद्गौरवमित्यवधेयम् ॥ ८९ ॥ इत्यनेकाश्रितगुणकथनम् ॥

**स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वका इति** । यत्किञ्चिदेकत्ववृत्त्यभावप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगितानिरूपकभेदवद्वृत्तय इत्यर्थः। तेन नाऽननुगमः । अत्र एकत्ववृत्तिः स्वसामानाधिकरण्यभेदप्रतियोगितावच्छेकदकत्वं नाऽस्तीत्याकारकोऽभावो विवक्षितः । भेदश्चाऽत्र प्रतियोग्यवृत्तित्वेन विशेषणीयः । तेन तत्तद्रूपाधिकरण्यनिष्ठैकत्वादेरपि तादृशोभयभेदप्रतियोगितावच्छेदकत्वेऽपि नाऽसम्भवः। अत्राऽपि पूर्ववदेव गुणत्वे सतीति विशेषणं देयम् । तेन कर्मादौ नाऽतिव्याप्तिः

बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥

बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-गुरुत्व-द्रवत्व-स्नेह-संस्कारादृष्ट-शब्दा इत्यर्थः । इत्येकैकवृत्तिगुणकथनम् ।

दिनकरी ।

त्वका इत्यर्थः । यद्वा स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिन इत्यर्थः ।

॥ इत्येकैकवृत्तिगुणकथनम् ॥

रामरुद्री ।

यद्यपि सर्वेषामेवैकत्ववद्भेदानां पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिवृत्तित्वेन लक्षणघटकत्वासम्भवाद्धटभिन्नभेदस्यैव तादृशस्य ग्रहीतुं शक्यतया सर्वत्रोभयवृत्तिगुणेऽतिव्याप्तिः । न च तादात्म्यसम्बन्धावच्छिन्नस्वनिरूपितप्रतियोगिताश्रयावृत्तित्वनिवेशादेव निरुक्तदोषवारणं सम्भवतीति वाच्यम् । एवमपि संयोगादावतिव्याप्तेर्दुर्वारत्वात् । तत्र तत्समानाधिकरणैकत्ववद्भेदस्याऽपि कालिकेन स्ववद्भिन्नभेदस्वरूपतया तादृशस्ववद्भिन्ने गगनादौ वृत्तेः प्रतियोग्यवृत्तित्वविरहेण लक्षणाघटकत्वात् । न च तर्हि भेदे प्रतियोग्यवृत्तित्वं विहाय व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वं निवेश्यमिति वाच्यम् । उभयभेदगगनाभावयोरैक्येन गगननिष्ठतादृशप्रतियोगितामादायोभयभेदस्याऽपि लक्षणघटकत्वापत्त्याऽसम्भवापत्तेः । न च व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगित्वानिरूपकत्वमेव तत्र निवेश्यमिति वाच्यम् । एवं सति तत्तदेकत्वद्भेदस्याऽपि तत्तदेकत्ववाच्यत्वोभयाभावरूपतया व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगित्वानिरूपकत्वविरहेण लक्षणाघटकतयाऽभावाप्रसिद्ध्याऽसम्भवापातादिति दोषः सम्भवति, तथाऽपि तादृशाभावीयप्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशान्न कोऽपि दोष इति विभावनीयम् । नन्विदं लक्षणं भेदस्याऽव्याप्यवृत्तित्वाङ्गीकारेऽसम्भवप्रसञ्जकम्, एकत्वादेरपि उत्पत्तिकालाद्यवच्छेदेन स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकैकत्वकत्वादित्यस्वरसतो लक्षणान्तरमाह यद्वेति । स्वाश्रयान्योन्याभावसमानाधिकरणाभावप्रतियोगितानवच्छेदकं यद्धर्मावच्छिन्नाभाववत्त्वं, तद्धर्मवन्त इत्यर्थः। स्वं-तत्तद्गुणः । तेन न व्यापकत्वाप्रसिद्धिः, न वा एकत्वादावव्याप्तिप्रसक्तिः। एकत्वाभावस्य एकत्वादिमद्भेदसमानाधिकरणाभावप्रतियोगित्वादित्यवधेयम् । अथ स्वाश्रयस्य व्यासज्यवृत्तिधर्मावच्छिन्नभेदमादायाऽव्याप्तिवारणाय व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य स्वाश्रयान्योन्याभावीयप्रतियोगितायां निवेशावश्यकत्वे संयोगादिगुणानामपि तथात्वापत्तिर्दुर्वारा, तेषामपि स्वाश्रयभेदव्यापकाभावप्रतियोगित्वात् । भेदस्याऽव्याप्यवृत्तित्वेनाऽव्याप्तेर्वारणाय स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य लक्षणे निवेशे च एकवृत्तित्वपरिष्कारे तत्पर्यायस्योभयावृत्तित्वस्य प्रवेशेनाऽऽत्माश्रयः । कथञ्चित्तन्निवेशेऽपि च स्वाश्रयभेदव्यापकव्यासज्यवृत्तिधर्मावच्छिन्नाभावमादायाऽतिव्याप्तिः संयोगादौ । न च व्यासज्यवृत्तिधर्मावच्छिन्नाभावस्य न व्यापकत्वसम्भवः, तदभावस्य तादृशोभयस्वरूपत्वेन तदन्तर्गतस्य संयोगादेःस्वाश्रयभेदसामानाधिकरण्यनियमादिति वाच्यम् । सर्वेषामेवाऽभावानां पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकाभावप्रतियोगिनां तादृशभेदसमानाधिकरणतादृशाभावप्रतियोगित्वमादायाऽसम्भवापत्तेरेवमपि दुर्वारत्वादिति चेन्मैवम् । स्वनिष्ठावच्छेदकतानिरूपकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकाभावत्वनिरूपितप्रतियोगितावच्छेदकधर्मवत्त्वस्यैव निरुक्तलक्षणपरिष्कृतार्थत्वेनाऽनुपपत्त्यभावात् । सामानाधिकरण्यघटकमधिकरणत्वं च निरवच्छिन्नस्वरूपेण बोध्यम् । अथाऽत्र कीदृशसम्बन्धेन स्वावच्छिन्नभेदसामानाधिकरण्यं निवेश्यते । न तावद्येनकेनाऽपि, तथा सति एकत्वाद्यभावस्याऽपि एकत्वादिमद्भेदवति कालिकेन वृत्तियोंऽभावस्तत्प्रतियोगित्वेनाऽव्यापकत्वप्रसङ्गादिति चेन्मैवम् । समवायेनैव तस्य निविष्टत्वादिति निर्व्यलीकः पन्थाः । ॥ इत्येकैकवृत्तिगुणकथनम् ॥

**अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ।**

बुद्ध्यादीति । बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्ना इत्यर्थः । स्पर्शान्ताः-रूप-रस-गन्ध-स्पर्शा इत्यर्थः । द्रवः-द्रवत्वम् । वैशेषिकाः-विशेषा एव वैशेषिकाः, स्वार्थे ठक्, विशेषगुणा इत्यर्थः । इति विशेषगुणकथनम् ।

दिनकरी ।

**स्वार्थे ठगिति ।** विनयादिभ्यः स्वार्थे ठग्विधानात्, विशेषशब्दस्य तदन्तर्गतत्वात्, विनयादेराकृतिगणत्वादिति भावः । **विशेषगुणा इत्यर्थ इति ।** विशेष·

रामरुद्री ।

**विनयादिभ्य इति ।** 'विनयादिभ्यष्ठक् ( ५ । ४ । ३ )' इति सूत्रेणेति शेषः । ननु विनयादिभ्यष्ठग्विधानेऽपि विशेषशब्दात्तदविधानादनुपपत्तिस्तदवस्थैवेत्यत आह । **विशेषशब्दस्येति ।** ननु विनयादिगणे विशेषशब्दस्य कण्ठतोऽपठनात् तस्य कथं तदन्तर्गतत्वमित्यत आह । **विनयादेराकृतिगणत्वादिति । आकृत्या**—पठितगणविषयकशास्त्रविहितकार्यसदृशकार्यवत्त्वेन **गण्यन्ते**-ज्ञायन्ते तद्गणेऽपठिता अपि तत्तच्छास्त्रविहिततत्तद्गणान्तर्गतत्वप्रयुक्तकार्यवत्तयेति शेषः, ते आकृतिगणाः, तथाविधत्वादित्यर्थः । तथा च विशेषशब्दस्य विनयादावपठनेऽपि विनयादित्वप्रयुक्तठगुपकार्याश्रयतया विनयाद्यन्तर्गतत्वमक्षुण्णमेवेति मन्तव्यम् । **इति भाव इति ।** तथा च 'ठस्येकः ( ७ । ३ । ५० )' इत्यनुशासनबलेन इकादेशे 'किति च ( ७ । २ । ११८ )' इत्यनेन आद्यस्याऽचो वृद्धौ वैशेषिक इति सिद्धमिति भावः । इदं त्ववधेयम् । वैशेषिकशब्दस्य स्वार्थे ठग्विधानेन निष्पन्नत्वे इतरव्यवच्छेदरूपविशेषपदार्थ-एव तदर्थो वक्तव्यः, तथा च वैशेषिकस्य गुणा इति तत्पुरुषाश्रयणेनैव वैशेषिकगुणा इति रूपं निष्पादनीयम्, एवं च मूले स्वार्थे ठकोऽभिप्रेतत्वे वैशेषिकगुणा इत्येव वक्तव्यमापतति, न तु **'वैशेषिका गुणाः'** इति, तथाऽपि विशेषशब्दस्यैवाऽत्र व्यवच्छेदके लाक्षणिकत्वेन करणसाधनत्वेन वा कथञ्चिन्मूलं सङ्गमनीयम् । वस्तुतस्तु विशेषो व्यवच्छेदः प्रयोजनं येषां ते वैशेषिका इत्येव रूपं साधनीयम्, तत्र ठकोऽसम्भवेऽपि 'प्रयोजनम् ( ५ । १ । १०९ )' इत्यनुशासनबलेन ठञः प्राप्तौ तत्रेकादेशे 'तद्धितेष्वचामादेः (७।२।११७)' इत्यनेनाऽऽद्यस्याऽचो वृद्धिसम्भवादित्यवधेयम् ।

तच्च विशेषगुणत्वं न स्वाश्रयव्यवच्छेदानुमितियोग्यव्याप्यतावच्छेदकगुणत्वव्याप्यजातिमत्त्वम्, संयोगादेरपि तथात्वेनाऽतिव्याप्तेरिति चेत्—

अत्र वर्धमानोपाध्यायाः—पृथिवीवृत्तिवृत्तिजलवृत्तिवृत्तीतर-संयोगावृत्तिगुणत्वव्याप्यजातिमत्त्वमेव विशेषगुणत्वम् । पृथिवीवृत्तिवृत्तित्वं जलवृत्तिवृत्तावन्वितम्, न तु स्वातन्त्र्येणेतरपदार्थतावच्छेदके भेदे, तथा सति गन्धत्व-स्नेहत्वादेरपि यथाक्रमं पृथिवीजलवृत्तिवृत्तित्वेन तदितरत्वविरहेणाऽव्याप्त्यापत्तेः । न च पृथिवीगुरुत्वव्यावृत्तां जलगुरुत्वनिष्ठां, जलगुरुत्वव्यावृत्तां पृथिवीगुरुत्वनिष्ठां च तादृशजातिमादाय गुरुत्वेऽतिव्याप्तिरिति वाच्यम् । पृथिवीजलगुरुत्वयोः परस्परव्यावृत्तवैजात्यसत्त्वे मानाभावात् । अत्र च पृथिवीसंयोगमात्रवृत्तिनिविडत्वरूपजातिं, तेजःसंयोगमात्रवृत्तिकाञ्चनघटारम्भकतावच्छेदकजातिं चाऽऽदाय संयोगेऽतिव्याप्तिवारणाय संयोगावृत्तीति जातौ विशेषणमुपात्तम् । कठिनावयवद्वयविभागव्यावृत्तशब्दविशेषजनकतावच्छेदकजातेः, तेजोवेगातिशयस्य, अत्यन्ताग्निसंयोगोच्छेद्यतावच्छेदकद्रवत्वगतवैजात्यस्य च वारणाय जातौ विभागवेगाजलद्रवत्वावृत्तीत्यपि वक्तव्यम् । न च तथाऽपि तादृशपरममहत्त्वत्वरूपजातिमादाय परिमाणेऽतिव्याप्तिरिति वाच्यम् । तादृशजातौ मानाभावात्, अपकर्षानाश्रयपरिमाणत्वस्यैव परममहत्त्वत्वरूपत्वादित्याहुः ।

तत्तु विशेषगुणशब्दस्य पारिभाषिकनिर्वचनरूपतामाश्रयदिव प्रतिभाति ।

वस्तुतस्तु स्वाश्रयसमानाधिकरणयत्किञ्चिज्जातिव्यापकतावच्छेदिका या स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाधिमदितरभेदव्याप्यतावच्छेदिका गुणत्वव्याप्या जातिस्तद्वत्त्वमेव विशेषगुणत्वं बोध्यम् । तथा

रामरुद्री।

च स्वाश्रयसमानाधिकरणीभूता या रजतोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, लोहोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, सुवर्णोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, मरकतोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, माणिक्योपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, कपिशमात्रवर्णविजातीयवस्तुमात्रवृत्तिवैजात्यरूपा, केवलचित्रवर्णविजातीयवस्तुमात्रनिष्ठवैजात्यरूपा वा या जातिस्तद्व्यापकतावच्छेदकीभूताः स्वाश्रयसमानाधिकरणपृथिवीत्वरूपद्रव्यविभाजकोपाधिमदितरभेदव्याप्यतावच्छेदिकाः पार्थिवशुक्लत्ववैजात्य-नीलत्व-पीतत्व-हरितत्व-रक्तत्व-कपिशत्व-चित्रत्वरूपा जातयस्तद्वत्त्वस्य पार्थिवरूपेषु, जलीयादौ च तादृशविलक्षणाभावस्वरशुक्लत्वभास्वरशुक्लत्वरूपजातिमादाय, रसे निरुक्तदिशैव, गन्धत्वमादाय गन्धे, पार्थिवमात्रवृत्तिवृत्त्यनुष्णाशीतत्व-जलतेजोवृत्तिवृत्तिशीतत्वोष्णत्व-वायुवृत्तिवृत्तिविजातीयानुष्णाशीतत्वरूपजातीरादाय पार्थिव-जलीय-तैजस-वायवीयस्पर्शेषु अनयैव च दिशाऽन्यत्राऽपि लक्षणसमन्वयात्। पार्थिवभागवृत्तिशुक्लरूप-मधुररसयोर्जलव्यावृत्तवैजात्यं तु प्रत्यक्षेणैव सिद्ध्यतीति न दोषः। न हि जले यादृशमुत्कृष्टं शौक्ल्यं, तादृशमेव पृथिव्यामनुभूयते, मधुररस एव वेति। न च तथाऽपि वायवीयपार्थिवस्पर्शयोर्वैजात्यसत्त्वे किं मानमिति वाच्यम्। निमीलितचक्षुषो वायुपृथिव्योरन्यतरस्पर्शोपलम्भे 'वायुर्वाति', 'घटोऽयम्' इत्याद्यव्यभिचरितोपलम्भस्यैव तत्र प्रमाणत्वात्। ननु तथाऽपि अग्निसंयोगनाश्यतावच्छेदकं यत्पार्थिवद्रवत्वमात्रवृत्ति वैजात्यं, तत्स्वाश्रयसमानाधिकरणयत्किञ्चिद्घृतत्वादिरूपजातिव्यापकतावच्छेदकं, स्वाश्रयसमानाधिकरणपृथिवीत्वरूपद्रव्यविभाजकोपाधिमदितरभेदव्याप्यतावच्छेदकमपि, तद्वत्त्वस्य च नैमित्तिकद्रवत्वे सत्त्वादतिव्याप्तिरिति चेन्न। पार्थिवनैमित्तिकद्रवत्वतारतम्येन केषाञ्चित्स्वल्पाग्निसंयोगनाश्यतया, केषाञ्चिच्चाऽधिकाग्निसंयोगनाश्यतया विजातीयाग्निसंयोगत्वेनैव तत्तद्विजातीयद्रवत्वनाशं प्रति कारणताया आवश्यकत्वेन अग्निसंयोगनाश्यतावच्छेदकतयाऽपि पार्थिवद्रवत्वमात्रसाधारणजात्यसिद्धेः पार्थिवद्रवत्वनाशं प्रति अग्निसंयोगत्वेन हेतुताया अङ्गीकर्तुमशक्यत्वात्। न च तत्तद्वैजात्यमादायाऽप्यतिव्याप्तिस्तदवस्थैवेति वाच्यम्। एकघृतत्वजात्यवच्छिन्नस्याऽपि तदन्तर्गतजलतारतम्यप्रयुक्तस्वल्पाधिकाग्निसंयोगनाश्यद्रवत्वतायाः प्रत्यक्षसिद्धत्वात् कस्या अपि जातेः स्वाश्रयसमानाधिकरणजातिव्यापकतावच्छेदकत्वासम्भवेनाऽतिव्याप्तिविरहात्। न च जलतारतम्यादिप्रयुक्तघृतत्वावान्तरजातिव्यापकतावच्छेदकत्वं तत्रैवमपि सुघटमेवेति वाच्यम्। तादृशघृतत्वावान्तरजातीनां मानाभावेनाऽनङ्गीकारात्। न च जलादिघटितघृतावयवसंयोगजन्यतावच्छेदकतयैव तत्सिद्धिरिति वाच्यम्। एवमप्येकेनैव विलक्षणाग्निसंयोगेन घृतादिद्रवत्वोच्छेदवत् जलादिनाशस्याऽप्यानुभविकत्वेन तत्तदग्निसंयोगाव्यवहितोत्तरनाशत्वावच्छिन्नं प्रत्येव तादृशाग्निसंयोगत्वेन लाघवतः कार्यकारणभावकल्पनेन निरुक्तवैजात्यस्यैवाऽसिद्ध्या तत्राऽतिव्याप्तेर्वारयितुं शक्यत्वात्। वस्तुतस्तु अग्निसंयोगेऽपि वैजात्याङ्गीकारोऽप्रामाणिक एव, तथा सत्यभिघातत्वादिना साङ्कर्यप्रसङ्गात्। किन्तु तत्तत्तरतमभावापन्नविजातीयविलक्षणोष्णस्पर्शवदग्निसंयोगाव्यवहितोत्तरद्रवत्वनाशं प्रत्येव तादृशविलक्षणस्पर्शवदग्निसंयोगस्य हेतुत्वम्। उष्णस्पर्शवैजात्यं च प्रत्यक्षेणैव सिद्ध्यतीति विभावनीयम्। अथैवमपि शब्देऽव्याप्तिः, तत्र शब्दत्वजातेर्ग्रहीतुमशक्यत्वात्, तस्याः स्वाश्रयसमानाधिकरणजातिव्यापकतावच्छेदकत्वविरहादिति चेन्न। स्वाश्रयसमानाधिकरणजातिद्रव्यविभाजकोपाध्यन्यतरघटकयत्किञ्चिद्व्यापकताया एव निविष्टत्वात्। न च तथापि द्वेषादावव्याप्तिः स्थिरैव, तत्र द्वेषत्वजातेः स्वाश्रयसमानाधिकरणजातिद्रव्यविभाजकोपाधिव्यापकतावच्छेदकत्वविरहादिति वाच्यम्। तादृशजाति-द्रव्यविभाजकोपाधि-तादृशोपाधिमद्विभाजकोपाध्यन्यतमव्यापकताया एव निविष्टत्वात्। तथा च जीवत्वादिकमादाय लक्षणसमन्वयः। न च तेजोवेगातिशयमादाय वेगेऽतिव्याप्तिरिति वाच्यम्। तादृशवेगातिशयस्य प्रकृष्टाभिघातादिबलेनाऽन्यत्राऽपि सम्भवेन तस्य यत्किञ्चित्स्वसमानाधिकरणजातिव्यापकत्वासम्भवात्। न च स्थितिस्थापके तथाऽप्यतिव्याप्तिरिति वाच्यम्। तस्य पृथिव्यादिचतुष्टयवृत्तित्वाङ्गीकारेणाऽतिव्याप्तिवारणात्। कथमन्यथा तेजसो वह्न्यादेरूर्ध्वगमनं, वायोस्तिर्यग्गमनं च? न च स्थितिस्थापकगतातिशयानादायाऽतिव्याप्तिः सम्भवतीति वाच्यम्। तादृशातिशयानां मिथो विरुद्धजातीयद्रव्यवृत्तित्वस्याऽप्यानुभविकत्वेनाऽदोषात्। न हि जलादेर्यादृशः स्थिति-

दिनकरी ।

गुणत्वं च भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी, तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्य(१)गुणत्वम् । अत्र जात्यादावतिव्याप्तिवारणाय विशेष्यम् । गुरुत्वनैमित्तिकद्रवत्वयोर्वारणाय गुरुत्वेत्यादि । सांसिद्धिकद्रवत्वसङ्ग्रहायाऽजलेति(२) । संयोगादिवारणाय सत्यन्तम् । भावनायामव्याप्तिवारणायाऽऽद्यमन्यान्तं सत्यन्तघटकसमवायिविशेषणम् । सत्ता-

रामरुद्री ।

स्थापकेऽतिशयः, स तादृशे घृतादौ नेति वक्तुं शक्यम्, प्रपञ्चयिष्यते चैतत्संस्कारनिरूपण इत्यवधेयम् । न चैतादृशार्थस्याऽपि 'विशेषगुण' शब्दार्थत्वं कथमिति शङ्क्यम् । यत्किञ्चिज्जात्यवच्छेदेन यत्किञ्चिद्द्रव्यविभाजकोपाध्यवच्छेदेन तादृशोपाधिमद्विभाजकोपाध्यवच्छेदेन वा यत्किञ्चिद्द्रव्यविभाजकोपाधिमदितर भेदानुमितियोग्यगुण एव विशेषगुणघटकविशेषशब्दस्य तात्पर्योन्नयनेन निरुक्तानुमितौ तद्योग्यतायास्तज्जनकज्ञानविषयत्वरूपायाः निरुक्तपरिष्कारेणाऽभिलापात् । तथा हि अवच्छेदकावच्छेदेनाऽनुमितौ अवच्छेदकावच्छेदेन हेतुमत्त्वमावश्यकमेव, अयमंशः यत्किञ्चिज्जातिप्रभृत्यन्यतमव्यापकतावच्छेदकत्वनिवेशनेन प्राप्तः, व्याप्यतावच्छेदकधर्मवत्त्वमपि तथैवेति सर्वमवदातम् ।

अत्र च परिष्कारे तादृशघटत्वादिजातिमादाय घटादावतिव्याप्तिवारणाय गुणत्वव्याप्यत्वस्य जातौ निवेशः । तदर्थश्च गुणवृत्तित्वमात्रमेव, आधिक्ये प्रयोजनविरहात् । जातिपदं समवायेन तद्वत्तालाभायेत्यवधेयम् ।

इदानीं निरुक्तस्य विशेषगुणलक्षणस्य सम्भवेऽपि ततो लाघवेन पारिभाषिकमेव तत्परिष्कारं स्वयमाह–**विशेषगुणत्वं चेत्यादिना** । वस्तुतस्तु पार्थिवजलीयरूपयोर्वैलक्षण्यस्याऽनङ्गीकर्त्तुर्नैमित्तिकद्रवत्वेऽत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यस्याङ्गीकर्तुश्च मतसाधारण्येनाऽऽह–**विशेषगुणत्वं चेत्यादीति** सम्यक् । तेनाऽग्रे सामान्यगुणनिर्वचने स्वयं तन्मताङ्गीकारेऽपि न क्षतिरित्यवधेयम् । ननु भावनान्यो यो मनोवृत्तिवृत्तिधर्मसमवायी, तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वमेव कुतो लक्षणं न कृतम्? अत्र स्पर्शावृत्तित्वानिवेशेन लाघवस्याऽपि सम्भवादिति चेन्न । तद्दृशगुणत्वादिजातिमादायाऽसम्भवस्य वारणार्थमेव तदुपादानस्याऽऽवश्यकत्वे मनोवृत्तित्ववायुवृत्तित्वयोर्निवेशे विनिगमकासम्प्रतिपत्तेः, कालिकदैशिकपरत्वापरत्वसाधारणजातिद्वयानुपगमे मनसि कालिकपरत्वापरत्वाभावेन कालिकपरत्वापरत्वयोरतिव्याप्त्यापत्तेश्चेति विभावनीयम् । **जात्यादाविति** । **आदिना** विशेषसमवायाभावानां परिग्रहः । **विशेष्यमिति** । गुणत्वं लक्षणे निविष्टमिति भावः । **अजलेतीति** । जलावृत्तीत्यर्थः । तैजसपार्थिवसाधारणनैमित्तिकद्रवत्वत्वरूपजात्यनभ्युपगमाभिप्रायेणेदम् । अन्यथा नैमित्तिकद्रवत्वान्यत्वमेव ब्रूयादिति । न चाऽग्निसंयोगकार्यतावच्छेदकतयैव तत्सिद्धिरिति वाच्यम् । अग्निसंयोगमात्रस्य द्रवत्वाजनकतया तत्तद्विजातीयाग्निसंयोगस्य तत्तद्विजातीयद्रवत्व एव कारणताया उपगन्तव्यतया सकलनैमित्तिकद्रवत्वसाधारणजात्यसिद्धेः । विस्तरस्तु पूर्वमेव प्रपञ्चितः । **संयोगादीति** । **आदिना** विभागवेगपरत्वापरत्वसङ्ख्यापरिमाणपृथक्त्वानां परिग्रहः । **सत्यन्तमिति** । तदन्यत्वे सतीत्यन्तमित्यर्थः । **भावनायामव्याप्तिवारणायेति** । अन्यथा तस्यास्तादृशसंस्कारत्वरूपधर्मसमवायित्वेन तदन्यत्वविरहेणाऽव्याप्तिः स्यादेवेति भावः । ननु भावनान्यत्वस्य सामानाधिकरण्येन धर्मविशेषणत्वे भावनान्यत्वविशिष्टस्याऽपि संस्कारत्वस्य वायुवृत्तिवृत्तित्वसम्भवात्संस्कारत्वावच्छिन्नभेदस्य च भावनायामभावेनाऽव्याप्तिस्तदवस्थैव । न च भावनान्यत्वविशिष्टसंस्कारत्वस्य वायुवृत्तिवृत्तित्वेऽपि तादृशविशिष्टसंस्कारत्वावच्छिन्नप्रतियोगिताकभेदो भावनायां वर्तत एवेति नाऽव्याप्तिरिति वाच्यम् । तादृशधर्मावच्छिन्नस्योभयभेदादिकमादायाऽलक्ष्येऽतिव्याप्तिवारणायाऽत्र तादृशधर्मनिष्ठप्रतियोगितावच्छेदकताया निरव-

---

(१) 'गुरुत्वनैमित्तिकद्रवत्वान्य' इति पाठः ।
(२) 'सांसिद्धिकद्रवत्वसङ्ग्रहायाऽन्येति' इति पाठः ।

**सङ्ख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥**

**गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।**

**सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥**

सङ्ख्यादिरिति । सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः ॥ ९२ ॥ इति सामान्यगुणनिरूपणम् ।

दिनकरी ।

दिकमादायाऽसम्भववारणाय स्पर्शसङ्ग्रहाय च स्पर्शावृत्तीति । ॥ इति विशेषगुणकथनम्॥

सङ्ख्या आदिर्यस्य, अपरत्वमन्ते यस्येति व्युत्पत्त्या परिमाणपरत्वयोरेव ग्रहणमितिभ्रमवारणायाऽऽदिपदग्राह्यगुणान् विशिष्य दर्शयति—सङ्ख्यापरिमाणेत्यादिना । 'गुरु-

रामरुद्री ।

च्छिन्नाया एव विवक्षणीयतया तादृशविशिष्टधर्मावच्छिन्नभेदमादाय लक्षणसमन्वयासम्भवात् । न च वायुवृत्तिवृत्तित्वं यादृशयादृशधर्मावच्छिन्नं भावनान्यत्वविशिष्टतादृशतादृशधर्मावच्छिन्नावच्छेदकतामात्रनिरूपकप्रतियोगिताकभेदकूटवत्त्वमेव विवक्षितमिति वाच्यम् । तथा सति जातित्वादिरूपेणाऽपि वायुवृत्तिवृत्तिताया अवच्छेदात् भावनान्यत्वविशिष्टजातित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य रूपादावसत्त्वेनाऽव्याप्त्यापत्तेः । न चोभयावृत्तित्वं यादृशरूपे निवेशनीयमिति न दोष इति वाच्यम् । एवमपि सङ्ख्यात्वत्वादिना वायुवृत्तिवृत्तेः सङ्ख्यात्वस्य स्वरूपतो भेदप्रतियोगितावच्छेदकत्वे लाघवेन तादृशरूपावच्छिन्नाऽवच्छेदकत्वाप्रसिद्धेः । न च भावनान्यत्वतादृशरूपैतदतिरिक्तधर्मानवच्छिन्नत्वं अवच्छेदकतायां निवेश्यमिति न दोष इति वाच्यम् । अत्र हि तादृशभेदकूटवत्त्वमेव लक्षणे निवेशनीयम्, अन्यथा तादृशयत्किञ्चिद्भेदस्य सङ्ख्यादौ सत्त्वेनाऽतिव्याप्त्यापत्तेः, तथा च त्वदुक्तरीत्या संस्कारत्वावच्छिन्नभेदस्याऽपि लक्षणघटकतया तस्य भावनायामभावादव्याप्तेर्दुर्वारत्वापातात् । न च वायुवृत्तिवृत्तितावच्छेदका यावन्त उभयावृत्तयो धर्मास्तत्प्रत्येकातिरिक्तभावनान्यत्वातिरिक्तधर्मानवच्छिन्नावच्छेदकताकप्रतियोगिताकयत्किञ्चिद्भेदवत्त्वस्य लक्षणत्वे न कश्चित् दोषः, भावनायां तादृशभावनान्यत्वविशिष्टसंस्कारत्वावच्छिन्नभेदस्य सत्त्वादेव लक्षणसमन्वयादिति वाच्यम् । एतादृशनिवेशेमहागौरवापत्तेरित्यत आह । **आद्यमन्यान्तमिति** । पदमिति शेषः । **विशेषणं** अभेदान्वयसाकाङ्क्षम् । तेन पदस्य विशेषणत्वाभावेऽपि न क्षतिः । एवमग्रेऽपि । ननु भावनाऽवृत्तित्वमेव धर्मे कुतो नोक्तमिति चेन्न । तथा सति वायौ स्थितिस्थापकानङ्गीकर्तृमते तत्राऽतिव्याप्त्यापत्तेः । संस्कारत्वस्य भावनाऽवृत्तित्वविरहेण लक्षणाघटकतया स्थितिस्थापकस्य संस्कारत्वमादाय वारणायोगादिति ध्येयम् । **असम्भववारणायेति** । ननु तद्वारणाय रूपावृत्तित्वमेव निवेश्यतां, किं स्पर्शावृत्तित्वपर्यन्तानुधावनेनेत्यत आह । **स्पर्शसङ्ग्रहाय चेति** । अन्यथा तादृशस्पर्शत्वरूपजातेः स्पर्शेऽपि सत्त्वेनाऽव्याप्तिप्रसङ्गादिति भावः । असम्भवस्य गुरुतरदोषत्वादत्र प्रथममुपादानमिति मन्तव्यम् ।

॥ इति विशेषगुणकथनम् ॥

**सङ्ख्या आदिर्यस्येत्यादि** । यत्पदेन विभागवाक्यघटकपदपरामर्शाभिप्रायेणेदम् । **सङ्ख्या**—सङ्ख्यापदम् । **आदिः**—अव्यवहितपूर्वोच्चारणविषयः । तथा च '**सङ्ख्यादयः**' इति बहुव्रीहौ' आरूढवानरः' इत्यादिस्थल इवोत्तरस्याऽऽदिपदस्य सङ्ख्यापदाव्यवहितोच्चारणविषयपदार्थे लक्षणया परिमाणस्य निरुक्तवाक्याच्छाब्दबोधः, बहुव्रीहिस्थले विग्रहवाक्याद्यादृशविशेष्यविशेषणभावापन्नपदार्थबोधो जायते तद्विपरीतस्यैव समासवाक्यतो जननस्य सर्वसम्मतत्वात् । एवमेवाऽग्रेऽपि '**अपरत्वमन्ते यस्य**—' इत्यत्राऽपि उत्तरपदस्य अपरत्वपदाव्यवहितपूर्वोच्चारणविषयपदार्थे लक्षणामुपगम्य परत्वस्यैव बोध इति ग्रन्थतात्पर्यमुन्नेयम् । **आदिपदग्राह्यगुणानिति** । आदिपदजन्यबोधविषयत्वप्रकारकस्वीयेच्छाविषयगुण-

दिनकरी ।

त्ववेगौ' इत्यत्र मूले 'वेग' पदं भावनातिरिक्तसंस्कारपरं, तेन स्थितिस्थापकस्याऽपि परिग्रहः । मूले-सामान्यगुणा इति । तत्त्वं च रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वावृत्तिजातिशून्यगुणत्वम् । द्रव्यविभाजकतावच्छेदकं पृथिवीत्वादि, तद्व्याप्यतावच्छेदकं च गन्धत्वादि, तच्छून्यत्वस्य सङ्ख्यादौ सत्त्वाल्लक्षणसमन्वयः । अत्र जलीयशुक्लरूपे वायोरनुष्णाशीतस्पर्शे च पृथिव्यादिशुक्लरूपस्पर्शव्यावृत्तजातिविशेषे मानाभावाच्छुक्लरूपानुष्णाशीतस्पर्शयोरतिव्याप्तिवारणाय सत्य-

रामरुद्री ।

नित्यर्थः । तेन नाऽसङ्गतिः । विशिष्य-यादृशधर्मावच्छिन्नविषयकबोधो निरुक्तवाक्यादिष्टः, तादृशधर्मावान्तरधर्मपुरस्कारेणेत्यर्थः । मूले-सङ्ख्येत्यादि । तथा च सङ्ख्या आदौ यस्य, अपरत्वमन्ते यस्येति व्युत्पत्त्या यादृशानुपूर्वीघटकपदप्रथमोच्चारितं सङ्ख्यापदं तदर्थस्य, यादृशानुपूर्वीघटकपदचरमोच्चारणविषयः अपरत्वपदं तदर्थस्य च लाभान्नाऽसङ्गतिरिति भावः । तदर्थत्वं च न तच्छक्यत्वम्, आनुपूर्व्या अवाचकत्वात् । किन्तु तज्ज्ञानजन्यबोधविषयत्वम् । आद्योच्चारणविषयत्वचरमोच्चारणविषयत्वे तु यथाक्रमं स्वघटकपदोच्चारणध्वंसासमानकालीनोच्चारणविषयस्वघटकपदत्वम्, स्वघटकपदोच्चारणप्रागभावासमानकालीनोच्चारणविषयत्वे सति स्वघटकत्वमित्यनुसन्धेयम् । मूले-इत्यर्थं इति । इति तात्पर्यमित्यर्थः । तेन निरुक्तवाक्यद्वयात् तादृशविषयत्वप्रकारेण बोधाजननेऽपि न क्षतिः । कारिकावल्याम्-सामान्यगुणा इति । अत्र सामान्यं नामाऽनुगतो धर्मः, तादृशा एव गुणा इत्यवधारणेन विशेषभिन्ना इत्यर्थो लभ्यते, तथा च पूर्वनिरुक्तविशेषगुणान्यत्वमेव सामान्यगुणानां लक्षणं बोध्यम् । तत्राऽस्मत्परिष्कृतविशेषगुणत्वस्य मतविशेषसाधारण्यासम्भवात् स्वयमुक्तस्य विशेषगुणत्वस्य च पारिभाषिकत्वान्न तदन्यत्वं सामान्यगुणशब्दार्थः सम्भवतीत्यतः स्वयं सामान्यगुणत्वं परिष्करोति-तत्त्वं चेत्यादिना ।

अतिव्याप्तिवारणाय सत्यन्तमिति । रूपस्पर्शान्यत्वे सतीत्यन्तमित्यर्थः । ननु जलीयशुक्लरूपपार्थिवशुक्लरूपयोर्वैजात्यं प्रत्यक्षत एव सिद्ध्यति । न च स्फटिकादिशौक्ल्यसदृशस्यैव जलीयशौक्ल्यस्याऽनुभवेन न तादृशवैजात्यसिद्धिसम्भव इति वाच्यम् । तत्र स्फटिकादौ अस्वच्छशौक्ल्यस्य जलादौ च स्वच्छशौक्ल्यस्याऽऽनुभविकत्वात् । न च किसलयवर्तिनामुदबिन्दूनां स्फटिकादिसदृश्येव रूपप्रतिपत्तिरिति वाच्यम् । तत्र तैजसभागस्याऽपि प्रवेशेन तेजोरूपभानस्यैव जले उपगमात् । न च पार्थिवरूपस्य जलरूपतो विजातीयत्वे चित्रपटादौ गङ्गाप्रवाहादिरूपलेखनं कथं सम्भवेत्? तत्र शिल्पिसमर्पितानां गङ्गाप्रवाहव्यञ्जकरञ्जकद्रव्याणां पार्थिवत्वेन जलतुल्यरूपत्वासम्भवादिति वाच्यम् । एवमपि पृथिवीजन्यतावच्छेदकतया जलजन्यतावच्छेदकतया च वैजात्यद्वयस्य शुक्लरूपेऽवश्याङ्गीकरणीयत्वात् । अन्यथा शुक्लरूपत्वावच्छिन्नं प्रति जनकतावच्छेदकतया पृथिवीजलसाधारणवैजात्यकल्पनप्रसङ्गात् । न च नैमित्तिकद्रवत्वजनकतावच्छेदकतया तुल्ययुक्त्या पृथिवीतेजःसाधारणजातिसिद्धौ तया सह साङ्कर्यभयादेव न तत्सिद्धिरिति वाच्यम् । द्रवत्वत्वावच्छिन्नं प्रति जनकतावच्छेदकतयाऽवश्यकल्प्यपृथिवीजलतेजोऽनुगतजात्यैवोपपत्तौ नैमित्तिकद्रवत्वादिकं प्रति कारणताया अप्रामाणिकतयाऽकल्पनात् । न च नैमित्तिकद्रवत्वत्वावच्छिन्नस्य जले उत्पादवारणाय तथा कारणत्वमपि कल्प्यमेवेति वाच्यम् । अग्निसंयोगाभावेनैव तत्र तदापत्तिवारणसम्भवात्—

इति चेन्न । जलीयपार्थिवरूपयोर्वैजात्यानुमापकनिरुक्तकार्यकारणभावस्यैवाऽप्रामाणिकत्वात् । न च तर्हि अभास्वरशुक्लरूपत्वावच्छिन्नजनकतावच्छेदकतया पृथिवीजलसाधारणवैजात्यकल्पनापत्तिरिति वाच्यम् । तत्कारणीभूतस्य अभास्वरशुक्लरूपस्य स्वसमवायिसमवेतत्वसम्बन्धेन तेज आदौ घटादौ च विरहेणैव तादृशरूपोत्पादवारणसम्भवेनैतादृशकार्यकारणभावस्यैवाऽकल्पनीयत्वात् । अन्यथा तादृशजातेः

रामरुद्री ।

पृथिवीत्वेन सह साङ्कर्यवारणाय सकलपृथिव्यनुगतत्वस्याऽऽवश्यकत्वे घटादौ तद्दृशरूपोत्पादापत्तेः । तथा च जलीयपार्थिवरूपयोर्वैजात्यासिद्धया तोयबिन्दुषु स्फटिकसादृश्यस्य चित्रपटवर्तिरञ्जकद्रव्येषु गङ्गाप्रवाहसादृश्यस्याऽप्यनुभवेन च न जलीयपार्थिवरूपयोरतिव्याप्तिवारणं कथञ्चिदपि सुशकमिति ध्येयम् । एषैव रीतिरनुष्णाशीतस्पर्शेऽपि पार्थिववायवीयभेदेन वैजात्यानुपगमे बोध्या ।

वस्तुतस्तु पार्थिवजलीयरूपयोर्वैजात्यं प्रामाणिकमेव । स्फटिकादिरूपतो जलरूपे वैलक्षण्यस्याऽत्यन्तनिर्मलत्वरूपस्याऽपलपितुमशक्यत्वात् । तोयबिन्दुषु स्फटिकसच्छायताप्रतीतिस्तु अभिभावकतेजोरूपवशादेव । चित्रपटे उपरञ्जकद्रव्येषु जलसादृश्यप्रतीतिरपि भ्रान्तिरेव, तत्र तत्तद्वर्णोत्कर्षापकर्षविशिष्टविशिष्टसंस्थानस्य रञ्जकद्रव्यनिष्ठस्य दोषत्वात् । कथमन्यथा गर्तादिप्रदर्शनाय तत्र समर्पितेषु नीलद्रव्येषु गर्तत्वप्रतीतिर्वास्तवशुक्ले गर्तादौ च नीलत्वबुद्धिः? एवमेव वायवीयपार्थिवरूपस्पर्शयोरपि 'वायुर्वाति' इति प्रतीत्या कठिनत्वमृदुत्वादिप्रतीत्या च वैजात्यसिद्धिरिति व्यर्थमेव **रूपस्पर्शान्यत्वदलम्** । न हि वायौ मृदुत्वकठिनत्वादिप्रतीतिरनुभवसिद्धेति मन्तव्यम् ।

अथाऽत्र तिक्तत्वाम्लत्वादेः पृथिवीत्वादिव्याप्यतावच्छेदकत्वेऽपि जलवृत्तिमाधुर्यपार्थिवमाधुर्ययोर्वैजात्ये मानाभावेन मधुररसस्य द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकजातिमत्त्वविरहादतिव्याप्तिः । न च जलजन्यतावच्छेदकतया पृथिवीजन्यतावच्छेदकतया च तादृशवैजात्यसिद्धिः सम्भवतीति वाच्यम् । मधुररसजनकतायाः स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नाया मधुररसे स्वीकरणेनैवोपपत्तेः । अन्यथा पृथिव्यादिजन्यतावच्छेदकतया शुक्लरूपेऽपि वैजात्यद्वयसिद्धिप्रसङ्गात् । न च विजातीयमधुरसाक्षात्कारत्वावच्छिन्नं प्रति हरीतक्यादिभक्षणस्य हेतुत्वेन जलीयरसे वैजात्यसिद्धिरिति वाच्यम् । हरीतकीभक्षणस्य जलरसाभिव्यञ्जकतायाः पूर्वमेव निरस्तत्वात्, एवमपि पार्थिवमधुररसे वैजात्यासिद्धया तत्राऽतिव्याप्तेर्वारणायोगाच्चेति चेत्,

अत्र केचित् । पार्थिवमाधुर्यजलमाधुर्ययोर्वैजात्यस्य प्रत्यक्षसिद्धत्वेन तत्र नाऽतिव्याप्तिरित्याहुः ।

तन्न । प्रत्यक्षेण महज्जलरसे वैजात्यसिद्धिसम्भवेऽपि जलपरमाणुरसे तादृशवैजात्यसिद्धयसम्भवेन तत्राऽतिव्याप्तेर्दुर्वारत्वात् ।

वस्तुतस्तु मधुरत्वव्याप्या अनेका जातयः प्रत्यक्षेणैवोपलभ्यन्ते, न हि यादृशं माधुर्यं शर्करायामनुभूयते, तदेव द्राक्षादावपि। तथा च जलवृत्तिमाधुर्यवैजात्यस्य सिद्धौ तादृशवैजात्यस्य जलजन्यतावच्छेदकतया जन्यजलमात्रवृत्तिरससाधारण्ये सिद्धे स्वसमवायिसमवेतत्वसम्बन्धेन तद्रससजातीयरसतयैव तज्जनकतया परमाणुरसेऽपि सिद्धया जलत्वव्याप्यतावच्छेदकतादृशवैजात्यमादाय जलीयमधुररसेऽतिव्याप्तिर्वारणीया । न च स्वसमवायिसमवेतत्वसम्बन्धेन तादृशरसस्य कारणत्वेनैवोपपत्तौ जलस्य तत्र समवायिकारणत्वे मानाभाव इति वाच्यम् । विनिगमनाविरहेण कारणताद्वयस्याऽपि स्वीकरणीयत्वात्, जलस्य तत्र समवायिकारणत्वविरहेऽपि स्वसमवायिसमवेतत्वसम्बन्धेन विलक्षणरसजन्यतावच्छेदकतया जलीयरसमात्रसाधारणवैजात्यसिद्धिसम्भवेनैवाऽस्मत्समीहितसिद्धया तादृशकार्यकारणभावासिद्धौ क्षत्यभावाच्च । न च तथाऽपि पार्थिवमधुररसेऽतिव्याप्तिस्तदवस्थैवेति वाच्यम् । तत्राऽपि शर्करादिमधुररसवृत्तिविलक्षणतत्तद्वैजात्यमादायैवाऽतिव्याप्तिवारणात् । अत एव 'घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदैः—' इत्यादिप्राचीनपद्यमपि साधु सङ्गच्छत इति विभावनीम् ।

अथैवमपि स्थितिस्थापकस्य पृथिवीमात्रवर्तित्वात् तत्राऽतिव्याप्तिस्तदवस्थैवेति चेन्न । तस्य चतुष्टयवृत्तित्वाङ्गीकर्तृमताभिप्रायेणैव तल्लक्षणकरणात् ।

यत्तु एवमेव च गुरुत्वादावप्यव्याप्तिर्वारणीया । अन्यथा जलगुरुत्वस्य पार्थिवगुरुत्वविजातीयतया तादृशवैजात्यमादायैवाऽतिव्याप्त्यापत्तेः । न च तयोर्गुरुत्ववैलक्षण्ये किं मानमिति वाच्यम् । तैलादेर्लघुत्वेन जलोपर्यवस्थानस्य, पाषाणादीनां च गुरुत्वेन जलाधोगमनस्यैवाऽत्र प्रमाणत्वात् । न च तथाऽपि कथमव्याप्तिवारणसम्भव इति वाच्यम्। जलगुरुत्वस्य काष्ठविशेषगुरुत्वादिसजातीयत्वेन गुरुत्वस्य द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकवैजात्याभावादिति ।

दिनकरी।

न्तम्। शब्दविशेषजनकतावच्छेदकजात्यवच्छिन्नकठिनावयवद्वयविभागे, तेजोवेगातिशये, अत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्नघृतादिवृत्तिद्रवत्वे चाऽव्याप्तिवारणायाऽवृत्त्यन्तं जातिविशेषणम्। कर्मादौ तद्वारणाय विशेष्यम्। पृथिवीत्वादिव्याप्यतावच्छे-

रामरुद्री।

तन्मन्दम्। पाषाणगुरुत्वादावव्याप्तेः स्थिरत्वात्, तस्य जलादावसम्भवादतो जलीयपार्थिवगुरुत्वयोर्वैजात्याभावस्यैव स्वीकरणीत्वात्। विस्तरस्तु गुरुत्वनिरूपणे वक्ष्यते।

**कठिनावयवद्वयविभाग इति**। तादृशसंयोग इत्यपि मन्तव्यम्। तेन अवृत्त्यन्तघटकस्य संयोगावृत्तित्वस्य कण्ठतः प्रयोजनाप्रदर्शनेऽपि न क्षतिः। ननु कीदृशसंयोगेऽव्याप्तिवारणाय संयोगावृत्तित्वं प्रवेशनीयम्? शब्दजनकतावच्छेदकवैजात्यस्य चतुष्टयसंयोगसाधारणतया द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वविरहात्, आत्मवृत्तिगुणत्वावच्छिन्नजनकतावच्छेदकमनःसंयोगवृत्तिवैजात्यविशिष्टस्य आत्ममनउभयवृत्तित्वेन द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वविरहेण तमादायाऽप्यतिव्याप्त्यसम्भवात्। पाकजनकसंयोगस्याऽपि पृथिवीतेजउभयवृत्तित्वेन तत्राऽप्यव्याप्त्यसम्भवादिति चेत्,

अत्र, केचित्, वर्णजनकतावच्छेदकवैजात्यमादायाऽव्याप्तिरिष्टेत्याहुः।

तत्तुच्छम्। कण्ठवाय्वाद्यभिघातस्यैव ककारादिजनकतया तद्वृत्तिवैजात्यस्य द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वविरहेणैव तत्राऽव्याप्तिवारणसम्भवात्। न च वकारजनकत्वं लाघवात् वाय्वभिघातजन्यदन्तौष्ठसंयोग एव स्वीकरणीयमिति वकारादिस्थानद्वयोद्भववर्णजनकतावच्छेदकवैजात्यावच्छिन्नसंयोगेऽव्याप्तिः सम्भवत्येव, तादृशवैजात्यस्य पृथिवीत्वरूपद्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वादिति वाच्यम्। आत्मप्रयत्नजन्यदन्तौष्ठसंयोगावच्छिन्नवायुसंयोगादेव शब्दोत्पादस्याऽऽनुभविकतया वायुसंयोग एव शब्दजनकतावच्छेदकवैजात्यसिद्धेः। अन्यथा केवलदन्तौष्ठसंयोगसत्त्वेऽपि शब्दोत्पादापत्तेरिति।

अत्र ब्रूमः। पार्थिवसंयोगमात्रवृत्तिनिबिडत्वजातिमादाय तत्राऽव्याप्तिवारणायैव संयोगावृत्तित्वदलसार्थक्यात्।

यत्तु घटाद्यारम्भकतावच्छेदकवैजात्यावच्छिन्नकपालद्वयसंयोगादावव्याप्तिवारणाय तदिति। तन्मन्दम्। घटारम्भकतावच्छेदकवैजात्यस्य सौवर्णमृण्मयकपालसंयोगसाधारणतया द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वाभावात्।

घटारम्भकतावच्छेदकसंयोगनिष्ठवैजात्यमादायाऽव्याप्तिवारणायाऽपि तन्निवेशः सम्भवति। घटत्वस्याऽपि पृथिवीत्वतेजस्त्वादिना साङ्कर्यभयेन नानात्वस्यैवाऽङ्गीकरणीयत्वात्, उपष्टम्भकपार्थिवभाग एव सौवर्णघटत्वस्याऽपि स्वीकरणीयत्वेन घटत्वभेदस्याऽनङ्गीकरणीयत्वाच्च, मृत्तिकात्वपाषाणत्वादिना साङ्कर्यान्मृण्मयपाषाणमययोर्भिन्नमेव घटत्वमङ्गीकार्यमित्यन्यदेतदिति तु सम्प्रदायः।

कपालद्वयसंयोग एव घट इति नव्यमते तु तादृशघटत्वजातिमादायैवाऽव्याप्तिर्बोद्धव्या।

**तेजोवेगातिशय इति**। विलक्षणतेजोवेग इत्यर्थः। ननु कथमस्य द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वमिति चेन्न। तेजोलाघवातिशयस्याऽन्यत्र कुत्राऽप्यननुभवेन तद्वैजात्यस्य द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकत्वस्याऽक्षतत्वात्। वस्तुतस्तु गरुडादीनां प्रकृष्टबलशालिनां तादृशो वेगातिशयः श्रूयत इति तस्या जातेः प्रकृष्टबलप्रयोज्यतया द्रव्यविभाजकोपाधिद्वयवद्वृत्तित्वेन न तथात्वमित्यवधेयम्।

**अत्यन्ताग्निसंयोगनाश्यतावच्छेदकेत्यादि**। तस्य पृथिवीत्वव्याप्यत्वादिति भावः। इदमपि तत्तदुष्णस्पर्शवदग्निसंयोगाव्यवहितोत्तरनाशत्वावच्छिन्नं प्रति तस्य हेतुत्वोपगमे तादृशजातिर्नैव सिद्ध्यतीति यथाश्रुताभिप्रायकमित्यवधेयम्।

**अवृत्त्यन्तमिति**। **संयोगविभागवेगद्रवत्वावृत्तीत्यन्तमित्यर्थः। तद्वारणायेति**। अतिव्याप्तिवारणायेत्यर्थः। **विशेष्यमिति**। गुणत्वमित्यर्थः। **असम्भवापत्तेरिति**। सर्वेषामेव स्वसमानाधिक-

**एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः ।**
**बाह्यैकैकेन्द्रियग्राह्याः गुरुत्वादृष्टभावनाः ॥ ९३ ॥**

द्वीन्द्रियेति । चक्षुषा त्वचापि ग्रहणयोग्यत्वात् ॥

इति द्वीन्द्रियग्राह्यगुणनिरूपणम् ।

बाह्येति । रूपादीनां चक्षुरादिग्राह्यत्वात् ॥ ९३ ॥

इति एकैकेन्द्रियग्राह्यगुणनिरूपणम् ।

दिनकरी ।

दकतत्तत्सङ्ख्यात्वादिशून्यत्वस्य तत्तत्सङ्ख्यायामभावादव्याप्तिवारणाय जातिपदम् । द्रव्यविभाजकतावच्छेदकरूपोपाधेश्च व्यापकत्वं तत्तद्व्यक्तित्वेन विवक्षितं, न तु तादृशोपाधित्वेन, अन्यथा सङ्ख्यात्वादेरपि तादृशजातित्वादसम्भवापत्तेरिति ।

इति सामान्यगुणकथनम् ॥

'सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च' इत्यत्र मूले 'स्नेह' पदं वेगस्याऽप्युपलक्षकम् । स्थितिस्थापकस्य त्वतीन्द्रियत्वं वक्ष्यते । ननु द्वीन्द्रियग्राह्यत्वं रूपादावतिव्याप्तं, तेषां मनसाऽपि ग्रहणात्, बाह्येन्द्रियद्वयग्राह्यत्वमपि तत्रैवाऽतिव्याप्तम्, रूपादीनां चक्षुर्द्वयादिना ग्रहणात्, अतीन्द्रियसङ्ख्यादावव्याप्तं च, तत्रेन्द्रियग्राह्यत्वस्यैवाऽभावादत आह । **चक्षुषा त्वचाऽपीति** । चक्षुस्त्वगुभयग्रहणयोग्यत्वं तदर्थः । चक्षुस्त्वगुभयग्राह्यभावनावृत्त्यन्यधर्मसमवायिगुणत्वमिति तु निष्कर्षः । संस्कारत्वादिकमादाय भावनायामतिव्याप्तिवारणाय भावनावृत्त्यन्येति । कर्मादौ तद्वारणाय गुणत्वस्य निवेशः ।

इति द्वीन्द्रियग्राह्यगुणकथनम् ॥

ननु बाह्यैकैकेन्द्रिग्राह्यत्वं सङ्ख्यादावतिव्याप्तं, तेषामुभयग्राह्यत्वेऽप्येकग्राह्यत्वानपायात्, अव्याप्तं चाऽतीन्द्रियरूपादौ, तेषामिन्द्रिग्राह्यत्वस्यैवाऽभावादत आह । **रूपादीनामिति** । **चक्षुरादीति** । चक्षुरादिनैवेत्यर्थः । तथा चैकैकमात्रग्राह्यत्वस्य विवक्षितत्वात् सङ्ख्यादौ नाऽतिव्याप्तिः । ग्राह्यत्वात्-ग्रहणयोग्यत्वात् । तेन नाऽतीन्द्रियरूपादावव्याप्तिः । तथा च चक्षुस्त्वगुभयाग्राह्यबहिरिन्द्रियग्राह्यगुणसमवेतजातिमत्त्वमेतेषां लक्षणमिति भावः । न च त्रसरेणुपरिमाणनिष्ठापकर्षस्य चक्षुरिन्द्रियेणैव ग्रहणात् तत्राऽतिव्याप्तिरिति वाच्यम् । परिमाणान्यत्वेनाऽपि गुणस्य विशेषणीयत्वात् । ॥

इति बाह्यैकैकेन्द्रियग्राह्यगुणकथनम् ॥

मूले-'गुरुत्वादृष्टभावनाः' इत्यत्र 'भावना' पदं वेगभिन्नसंस्कारपरम्, तेन स्थितिस्थापकस्याऽपि सङ्ग्रहः । न चाऽतीन्द्रियत्वं-इन्द्रियजन्यप्रत्यक्षाविषयत्वं यदि, तदा

रामरुद्री ।

त्वात्यन्ताभावप्रतियोगितानवच्छेदकद्रव्यविभाजकोपाधित्वकत्वादिति भावः । अत्र द्रव्यविभाजकोपाधिमदन्यवृत्तितानवच्छेदकत्वस्यैव तद्व्याप्यतावच्छेदकत्वपदार्थत्वेन तदृशोपाधिनिष्ठावच्छेदकतायां निरवच्छिन्नत्वनिवेशादपि निरुक्तासम्भवव्युदासः सम्भवतीत्यवधेयम् ।

॥ इति सामान्यगुणकथनम् ॥

ननु इन्द्रियद्वयजन्यप्रत्यक्षविषयत्वमेव तद्वक्तव्यमतो नैष दोष इत्यत आह । **अव्याप्तं चेति** ।

॥ इति बाह्यैकैकेन्द्रियग्राह्यगुणकथनम् ॥

विभूनां तु ये स्युर्वैशेषिका गुणाः।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥

विभूनामिति। बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-भावना-शब्दा इत्यर्थः। कारणगुणेन कार्ये ये गुणा उत्पाद्यन्ते ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते, बुद्ध्यादयस्तु न तादृशाः, आत्मादेः कारणाभावात् ॥८९॥९०॥९१॥९२॥९३॥९४॥ इत्यकारणगुणोत्पन्नगुणकथनम् ॥

दिनकरी।

गुरुत्वादावसम्भवः, तेषामलौकिकप्रत्यक्षविषयत्वात्, लौकिकप्रत्यक्षाविषयत्वविवक्षणे चाऽतीन्द्रियरूपादावतिव्याप्तिरिति वाच्यम्। लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्यन्यगुणत्वस्य विवक्षितत्वात्। सत्तादिकमादायाऽसम्भववारणाय गुणत्वन्यूनवृत्तीति। जात्यादावतिव्याप्तिवारणाय गुणपदम् ॥ इत्यतीन्द्रियगुणकथनम् ॥

मूले—'अकारणगुणोत्पन्नाः' इत्यत्र न कारणमकारणं,तस्य गुणा इतिभ्रमनिराकरणायाऽऽह मुक्तावल्याम्–कारणगुणेनेति। समवायिकारणसमवेतगुणेनेत्य ः। अत्र कारणत्वमविवक्षितं, समवायित्वमात्रं बोध्यम्। न तादृशा इति। तथा च कारणगुणैरुत्पन्नाः कारणगुणोत्पन्नाः, न कारणगुणोत्पन्ना अकारणगुणोत्पन्ना इति विग्रहेण स्वाश्रयसमवायिसमवेतगुणजन्यत्वं कारणगुणोत्पन्नत्वं, तादृशगुणाजन्यत्वमकारणगुणपूर्वकत्वमिति भावः। यद्यपीदं नित्यरूपे जन्येऽपि च पाकजादौ अवयवावयविनोर्द्वित्वद्विपृथक्त्वातिरिक्तद्वित्वद्विपृथक्त्वादौ कर्मजन्यसंयोगविभागेषु पाकजद्रवत्वे चाऽतिव्याप्तं, तथाऽप्यकारणगुणोत्पन्नमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं विवक्षितमित्यदोषः। अकारणगुणोत्पन्नमात्रवृत्तित्वं च निरुक्तकारणगुणोत्पन्नावृत्तित्वम्। रूपनिष्ठपाकजन्यतावच्छेदकवैजात्यं, संयोगविभागवेगनिष्ठकर्मजन्यतावच्छेदकवैजात्यं, अणुपरिमाणनिष्ठवैजात्यं, परममहत्त्वत्वं चाऽऽदायाऽतिव्याप्तिवारणाय गुणत्वसाक्षाद्व्याप्येति। संस्कारत्वान्यगुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वं तदर्थः। अन्यथा भावनात्वस्य गुणत्वसाक्षाद्व्याप्यत्वाभावाद्भावनायामव्याप्तिप्रसङ्गात्। इत्थमपि परत्वापरत्वयोरतिव्याप्तिरवशिष्यते, साऽपि परत्वापरत्वावृत्तित्वेन जातेर्विशेषणीयत्वान्निरसनीयेति ध्येयम् ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

॥ इत्यकारणगुणोत्पन्नगुणकथनम् ॥

रामरुद्री।

लौकिकप्रत्यक्षाविषयत्वविवक्षणे चेति। प्रत्यक्षीयलौकिकविषयत्वाभावविवक्षणे चेत्यर्थः। वस्तुतस्तु विषयतासम्बन्धावच्छिन्नप्रत्यक्षत्वावच्छिन्नप्रतिबद्धयतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतिबन्धकतावद्गुणत्वमेवैतेषां साधर्म्यमिति ध्येयम्। इत्यतीन्द्रियगुणकथनम् ॥

'विभूनां तु–' इत्यादि मूलम्। अथाऽत्र नित्यगुणा रूपादयः कथमकारणगुणोत्पन्नमध्ये न परिगणिताः? न चाऽकारणगुणोत्पन्नत्वे सति जन्यगुणत्वमेवाऽत्र विवक्षितमिति वाच्यम्। तथा सति नित्यज्ञानादावव्याप्त्यापत्तेरिति चेन्न। स्वसमवेतगुणविभाजकजात्यवच्छेदेन कारणगुणपूर्वकत्वाभावस्य विवक्षितत्वात्। तदेव स्पष्टयति टीकायाम्–तथाऽपीत्यादिना। रूपनिष्ठपाकजन्यतावच्छेदकवैजात्यमिति। ननु तत्तद्विलक्षणोष्णस्पर्शवदग्निसंयोगाव्यवहितोत्तरनाशत्वावच्छिन्नं प्रति तत्तदग्निसंयोगस्य हेतुतया निरुक्तवैजात्ये मानाभाव इत्यत आह। संयोगविभागवेगनिष्ठकर्मजन्यतावच्छेदकवैजात्यमिति।

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।

अपाकजास्त्विति । पाकजरूपादीनां कारणगुणपूर्वकत्वाभावादपाकजा इत्युक्तम् । तथाविधं-अपाकजम् । तथैकत्वमपि बोध्यम् । स्पष्टम् (१) ।

॥ इति कारणगुणोत्पन्नगुणकथनम् ॥

दिनकरी ।

मूले—स्युः कारणगुणोद्भवा इति । कारणगुणोत्पन्नत्वं च न पूर्वोक्तं स्वाश्रयसमवायिसमवेतगुणजन्यत्वं, हस्तपुस्तकसंयोगविभागादिजन्यकायपुस्तकसंयोगविभागादावतिव्याप्तेः । न च स्वाश्रयसमवायिमात्रसमवेतगुणजन्यत्वं तत, हस्तपुस्तकसंयोगादिश्च न स्वाश्रयसमवायिमात्रसमवेत इति वाच्यम् । तथाऽप्यवयवावयविनोरेकत्वाभ्यां जनितेऽवयवावयविद्वित्वादावतिव्याप्तेः, तथाऽपि स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुण-

रामरुद्री ।

'संयोग' इति सम्पातायातम्, तेन अभिघातत्वादिना साङ्कर्यभयेन तादृशवैजात्यासिद्धावपि न क्षतिः । यद्वा कर्मजन्यतावच्छेदकेत्यनेनाऽभिघातत्वादिकमेव प्रदर्शितम्, तस्य विलक्षणकर्मजन्यतावच्छेदकत्वादित्यवधेयम् । वस्तुतस्तु कारणगुणोत्पन्नवृत्तिभावनाऽवृत्तिजातिशून्यगुणत्वमेव सम्यगिति वयं प्रतीमः ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

॥ इत्यकारणगुणोत्पन्नगुणकथनम् ॥

मूले-अपाकजास्त्वित्यादि । पाकमनपेक्ष्य जाता इत्यर्थः । अपाके सति जायन्त इति विग्रहात् । 'सप्तम्यां जनेर्डः ( ३ । २ । ९७ )' इति डप्रत्ययविधानात् । इदं च सर्वत्रैव गुणेष्वन्वितम् । तथा च स्पर्शान्तेषु द्रवत्वे च विशेषणतया स्नेहादिषु चोपलक्षणविधयैव जन्मनि पाकाभावकालावच्छिन्नत्वस्य निवेशो वोध्यः । तेन नित्यगुणेषु कारणगुणपूर्वकत्वविरहेऽपि न क्षतिः । वस्तुतस्तु नित्यगुणानां लक्ष्यत्वेऽपि न क्षतिः, लक्षणस्य टीकाकृता वक्ष्यमाणस्य तत्राऽपि सम्भवादित्यवधेयम् ।

स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नगुणनिष्ठकारणतानिरूपितकार्यतावत्त्वे सति समवायसम्बन्धावच्छिन्नगुणनिष्ठजनकतानिरूपितजन्यताशून्यत्वस्य निवेशे तु हस्तपुस्तकसंयोगविभागादिजन्यकायपुस्तकसंयोगविभागादौ न वक्ष्यमाणातिव्याप्तिः, संयोगादेः स्वसमवायिसमवेतत्वसम्बन्धेन कायपुस्तकसंयोगादौ कारणत्ववत् समवायेनाऽपि कारणत्वादित्यवधेयम् । गुणत्वसाधनग्रन्थे पूर्वमुक्तां अपेक्षाबुद्धिपाकक्रियैतत्त्रितयाजन्यविभ्रवृत्तिगुणत्वावच्छिन्नां जन्यतामादायाऽतिव्याप्तिवारणाय गुणत्वव्याप्यजात्यवच्छिन्नत्वं जनकतायां जन्यतायां च निवेशनीयमिति न दोषः । रूपादीनां च रूपादिषु असमवायिकारणतया तादृशजन्यतामादाय तत्र लक्षणसमन्वयः । मूलस्थं वेगपदं तु कर्मजन्यसंस्कारपरम् । तेन कर्मजन्यवेगे नाव्याप्तिरिति सिद्धान्तानुसारी पन्थाः ।

इदानीमेतादृश्या व्याख्यायाः सम्भवेऽपि मूलस्वरससिद्धेषु नित्यरूपादिगुणेषु लक्ष्यत्वाभिमतेषु निरुक्तलक्षणस्याऽगतत्वमालोच्य स्वयं भङ्ग्यन्तरेण परिष्कारमारचयितुमाह टीकायाम्-कारणगुणोत्पन्नत्वं चेत्यादि । पूर्वोक्तमिति । अकारणगुणोत्पन्नत्वसाधर्म्यव्याख्यानावसरोक्तमित्यर्थः । द्वित्वादावतिव्याप्तेरिति । न च स्वाश्रयसमवाय्यसमवेतगुणाजन्यत्वे सति स्वाश्रयसमवायिमात्रसमवेतगुणजन्यत्वमेव विवक्षि-

(१) 'स्पष्टम्' इति क्वचिन्नाऽस्ति ।

दिनकरी ।

जन्यत्वं तत्, अवयवैकत्वादेरवयवावयविद्वित्वसजातीयत्वाभावेन तत्राऽतिव्याप्त्यभावात् । न च सङ्ख्यात्वेन तयोः साजात्यमस्तीति तद्दोषतादवस्थ्यम्, गुणत्वव्याप्यव्याप्यजात्या साजात्यस्य विवक्षितत्वात्, अवयवावयविरूपादीनां नीलत्वादिना साजात्यसत्त्वान्नाऽसम्भवः ।

रामरुद्री ।

तम्, अवयवावयविनिष्ठद्वित्वस्य तु स्वाश्रयसमवाय्यसमवेतावयव्यैकत्वारब्धत्वादेव च नाऽतिव्याप्तिरिति वाच्यम् । सर्वेषामेव गुणानां स्वाश्रयसमवाय्यसमवेतेश्वरेच्छादिजनितत्वेनाऽसम्भवापत्तेः । न च स्वाश्रयसमवाय्यसमवेतस्वसमानाधिकरणगुणाजन्यत्वे सति स्वाश्रयसमवायिमात्रसमवेतगुणजन्यत्वं विवक्षितम्, ईश्वरेच्छादेश्च स्वसामानाधिकरण्यविरहादेव न सङ्ग्रह इति वाच्यम् । रूपादीनामपि स्वाश्रयसमवाय्यसमवेतो यः स्वसमानाधिकरणः स्वात्मक एव गुणस्तन्निष्ठरूपत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वेनाऽसम्भवापत्तेः । न च स्वभिन्नत्वमपि निवेशनीयमिति नैष दोष इति वाच्यम् । तथाऽपि वेगे स्वसमानाधिकरणस्वभिन्नकालान्तरीणवेगव्यक्तिमादायाऽव्याप्तिसम्भवात् । न च स्वाश्रयसमवायिसमवेतावृत्तिस्वसमानाधिकरणवृत्तिजनकतानिरूपितजन्यताशून्यत्वमेव विवक्षणीयम्, रूपत्वाद्यवच्छिन्नायाश्च स्वसमानाधिकरणवृत्तेर्जनकतायाः स्वाश्रयसमवायिसमवेतावृत्तित्वविरहादेव नाऽसम्भव इति वाच्यम् । तथा सत्यवयवावयविद्वित्व एवाऽतिव्याप्त्यापत्तेः । तत्र द्वित्वत्वावच्छिन्नं प्रति एकत्वस्य कारणतया एकत्वनिष्ठजनकताया अवयवैकत्वसाधारणतया तस्याः स्वाश्रयसमवायिसमवेतावृत्तित्वविरहात् लक्षणघटकतया तन्निरूपितजन्यतायास्तादृशद्वित्वे सत्त्वेऽपि क्षत्यभावात् । न च तत्तद्व्यक्तित्वावच्छिन्नजनकतामादायैव नाऽतिव्याप्तिरिति वाच्यम् । तद्द्वित्वव्यक्तिं प्रति तद्द्रव्यव्यक्तेः कारणत्वेनैवोपपत्तौ एकत्वद्वयस्य हेतुतासम्पादनाय गुरुतरकार्यकारणभावद्वयाकल्पनात् । न चाऽव्यवहितोत्तरत्वसम्बन्धेन स्वाश्रयसमवाय्यसमवेतगुणशून्यत्वमेव विवक्षितमिति वाच्यम् । वेगादेस्तादृशस्य पूर्वोत्पन्नरूपाद्युत्तरोत्पत्तिसम्भवेन तत्राऽव्याप्त्यापत्तेरिति ध्येयम् । उत्तरयति–**तथाऽपीत्यादि । स्वाश्रयेत्यादि ।** स्ववृत्तिजातिमत्स्वाश्रयसमवायिमात्रसमवेतगुणजन्यत्वमित्यर्थः । **मात्रपदोपादानात्** हस्तपुस्तकसंयोगजन्यकायपुस्तकसंयोगे नाऽतिव्याप्तिः । शङ्कते– **न चेत्यादि । साजात्यमस्तीतीति ।** सङ्ख्यात्वरूपस्ववृत्तिजातिमत्त्वमन्यत्राऽस्तीत्यत इत्यर्थः । उत्तरयति-**गुणत्वव्याप्यव्याप्येत्यादि ।** गुणवृत्तिभेदप्रतियोगितावच्छेदिका या स्ववृत्तिर्जातिस्तत्समानाधिकरणभेदप्रतियोगितावच्छेदिका या स्ववृत्तिर्जातिस्तत्तयेत्यर्थः । अथाऽत्र स्नेहेऽव्याप्तिः, तत्र गुणत्वव्याप्यव्याप्यजात्यप्रसिद्धेः । न च स्नेहोत्कर्षापकर्षरूपवैजात्यमादायैव तत्र लक्षणसमन्वयः सम्भवतीति वाच्यम् । एवमपि गुरुत्वेऽव्याप्तेरवारणात्, तत्र तादृशजात्यप्रसिद्धेः । न च तत्राऽपि गुरुत्वनिष्ठोत्कर्षापकर्षरूपे एव तादृशजाती प्रसिद्धे इति वाच्यम् । तथाऽपि द्वित्वादावतिव्याप्त्यापत्तेः, तेषां स्वसजातीयं यत्स्वाश्रयसमवायिसमवेतं द्वित्वान्तरं, तन्निष्ठसङ्ख्यात्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वात् । न च सङ्ख्यात्वावच्छिन्नं प्रति सङ्ख्यात्वेन सामान्यकार्यकारणभावानभ्युपगमान्नैष दोष इति वाच्यम् । तथाऽपि गुरुत्वस्य स्वोत्कृष्टगुरुत्वजनकत्वनियमेन कस्याऽपि गुरुत्वस्य स्वसजातीयगुरुत्वजन्यत्वविरहात् । न च गुरुत्वत्वावच्छिन्नं प्रति गुरुत्वमात्रस्याऽपि कारणतया स्वसजातीयवृत्तिगुरुत्वत्वावच्छिन्नजनकतामादाय लक्षणसमन्वयः करणीय इति वाच्यम् । तर्हि स्वसजातीयगुरुत्वस्य स्वाश्रयसमवायिसमवेतत्वाऽसम्भवेन पुनस्तद्दोषतादवस्थ्यात् । ननु मृण्मयघटादौ पक्वे सति गुरुत्वन्यूनीभावदर्शनात् गुरुत्वस्याऽपि पाकजन्यत्वाभ्युपगमावश्यकतया तादृशघटमादाय लक्षणसमन्वयः सम्भवति, स्वपदेन पाकजनितन्यूनगुरुत्वस्य ग्रहणे तत्सजातीयं यत्तदाश्रयसमवायिमात्रसमवेतं प्राक्तनं घटारम्भकखण्डद्रव्यनिष्ठं गुरुत्वं तन्निष्ठगुरुत्वत्वावच्छिन्नजनकतानिरूपितजन्यतायास्तत्र सत्त्वात् । न च तत्र लक्षणसम्भवेऽपि प्राक्तनगुरुत्वे कथं लक्षणसम्भवः? तस्य स्वसजातीयस्वाश्रयसमवायिमात्रसमवेतगुरुत्वाप्रसिद्धेरिति वाच्यम् । अग्रे जातिघटितस्यैव लक्षणस्य करणीयत्वेनोत्तरगुरुत्वस्य कारणगुणोत्पन्नत्वसिद्धौ तद्वृत्तिजातिमादायैव प्राक्तनगुरुत्वे लक्षणसम्भवात् । न च गुरुत्वस्य पाकजन्यत्वेऽपसिद्धान्तः, लीलावतीकृद्भिः भस्मनि गुरुत्वा-

दिनकरी ।

**ननु तथाऽपि नित्यरूपे, सङ्ख्याप्रचयजन्यपरिमाणे, कर्मजवेगे चाऽव्याप्तिरिति चेन्न । स्वाश्रयसमवायिमात्रसमवेतत्वसजातीयगुणजन्यवृत्तिजातिमत्त्वस्य विवक्षितत्वात्, नित्यरूपादौ तादृशरूपत्वादिकमादाय लक्षणसमन्वयात् । अत्र च सङ्ख्यात्वपृथक्त्वत्वातिरिक्तत्वेन भावनावृत्त्यन्यत्वेन च तादृशजातिर्विशेषणीया, तेन तादृशसङ्ख्यात्वं पृथक्त्वत्वं चाऽऽदाय द्वित्व-द्विपृथक्त्वादौ नाऽतिव्याप्तिः, न वाऽवयववेगजन्यावयविवेगवृत्ति सत्ता-गुणत्व-संस्कारत्वान्यादाय भावनायामतिव्याप्तिः । न चैवं जातिघटितलक्षणे तादृशरूपत्वादिजातिमादाय पाकजरूपादावतिव्याप्तिरिति वाच्यम् । तादृशजातिमत्त्वे सत्यपाकजत्वस्य विवक्षितत्वादिति**

रामरुद्री ।

पकर्षनिर्वाहाय गुरुत्वे पाकजन्यत्वस्य स्वीकृतत्वादिति चेन्न । गुरुत्वस्य पाकजन्यतायाः ग्रन्थकारानुमतत्वात् । अन्यथा द्रवत्वे स्वातन्त्र्येण पाकजत्वोक्तिवत् गुरुत्वेऽपि तथाकथनप्रसङ्गात् । नच कथं तर्हि भस्मनि गुरुत्वन्यूनीभाव इति वाच्यम् । तत्र काष्ठनिष्ठस्निग्धजलभागापसरणेनैव गुरुत्वापकर्षस्योपगन्तव्यत्वात् । विवेचयिष्यते चेदमुपरिष्टादिति चेत्,—

अत्र ब्रूमः । सुवर्णादिषु यादृशं गुरुत्वमनुभूयते. न तादृशं तूलकादावतिपिण्डितेष्वपि कचिदट्टचरं, अतो गुरुत्वानि नानाविधान्यभ्युपगन्तव्यान्येव । तादृशवैजात्यानां च विलक्षणविलक्षणतुलाकोटिनमनरूपपतनजनकतावच्छेदकतयैव सिद्धिः । कारणगुरुत्वेन च कार्ये सजातीयमेव गुरुत्वमारभ्यते, अन्यथा तोलकतोलकपरिमितकपालद्वयारब्धस्य घटस्य द्वितोलकपरिमितत्वापत्तौ तादृशद्रव्यसमूहस्य चतुस्तोलकपरिमितत्वापत्त्यातत्र तत्कार्यपतनप्रसक्तेः । न च भवन्मते त्रितोलकपरिमितत्वापत्तिस्तस्य दुर्वारैवेति वाच्यम् । सामानाधिकरण्य-स्वसमवायिसमवेतसमवेतत्वोभयस्वसमवायिसंयुक्तसमवेतत्व-स्वसमवायिसंयुक्तसंयुक्तसमवेतत्वादिसम्बन्धैस्तत्र गुरुत्वविशिष्टगुरुत्वस्यैव विलक्षणपतनजनकतया कार्यकारणगुरुत्वयोर्वैजात्याभावेऽपि पतननियमोपपत्तेः। तथा च गुरुत्वेषु गुणत्वव्याप्यव्याप्या जातिः सुवर्णगुरुत्वत्वादिकं, तादृशजातिमत्त्वाश्रयसमवायिसमवेतगुरुत्वारब्धत्वं तत्राऽव्याहतमेवेति लक्षणसमन्वय इत्यवधेयम्

वस्तुतस्तु गुरुत्वेषु वैजात्याभ्युपगमे गुरुत्वस्योत्कृष्टगुरुत्वजनकत्वमेव सम्यगिति वयमुपरिष्टाद्वक्ष्यामः । तथा चाऽस्मदीय एव कारणगुणोत्पन्नत्वपरिष्कारः सम्यक् । न च भवन्मते नित्यगुणेष्वव्याप्तिरिति वाच्यम् । **'अपाकजाः'** इत्यस्य सर्वत्राऽन्वितताया: प्रागेवाऽस्माभिरभिहितत्वात् । न च तर्हि **'द्रवत्वं च तथाविधम्'** इत्युक्तिर्भवन्मते विरुध्यत इति वाच्यम् । **'अपाकजास्तु स्पर्शान्ता द्रवत्वं च'** इति च्छेदेन द्रवत्वे 'च'कारबलेनैव, **'तथाविधम्, स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम्, स्थितिस्थापकः'** इतिच्छेदकरणेन चाऽन्यत्राऽप्यपाकजताया ग्रन्थत एव लाभसम्भवादित्यवधेयम् ।

**नित्यरूप इति** । तस्य जन्यत्वाभावे स्वाश्रयसमवायिसमवेतगुणजन्यत्वस्याऽप्यभावादिति भावः। इदमुपलक्षणम् । नित्यरसादावित्यपि बोध्यम् । नित्येष्वव्याप्तिमुक्त्वा जन्येष्वपि तामाह—**सङ्ख्याप्रचयेत्यादिना** । सङ्ख्याप्रचयमात्रजन्यपरिमाण इति तदर्थः । तेन सङ्ख्यापरिमाणप्रचयैतत्त्रितयजन्यपरिमाणव्युदासः । उत्तरयति—**स्वाश्रयेत्यादि** । **जातिमत्त्वस्येति** । इदं तु बोध्यम् । विषयतया त्वाचप्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्येन प्रतिबन्धकतावच्छेदकतया रूपरसगन्धशब्देषु वैजात्यसिद्धेरावश्यकतया तादृशवैजात्यमादाय शब्दे निरुक्तलक्षणस्याऽतिव्याप्तिरवशिष्यत एव, तथाऽपि गुणवृत्तिपदेन गुणविभाजकत्वस्य विवक्षितत्वान्नाऽसङ्गतिरिति । **जातिमत्त्वे सत्यपाकजत्वस्येति** । ननु पाकजावृत्तित्वमेव जातौ किमिति विशेषणं नोपात्तम्? तावतैव त्वाचप्रत्यक्षप्रतिबन्धकतावच्छेदकजातेरपि वारणसम्भवादिति चेन्न । रूपरसादौ तादृशजात्यप्रसिद्ध्याऽव्याप्त्यापत्तेरिति भावः। ननु मूले—**'अपाकजास्तु स्पर्शान्ताः'** इत्युक्तिरसङ्गता, तद्वाक्यतः स्पर्शान्तेषु अपाकजत्वस्य 'तु'शब्दस्वारस्यनये साधर्म्यतया लाभात्, तादृशस्य चाऽर्थस्याऽव्याप्त्यतिव्याप्तिग्रस्तत्वेनाऽयुक्तत्वादित्याशङ्कां निराकर्तुम-

**संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥**

संयोगश्चेति । **कर्मजन्यत्वं यद्यपि न साधर्म्यं, घटादावतिव्याप्तेः, संयोगजसंयोगेऽव्याप्तेश्च, तथाऽपि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम् ।**

**दिनकरी।**

सर्वं चतुरस्रम् । लक्ष्यतावच्छेदकेऽपाकजत्वविशेषणस्य प्रयोजनमाह **मुक्तावल्याम्—पाकजरूपादीनामिति । कारणगुणपूर्वकत्वाभावात्**—कारणगुणपूर्वकत्वव्यवहाराभावात् । अत्र पाकजरूपरसगन्धस्पर्शपाकजद्रवत्वद्वित्वादिद्विपृथक्त्वादिसंयोगविभागपरत्वापरत्वानां न कारणगुणपूर्वकत्वं न वा अकारणगुणपूर्वकत्वं साधर्म्यमिति ध्येयम् ।

॥ इति कारणगुणोत्पन्नगुणकथनम् ॥

**रामरुद्री ।**

वतरणिकामारचयति—**लक्ष्यतावच्छेदक इत्यादिना** । तथा च लक्ष्यनिरूपणायैव मूलेऽपाकजत्वविशेषणं दत्तं, न तु लक्षणत्वेनेति न दोष इति भावः । ननु पाकजरूपादीनां कारणगुणपूर्वकत्वं नाऽस्तीत्युपगम्य तस्याऽलक्ष्यत्वमुक्त्वा स्वाश्रयसमवायिमात्रसमवेतत्वमिति लक्षणस्य पाकजेऽतिव्याप्तिमालोच्य लक्षणे पुनरपाकजत्वस्य घटकतया प्रवेशः शिरोवेष्टनेन नासिकास्पर्शनमनुधावतीत्यतः **'कारणगुणपूर्वकत्वाभावात्'** इति मूलस्य भावमाह । **कारणगुणपूर्वकत्वव्यवहाराभावादिति** । भाष्य इति शेषः। तथा च 'अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगाः कारणगुणपूर्वकाः—(१) इति भाष्ये अपाकजानामेव कारणगुणपूर्वकत्वाभिधानादस्माभिरपि तथैवोक्तमिति भावः । **'कारणगुणपूर्वकत्वव्यवहाराभावात्'** इत्यस्य लोक इत्यादिरिति केचन व्याचक्षते । तन्न । जातिघटितस्य कारणगुणपूर्वकत्वस्य लोके पाकजेऽपि व्यवहारात् । जात्यघटितस्य तु चित्ररूपादावव्याप्तिभिया प्रकृतग्रन्थानभिमतत्वस्यैवोररीकरणीयत्वादिति ध्येयम् । वस्तुतस्त्वस्मदुक्तकारणगुणपूर्वकत्वस्य लक्षणत्व एवाऽपाकजत्वविशेषणं सङ्गच्छते, अन्यथा शिरोवेष्टनेनेत्यादिशङ्कया एतद्ग्रन्थावतारणे भाष्योक्तत्वादेवमुक्तमित्युत्तरदानेन तत्परिहारसम्भवेपि भाष्ये एव किमिति इदं विशेषणमुपात्तमिति शङ्काया अनिवृत्तेरिति विभावनीयम् । ननु वस्तुन एककोटिमत्तानियमेन पाकजरूपादीनां कारणगुणपूर्वकत्वमकारणगुणपूर्वकत्वं वाऽऽवश्यकमिति तदुभयमध्येऽन्यतरस्याऽप्यभ्युपगमे तत्र तल्लक्षणस्याऽव्याप्तिरित्यभिमानमपनेतुमाह । **अत्र पाकजेत्यादि** । तथा च पूर्वनिरुक्तयोः कारणगुणोत्पन्नत्वाकारणगुणोत्पन्नत्वयोः परस्पराभावरूपत्वविरहेण नेयं शङ्का सम्भवतीति भावः । इति कारणगुणोत्पन्नगुणकथनम् ॥

**मूले-घटादावतिव्याप्तेरिति** । तस्य कुलालचेष्टाजन्यत्वात्, दण्डजन्यभ्रमिजन्यत्वाच्च, दण्डस्य स्वजन्यभ्रमिजन्यभ्रमिमत्तासम्बन्धेनैव घटे हेतुतया तस्या व्यापारविधया घटकारणत्वानपायादिति भावः कर्मासमवायिकारणकत्वमित्युक्तौ घटादावतिव्याप्तिर्न सम्भवति, तत्र कपालद्वयसंयोगस्यैवाऽसमवायिकारणत्वादित्याशयेनाऽऽह । **संयोगजसंयोग इति** । इदमुपलक्षणम् । विभागजविभागे इत्यपि बोद्धव्यम् । **कर्मजन्येत्यादि** । अत्र कर्मजन्यवृत्तिजातिमत्त्वमित्येवोक्ते तादृशीं सत्तामादायाऽतिव्याप्तिवारणाय जातौ गुणत्वव्याप्यत्वनिवेशः । वस्तुतस्तु **'संयोगश्च—'** इत्यादिमूलस्य संयोगविशेषादितात्पर्यकतया संयोगाद्यजन्यसंयोगादेरेव तदर्थतया कर्मजन्यगुणत्वमात्रमेव साधर्म्यं सम्यगित्यवधेयम् । **एवमन्यत्रेत्यादि** । नन्वयमतिदेशः कुत्र क्रियते ? न तावदग्निमेऽसमवायिकारणत्वसाधर्म्ये, तत्राऽसमवायिकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वलक्षणस्याऽनुपदमेव निराकरणीयत्वादित्यतो ग्रन्थं सङ्गमयितुमाह **टीकायाम्—**

(१) प्रशस्तपादभाष्यम् । गुणनिरूपणम् ।

स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।

भवेदसमवायित्वं, अथ वैशेषिके गुणे ॥ ९७ ॥

एवमन्यत्राऽप्यूह्यम् ॥ ९५ ॥ ९६ ॥ इति कर्मजगुणकथनम् ॥

(१)(स्पर्शान्तेति । स्पर्शोऽत्राऽनुष्णो ग्राह्यः।'पृथक्त्व'इत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वम् ।)

भवेदसमवायित्वमिति । घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति, एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वं, शब्दस्याऽपि द्वितीयशब्दं प्रति, एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम्।

॥ इत्यसमवायिकारणगुणकथनम् ॥

दिनकरी ।

एवमन्यत्राऽपीति । 'अथ प्रादेशिकः–'इत्यादिमूलेन संयोगादिद्वयविभुविशेषगुणानामव्याप्यवृत्तित्वं साधर्म्यं प्रदर्शनीयं, तत्राऽपि यथाश्रुते कर्मादावतिव्याप्तेरीश्वरज्ञानादावव्याप्तेश्चाऽव्याप्यवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यमित्यर्थः ॥ ९५ ॥ ९६ ॥

॥ इति कर्मजगुणकथनम् ॥

मूले-'एकपृथक्त्वस्नेहशब्दके' इत्यत्रैकत्वमेकपृथक्त्वं चेत्यर्थो बोध्यः ।

॥ इत्यसमवायिकारणगुणकथनम् ॥

रामरुद्री ।

अथेत्यादि । यथाश्रुत इति । स्वसामानाधिकरण्य-स्वप्रतियोगित्वोभयसम्बन्धेनाऽभावविशिष्टत्वरूपाव्याप्यवृत्तित्वपदार्थस्य लक्षणत्वोक्तावित्यर्थः । कर्मादाविति । न च अवयविकर्मणो यावदवयवकर्मनियततयाऽवयविनि कर्मणो व्याप्यवृत्तित्वात् कथमतिव्याप्तिरिति वाच्यम् । कर्मशून्यकालावच्छेदेन कर्मणोऽपि स्वाभावाधिकरणे स्वकालावच्छेदेन वृत्तित्वसम्भवात् । ननु 'प्रादेशिकः–' इति मूलेन देशिकाव्याप्यवृत्तित्वमेव साधर्म्यतया प्रतिपाद्यते, तथा च न पूर्वोक्तमव्याप्यवृत्तित्वं मूलकारानुमतं, अपि तु कालानवच्छिन्नसम्बन्धघटितस्वसामानाधिकरण्यघटितसम्बन्धद्वयेनैवेति नैष दोषः, कर्मणः कालिकाव्याप्यवृत्तित्वादित्यतो दोषान्तरमाह । ईश्वरज्ञानादाविति । आदिना तादृशेच्छादिपरिग्रहः ॥ ९५ ॥ ९६ ॥ इति कर्मजगुणकथनम् ॥

इत्यर्थो बोध्य इति । इदं च 'पृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च बोध्यम्, पृथक्त्वपदेन चैकपृथक्त्वम्' इतिमूलपाठासत्त्वमालोच्यैव लिखितम्, तेन न पौनरुक्त्यम् । युक्तं चैतत्, अन्यथा पृथक्पदस्यैकपृथक्त्वपरत्वनिर्वाहाय कारिकास्थैकपृथक्पदस्यैकपृथक्त्वरूपशब्दपरत्वावश्यकत्वे तदुत्तरभावप्रत्ययस्य तादृशशब्दार्थवृत्त्यसाधारणधर्मार्थकत्वापत्त्या प्रकृतग्रन्थार्थालाभात्, टीकाकारमते तु 'एकपृथक्त्व' इत्यस्यैव तादृशधर्मद्वयावच्छिन्ने लक्षणोपगमात्राऽनुपपत्तिरिति ध्येयम्।

अत्रेदं चिन्त्यम् । यथोक्तस्याऽसमवायिकारणत्वलक्षणस्य कर्मण्यतिव्याप्तिः, तस्या असमवायिकारणगुणत्वविवक्षया कथञ्चित्प्रतीकारेऽपि अणुपरिमाणस्य आत्मातिरिक्तपरममहत्परिमाणस्य च काऽप्यकारणतायाः प्रागेवाऽभिधानात्तत्राऽव्याप्तेः, द्विविधकारणगुणेष्वऽतिव्याप्तेश्च दुर्वारता तदवस्थैव । न च निमित्तकारणभिन्नं यदसमवायिकारणं तद्वृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षणान्नैवमिति वाच्यम् । सर्वेषामेव गुणानामन्ततः शब्दमात्रस्य स्वध्वंसप्रत्यक्षयोर्निमित्तकारणतया तत्र असमवायिकारणमात्रवर्ति-

(१) एतच्चिह्नान्तर्गतः पाठः क्वाचित्कः ।

रामरुद्री ।

न्याः कस्या अपि गुणत्वव्याप्यजातेर्विरहेणाऽसम्भवस्याऽव्याप्तेर्वा प्रसङ्गात् । अथ स्वाचप्रत्यक्षप्रतिबन्धकतावच्छेदकतया रूपरसगन्धशब्दसाधारणैकवैजात्यसिद्धेरावश्यकतया तादृशजातेरेव निरुक्तनिमित्तकारणतारहितानित्यरूपात्मकासमवायिकारणवृत्तिगुणत्वव्याप्यजातित्वेन तामादायाऽपि शब्दे लक्षणसमन्वयः सम्भवतीति चेत्, एवमपि उष्णस्पर्शे निमित्तकारणभिन्नं यदसमवायिकारणं अनुष्णस्पर्शः, तद्वृत्तिस्पर्शत्वरूपगुणत्वव्याप्य जातेर्भवदुक्तत्वाचप्रत्यक्षप्रतिबन्धकतावच्छेदकजातेश्च सत्वेनाऽतिव्याप्तिः; स्नेहस्य सङ्ग्रहनिमित्ततया निमित्तकारणभिन्नासमवायिकारणस्नेहाप्रसिद्धया तत्राऽव्याप्तिश्च दुरपह्नवैव । अतएव निमित्तकारणावृत्तिर्याऽसमवायिकारणवृत्तिर्गुणत्वव्याप्या जातिस्तद्वत्वं विवक्षितम्, रूपरसगन्धेषु प्रत्येकं तथाविधं रूपत्वादिकमादाय, स्पर्शे च शीतत्वानुष्णाशीतत्वे तथाविधे आदाय लक्षणसमन्वयः । न च रूपस्याऽपि 'अरुणया पिङ्गाक्ष्यैकहायन्या गवा-'इत्यादि—'वायव्यं श्वेतमालभेत'इत्यादिश्रुतिबलेन, रसस्य जीवनपुष्टिबलारोग्यनिमित्ततया च निमित्तकारणत्वेन कथं लक्षणसमन्वयसम्भव इति वाच्यम् । स्वसमानाधिकरणकार्यनिमित्तकारणावृत्तित्वस्य विवक्षितत्वे निरुक्तदोषवारणसम्भवादिति परास्तम् । तथात्वेऽपि उष्णस्पर्शस्य स्वसमानाधिकरणकार्यनिमित्तत्वाभावेन तत्राऽतिव्याप्तेर्दुर्वारत्वापत्तेः । न च सोऽपि लक्ष्य एव 'स्पर्शान्त-' इत्यादिमूले तथैव प्रतिपादनादिति वाच्यम् । तथासति 'रूपरसगन्धानुष्णस्पर्शसङ्ख्यापरिमाणैकत्वैकपृथक्त्वस्नेहशब्दानामसमवायित्वम्-(१) इतिभाष्यासाङ्गत्यप्रसङ्गात् । अथ समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिमित्तकारणतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयित्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकविषयितावच्छेदकावृत्तिः असमवायिकारणतावच्छेदिका या जातिस्तद्वत्वं तत्वम्, रूपरसगन्धानुष्णस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहशब्दानां क्वचिदपि समवायेन कार्ये समवायेनाऽकारणत्वान्नाऽव्याप्तिः । उष्णस्पर्शस्य तु उष्णस्पर्शवदग्निसंयोगस्य समवायेन पाकजनकतया उष्णस्पर्शत्वजातेस्तादृशकारणतावच्छेदककोटिप्रविष्टवृत्तितया तत्र नाऽतिप्रसङ्गः । स्नेहेऽपि तस्य स्वाश्रयसंयोगसम्बन्धेन सङ्ग्रहनिमित्ततया न समवायसम्बन्धेन तत्र कारणतेति नाऽप्रसङ्ग इति चेन्न । स्नेहवज्जलसंयोगस्याऽपि कारणतया तदवच्छेदककोटिप्रविष्टतया स्नेहस्य तद्दोषतादवस्थ्यात् । न च जले पिण्डीभावानुत्पत्त्या तत्र व्यभिचारवारणाय स्वाश्रयसंयोगसम्बन्धेनैव तस्य हेतुत्वमावश्यकमिति वाच्यम् । एवं सत्युष्णस्पर्शस्याऽपि स्वाश्रयसंयोगेनैव पाकजरूपाद्युत्पत्तौ कारणत्वस्य तेजसि व्यभिचारवारणायाऽवश्योपगन्तव्यतया तत्राऽतिव्याप्तेर्दुर्वारत्वापत्तेः, ईदृशार्थस्य मूलस्वरससिद्धत्वाभावाच्चेति ।

अत्र वदन्ति । कारणतावच्छेदकसम्बन्धेन स्वाधिकरणे एव कार्यतावच्छेदकसम्बन्धेन वर्तमानं यत् कार्यं तन्निरूपितनिमित्तकारणताशून्यत्वे सति तस्याऽसमवायिकारणत्वं तत्वम् । कार्यताविशिष्टत्वमिति तु फलितार्थः । वैशिष्ट्यञ्च स्वविशिष्टनिमित्तकारणताशून्यत्व——स्वनिरूपितासमवायिकारणतावत्त्वोभयसम्बन्धेन । वैशिष्ट्यं च स्वनिरूपितत्व—स्ववृत्तित्वोभयसम्बन्धेन । स्ववृत्तित्वं च स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नाधेयताकूटविशिष्टत्वसम्बन्धेन । वैशिष्ट्यं च स्वानिरूपकाधिकरणानिरूपिताधेयतावत्त्वसम्बन्धेन । आधेयतावत्ता च स्वावच्छेदकधर्मसामानाधिकरण्य—स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । तद्वृत्तिगुणत्वव्याप्यजातिमत्त्वं असमवायिकारणत्वम् । तथा हि रूपरसगन्धानुष्णस्पर्शेषु प्रत्येकं रूपत्वरसत्वाद्यवच्छिन्नकार्यता आदाय लक्षणसमन्वयः । न च तर्हि उष्णस्पर्शेऽतिव्याप्तिः, तस्याऽपि स्पर्शत्वावच्छिन्नकार्यताविशिष्टो योऽनुष्णस्पर्शस्तन्निष्ठगुणत्वव्याप्यजातिमत्त्वादिति वाच्यम् । कार्यताविशिष्टत्वस्य गुणत्वव्याप्यजातावेव विवक्षणीयत्वात् । वैशिष्ट्यं च स्वविशिष्टनिमित्तकारणतावद्वृत्तित्व—स्वनिरूपितासमवायिकारणतावद्वृत्तित्वोभयसम्बन्धेन । अन्यत्सर्वं पूर्ववत् । उष्णत्वजातिस्तु न ग्रहीतुं शक्यते, पाकजस्पर्शत्वावच्छिन्नकार्यताविशिष्टत्वाभावात् । न च स्पर्शत्वावच्छिन्नकार्यतामादायैव तत्राऽतिप्रसङ्गो दुर्वार इति वाच्यम् । स्वविशिष्टनिमित्तकारणताशून्यत्वघटक-

(१) प्रशस्तपादभाष्यम् । गुणनिरूपणम् ।

रामरुद्री।

वैशिष्ट्यस्य स्वसमानाधिकरणकार्यतावैशिष्ट्यरूपस्यैव विवक्षणेनोष्णस्पर्शस्य तादृशपाकजनिमित्ततया निरुक्तातिव्याप्त्युदाससम्भवात्। न च स्वसमानाधिकरणकार्यत्वावच्छिन्नकार्यतानिरूपितकालत्वावच्छिन्ननिमित्तकारणतामादाय जन्यरूपादावव्याप्तिरिति वाच्यम्। तदर्थमेव स्वविशिष्टनिमित्तकारणतेत्यत्र वैशिष्ट्यघटकतयास्ववृत्तित्वसम्बन्धनिवेशात्। तस्य च कालत्वावच्छिन्नकारणतायां विरहात्। कालिकसम्बन्धेन कार्यत्वावच्छिन्नं प्रति तादात्म्येन कालस्य हेतुतया कस्या अपि कालव्यक्तेराधेयतायास्तादात्म्यसम्बन्धावच्छिन्नाया वैशिष्ट्यस्य कार्यतायामसम्भवात्। अत एव पूर्वदिशि स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशोऽपि। अन्यथा कालिकादिसम्बन्धावच्छिन्नतादृशाधेयतावैशिष्ट्यस्य तत्र सम्भवेन तद्दोषतादवस्थ्यात्। उत्तरत्रापि च स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेश आवश्यकः। अन्यथा तादृशतादात्म्यसम्बन्धावच्छिन्नाधेयतावैशिष्ट्यस्य कार्यतायां सम्भवेन तद्दोषापत्तेः। कूटेति तु स्वरूपकथनमात्रम्, न तु लक्षणे निवेशनीयं, प्रयोजनविरहात्। एवं चोष्णस्पर्शे नाऽतिव्याप्तिः, तस्य पाकजनिमित्तत्वेन स्पर्शनिष्ठकार्यताविशिष्टत्वासम्भवात्। अथ पाकजस्पर्शे व्यभिचारवारणायाऽपाकजस्पर्शत्वस्य स्पर्शजन्यतावच्छेदकत्वेनाऽभ्युपगन्तव्यतया तादृशकार्यताविशिष्टत्वं उष्णत्वजातावप्यस्त्येवेति तत्राऽतिप्रसङ्गो दुर्वार इति चेन्न। स्वसामानाधिकरण्यस्थाने स्वावच्छेदकसमानाधिकरणत्वस्यैव निवेशनीयत्वात्। रूपादेरदृष्टादिनिमित्ततया तत्राऽव्याप्तिवारणाय च तस्य निवेशो बोध्यः। परिमाणेषु च तादृशपरिमाणत्वावच्छिन्नकार्यतामादाय लक्षणसमन्वयः। अन्यथा शत्रुपीवरतादिरूपस्य तस्य स्वदुःखं प्रति निमित्तकारणतयाऽव्याप्त्यापत्तेः। एकत्वैकपृथक्त्वयोरपि एकत्वत्वैकपृथक्त्वत्वावच्छिन्नकार्यतामादाय लक्षणसमन्वयः। द्वित्वद्विपृथक्त्वादौ तु नाऽतिव्याप्तिः, द्वित्वत्वद्विपृथक्त्वत्वाद्यवच्छिन्नकार्यतानिरूपितकारणताया एव द्वित्वादावभावात्। सङ्ख्यात्वाद्यवच्छिन्नायाः कारणताया अप्रामाणिकतया च न तामादाय तत्राऽतिव्याप्तिः। न च तथाऽपि द्व्यणुकपरिमाणादिकं प्रति द्वित्वादेरसमवायिकारणत्वात् कुत्रचिन्निमित्तकारणत्वाभावाच्च तत्राऽतिव्याप्तिरिति वाच्यम्। स्वनिरूपितासमवायिकारणतावद्वृत्तित्वस्थाने स्वनिरूपितासमवायिकारणत्वाभाववद्वृत्तित्वस्यैव सम्बन्धघटकतया निवेशनीयत्वेन तद्दोषवारणात्। यत्किञ्चिद्द्वित्वव्यक्तेरसमवायित्वेऽपि घटगगनादिद्वित्वव्यक्तेरतथात्वात्। वस्तुतस्तु स्पर्शान्ताश्च स्पर्शान्ताश्च स्पर्शान्ता इत्येकशेषबलेन सङ्ख्याया असमवायिकारणत्वलक्षणलक्ष्यत्वं मूलकारानुमतमिति सूपपादम्, स्पर्शोऽन्ते येषामिति व्युत्पत्त्या रूपादीनां, स्पर्शस्यान्तः—अन्तवर्तीति व्युत्पत्त्या सङ्ख्याया अपि लाभसम्भवात्। अत एव 'रूपरसगन्धानुष्णस्पर्शसङ्ख्यापरिमाणैकपृथक्त्वस्नेहशब्दानामसमवायिकारणत्वम्(१)–'इति भाष्याक्षराण्यपि सङ्गच्छन्ते। एतदेव च मूलकारस्याऽप्यभिमतम्। अन्यथा 'स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके–'इत्यत्र सङ्ख्याया अकथनेन न्यूनतापत्तेः। 'पृथक्त्व' इत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम्, पृथक्त्वपदेन चैकपृथक्त्वम्–'इति मूलग्रन्थस्य प्रक्षिप्तत्वं तु निरूपितमधस्तात्। न चैवं 'परत्वापरत्वद्वित्वद्विपृथक्त्वादीनामकारणत्वम्(२)–'इत्यग्रिमभाष्यग्रन्थविरोध इति वाच्यम्। तत्र तद्धर्मावच्छिन्नजन्यतानिरूपिततद्धर्मावच्छिन्नासमवायिनिमित्तकारणत्वान्यतराभावस्यैव साधर्म्यतया विवक्षितत्वात् तस्य द्वित्वसाधारण्ये क्षतिविरहात्। न चैवमत्राऽपीदृशमेवाऽसमवायिकारणत्वं परिष्क्रियतां, किं गुरुतरनिवेशेनेति वाच्यम्। अत्र तद्धर्मावच्छिन्नत्वं किं तन्मात्रावच्छिन्नत्वं तदवच्छिन्नत्वमेव वा? आद्ये रूपादावव्याप्तिः, तेषामपाकजरूपत्वाद्यवच्छिन्नं प्रति रूपत्वादिना कारणत्वात्। द्वितीये संयोगजसंयोगत्वावच्छिन्नं प्रति संयोगत्वेन हेतुतया तत्राऽतिव्याप्तिरिति। स्नेहस्य स्नेहत्वावच्छिन्नकार्यताविशिष्टस्नेहत्वरूपजातिमत्त्वाल्लक्षणसमन्वयः। अथ संयोगविभागगुरुत्वद्रवत्ववेगस्थितिस्थापकेष्वतिव्याप्तिः, तेषामपि संयोगजसंयोगत्वाद्यवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतादृशजातिमत्त्वादिति चेन्न। असमवायिकारणत्वपदेन गुणमात्रासमवायिकारणत्वस्य विवक्षितत्वेन गुणेतरासमवायिकारणत्वाभावस्याऽपि प्राप्त्या संयोगगुरुत्वद्रवत्ववेगस्थितिस्थापके

(१) प्रशस्तपादभाष्यम्। गुणनिरूपणम्। (२) प्रशस्तपादभाष्यम्। गुणनिरूपणम्।

**आत्मनः स्यान्निमित्तत्वं, उष्णस्पर्शगुरुत्वयोः।**

निमित्तत्वमिति। बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः।

॥ इति निमित्तकारणगुणकथनम्॥

रामरुद्री।

तिव्याप्तिवारणात्। विभागजविभागेऽतिव्याप्तेस्तु वारणाय स्वनिरूपितासमवायिकारणतावद्वृत्तित्वस्थाने स्वविशिष्टासमवायिकारणतावद्वृत्तित्वं विवक्षणीयम्। वैशिष्ट्यं च निमित्तकारणतायामिव पूर्वोक्तमनुसन्धेयम्। एवं च विभागादौ नाऽतिव्याप्तिः, तदन्तर्गतकिञ्चिद्व्यक्तिनिष्ठाधेयतावैशिष्ट्यस्याऽपि विभागजविभागत्वावच्छिन्नकार्यतायामसम्भवात्। तथा च न कोऽपि दोष इति केचित्।

अपरे तु उभयावृत्तिकार्यनिरूपितनिमित्तकारणत्वरहितत्वे सति उभयावृत्तिकार्यनिरूपितासमवायिकारणत्वमेव तत्, एवं च स्नेहस्योभयावृत्तिकार्यनिरूपितनिमित्तकारणत्वविरहाल्लक्षणसमन्वयः। विभागादेश्च विभागादिकं प्रति हेतुत्वेऽपि उभयावृत्तिकार्यं प्रत्यसमवायिकारणत्वविरहान्नाऽतिव्याप्तिः। द्रवत्वेऽतिव्याप्तिस्तु तस्य नौकादिगमनविशेषे हेतुत्वाद्वारणीयेत्याहुः। तदुभयमपि चिन्त्यम्। एतादृशार्थे महागौरवात्।

वयन्तु ब्रूमः। यत्किञ्चित्कार्यतावच्छेदकावच्छिन्नाधिकरणनिष्ठाभावीयकारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकनिमित्तकारणतावच्छेदकरहितत्वे सति तादृशयत्किञ्चिदसमवायिकारणतावच्छेदकधर्मवत्त्वमेव तत्। कारणत्वस्य व्यापकतागर्भत्वे नेदृशस्यैव तस्याऽत्राऽपि प्रविष्टत्वात्। एवं च स्नेहस्य सङ्ग्रहे निमित्तत्वेऽपि नाऽव्याप्तिः। यत्र जलसंयुक्तैकावयवेन जलासंयुक्तसकलावयवान्तरस्य संयोगस्तत्र स्नेहस्य स्वाश्रयजलसंयुक्तत्वसम्बन्धेनाऽभावस्य जलासंयुक्तसकलावयवनिष्ठस्य प्रतियोगितया स्नेहत्वस्य तत्प्रतियोगितानवच्छेदकत्वविरहात्। संयोगविभागयोरपि नाऽतिव्याप्तिः, यत्र हस्तपुस्तकसंयोगाद्धस्तपुस्तकविभागाच्च हस्तपुस्तकसंयोगविभागौ, तत्र तादृशविभागजविभागे संयोगजसंयोगे च प्राथमिकविभागसंयोगयोः समवायेन स्वसमवायिसमवेतत्वसम्बन्धेन च प्रत्येकं द्विविधहेतुतया तदन्यतरावच्छेदकसम्बन्धमध्यवर्तिना केनाऽपि सम्बन्धेन तयोः कार्याव्यापकत्वात्। गुरुत्वेऽतिव्याप्तिस्तु तस्याऽभिघातजनिकायां क्रियायामसमवायिकारणत्वेऽपि अभिघातजन्यायां क्रियायां निमित्तकारणतया वारणीया। एषा रीतिर्वेगस्थितिस्थापकयोरपि समाना। अथैवमपि द्रवत्वेऽतिव्याप्तिर्दुर्वारा। न च तस्य नौकागमनविशेषे निमित्तत्वान्नाऽतिव्याप्तिरिति शङ्क्यम्। नौकागमनादेः कठिनद्रव्ये तस्य प्रतिबन्धकत्वादेवाऽसम्भवोपपत्तौ तत्र द्रवत्वस्य हेतुत्वे मानाभावादिति चेन्न। प्रचितद्रव्यस्य तूलादेरूर्ध्वावलम्बितस्याऽधोदेशावच्छेदेन जलसंयोगे सति जलस्य सकलतत्पिण्डव्याप्तिनियमाय तादृशगमनविशेषे द्रवत्वस्य समवायेन हेतुत्वं वक्तव्यम्, न च सा क्रिया स्नेहकार्या, द्रवत्वप्रकर्षात्तादृशक्रियातिशयस्येव स्नेहप्रकर्षात्तदनुपलब्धेः, तन्निरूपितनिमित्तकारणत्वस्य च द्रवत्वे सत्त्वादतिव्याप्तिविरहात्। न चैवं 'तथाऽपि एकाश्रितकार्यापेक्षया एतद्द्रष्टव्यम्' इति किरणावलीग्रन्थविरोध इति वाच्यम्। तद्ग्रन्थस्य क्रियासंयोगोक्तकार्यकारणभावरीत्या कारणत्वमिह न परिष्करणीयं, किन्तु यथाश्रुतमेव निवेशनीयमित्यभिप्रायकत्वादिति। न च तथाऽपि भवन्मते स्थितिस्थापकस्याऽलक्ष्यत्वान्मूले च तस्य लक्ष्यत्वाभ्युपगमान्मूलविरोध इति वाच्यम्। 'एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम्' इति ग्रन्थस्य किरणावल्यादिस्वारस्येन प्रामादिकत्वावधारणात्, 'सङ्ख्यैकपृथक्त्वयोः' इत्येव वक्तव्यत्वादिति सर्वमवदातमिति सङ्क्षेपः। ॥ इत्यसमवायिकारणगुणकथनम्॥

ननु 'अथ वैशेषिके गुणे, आत्मनः स्यान्निमित्तत्वम्' इति मूलेन विशेषगुणेषु आत्मनो निमित्तत्वं प्रतिपाद्यते, तदसङ्गतं, सन्दर्भविरुद्धं च, रूपादिषु विशेषगुणेषु आत्मनो निमित्तकारणत्वाभावात्, गुणसाधर्म्यकथनप्रकरणे आत्मनः कारणत्वविचारस्याऽप्रकृतत्वाच्चेत्याशङ्कामपनेतुं कारिकायामन्वयमाह—

दिनकरी।

मूले 'वैशेषिके गुणे' इत्यत्र 'आत्मनः' इत्यस्याऽन्वयः। इति निमित्तकारणगुणकथनम्॥

रामरुद्री।

**वैशेषिके गुण इत्यादिना**। तथा चाऽऽत्मगुणानां निमित्तकारणत्वरूपसाधर्म्यकथनपरत्वेन तद्ग्रन्थस्य नाऽसङ्गतिरिति भावः। अथाऽत्र यथाश्रुतस्य निमित्तकारणत्वस्य द्रव्ये रूपादावितरत्र चाऽतिव्याप्तिः, तेषामपि स्वध्वंसप्रत्यक्षयोर्निमित्तकारणत्वात्। न च समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिमित्तकारणत्वमेव विवक्षितमिति नैष दोष इति वाच्यम्। तथा सति सुखदुःखयोर्भगवद्विशेषगुणेषु चाऽव्याप्तेः। तेषां कुत्राऽपि समवायेन कार्ये समवायेनाऽकारणत्वात् न चाऽसमवायिकारणताशून्यत्वमेव विवक्षितमिति नैष दोष इति वाच्यम्। पारिमाण्डल्येऽतिव्याप्तेः। न चाऽसमवायिकारणताशून्यत्वे सति निमित्तकारणत्वं वक्तव्यमिति वाच्यम्। तथा सति जागराद्यक्षणोत्पन्नोपेक्षात्मकघटादिज्ञानेष्वतिव्याप्त्यापत्तेः, तेषां कुत्राऽपि निमित्तकारणत्वाभावात्। मैवम्। यत्किञ्चित्कार्यतानिरूपितसमवायसम्बन्धावच्छिन्ननिमित्तकारणतावत्त्वस्यैव तदर्थत्वात्। स्वध्वंसप्रत्यक्षयोः स्वस्य तादात्म्येनैव कारणतया नाऽतिप्रसङ्गः। ईश्वरगुणानामपि तत्समानाधिकरणसंयोगविभागादिषु समवायेन निमित्तकारणतया लक्षणसङ्गतिः। कारणतायां समवायविषयित्वान्यतरसम्बन्धावच्छिन्नत्वं वा वक्तव्यमिति न दोषः। असमवायिकारणताशून्यत्वे सति निरुक्तसम्बन्धावच्छिन्नकारणतावत्त्वमिति तु फलितार्थः। तेन द्विविधकारणे नाऽतिप्रसङ्गः। एवञ्च योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यतया तन्नाशकतामादायैव सर्वत्र लक्षणं नेयम्। न च योग्यविभुविशेषगुणानां प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वसामानाधिकरण्य—स्वाव्यवहितपूर्वत्वोभयसम्बन्धेनाऽनुगतकारणत्वात् सुखादौ योग्यविभुविशेषगुणनाशकतायाः समवायादिसम्बन्धावच्छिन्नत्वविरहेण तामादाय लक्षणसमन्वयासम्भव इति वाच्यम्। अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वानुरोधेनेदृशकार्यकारणभावानभ्युपगमात्। कार्यतावच्छेदकघटकयोग्यविभुविशेषगुणकोटौ अपेक्षाबुद्धिभिन्नत्वस्य निवेशे चाऽपेक्षाबुद्धित्वस्याऽननुगतस्य विरहेण तत्तद्व्यक्तिभेदकूटस्य निवेशापत्त्या तेषां परस्परं विशेष्यविशेषणभावे विनिगमनाविरहेणाऽनन्तकार्यकारणभावापत्त्या गौरवं, योग्यविभुविशेषगुणत्वस्याऽननुगतस्य निर्वक्तुमशक्यतयेदृशकार्यकारणभावानुपपत्तिः, स्वरूपसम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति समवायेनैव विभुविशेषगुणः कारणमिति कार्यकारणभावस्यैव लाघवेन स्वीकरणीयतया भवदुक्तदोषासङ्गतिश्च। न चैवमपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वानुपपत्तिरिति वाच्यम्। तद्भेदकूटस्य कार्यप्रतियोगिकुक्षौ भवतेव मयाऽपि निवेशनीयत्वात्। अथैवमपेक्षाबुद्धिरूपकारणबलात्तदुत्तरक्षणे योग्यविभुविशेषगुणात्मकस्वनाशापत्तिर्दुर्वारैवेति चेन्न। तत्तदपेक्षाबुद्धिव्यक्तिभेदकूटस्य कारणतावच्छेदककुक्षावपि निवेशनीयत्वात्। न च यत्र जागरणाद्यक्षणे किञ्चिज्ज्ञानं जातं, तत्र निरुक्तलक्षणविरहादव्याप्तिरिति वाच्यम्। तत्क्षणे यदि प्रत्यक्षादिसामग्री समवहिता स्यात् तर्हि तज्ज्ञानविषयविशिष्टप्रत्यक्षादिजनकत्वमादायैव तत्र लक्षणं नेयम्, नो चेन्मानसप्रत्यक्षजनकतामादायेति। न च यत्राऽऽद्यक्षणे घटज्ञानं, तत इन्द्रियसन्निकर्षः पटेन, ततः पटस्य प्रत्यक्षं, तत्र घटज्ञानस्य कुत्राऽप्यकारणतयाऽव्याप्तिः, घटविषयकलौकिकप्रत्यक्षसामग्र्या प्रतिरुद्धत्वेन मानसस्य तत्र स्वीकर्त्तुमशक्यत्वादिति वाच्यम्। तत्र घटज्ञानस्य तद्विशिष्टबुद्धौ कारणतामादायैव लक्षणगमन सम्भवात्। न च यत्र घटेऽवृत्तिरिति बाधनिश्चयोऽपि, तत्र नैतादृशरीत्याऽपि लक्षणसमन्वयसम्भव इति वाच्यम्। तस्य तदानीं प्रतिबन्धकसमवधानवशात्कार्यानुपधायकत्वेऽपि स्वरूपयोग्यतारूपकारणत्वानपायात्। सर्वथा षण्डज्ञानादिव्यक्तेः प्रामाणिकत्वे तु तादृशनिमित्तकारणवृत्त्यसमवायिकारणावृत्तिजातिमत्त्वस्य विवक्षितत्वान्नाव्याप्तिरिति। अत एवेश्वरज्ञानादावपि लक्षणसमन्वयसम्भवात्कारणतायां निरुक्तान्यतरसम्बन्धावच्छिन्नत्वमपि न निवेशनीयम्। न चैवमसमवायिकारणावृत्तित्वदलस्य किं फलमिति वाच्यम्। शब्दस्य स्वोत्तरशब्दनाशे निरुक्तयोग्यविभुविशेषगुणविधया कारणतामादाय तत्राऽतिव्याप्तिवारणायैव तस्य निवेशनीयत्वात्। एतेन ज्ञायमानलिङ्गस्याऽनुमितिहेतुतया लक्षणमिदं धूमा-

वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥
द्विधैव (१) कारणत्वं स्यात्, अथ प्रादेशिको भवेत्।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥

द्विधैवेति। असमवायिकारणत्वं निमित्तकारणत्वं च। तथा हि—उष्णस्पर्श उष्णस्पर्शस्याऽसमवायिकारणं, पाकजे निमित्तम्। गुरुत्वं गुरुत्वपतनयोरसमवायिकारणं, अभिघाते(२) निमित्तम्। वेगो वेगस्पन्दयोरसमवायी, अभिघाते निमित्तम्। द्रवत्वं द्रवत्वस्पन्दयोरसमवायि, सङ्ग्रहे निमित्तम्। भेरीदण्डसंयोगः शब्दे निमित्तं, भेर्याकाशसंयोगोऽसमवायी। वंशदलद्वयविभागः शब्दे निमित्तं, वंशदलाकाशविभागोऽसमवायीति।

॥ इति द्विविधकारणगुणकथनम् ॥

दिनकरी।

मुक्तावल्याम्—उष्णस्पर्श इति। अवयवगत उष्णस्पर्श इत्यर्थः। उष्णस्पर्शस्य—अवयविगतोष्णस्पर्शस्य। एवमग्रेऽपि। कारणैकार्थप्रत्यासत्त्या कार्यैकार्थप्रत्यासत्त्या च गुरुत्वस्याऽसमवायिकारणत्वमिति प्रदर्शनाय 'गुरुत्वपतनयोः' इत्युभयमुक्तम्। एवमग्रेऽपि। सङ्ग्रहे-सक्त्वादिसंयोगविशेषे (३)। 'भेर्याकाशसंयोगोऽसमवायी' इति प्रथमान्तसंयोगपदघटितः पाठः। भावकार्यस्याऽसमवायिकारणजन्यत्वनियमाद्भेर्याकाशसंयोगस्य शब्दं प्रत्यसमवायिकारणत्वमावश्यकमिति भावः। यद्यपि भेरीदण्डसंयोगस्य शब्दे निमित्तत्वं, न तु तत्र तस्याऽसमवायिकारणत्वं, भेर्याकाशसंयोगस्याऽसमवायिकारणत्वं, न तत्र तस्य निमित्तत्वमित्येकव्यक्तेर्न द्विविधहेतुत्वं, तथापि संयोगजातीयस्य द्विविधहेतुत्वमस्त्येवेति भावः। एवमग्रेऽपि। मूले 'संयोगादिद्वये तथा' इत्यनन्तरं 'द्विधैव' इत्यस्य प्राक्—

रामरुद्री।

दिहेतावतिव्याप्तं, ज्ञायमानसामान्यस्य प्रत्यासत्तित्वेऽपि तथा, ज्ञायमानपदस्य शाब्दबोधकारणत्वे चैवमित्यादिः केषांचित् प्रलापोऽपि निरस्तः। ज्ञायमानपदलिङ्गयोः कालिकसम्बन्धेनैवाऽनुमितिशाब्दबोधौ प्रति कारणतया निरुक्ताव्याप्त्यभावात्। ज्ञायमानसामान्यस्य च सखण्डाखण्डभेदेन द्विविधतया तत्र चाऽखण्डस्य लक्षणघटकजातिमत्त्वविरहादेव वारणसम्भवात्। सखण्डसामान्यस्थलेऽप्यखण्डस्यैव परम्परया प्रत्यासन्नस्य हेतुतायास्तत्र तत्र व्यवस्थापितत्वात्, कार्यतायां समवायस्वरूपान्यतरसम्बन्धावच्छिन्नत्वं निवेश्यैव वा तस्या वारणीयत्वादिति सर्वं चतुरस्रम्। अन्यैः परिष्कृतं निमित्तकारणत्वमल्पसारत्वात्, विस्तरभयाच्च नेह प्रदर्शितमिति बोध्यम्। ॥ इति निमित्तकारणगुणकथनम् ॥

मूले-अभिघाते निमित्तमिति। कचित्पुस्तके 'अभिघाते' इत्यस्य स्थाने 'प्रतिघाते' इत्यपि पाठः। तत्र च प्रथम एव पाठः सम्यक्। प्रतिघातस्य वाय्वादिष्वपि तुल्यत्वात्। अभिघातविशेषस्तु गुरुत्वादेरानुभविक इति।

संयोगजातीयस्येति। तथा चाऽसमवायिकारणवृत्तिनिमित्तकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं लक्षणं फलितमिति भावः। पूर्वं निरुक्तासमवायिकारणत्वलक्षणानुसारेण चाऽत्राऽपि द्विविधकारणत्वलक्षणं परिष्करणीयम्।

---

(१) 'द्विविधम्' इति पुस्तकान्तरे पाठः। (२) 'प्रतिघाते' इति पाठान्तरम्।
(३) 'संयोगविभागविशेषे' इति पाठान्तरम्।

दिनकरी।

'परापरत्वद्वित्वादिद्विपृथक्त्वादिके पुनः-'

इति पाठः क्वचित्पुस्तके प्रमादादायातः। परत्वादीनामकारणत्वेन द्विविधकारणत्वस्य तत्राऽभावात्। न च परत्वादीनामपि स्वध्वंसप्रत्यक्षे प्रति हेतुत्वात् कथमकारणत्वमिति

रामरुद्री।

इदं त्ववधेयम्। यद्यपि पूर्वनिरुक्तलक्षणानुसारेण प्रकृतलक्षणपरिष्करणेऽनुष्णस्पर्शादावतिव्याप्तिर्दुर्वारा। न चाऽसमवायिकारणवृत्तिनिमित्तकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं विवक्षितमिति नैव दोष इति वाच्यम्। एवमपि गुरुत्वादौ लक्षणसमन्वयासम्भवात्। पूर्वनिरुक्तयनुसारेण विवक्षणे कार्यताविशिष्टगुणत्वव्याप्यजातिमत्त्वस्यैव फलिततया तस्य गुरुत्वादावभावात्। वैशिष्ट्यं हि स्वविशिष्टनिमित्तकारणतावद्वृत्तित्व-स्वनिरूपितासमवायिकारणतावद्वृत्तित्वोभयसम्बन्धेन। स्ववैशिष्ट्यं च स्वावच्छेदकसमानाधिकरणकार्यतावत्त्वसम्बन्धेन। कार्यतावत्ता च स्वनिरूपितत्व-स्ववृत्तित्वोभयसम्बन्धेन। स्ववृत्तित्वं च स्वसमानाधिकरणोभयावृत्तिधर्मवत्त्वसम्बन्धेन। धर्मवत्ता च स्वावच्छिन्नाधेयतावत्त्वसम्बन्धेन। आधेयतावत्ता च स्वानिरूपकाधिकरणानिरूपिताधेयतावच्छेदकधर्मवत्त्वसम्बन्धेन। धर्मवत्ता च सामानाधिकरण्यसम्बन्धेनेति। तच्च गुरुत्वादौ नोपपादयितुं शक्यते, तथा हि गुरुत्वं गुरुत्वपतनयोरसमवायि, अभिघाते निमित्तमित्यन्यधर्मावच्छिन्नासमवायिकारणत्वमितरधर्मावच्छिन्ननिमित्तकारणत्वं च द्योत्यते, एवं वेगो वेगस्पन्दयोरसमवायि, अभिघाते निमित्तमिति, द्रवत्वं द्रवत्वस्पन्दयोरसमवायि, सङ्ग्रहे निमित्तमिति। तथाऽपि समवायसम्बन्धावच्छिन्नकार्यतावैशिष्ट्यमत्र गुणत्वव्याप्यव्याप्यजातौ विवक्षितम्। वैशिष्ट्यं च स्वनिरूपितनिमित्तकारणतावद्वृत्तित्व-स्वकालीनकार्यतानिरूपितासमवायिकारणतावद्वृत्तित्वोभयसम्बन्धेन। तथा च सर्वत्र लक्षणसमन्वयः। रूपादेश्च स्वध्वंसप्रत्यक्षयोर्निमित्तकारणत्वेऽपि तत्र प्रतियोगित्वविषयत्वे एव कार्यतावच्छेदकः सम्बन्धः, धर्मादिजनकत्वेऽपि च तत्र कालिक एव तथेति नाऽतिव्याप्तिरिति ध्येयम्। अथैवं स्नेहेऽतिव्याप्तिर्दुर्वारा, तस्य पिण्डीभावे निमित्तकारणत्वात्, स्नेहेऽसमवायिकारणत्वाच्च। न च गुणेतरनिरूपितनिमित्तकारणतावद्वृत्तित्वमपि जातौ विशेषणं देयम्, तथा च स्नेहस्य दहनानुकूलतया द्रव्यनिमित्तकारणत्वान्नाऽतिव्याप्तिरिति वाच्यम्। एवं सति तुरीतन्तुसंयोगादेरपि पटं प्रति निमित्तकारणतया तत्राऽव्याप्तिप्रसङ्गादिति चेन्न। गुणेतरासमवायिकारणभिन्नं यद्गुणेतरनिष्ठसमवायसम्बन्धावच्छिन्नकार्यतानिरूपितनिमित्तकारणतावत्तद्वृत्तित्वस्यैव जातौ स्वातन्त्र्येण निवेशनीयत्वात्। स्नेहस्य तथाविधनिमित्तकारणतया च नाऽतिप्रसङ्गः। गुणेतरासमवायिकारणभिन्नत्वं च गुणेतरासमवायिकारणजातीयभिन्नत्वं, साजात्यं च गुणत्वव्याप्यजात्या बोध्यं, नाऽतस्तुरीतन्तुसंयोगस्य कुत्राऽपि गुणभिन्नेऽसमवायिकारणत्वाभावेनाऽव्याप्तिरिति केचित्। अन्ये तु कार्ये एकाश्रितत्वं विशेषयन्ति।

वस्तुतस्तु पूर्वोक्तयुक्त्या स्नेहे द्विविधकारणत्वमेव न प्रसज्यते, द्रवत्वादौ वा न न प्रसज्यत इति नाऽतिव्याप्त्यव्याप्ती। न चैवं **'अभिघाते निमित्तं' 'सङ्ग्रहे निमित्तम्'** इत्यादिगुरुत्वाद्यतिव्याप्तिवारणपरग्रन्थविरोधः, भवदुक्तरीत्या तत्राऽभिघातादिनिमित्तकारणत्वस्यैवाऽप्रसक्तेरिति वाच्यम्। तद्ग्रन्थस्योल्लिखितप्रथमपक्षाभिप्रायवता केनाऽपि कल्पितत्वात्। अस्मन्मते तु **'अभिघातादौ'** इति रीत्याऽऽदिपदघटित एव पाठः। तेन च बहुव्रीहिबलादभिघातजन्यक्रियालाभः। **'सङ्ग्रहे'** इत्यत्राऽप्यादिपदघटितस्यैव पाठस्यास्मदनुमतत्वेन तत्राऽप्यतद्गुणसंविज्ञानबहुव्रीहिबलात्पूर्वोपदर्शितप्रचिततूलपिण्डाभिव्याप्तिसम्पादकजलक्रियालाभः। यद्वा तत्पाठप्रामाण्येऽपि नाऽस्मदुक्तार्थक्षतिः। अभिघातसङ्ग्रहशब्दयोरेव 'अभितो घातः-प्रचलनं यस्मात्' 'सम्यक् ग्रहोऽभिव्याप्तिर्यस्मात्' इति व्युत्पत्तिबलेन तूलपिण्डाभिव्याप्तिजनकक्रियाऽभिघातजन्यक्रिययोर्लाभ इति विभावनीयम्।

**एवमग्रेऽपीति।** प्रादेशिकगुणत्वं संयोगादीनां साधर्म्यमुक्तं, तत्राऽपि प्रादेशिकसजातीयत्वरूपमेव लक्षणं निर्वक्तव्यम्। तेन विभुविशेषगुणान्तर्गतानां भगवद्विशेषगुणानां मूलोक्तानां प्रादेशिकत्वविर-

**चक्षुर्ग्राह्यं भवेद्रूपं, द्रव्यादेरुपलम्भकम् ।**

प्रादेशिकः-अव्याप्यवृत्तिः ॥९७॥९८॥९९॥ इत्यव्याप्यवृत्तिगुणकथनम् ॥

चक्षुरिति । रूपत्वजातिस्तु प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नाऽस्तीति चेन्माऽस्तु रूपशब्दप्रयोगः, तथाऽपि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव, रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णविशे-

दिनकरी ।

वाच्यम् । ध्वंसप्रत्यक्षातिरिक्तं प्रत्यकारणत्वस्योक्तत्वात् ।

विस्तरस्त्वन्यत्राऽनुसन्धेयः । इति द्विविधकारणगुणकथनम् ॥

मुक्तावल्यां 'अव्याप्यवृत्तिः' इत्यस्य दैशिकेत्यादिः, तेन रूपादौ नाऽतिव्याप्तिः ॥ ९७ ॥ ९८ ॥ ९९ ॥ इत्यव्याप्यवृत्तिगुणकथनम् ॥

रामरुद्री ।

देऽपि न क्षतिरिति भावः । **उक्तत्वादिति** । अन्यथा द्विविधकारणत्वस्य कर्मण्यपि सम्भवेन तत्राऽतिव्याप्त्यापत्तेः । 'परत्वापरत्वद्वित्वद्विपृथक्त्वादीनामकारणत्वम्*' इति भाष्यविरोधापत्तेश्चेति भावः । इदमुलक्षणम् । त्वग्ध्वंसप्रत्यक्षयोः कारणत्वेऽपि तयोः कुत्राऽप्यसमवायिकारणत्वविरहेणैवमपि तत्राऽव्याप्तेर्दुर्वारत्वापत्तेश्चेति । एतदेवाऽभिसन्धायाऽऽह । **विस्तरस्त्विति** । **अन्यत्र**-आकरे । वस्तुतस्तु—

परापरत्वद्वित्वादिद्विपृथक्त्वादिके पुनः । अकारणत्वं साधर्म्यं विद्वद्भिः परिकीर्तितम्—'

इत्यंशपूरणेन साधर्म्यान्तरव्यवस्थापनसम्भवादुत्तरभागस्य लुप्तत्वसम्भावनैव गरीयसीति विभावनीयम् । ॥ इति द्विविधकारणगुणकथनम् ॥

**दैशिकेतीति** । कालानवच्छिन्नसम्बन्धेनेत्यर्थः । स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगिमत्ताबुद्धिविरोधितावच्छेदकविषयितावच्छेदकीभूतकालानवच्छिन्नसम्बन्धेन स्वप्रतियोग्यधिकरणे वर्तमान इत्यर्थः पर्यवसितः । **रूपादाविति** । **आदिना** कर्मादेः परिग्रहः ॥२९॥ ॥ इत्यव्याप्यवृत्तिगुणकथनम् ॥

इति श्रीरामरुद्रभट्टाचार्याख्यायां राजेश्वरशास्त्रिप्रपूरितायां महामहोपाध्यायजटापाठ्युपाह्वश्रीलक्ष्मणशास्त्रिसंशोधितायां मुक्तावलीप्रकाशतरङ्गिण्यां गुणसाधर्म्यवैधर्म्यनिरूपणाख्यो नवमस्तरङ्गः ।

साधर्म्यवैधर्म्ये निरूप्याऽवसरतः प्रत्येकं लक्षयिष्यन्नादौ निर्वक्तव्यस्य रूपलक्षणस्य लक्ष्यतावच्छेदकं निर्वक्ति मुक्तावल्याम्-**रूपत्वजातिस्त्विति । प्रत्यक्षेति** । सर्वेषु रूपेषु रूपपदशक्तिग्रहायाऽवश्यकल्पनीयायाः सकलरूपोपस्थितेर्निर्वाहायाऽवश्यकल्प्यसामान्यलक्षणाजन्यप्रत्यक्षेत्यर्थः । तथा च सकलरूपेषु एकस्या जातेः सत्त्व एव तज्ज्ञानरूपसामान्यलक्षणया सकलरूपप्रत्यक्षसम्भवात् तन्निर्वाहाय रूपत्वजातिरवश्यमेव कल्पनीयेति भावः । अत्र रूपनिष्ठविशेष्यतासम्बन्धेन रूपत्वप्रकारकप्रत्यक्षं प्रति स्वविषयसामान्यवत्त्वसम्बन्धेन रूपत्वज्ञानं कारणमिति तादृशकारणतायां विषयविधयाऽवच्छेदकतया तत्सिद्धिरिति ध्येयम् । ननु रूपशब्देन सर्वरूपोपस्थितिर्यदि भवेत्तर्हि तदर्थं रूपपदशक्तिज्ञाननिर्वाहाय रूपत्वसामान्यकल्पनमावश्यकं युक्त्यनपेतं च स्यात्, तदेव तु नेति कथं रूपत्वजातिसिद्धिसम्भव इत्याशङ्कते । **रूपशब्देति** । रूपशब्दप्रतिपाद्यत्वोल्लेखिनी प्रतीतिर्नाऽस्तीति वाक्यार्थः । प्रमेति शेषः । उत्तरयति । **माऽस्त्विति** । ननु तर्हि कथं रूपत्वजातिः सेत्स्यति ? तत्साधकव्यवहाराभावादित्यत आह । **तथाऽपीति** । तथा च व्यवहारस्याऽभावेऽपि प्रत्यक्षेणैव तत्सिद्धिर्निर्वहतीति भावः । प्रत्यक्षे प्रमाणाभावमाकलय्य शब्दविशेषव्यवहारमपि प्रदर्शयति । **रूपेत्यादि** । तथा च प्रत्यक्षे वर्णशब्दप्रयोगः प्रमाणमस्त्येवेति भावः । इदं च रूपशब्दव्यवहारस्य स्वरूपादावतिप्रसङ्गमाकलय्यैवोक्तम् । वर्णशब्दस्तु चातुर्वर्ण्यादिप्रतिपादकोऽपि रूढया न तथेति नाऽतिप्रसङ्ग इति मन्तव्यम् । प्रसङ्गादग्रे निरूपणीयानां नील-

* प्रशस्तपादभाष्यम् । गुणनिरूपणम् ।

**षोल्लेखिनी प्रतीतिरस्त्येव । एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् ।**

**॥ इति रूपत्वजातिसाधनम् ॥**

**न चैकैका एव नीलाद्यणादि(१)व्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जातिरिति वाच्यम् । नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादे-**

दिनकरी ।

'नीलत्वादिकं' इत्यादिना रक्तत्वादिपरिग्रहः । इति रूपत्वजातिसाधनम् ॥

रामरुद्री ।

त्वादीनामपि सत्त्वे प्रमाणमाह—**एवमित्यादिना** । ननु अत्राऽऽदिपदेन रसत्वादिपरिग्रहे 'एतेन रसत्वादिकमपि व्याख्यातम्'-इत्यग्रिममूलासङ्गतिरित्यत आदिपदग्राह्यं स्फुटयति टीकायाम्—**नीलत्वादीत्यादिना** । इदं तु बोध्यम् । सकलानुगतस्य प्रत्यक्षस्याऽनुद्भूतरूपादौ विवादग्रस्ततया । नैतादृशयुक्त्या रूपत्वादिजातिसाधनसम्भवः, किन्तु रासनघ्राणजस्पार्शनप्रतिबन्धकतावच्छेदकतया रूपत्वजातिसिद्धिः । अन्यथा रसनादिसंयुक्तसमवायस्य रूपेऽप्यक्षततत्वेन तत्राऽपि तत्कार्यस्य विषयतासम्बन्धेन रासनस्याऽऽपत्तेः । इदानीं तु लौकिकविषयतासम्बन्धेन रासनादिकं प्रति रूपत्वादिना प्रतिबन्धकत्वान्नैष दोषः । न च रासनत्वावच्छिन्नं प्रति रूपगन्धस्पर्शानुगतजातिविशेषावच्छिन्नस्य प्रतिबन्धकत्वकल्पने लाघवान्न निरुक्तप्रतिबध्यप्रतिबन्धकभावबलेन रूपत्वजातिसिद्धिसम्भव इति वाच्यम् । एवं सति घ्राणजप्रतिबन्धकतावच्छेदकतया रूपरसस्पर्शानुगतजातिविशेषस्याऽपि कल्पनीयत्वापत्त्या तादृशजात्या सहैतज्जातेः साङ्कर्यप्रसङ्गात् । चाक्षुषत्वावच्छिन्नं प्रत्युद्भूतरूपत्वेन कारणतया वा तत्सिद्धिः । न च तस्याऽनुद्भूतरूपसाधारण्ये किं मानमिति वाच्यम् । समानाग्निसंयोगजनितत्वस्यैव मानत्वात् । न चैवमपि नीलत्वादिजातौ किं प्रमाणमिति वाच्यम् । अयसा हरीतकीसारादेः संमेलनाद्विलक्षणतेजःसंयोगबलेन कृष्णादिरूपोत्पत्तेरनुभवसिद्धत्वेन तज्जन्यतावच्छेदकतयैव तत्सिद्धेः । न चैवमपि तस्याऽनुद्भूतसाधारण्ये किं मानमिति वाच्यम् । पाकवशात्कृष्णादिरूपोत्पत्तेरनुभवसिद्धत्वेन पाकस्य च विलक्षणोष्णस्पर्शवदग्निसंयोगरूपतया तस्याऽनुद्भूतरूपवद्वस्तुष्वप्युत्पत्तौ बाधकाभावेन तत्राऽपि तत्सिद्धेः । न चैवमपि पाकजनील एव तादृशी जातिः सिद्ध्यति, नाऽपाकज इति वाच्यम् । समवायेन नीलत्वावच्छिन्नं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलस्य कारणतया तत्सिद्धेरावश्यकत्वात् । न च नीलत्वस्यैवाऽसिद्धौ तादृशकार्यकारणभावेऽपि मानाभाव इति वाच्यम् । न हि सामान्यतो नीलत्वमसिद्धं येनैवं स्यात्, किन्तु क्वचिद्व्यक्तौ, प्रत्यक्षयोग्ये तु सिद्ध्यत्येव, तथा च न कार्यकारणभावोऽसिद्धः । इयमेव रीतिरग्रेऽप्यनुसर्तव्या । विवेचयिष्यते चेदमुपरिष्टात् ।

प्राञ्चस्तु रूपं रूपमितिप्रत्यक्षविषयतया रूपत्वजातिसिद्धिः, न हि तत्र चक्षुर्ग्राह्यत्वं विषय इति वक्तुं शक्यम्, रूपत्वादिसिद्धावेव तद्व्यञ्जकतया चक्षुरादीन्द्रियस्याऽपि साधनीयत्वादित्याहुः ।

चक्षुर्ग्राह्यत्वं सकलरूपाननुगतमनुगतं वा ? आद्येऽनुगतप्रतीत्यनुपपत्तिः, द्वितीये त्विष्टापत्तिरिति कन्दलीकाराः । विषयताया विषयतावच्छेदकरूपत्वे इष्टापत्तिः, विषयरूपत्वे त्वननुगमः, इति च तदभिप्रायो बोध्यः । इति रूपत्वजातिसाधनम् ॥

सामान्यलक्षणाजन्यप्रत्यक्षनिर्वाहाय कल्प्यमानो धर्मो बाधकाभावाज्जातिरिति वक्तव्यम्, बाधकाभाव एव तु नेत्याशङ्कते मूले—**न चेत्यादिना** । **एकैका इति** । स्वाश्रयत्व—स्वाश्रयप्रतियोगिकभेदवत्त्वोभयसम्बन्धेन नीलत्वादिशून्या इत्यर्थः । **आदिना** पीतादिपरिग्रहः । **नीलो नष्ट इति** । तथा च घटनीलः पटनीलाद्भिद्यते, पटनीलध्वंसाधिकरणकालवृत्तित्वादितिरीत्या नीलरूपाणां नानात्वं साधनीयमिति भावः । नीलो नष्ट इत्यादिप्रतीतेस्तत्समवायध्वंसविषयकतया नीलध्वंसादेरप्रामाणिकत्वान्निरुक्ता-

(१) 'नीलरूपादि' इति पाठान्तरम् ।

**उत्पादविनाशशालितया नानात्वात्, अन्यथा एकनीलनाशे जगदनीलता(१)मापद्येत । न च नीलसमवायरक्तसमवाययोरेवोत्पादविनाशविषयकोऽसौ प्रत्यय इति वाच्यम् । प्रतीत्या समवायानुल्लेखात् । न च स एवाऽयं नील इति प्रत्यक्षबला(२)ल्लाघवाच्चैक्यमिति वाच्यम् । प्रत्यक्षस्य तज्जातीय(३)विषयत्वात्, सैवेयं गुर्जरीतिवत्, लाघवं तु प्रत्यक्षबाधितं, अन्यथा घटादीनामप्यैक्यप्रसङ्गात्, उत्पादविनाशबुद्धेः समवायालम्बन(४)त्वापत्तेरिति । एतेन रसा-**

दिनकरी ।

अन्यथा-नीलादी(५)नामेकव्यक्तित्वे । ननु लाघवादेव नीलारुणादिव्यक्त्यैक्यं सेत्स्यतीत्यत आह । **लाघवं त्विति** । **प्रत्यक्षबाधितमिति** । नीलो नष्टो रक्त उत्पन्न इत्यादिप्रत्यक्षबाधितमित्यर्थः । **अन्यथेति** । लाघवमात्रेण नीलारुणादीनामैक्याभ्युपगमे इत्यर्थः । ननूत्पन्नो घटो विनष्टो घट इत्यादिप्रतीतेर्न घटादेरैक्यमित्यत आह । **उत्पादेति** ।

एतेन - ईदृशजातिसाधकप्रमाणेन । रसादिकं—रसत्वादिकम् । आदिना गन्धत्वादि-

रामरुद्री ।

नुमाने हेत्वसिद्धिरित्याशङ्कते । **न चेति** । उत्तरयति । **प्रतीत्येति** । नीलो नष्ट इति प्रतीत्या ध्वंसप्रतियोगितया समवायस्याऽविषयीकरणादित्यर्थः । यत्र भूतलादौ घटादिकमपसारितं पुनरानीतं च, तत्र घटानयनसमये घटाभावो नष्ट इति प्रतीतेः सम्बन्धानुल्लेखित्वेन सम्बन्धध्वंसावगाहित्वस्य कल्पयितुमशक्यत्वेऽपि यथा तत्र नशधात्वर्थः केवलाभाव एवाऽऽश्रीयते, भूतले घटाभावो नष्ट इति प्रतीतिश्च घटाभावे भूतलनिष्ठाभावप्रतियोगित्वावगाहितयोपपाद्यते, अन्यथा घटाभावस्य ध्वंसोत्पादयोरवगाहनासम्भवात्, घटाभावस्य चैक्यं लाघवात्प्रत्यभिज्ञाबलाच्चाऽभ्युपेयते, तथेहाऽपि नीलो नष्ट इति प्रतीतिरपि नीलादौ केवलात्यन्ताभावप्रतियोगित्वावगाहितयैव चरितार्था स्यात्, लाघवेन प्रत्यभिज्ञातश्च सिद्धस्य नीलादेरैक्यस्य प्रतिक्षेप्तुमशक्यत्वादित्यभिप्रायवान् शङ्कते । **न च स एवाऽयमिति** । ननु स एवाऽयं नील इति प्रतीत्या न तन्नीलैतन्नीलयोरभेदो विषयीक्रियते, अन्यथा नीलनीलतरादिव्यवहारविरोधप्रसङ्गात्, किं तु तत्सजातीयत्वमेवेति न नीलव्यक्तीनामैक्यसिद्धिरित्याशङ्कानिरासाय हेत्वन्तरमाह । **लाघवाच्चेति** । घटाभावादेरिवेति शेषः । नीलनीलतरादिप्रतीतिश्च रूपान्तरासम्भेदविषयकतयैवोपपादनीयेति भावः । क्रमेणोत्तरयति । **प्रत्यक्षस्येति** । अन्यथा तारतम्यव्यवहारविरोधप्रसङ्गादिति भावः । द्वितीयं हेतुमपि निरस्यति । **लाघवं त्विति** । टीकायाम्-**नीलो नष्ट इत्यादि** । ध्वंसविषयकेत्यादिः । तथा च निरुक्तप्रतीतेर्ध्वंसविषयकतायाः सर्वाभ्युपेतत्वेन नाऽत्र घटाभावो नष्ट इत्यत्रेवाऽभावविषयकत्वकल्पनं युक्तमिति भावः । **अन्यथेतीति** । **ऐक्याभ्युपगमे इति** । तत एव च कारणात् नीलो नष्ट इति प्रतीतेरभावमात्रविषयकत्वस्य कल्पने चेति शेषः । मूले-**ऐक्यप्रसङ्गादिति** । तथा च लाघवादेव घटादीनामप्यैक्यसिद्धौ घटो नष्ट इत्यादिप्रतीतेरपि अभावमात्रविषयकत्वस्यैव कल्पनीयत्वप्रसक्त्या ध्वंसप्रागभावादेरेवाऽपलापापत्तिरिति भावः । ननु न वयं नष्ट इति प्रतीतेरभावमात्रविषयकत्वं कल्पयित्वा नीलादीनामैक्यमुपपादयामः, येन ध्वंसप्रागभावयोरेव जगत्यकल्पनीयत्वापत्तिः सम्भाव्येत, किं तु नष्ट इत्यस्य नाशप्रतियोगिसम्बन्धप्रतियोगित्वमर्थं कल्पयाम इति न दोषः, प्रत्ययार्थस्यैतादृशस्य कल्पने बाधकाभावात् । एवं च अभावस्थलेऽपि वैशिष्ट्याख्यसम्बन्धस्य तथाविधस्य स्वीकारान्नष्ट इति प्रत्ययोपपत्तिरित्याशङ्कयाऽऽह । **उत्पादेति** । **समवायालम्बनत्वापत्तेरिति** । यद्यप्यत्र वादिनेष्टापत्तिः कर्तुं शक्या,

(१) 'दनीलं' इति पाठान्तरम् । (२) 'प्रत्यक्षा' इति पाठान्तरम् ।
(३) 'तज्जातीयत्व' इति पाठान्तरम् । (४) 'समवायावलम्बन' इति पाठान्तरम् ।
(५) 'नीलत्वादी, इति पाठान्तरम् ।

दिकमपि व्याख्यातम् । ॥ इति नीलादिरूपाणामैक्यखण्डनम् ॥

दिनकरी ।

परिग्रहः। ॥ इति नीलादिरूपाणामैक्यखण्डनम् ॥

रामरुद्र ।

तथाऽपि समवायस्यैकत्वग्राहकप्रमाणविरोध एवाऽत्र दोषोऽभिप्रेत इति न दोषः ।

इदमत्र बोद्धव्यम् । वादिना खलु रूपाणामैक्यं नाऽऽशङ्क्यते, तत एतज्ज्ञातुं शक्यं यदस्य भेदगोचरा प्रतीतिर्नीलपीतयोर्भेदसाधकत्वेनेष्टेति । तर्हि नीलादिव्यक्त्यैक्यमपि कथमाशङ्कितुमयं पारयेत ? दृश्यते हि तरतमभावापन्नानां नीलव्यक्तीनामप्यनेकता । न च रूपान्तरासम्भेदविषयिण्येव सा प्रतीतिरिति वाच्यम् । नीलतमव्यवहारस्य तथोपपादनसम्भवेऽपि नीलनीलतरादिव्यवहाराणां विजातीयरूपमनभ्युपगम्य सङ्गमयितुमशक्यत्वात् । किं तर्हि ? अवयवरूपतोऽवयविरूपस्याऽभेद एव मिथोऽभिमतः । अवयवरूपस्याऽवयविरूपतो भेदस्तु परमते नाऽनुभवसिद्ध इति तदाशङ्कनं न सन्दर्भविरुद्धम् । यत्र तु नीलरूपव्यक्तीनामत्यन्तसजातीयानां भिन्नभिन्नावयविव्यक्तिवर्तिनीनामपि ऐक्यमनुभूयते, तत्र तयोरैक्यमिष्यत एव, अन्यत्र पुनर्विभिन्नावयवकव्यक्तीनां रूपवैलक्षण्यमानुभविकमेवेति । अत्र च मते नीलव्यक्तीनां नित्यत्वं स्वीक्रियते, ततश्च तेषां नित्यत्वे सत्यनेकसमवेतत्वरूपजातिलक्षणवत्वात् जातित्वम् । तत्सिद्धिश्च घटतदवयवयोर्नीलो नील इत्यनुगतप्रतीतेरेव । तथा च नीलत्वावच्छिन्नं प्रति नीलादेर्न स्वसमवायिसमवेतस्वसम्बन्धेन हेतुता, किं तु नीलावच्छिन्नं प्रति तादात्म्येन नीलस्य । पाकस्थले च वह्निना नीलपरमाणुव्यक्तीरपसार्य रक्तपरमाणव उपचीयन्त इत्येवाऽङ्गीकारः । न चाऽनया रीत्या घटादीनामप्यैक्यप्रसक्तौ ध्वंसप्रागभावोच्छेदापत्तिरिति वाच्यम्। इष्टत्वात् । न चैवं नीलादिजात्या घटत्वादीनां सङ्करप्रसङ्ग इति वाच्यम् । नीलादिव्याप्यस्य घटत्वादेर्घटत्वादिव्याप्यस्य नीलादेश्चाऽङ्गीकरणीयत्वात् । न च नीलत्वघटत्वादीनां बाहुल्ये तत्तद्घटत्वावच्छिन्नं प्रति तत्तत्कपालत्वेन तत्तन्नीलावच्छिन्नं प्रति तत्तन्नीलत्वेन हेतुहेतुमद्भावापत्तावनन्तकार्यकारणभावापत्तिरिति वाच्यम् । समनियतजात्योः परस्परं भेदे मानाभावात् तादृशविलक्षणघटत्वनीलयोरभेदात् । न चैवमपि तादृशविलक्षणनीलघटत्वाद्यवच्छिन्नं प्रति विलक्षणनीलकपालत्वादिना हेतुत्वकल्पने एव गौरवम् । यतो हि अस्मन्मते नीलत्वावच्छिन्नं प्रति नीलत्वेन कारणत्वमेकं, घटत्वावच्छिन्नं प्रति कपालत्वेन चैकमिति द्वयमेव कल्पनीयम् । भवन्मते तु नीलघटत्वावच्छिन्नं प्रति नीलकपालत्वादिना बहुविधकार्यकारणभावकल्पनाया आवश्यकत्वादिति वाच्यम् । अस्मन्मत एव विपरीतलाघवात् । तत्तद्वैलक्षण्यस्य रूपनिष्ठस्य भवतामप्यनुमतत्वेन तत्तद्विलक्षणनीलपीतादिरूपं प्रति तत्तद्विलक्षणनीलपीतादीनां हेतुत्वं भवद्भिः कल्पनीयम्, घटत्वाद्यवच्छिन्नं प्रति कपालत्वादिना कार्यकारणभावान्तरं चेति गौरवम् । अस्मन्मते तु तत्तद्विलक्षणनीलपीताद्यवच्छिन्नं प्रति तत्तद्विलक्षणनीलपीताद्यवच्छिन्नस्य हेतुत्वकल्पनयैव निर्वाहः, घटत्वस्यैकस्य सकलघटसाधारण्याभावेन तत्तद्विलक्षणनीलादिस्वरूपतया एव स्वीकृतत्वात् । तथा च घटत्वाद्यवच्छिन्नं प्रति कपालत्वादिना कार्यकारणभावान्तराकल्पनप्रयुक्तं लाघवमबाधितमेव । न च त्वन्मते इवाऽस्मन्मतेऽपि तत्तद्विजातीयकपालादिसंयोगव्यक्तीनां घटादिषु हेतुत्वमावश्यकम् । तथा च तेनैव घटोत्पादनियमोपपत्तौ न घटत्वाद्यवच्छिन्नं प्रति कपालत्वादिना कार्यकारणभावोऽस्माभिरभ्युपेयत इति वाच्यम् । घटादौ कपालादीनां हेतुत्वस्य प्रामाणिकव्यवहारसिद्धत्वात् । अथ वा घटत्वादिव्याप्या नीलादिजातय एव नानाऽभ्युपेयन्ते । न तु नीलादिव्याप्यं घटत्वमपि, सर्वेषु घटेषु समानाकारप्रतीत्यनुपपत्त्या तथा स्वीकारस्याऽशक्यत्वात् । एवमपि भवन्मतापेक्षया लाघवं दुर्वारमेव, भवन्मतेऽपि तत्तदवयविरूपेषु इतरावयविनिष्ठरूपवैलक्षण्यप्रतीतेस्तत्तदवयव्यवयवरूपतोऽवैलक्षण्यप्रतीतेश्चोपपादनाय प्रत्येकमवयवावयविसमूहे यद्रूपं, तस्येतरावयविसमूहतो वैलक्षण्यस्याऽवश्याभ्युपेयत्वेन तत्तद्वैलक्षण्यावच्छिन्ननीलादिव्यक्तिं प्रति तत्तद्वैलक्षण्यावच्छिन्ननीलादिव्यक्तेः स्वसमवायिसमवेतत्वसम्बन्धेन, घटत्वावच्छिन्नं प्रति कपालस्य तादात्म्येन हेतुत्वं च स्वीकर्तव्यम्। तदपेक्षयाऽस्मन्मते तत्तद्विलक्षणरूपावच्छिन्नं प्रति तत्तद्विलक्षणरूपावच्छिन्नस्य

चक्षुषः सहकारि स्यात्, शुक्लादिकमनेकधा ॥ १०० ॥

चक्षुर्ग्राह्यमिति। चक्षुर्ग्राह्यविशेषगुण इ(१)त्यर्थः। एवमग्रेऽपि।

द्रव्यादेरिति। उपलम्भकं–उपलब्धिकारणम्।

दिनकरी।

संयोगादावतिव्याप्तिमाशङ्क्याऽऽह—चक्षुर्ग्राह्यमितीति। चक्षुर्ग्राह्यमित्यस्येत्यर्थः। तेन 'चक्षुरिति' इति प्राक् प्रतीकधारणेऽपि न पौनरुक्त्यम्। विशेषगुणत्वमिति। विलक्षणगुणत्वमित्यर्थः। वैलक्षण्यं च चक्षुर्भिन्नाग्राह्यत्वम्। न च तथाऽपि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यम्। चक्षुर्मात्रग्राह्यत्वस्य चक्षुर्मात्रगृहीतस्नेहविशेषेऽतिव्याप्त्यापत्त्या चक्षुर्मात्रग्राह्यत्वस्य जातिविशेषणत्वं स्वीकृत्य चक्षुर्मात्रग्राह्यजातिमद्गुणत्वविवक्षणस्याऽऽव-

रामरुद्री।

तादात्म्येन, कपालस्य च घटत्वावच्छिन्नं प्रति तादात्म्येन हेतुतेति तादात्म्यसम्बन्धावच्छिन्नैव कारणताद्वयी कल्पनीयेति लाघवानपायात्। किं च नीलव्यक्तिकल्पनाधिक्येन कार्यकारणभावकल्पनाधिक्यमपि भवन्मते गौरवाय, अन्यथा एकरूपव्यक्तेरपररूपोत्पादापत्तेरपरिहार्यत्वात्, अस्मन्मते तु कपालादिरूपव्यक्तेर्घटीयरूपव्यक्तितोऽभिन्नतया तादृशविशेषकार्यकारणभावकल्पनाऽभावाल्लाघवमबाधितमेव। न च त्वया घटत्वव्याप्याया नीलादिजातेर्घटादावेवाऽभ्युपगमेन तस्यास्तदवयवेष्वप्रसक्त्या तद्घटस्य तद्घटावयवतुल्यरूपत्वं न सम्भवतीति वाच्यम्। घटत्वस्य कपालादिष्वभ्युपगमेन तादृशविलक्षणनीलरूपस्य तत्र सत्त्वे बाधकाभावात्। न च घटत्वस्य कपालेऽभ्युपगमे कपालसंयोगविरहदशायां कपाले घटप्रत्ययापत्तिरिति वाच्यम्। कपालसंयोगादेर्घटत्वव्यञ्जकत्वोपगमात्। वस्तुतस्तु नीलादेर्जातित्वं न शङ्काविषयः, तेषां नित्यत्वे सत्यनेकसमवेतत्वेऽपि अनुगतव्यञ्जकव्यङ्ग्यत्वरूपतन्मतसिद्धजातिलक्षणघटकविशेषणशून्यत्वात्, तथात्वेऽपि वा साङ्कर्यमबाधकमेव जाताविति न घटत्वादिव्याप्यनीलत्वानङ्गीकारेऽपि दोष इति।

मैवम्। नीलनीलतरादिभेदेन यावत्यो जातयः सन्ति तावतीनां सर्वासामग्निसंयोगप्रयोज्यतावच्छेदकत्वमपि स्वीकरणीयम्। एवं चोद्भूतरूपवद्वस्तुस्थलेऽपि तत्तन्नीलावच्छिन्नानां परमाणूनां भवदुक्तपाकजप्रक्रियोपचयोऽवश्यं स्वीकरणीयः, तथा चाऽनुद्भूतस्य घ्राणादे रूपप्रत्ययापत्तिः, तत्र चक्षुःसन्निकर्षानपायात्। न च चाक्षुषं प्रति तत्तन्नीलव्यक्तीनां प्रतिबन्धकत्वकल्पनान्नैवमिति वाच्यम्। तथासति घटादिरूपस्याऽपि प्रत्यक्षानुपपत्तेः, घटादिरूपस्याऽनुद्भूतरूपवस्तुरूपतोऽवैलक्षण्यात्। न च घ्राणादिषु रूपमेव नाऽङ्गीक्रियते, रूपावच्छिन्नं प्रति घ्राणारम्भकावयवानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वोपगमाच्च न अग्निसंयोगवशात्तत्र रूपवद्द्रव्योत्पादापत्तिरिति वाच्यम्। घ्राणावयवेषु तादृशद्रव्यानापादनात्, अग्निसंयोगवशाद्घटादिपाकजस्थल इव नासिकाग्रेऽपि रूपवत्परमाणूपचयद्वारा रूपवद्द्रव्यविशेषोत्पादापत्तेरेव दीयमानत्वात्। किं च भवन्मते घ्राणाद्यवयवानां निरुक्तरीत्याऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवमिति ध्येयम्॥ इति नीलादिरूपाणामैक्यखण्डनम्।

टीकायाम्–वैलक्षण्यं चेति। ननु विशेषगुणत्वमत्र पूर्वनिरुक्तमेव निवेशनीयम्, न तु चक्षुर्भिन्नाग्राह्यत्वरूपम्, तद्विशेषणनिवारणीयायाः संयोगातिव्याप्तेस्तथा सत्यवारणादित्याशङ्कातः पूर्वनिरुक्तविशेषगुणत्वनिवेशेऽपि यादृशस्थलेऽतिव्याप्तिस्तत्प्रदर्श्य तद्वारकतयाऽवश्यनिवेशनीयस्य चक्षुर्भिन्नाग्राह्यत्वस्य निवेशादरे च पूर्वनिरुक्तविशेषगुणत्वस्य लक्षणे प्रवेशनमफलम्, संयोगातिव्याप्तेस्तदनुपादानेऽपि वारणसम्भवादित्याशयवानाह—न चेत्यादिना। स्नेहविशेष इति। पूर्वोक्तविशेषगुणत्वनिवेशकरणेऽपीति शेषः। तथा च वास्तवविशेषगुणत्वस्येह प्रवेशेऽपि स्नेहेऽतिव्याप्तेर्दुर्वारतया तद्वारकवि-

(१) 'विशेषगुणत्वमि' इति पाठान्तरम्।

दिनकरी ।

श्यकतया तेनैव प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणादिति । प्रभात्वमादाय प्रभायामतिव्याप्तिवारणाय गुणपदम् । एवमग्रेऽपि-(१) स्पर्शलक्षणेऽप्येषा रीतिर्बोध्येत्यर्थः ।

रामरुद्री ।

शेषणान्तरदाने च तेनैव प्रकृतातिव्याप्तेरपि वारणसम्भवाद्विशेषगुणत्वस्य पूर्वनिरुक्तस्य निवेशो व्यर्थ इति भावः । यद्यपि अनुद्भूतरूपादावव्याप्तिरूपगुरुतरदोषवारणायैव जातिघटितलक्षणानुसरणसार्थक्यमुपपादयितुं शक्यमिति जातिघटितलक्षणस्य कर्तव्यतोपपादनाय स्नेहेऽतिव्याप्तिप्रदर्शनमनुचितं, तथाऽपि त्वगग्राह्यत्वं धर्मिविशेषणीकृत्य चक्षुर्ग्राह्यजातिमत्त्वगग्राह्यगुणत्वमिति लक्षणपरिष्करणेनाऽपि अनुद्भूतरूपादावव्याप्तिवारणं सम्भवति, प्रकृते च त्वगग्राह्यत्वमपि जातिविशेषणं यदा भवेत्, तदैव प्रभाभित्तिसंयोगातिव्याप्तिवारणं सुशकमिति कारणात् त्वगग्राह्यत्वस्य जातावविशेषणत्वे यादृशो दोषः कथञ्चिदपि वारयितुं न शक्यस्तथाविधस्यैव प्रदर्शनीयत्वानुसन्धानेन स्नेहविशेषेऽतिव्याप्तिकथनमिति बोध्यम् । नन्वेवं विशेषशब्दस्य विलक्षणवाचकत्वाङ्गीकारे चक्षुर्मात्रग्राह्यजातिमद्गुणत्वमिति लक्षणस्य पर्यवसिततया तत्र गुणत्वप्रवेशवैयर्थ्यं दुर्वारम् , तद्व्यावर्तनीयस्य रूपत्वरूपाभावादेर्जातिमत्त्वघटनयैव वारणसम्भवादित्याशङ्कयाऽऽह-**प्रभात्वमिति** । अनयैव रीत्या स्पर्शलक्षणेऽपि पदकृत्यमनुसन्धेयमित्याह-**एवमग्रेऽपीति** । वायुत्वमादाय वायावूष्मत्वमादायोष्मणि वाऽतिव्याप्तिवारणाय तत्र लक्षणे गुणपदमिति भावः ।

अथैवं त्रसरेणुपरिमाणविशेषेऽतिव्याप्तिः, तस्य त्वगग्राह्यचक्षुर्ग्राह्यत्वनिष्ठापकर्षाख्यवैजात्यविशिष्टगुणत्वेन लक्षणवत्त्वात् । न च तादृशविशेषगुणत्वमेव लक्षणमिति न दोष इति वाच्यम् । प्रकृतलक्षणे विशेषगुणत्वप्रवेशे टीकाकारानुमतेः प्रागेव व्यवस्थापितत्वादिति चेत् ।

न, अत्र हि त्वगग्राह्यत्वं न त्वाचप्रत्यक्षविषयत्वाभावमात्रम् , तथा सति विषयताया ज्ञानसमानकालीनत्वेन त्वाचप्रत्यक्षविरहकाले स्नेहत्वादेरपि त्वगग्राह्यत्वप्रसङ्गात्, उक्तरीत्या त्रसरेणुपरिमाणेऽतिव्याप्तेश्च, किन्तु विषयतासम्बन्धावच्छिन्नत्वाचप्रत्यक्षनिष्ठप्रतिबध्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतिबन्धकतावत्त्वं, रूपत्वादेर्नीलत्वादेश्च त्वक्संयुक्तसमवेतसमवायवशात्त्वाचप्रत्यक्षवारणाय विषयतासम्बन्धेन त्वाचप्रत्यक्षं प्रति रूपत्वादेस्तादात्म्यसम्बन्धेन तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वात् तादृशी रूपत्वादिजातिरेव लक्षणघटिकेति न दोषः । स्नेहत्वादीनां च तादृशं प्रतिबन्धकत्वमप्रामाणिकमिति नाऽतिव्याप्तिः । न च त्रसरेणुपरिमाणनिष्ठापकर्षस्याऽपि त्वक्संयुक्तसमवेतसमवायबलात्त्वाचप्रत्यक्षवारणाय तादृशप्रत्यक्षं प्रति तद्व्यक्तित्वेन प्रतिबन्धकत्वमावश्यकमिति तमादायाऽतिव्याप्तिर्दुर्वारेति वाच्यम् । स्पर्शावृत्तिद्रव्यसमवेतसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवद्द्रव्यसमवेतसमवायस्याऽनुगतहेतुतायास्त्रसरेणुस्नेहादिगतवैजात्यान्तरप्रत्यक्षापत्तेरपि वारणाय लाघवेन स्वीकरणीयतया तादृशहेत्वभावादेव त्रसरेणुपरिमाणनिष्ठापकर्षस्पार्शनवारणसम्भवे स्पार्शनं प्रति तस्य तद्व्यक्तित्वादिना प्रतिबन्धकत्वासिद्ध्या तस्य त्वाचप्रत्यक्षप्रतिबन्धकपदेन ग्रहीतुमशक्यत्वादतिव्याप्तिविरहात् । एवं च त्वगिन्द्रियजन्यप्रत्यक्षप्रतिबन्धकचक्षुर्जन्यप्रत्यक्षविषयजातिमद्गुणत्वमिति लक्षणं पर्यवसितम् । अत्र गुणत्वानुपादाने न प्रभात्वमादाय प्रभायामतिव्याप्तिः, प्रभायामुद्भूतस्पर्शविरहादेव तत्स्पार्शनस्य तद्वृत्तिजातिस्पार्शनस्य च वारणसम्भवेन प्रभात्वादेस्तत्प्रतिबन्धकत्वाकल्पनेन त्वाचप्रत्यक्षप्रतिबन्धकतादृशजातिपदेन प्रभात्वस्य धर्तुमशक्यत्वात्, किं तु व्यणुकत्वरूपवैजात्यस्य त्वाचप्रत्यक्षेऽप्रतिबन्धकत्वे त्वक्संयुसमवायबलात्स्पार्शनापत्त्या तद्वारणायाऽवश्यकल्प्यप्रतिबन्धकताकतया तदादाय व्यणुकेऽतिव्याप्तिवारणाय गुणपदोपादानं बोध्यम् । यद्यपि द्रव्यान्यद्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवद्द्रव्यसमवायस्यैव हेतुत्वोपगमादेव व्यणुकत्वादेः स्पार्शनवारणोपपत्त्या तेषां स्पार्शनप्रतिबन्धकत्वमप्रामाणिकमिति न तदादाय व्यणुकेऽतिव्याप्तिवारकतया गुणत्वोपादानं सार्थकयितुं शक्यते, तथा

(१) 'रसस्पर्शलक्षणे' इति क्वचित् पाठः ।

रामरुद्री।

ऽपि प्रकृतलक्षणे जातिपदस्य समवायसम्बन्धेन धर्मवत्त्वमात्रबोधकतया नित्यत्वे सत्यनेकसमवेतत्वरूपजातित्वस्य प्रकृतेऽविवक्षितत्वेन समवेतमात्रग्रहणप्राप्तौ त्वाचप्रतिबन्धकचाक्षुषविषयपदेन त्र्यणुकमेवोपादीयते, तद्वति द्व्यणुकादावतिव्याप्तिवारणाय च गुणपदं बोध्यम्। न हि त्र्यणुकस्य स्पार्शने प्रतिबन्धकत्वमकल्पयित्वा काचिद्गतिरस्ति, त्रसरेणुस्पार्शनापत्तेरन्यथा दुर्वारत्वात्। न च द्रव्यस्पार्शने प्रकृष्टमहत्त्वस्य कारणत्वान्न त्रसरेणुप्रत्यक्षप्रसङ्ग इति वाच्यम्। गौरवात्, द्रव्यप्रत्यक्षमात्रे महत्त्वस्य सामान्यतो महत्त्वत्वेनैव रूपेण कारणतयेदृशकार्यकारणभावकल्पनाऽसम्भवादिति सारः। विस्तरस्त्वन्यत्राऽनुसन्धेयः। केवलप्रत्यक्षप्रतिबन्धकचक्षुर्ग्राह्यजातिमद्गुणत्वमित्युक्तौ सङ्ख्यात्वादिजातिविशेषस्य घ्राणजप्रत्यक्षप्रतिबन्धकत्वेन चक्षुर्ग्राह्यत्वेन च तादृशजातिमद्गुणेऽतिव्याप्तिवारणाय स्पार्शनोपादानम्। न च सङ्ख्यात्वादीनां घ्राणजप्रतिबन्धकत्वे मानाभाव इति वाच्यम्। गन्धसमवेतवृत्तिलौकिकविषयतासम्बन्धेन घ्राणजत्वावच्छिन्नं प्रति घ्राणसंयुक्तसमवायस्य हेतुतया तस्य सङ्ख्यात्वादावपि सत्त्वेन तत्प्रत्यक्षवारणाय तेषां प्रतिबन्धकत्वावश्यकत्वात्। सङ्ख्यात्वादीनां च गन्धावृत्तित्वेन गन्धसमवेतवृत्तिलौकिकविषयतासम्बन्धेन घ्राणजं प्रति प्रतिबन्धकत्वमिति नाऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवम्। न चैवमपि यादृशजातिविशेषस्य स्पार्शनं प्रति प्रतिबन्धकता चक्षुर्ग्राह्यता च, तमादायाऽतिव्याप्तिरिति वाच्यम्। तथाविधस्य त्रसरेणुपरिमाणादिनिष्ठापकर्षस्य प्रागुदाहृतकारणान्तरविरहादेव प्रत्यक्षवारणसम्भवे तस्य स्पार्शनप्रतिबन्धकत्वाकल्पनात्। न च स्पर्शावृत्तिद्रव्यसमवेतसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवद्द्रव्यसमवेतसमवायः कारणमित्यत्र स्पार्शनवत्त्वं न विषयतया स्पार्शनविशिष्टत्वं, तथा सति यादृशावयविव्यक्तीनां कदाचिदपि प्रत्यक्षं न जातं तद्वृत्तिगुणवृत्तिवैजात्यविशेषस्पार्शने व्यभिचारापत्तेरिति वाच्यम्। द्रव्यस्पार्शनरहितद्रव्यसमवेतसमवेतस्पर्शावृत्तिधर्मस्पार्शनस्याऽनुभवविरुद्धतयाऽनुपगमेन व्यभिचाराभावात्, उपलक्षणविधयैव स्पार्शनस्य निवेशे क्षतिविरहाच्च। न च तथाऽपि चतुरणुकपञ्चाणुकादिस्पार्शने व्यभिचारस्तदवस्थ एव, तेषामपि स्पर्शावृत्तिद्रव्यसमवेतसमवेतत्वेन तत्प्रत्यक्षस्य कार्यतावच्छेदकाक्रान्तत्वात्तद्धेतुभूतस्पार्शनवद्द्रव्यसमवेतसमवायस्य च तत्राऽभावादिति वाच्यम्। स्पर्शावृत्तित्वस्येव द्रव्यभिन्नत्वस्याऽपि द्रव्यसमवेतसमवेतविशेषणत्वोपगमात्। एवं च चतुरणुकस्पर्शादिस्पार्शनोपपादनाय द्रव्यसमवेतेत्यत्राऽपि द्रव्यान्यत्वं विशेषणं देयमिति दिक्। अथ वा द्रव्यसमवेतसमवेतस्पर्शावृत्तिधर्मस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवद्द्रव्यसमवेतसमवायत्वादिना हेतुत्वं नाऽभ्युपेयत एव, त्रसरेणुपरिमाणादिगतवैजात्यप्रत्यक्षस्याऽलीकतयैवाऽऽपादनासम्भवात्। न च त्वक्संयुक्तसमवेतसमवायबलाद्घटादिगतपरिमाणादिवृत्तिवैजात्ये जायमानस्य तस्याऽत्राऽऽपत्तिः सम्भवतीति वाच्यम्। परिमाणादिगतवैजात्यप्रभृतिस्पार्शनस्य परिमाणतदाश्रयद्रव्याविषयकस्याऽनुभवविरुद्धतया तद्व्यापकधर्मभूतद्रव्यविषयकस्पार्शनत्वावच्छिन्नजनकसामग्रीविरहादेव प्रकृते तदापादनासम्भवात्। विषयतया स्पार्शनं प्रति त्र्यणुकस्य प्रतिबन्धकतयाऽत्र स्वाश्रयाश्रयद्रव्ये स्पार्शनसामग्रीविरहात्। न चैवं रीत्या त्रसरेणुपरिमाणवृत्तिवैजात्यस्पार्शनं न भवतु नाम, तथाऽपि त्रसरेणुघटितसन्निकर्षदशायां परिमाणत्वादिस्पार्शनवारणमशक्यमेव, तदाश्रयाश्रये घटे उक्तप्रतिबन्धकविरहादेव सामग्रीसम्भवात्। अतः स्पर्शावृत्तीत्यादिकार्यकारणभावोऽभ्युपगन्तव्य इति वाच्यम्। द्रव्यप्रत्यक्षे प्रतिबन्धकाभावमात्रस्य सामग्रीत्वाभावात्, त्वक्सन्निकर्षादेरपि तत्समानाधिकरणस्याऽऽवश्यकत्वात्, तद्विरहादेव प्रकृते परिमाणत्वस्पार्शनापत्तिवारणसम्भवात्, तत्सत्त्वस्थले तु परिमाणत्वादिस्पार्शनमप्यभ्युपेयत एव। न च द्रव्याविषयकपरिमाणत्वादिस्पार्शनानुपगमेऽपसिद्धान्त इति वाच्यम्। प्राथमिकनिर्विकल्पककाले तस्य त्वक्संयोगादिबलात् द्रव्य तद्गतगुणतदुभयगतवैजात्यादिविषयकस्यैवाऽभ्युपेयतया तदुत्तरं सर्वत्र तादृशसकलपदार्थगोचरविशिष्टप्रत्यक्षोत्पत्तौ बाधकाभावेनाऽवश्यमभ्युपगन्तव्यत्वात्। नन्वेवं रूपत्वादेरपि स्पार्शनप्रतिबन्धकत्वे मानाभावः। न च घटान्तर्घटितत्वक्संयुक्तसमवेतसमवायबलात् तस्य स्पर्शत्व इव रूपत्वादावप्यापत्तिः सम्भवतीत्यतस्तादृशप्रतिबध्यप्रतिबन्धकभावकल्पनमावश्यकमिति वाच्यम्। एकसन्निकर्षव्यक्तिदशायां अपरसन्निकर्षदशोत्पन्नप्रत्यक्षव्यक्तेरापत्तिवारणासम्भवेनेदृशकार्यकारणभावस्यैवाऽस-

इदमेव विवृणोति । चक्षुष इति । द्रव्यगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम् । इति रूपलक्षणग्रन्थः ।

रामरुद्री ।

म्भवादिति चेन्न । एकसन्निकर्षदशायामपरसन्निकर्षजप्रत्यक्षापत्तेर्वारणाय तत्तत्संयोगघटितसंयुक्तसमवायादीनां तदुत्तरप्रत्यक्षे हेतुत्वमभ्युपेयम् । तत एव तद्दोषवारणसम्भवात् । तथा च तत्तत्संयोगघटितसंयुक्तसमवायादे रूपत्वादावपि रसत्वात्तस्पार्शनवारणाय प्रोक्तप्रतिबध्यप्रतिबन्धकभावस्याऽवश्यमभ्युपगन्तव्यत्वात् । न च तदर्थं संयुक्तसमवायादेरेव तत्तद्व्यक्तित्वेन हेतुत्वमभ्युपगम्यतामिति वाच्यम् । समवायस्यैकत्वेन तस्य रूपत्वादावपि सत्त्वेनाऽऽपत्तिवारणासम्भवात् । न चैवमेकसंयोगघटितसंयुक्तसमवायादिदशायामेव यत्र प्रत्यक्षचतुष्टयमुत्पन्नं, तत्र प्रथमक्षणे तदितरक्षणोत्पन्नप्रत्यक्षव्यक्त्यापत्तिर्भवन्मते दुर्वारेति वाच्यम् । द्वितीयक्षणोत्पन्नप्रत्यक्षव्यक्तौ प्रथमक्षणोत्पन्नबुद्धेरपि हेतुत्वात् । न चैवमपसिद्धान्त इति वाच्यम् । प्रथमक्षणोत्पन्नविशेषणज्ञानात्मककारणबलादुत्तरक्षणोत्पन्नबुद्धेर्विशिष्टविषयिण्या उत्पादे बाधकासम्भवेन तथैव तत्स्वीकारावश्यकत्वे विशेषणज्ञानविधया प्रथमबुद्धेर्द्वितीयबुद्धौ हेतुत्वस्याभ्युपगन्तव्यत्वात् द्वितीयक्षणाद्युत्पन्नत-द्व्यक्तित्वव्यापकताद्दृशविलक्षणविशिष्टबुद्धित्वावच्छिन्नजनकविशेषणज्ञानविरहादेव प्रथमक्षणे तदापादनासम्भवादिति । वस्तुतस्तु प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वरूपतया कारणत्वस्य कार्यं विना वक्तुमशक्यत्वात्प्रकृतेऽपि स्पार्शनोपादानम् । प्रतिबन्धकत्वं च दोषव्यावृत्तं* ग्राह्यम् । तेन चक्षुर्ग्राह्यवैजात्यस्याऽपि क्वचित्स्पार्शने दोषविधया प्रतिबन्धकत्वेऽपि न क्षतिः । चक्षुःपदानुक्तौ तादृशजातिमति रसादावतिव्याप्तिरतस्तदुपादानम् । जातिपदानुक्तौ कालिकादिना तादृशधर्मवत्त्वमादायाऽतिप्रसङ्गः स्यादतः समवायेन धर्मवत्त्वनिवेशसूचनाय तदुपादानम् । न च तादृशरूपाभाववति गुणादावतिव्याप्तिवारकतया सार्थक्यं किमिति नोच्यत इति वाच्यम् । रूपाभावादेस्त्वगयोग्यत्वेनैव स्पार्शनवारणसम्भवे तेषां त्वाचप्रत्यक्षेऽप्रतिबन्धकत्वेन लक्षणाघटकत्वात् । यद्वा समवायस्य नानात्वे रूपवृत्तित्वविशिष्टगुणत्वप्रतियोगिकसमवायस्य चक्षुर्मात्रग्राह्यत्वेन त्वाचप्रतिबन्धकत्वेन च तदात्मकस्वरूपसम्बन्धरूपसमवायसम्बन्धेन तद्वति रसेऽतिव्याप्तिवारणाय तदुपादानमिति मन्तव्यम् । त्वाचप्रतिबन्धकत्वं धर्मिविशेषणीकृत्य चक्षुर्ग्राह्यधर्मवत्त्वाचप्रत्यक्षप्रतिबन्धकगुणत्वमिति लक्षणकरणे च तादृशगुणत्वजातिमति त्वाचप्रतिबन्धके रसेऽतिव्याप्तिरतस्त्वगग्राह्यत्वस्याऽपि धर्मविशेषणत्वं बोध्यम् ।

मूलस्थचक्षुर्ग्राह्यपदार्थश्चक्षुरजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्यप्रत्यक्षविषयजातिमान् । सङ्ख्यादीनां च चक्षुरजन्यत्वाचप्रत्यक्षविषयतया नाऽतिप्रसङ्गः । त्रसरेणुपरिमाणेऽनुद्भूतरूपादौ प्रभायां चाऽतिव्याप्त्यव्याप्त्योर्वारणाय चक्षुरजन्यप्रत्यक्षप्रतिबन्धकचक्षुर्जन्यप्रत्यक्षविषयजातिमद्गुणत्वमिति वक्तव्यम् । न च चक्षुरजन्येश्वरीययोगजादिप्रत्यक्षाप्रतिबन्धकरूपत्ववति रूपेऽसम्भव इति वाच्यम् । चक्षुर्जन्ययावत्प्रत्यक्षप्रतिबन्धकत्वस्य लक्षणघटकतयाऽनभिमतत्वात्, यत्किञ्चित्त्वाचादिप्रतिबन्धकत्वमादायैव लक्षणगमनसम्भवात् । एतेन चक्षुरितरेन्द्रियाग्राह्यचक्षुर्ग्राह्यगुणत्वकथने अभावप्रतियोगितावच्छेदककुक्षाविन्द्रियत्वप्रवेशेन गौरवम्, त्वगग्राह्यत्वोक्तौ च मूलोक्तिवैरूप्यप्रसङ्ग इति शङ्का परास्तेत्यपि वदन्ति ।

मूले—इदमेव विवृणोतीति । अथ 'द्रव्यादेरुपलम्भकम्—' इत्यनेनोद्भूतरूपत्वादिना कारणत्वरूपलक्षणस्य, 'चक्षुषः सहकारि स्यात्—' इति मूलेन च उद्भूतानभिभूतरूपवत्तेजोरूपालोकनिष्ठचाक्षुषकारणतावच्छेदकत्वरूपलक्षणान्तरस्य च व्यवस्थापनं क्रियते इति वक्तुं शक्यतया 'चक्षुषः सहकारि स्यात्—' इत्यादिमूलस्य पूर्वमूलविवरणात्मकताभिधानमनुचितम् । अत एव पूर्वमूले सामान्यतः प्रत्यक्षमात्रकारणताबोधकं 'उपलम्भक'पदं, अग्रिममूले चाक्षुषमात्रसहकारिताबोधकं 'चक्षुषः' इति पदं च स्वारस्येन सङ्गच्छते । न चाऽलोकनिष्ठकारणतावच्छेदकत्वमालोकरूपस्यैव, न तु पृथिवीरूपादेरिति तत्राऽव्याप्तिभिया मूलकारेणोक्तपङ्क्तिद्वयस्य तादृशार्थो नोपवर्णित इति वाच्यम् । चक्षुषः सहकारीत्यस्य सहकारितावच्छेदकधर्मवत्पर्यन्तार्थतया तादृशजनकतावच्छेदकतावच्छेदकजाति-

---

* तादात्म्यसम्बन्धावच्छिन्नमित्यर्थः ।

रामरुद्री।

मत्त्वपर्यन्तस्यैव लक्षणत्वाङ्गीकारेण तादृशरूपत्वजातिमादाय तत्र लक्षणसमन्वयोपपादनसम्भवात्। न चैवं चाक्षुषत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकवत्त्वं लक्षणं पर्यवस्यति। तच्चाऽनुद्भूतत्वाभावकूटरूपोद्भूतत्वं बलवद्रूपान्तरसम्बन्धाभावरूपमनभिभूतत्वं च तादृशं जनकतावच्छेदकतावच्छेदकमादाय घटादावतिव्याप्तम्, अतस्तद्वारणाय चाक्षुषत्वावच्छिन्नजन्यतानिरूपितयत्किञ्चिज्जनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वपर्यन्तानुसरणे चोनुद्भूताभिभूतरूपयोरव्याप्तमिति वाच्यम्। समवायेन तादृशधर्मवत्त्वविवक्षणादेव सामञ्जस्ये पर्याप्तिपर्यन्तानिवेशात्। ननु सर्वमिदमालोकस्य चाक्षुषहेतुत्वे सम्भवति, तदेव तु न, तथा हि द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति, विषयतासम्बन्धेन, द्रव्यलौकिकचाक्षुषत्वावच्छिन्नं प्रति वा संयोगेनाऽऽलोको हेतुरिति वक्तव्यम्, तच्चाऽऽलोकप्रत्यक्षे व्यभिचारान्न सम्भवति। न चाऽऽलोकेऽप्यालोकान्तरसंयोगसत्त्वान्न दोष इति वाच्यम्। एवमप्यन्धकारे तेजस्त्र्यणुकस्य तेजोन्तरासंयुक्तस्य ग्रहानुपपत्तेः, तत्राऽऽलोकान्तराभावात्, किं तु आलोकसंयोग एव समवायसम्बन्धेन तादृशचाक्षुषं प्रति हेतुर्वाच्यः। इत्थं च तत्त्र्यणुकरूपालोकचक्षुः संयोगस्यैव तत्र तथाविधस्य सम्भवान्न व्यभिचारः। तथा चाऽऽलोकसंयोगस्य कारणत्वे कारणतावच्छेदकं न रूपमिति कथं तत्र लक्षणसमन्वयसम्भव इति चेन्न। चाक्षुषकारणतावच्छेदकतावच्छेदकतावच्छेदकवत्त्वस्यैव विवक्षितत्वेनैवमपि दोषविरहात्। न च महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायादेरपि चाक्षुषं प्रति हेतुतया तत्र जनकतावच्छेदकतावच्छेदकतावच्छेदकं यन्महत्त्वं तद्वति द्रव्येऽतिव्याप्तिः, जनकतावच्छेदकतावच्छेदकतावच्छेदकजातिमत्त्वोपादानेऽपि तादृशसंयोगत्वजातिमादाय संयोगेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्। चक्षुःसहकारितावच्छेदकत्वस्य महत्त्वादावुपगमेऽपि क्षत्यभावात्। अतिव्याप्तिस्तु तादृशजातिमद्विशेषगुणत्वविवक्षया चाक्षुषमात्रसहकारिताविवक्षणेन वा वारणीया। न चोद्भूतरूपमहत्त्वालोकसंयोगाद्यवच्छिन्नचक्षुःसंयोगादेरेव हेतुत्वोपगमेन सामञ्जस्ये पृथगालोकसंयोगादीनां कारणत्व एव मानाभावः, मूलस्थसहकारिपदस्य यथाश्रुते जनकतावच्छेदकपर्यन्तार्थत्वोपगमेन चक्षुःसंयोगनिष्ठजनकतायामवच्छेदकतया तत्र कथञ्चिल्लक्षणसमन्वयोपपादनेऽपि तुल्ययुक्त्योद्भूतरूपस्याऽपि पृथक्कारणतानिरासेन चक्षुःसंयोगगतकारणतावच्छेदकत्वस्यैवोपगन्तव्यतया भवदभिमतं मूलोक्तपङ्क्तिद्वयस्य लक्षणद्वयव्यवस्थापनपरत्वमप्यसम्भवदुक्तिकमेवेति वाच्यम्। उद्भूतरूपमहत्त्वालोकसंयोगावच्छिन्नचक्षुःसंयोग एव कारणम्, चक्षुःसंयोगाद्यवच्छिन्नोद्भूतरूपमहत्त्वालोकसंयोगादिरेव वा कारणमित्यत्र विनिगमनाविरहेण कार्यकारणभावत्रयस्यैव कल्पनीयत्वात्। यद्वा सहकारित्वं जनकतावच्छेदकतावच्छेदकधर्मवत्त्वमेव, न तु जनकतावच्छेदकतावच्छेदकतावच्छेदकधर्मवत्त्वम्, सहकारित्वशब्दार्थत्वाभावात्, आलोकचक्षुरादिसंयोगमहत्त्वादिनिष्ठजनकतायामपि उद्भूतरूपस्याऽवच्छेदकतासम्बन्धेनावच्छेदकत्वस्योक्तयुक्त्या सम्भवेन तादृशजनकतामादायैव लक्षणसमन्वयोपपादनसम्भवात्। 'द्रव्यादेरुपलम्भक'मिति पङ्क्तिस्तु उद्भूतरूपस्य कारणतामादायैव सङ्गमनीया। न च तन्निष्ठफलोपधायकत्वाभावप्रयोजकाभावप्रतियोगित्वमेव सहकारिपदप्रवृत्तिनिमित्तं, तच्च चक्षुषः उद्भूतरूपाभावप्रयुक्तफलानुपधायकत्वादुपपादनीयम्, तच्चोद्भूतरूपस्य चाक्षुषं प्रति कारणत्व एव घटत इति प्रकृतग्रन्थस्य कारणतावच्छेदकत्वपरतोपवर्णनमसङ्गतमिति वाच्यम्। क्वचित्कारणतावच्छेदकाभावस्याऽपि कारणनिष्ठफलोपधायकत्वाभावप्रयोजकत्वाभ्युपगमे क्षतिविरहात्। प्रयोजकत्वं हि व्याप्यत्वं, तच्च विशिष्टाभाव इव विशेषणाभावेऽपि स्वीकर्तुं शक्यते, विशिष्टाभावस्य व्याप्यत्वे तद्व्याप्यस्य विशेषणाभावस्य फलोपधायकत्वाभावव्याप्यत्वस्य सुतरां प्रतिक्षेप्तुमशक्यत्वात्। यदि च प्रयोजकत्वं स्वरूपसम्बन्धविशेष एवेत्याग्रहः, स च विशिष्टाभाव एव कल्प्यते, विशेषणाभावविशेष्याभावयोस्तत्कल्पने प्रयोजकतावच्छेदकशरीरलाघवसम्भवेऽपि प्रयोजकताव्यक्तिद्वयकल्पनापेक्षया एकस्मिन् विशिष्टाभावे तत्कल्पनेऽतिलाघवसम्भवात्। न च तत्राऽपि चक्षुःसंयोगाद्यवच्छिन्नत्वविशिष्टालोकसंयोगत्वावच्छिन्नप्रतियोगिताकाभाव आलोकसंयोगत्वविशिष्टचक्षुःसंयोगाद्यवच्छिन्नत्वावच्छिन्नप्रतियोगिताकाभावो वा प्रयोजक इत्यत्र विनिगमकाभावात्प्रयोजकताद्वयकल्पनं दुर्वारमेव, तदपेक्षया प्रत्येकधर्मावच्छिन्नाभावस्यैव लाघवेन तत्प्रयोजकत्वकल्पनं युक्तमिति वाच्यम्।

रामरुद्री।

तादृशाभावद्वयस्याऽपि समनियततयाऽभेदेन समनियतधर्मद्वयावच्छिन्नप्रयोजकतयोरप्यभेदाभ्युपगमे क्षतिविरहादित्युच्यते, तथाऽपि विशिष्टाभावे विशेषणाभावविशेष्याभावातिरिक्ते मानाभावाल्लक्षणसमन्वयः सूपपाद एव, स्वरूपसम्बन्धविशेषरूपस्य व्याप्यत्वातिरिक्तस्य प्रयोजकत्वस्य मानाभावेनाऽनङ्गीकाराच्च। अथ द्रव्यचाक्षुषं प्रति विजातीयचक्षुःसंयोगत्वादिना कारणत्वाभ्युपगमेनैव सामञ्जस्ये उद्भूतरूपस्य महत्त्वादेर्वा चाक्षुषहेतुत्वे मानाभावात् चक्षुःसंयोगनिष्ठजनकतायामुद्भूतरूपस्याऽवच्छेदकत्वमप्यप्रामाणिकमेवेति तत्राऽव्याप्तिर्दुर्वारा, अत आलोकसंयोगनिष्ठजनकतावच्छेदकतामादायैव लक्षणं नेयमिति जनकतावच्छेदकत्वरूपं सहकारित्वं न मूलेऽभिप्रेतमिति स्वीकरणीयम्। न च विजातीयचक्षुःसंयोगत्वेन हेतुत्वे आलोकसंयोगस्याऽपि हेतुत्वमप्रामाणिकमेव, अन्धकारे घटचक्षुःसंयोगे तादृशवैजात्यानभ्युपगमादेव चाक्षुषापत्तिवारणसम्भवादिति वाच्यम्। यत्र स्थिरे धर्मिणि आलोकापसारणतदानयनदशयोरेक एव चक्षुःसंयोगस्तत्राऽऽलोकानयनकालोत्पन्नचाक्षुषान्यथानुपपत्त्या तत्संयोगव्यक्तौ प्रत्यक्षप्रयोजकवैजात्यकल्पनस्याऽऽवश्यकत्वे तत एवाऽऽलोकापसारणदशायामपि चाक्षुषापत्तिवारणायाऽऽलोकसंयोगस्य हेतुत्वावश्यकत्वात्। न च तत्र चक्षुःसंयोगभेदकल्पनयैवोपपत्तौ न तादृशकार्यकारणभावान्तरं कल्प्यत इति वाच्यम्। तथा सत्यपि विजातीयचक्षुःसंयोग एव कारणं, विजातीयालोकसंयोग एव वा कारणमित्यत्र विनिगमनाविरहेणोभयहेतुत्वस्वीकारावश्यकत्वात्। न च यत्र स्थिरे धर्मिणि एक एव चक्षुःसन्निकर्षासन्निकर्षदशयोरालोकसंयोग उत्पन्नस्तत्र चक्षुःसंनिकर्षदशायामिव तदसन्निकर्षदशायामपि चाक्षुषापत्तिवारणाय चक्षुःसंयोगत्वेन हेतुताया अवश्यकल्प्यतया तत एवोपपत्तावालोकसंयोगत्वादिना कारणतान्तरं न कल्प्यते, अन्यथा विजातीयवायुसंयोगत्वादिनाऽपि कारणतान्तरकल्पनाप्रसङ्गादिति चक्षुरालोकादिसंयोगसाधारणैकवैजात्यपुरस्कारेणैव कार्यकारणभावस्याऽङ्गीकरणीयत्वेन तत्र च तादृशवैजात्यस्यैवाऽवच्छेदकतया उद्भूतरूपस्य कारणतावच्छेदकतावच्छेदकतावच्छेदकत्वाभावान्न भवदुक्तिसङ्गतिरिति वाच्यम्। ईदृशरीत्या भवदुक्तलक्षणद्वयस्याऽप्यसम्भवप्रसङ्गेन मूलासाङ्गत्यस्य तथाऽपि दुष्परिहरत्वादिति चेन्न। विजातीयसंयोगत्वेन हेतुत्वे तस्य संयोगस्य घट इव चक्षुष्यपि सत्त्वस्याऽवश्याङ्गीकरणीयतया चक्षुषश्चाक्षुषवारणायैवोद्भूतरूपस्य हेतुत्वं वक्तव्यम्। न च चक्षुषा पिशाचादिवदयोग्यत्वादेव चक्षुर्न गृह्यत इति वाच्यम्। तस्याऽयोग्यत्वेन चाक्षुषप्रतिबन्धकत्वकल्पनापेक्षया उद्भूतरूपस्य चाक्षुषकारणत्वोपगमस्यैव युक्तत्वात्। न च विजातीयसंयोगसम्बन्धेन चक्षुषश्चाक्षुषकारणत्वोपगमान्न दोषः, चक्षुषि तस्याऽभावादेव तच्चाक्षुषवारणसम्भवादिति वाच्यम्। एवमपि संयोगनिष्ठतादृशवैजात्यं किंप्रयोज्यमिति प्रथमतो वक्तव्यम्, उद्भूतरूपमहत्त्वालोकसंयोगादिनिबन्धनत्वे तादृशवैजात्यावच्छिन्नं प्रति तेषां कारणत्वोपगमापेक्षया द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव हेतुत्वस्य युक्तत्वात्। तथा च **'चक्षुषः सहकारि स्यात्—'** इति मूलस्य चाक्षुषजनकतावच्छेदकत्वरूपसहकारित्वात्मकलक्षणान्तरव्यवस्थापनपरतया व्याख्यानसम्भवे **'द्रव्यादेरुपलम्भकम्—'** इति पङ्क्तिविवरणपरतया तद्व्याख्यानमनुचितम्। नन्वनुद्भूतरूपादौ लक्षणसमन्वयोपपादनाय चाक्षुषजनकतावच्छेदकतावच्छेदकधर्मवत्त्वं लक्षणं विवक्षणीयम्, एवमप्यनुद्भूतरूपाव्याप्तिः सुदृढैव, उद्भूतरूपत्वस्य सकलोद्भूतरूपसाधारणस्यैकस्य जातिरूपस्याऽङ्गीकारेण तस्यैव चाक्षुषजनकतावच्छेदकतायामप्यवच्छेदकत्वात् तद्वत्त्वस्याऽनुद्भूतरूपे विरहादिति वाच्यम्। शुक्लत्वादिना साङ्कर्यादुद्भूतत्वं न जातिः, किं तु शुक्लत्वादिव्याप्यमनुद्भूतत्वमेव जातिः, तदभावकूटश्चोद्भूतत्वमित्यङ्गीकारात्। न चोद्भूतत्वं शुक्लत्वादिव्यापकमेवाऽङ्गीक्रियताम्, अनुद्भूते शुक्लादौ मानाभावात्, तथा च क्व साङ्कर्यमिति वाच्यम्। यादृशोष्णस्पर्शवदग्निसंयोगवशाच्छ्यामादिरूपोत्पत्तिरनुभवसिद्धा, तादृशविलक्षणाग्निसंयोगस्याऽनुद्भूतवस्तुष्वपि सम्भवेन तद्बलादेव तत्र श्यामादिरूपोत्पत्त्यभ्युपगमावश्यकतया तादृशश्यामादिरूपाणामप्रत्यक्षतोपपादनाय च तदनुगतस्याऽनुद्भूतत्वरूपवैजात्यस्याऽपि प्रत्यक्षप्रतिबन्धकतया कल्पनीयत्वेनाऽनुद्भूतश्यामादिरूपसिद्धेर्दुर्वारत्वात्। न च समवायेन श्यामत्वावच्छिन्नं प्रति निरवच्छिन्नविशेषणताविशेषसम्बन्धेन श्यामाभावस्य प्रतिबन्धकत्वादेव तत्र रूपोत्पादवारणसम्भव इति नाऽनुद्भूतरूपकल्पनावश्यकतेति वाच्यम्। एवं सति तुल्यन्यायेन

## रामरुद्री ।

समवायेन गन्धत्वावच्छिन्नं प्रति निरवच्छिन्नविशेषणताविशेषसम्बन्धेन गन्धाभावस्य प्रतिबन्धकत्वकल्पनायाः प्राप्ततया तस्याश्च पाषाणारम्भकपरमाणौ भस्मतादशायां तदारब्धावयविनि गन्धोपलब्ध्यन्यथानुपपत्त्या गन्धाभावस्य निरवच्छिन्नविशेषणतया प्रतिबन्धकत्वस्य कल्पयितुमशक्यतया तत्र पाषाणतादशायां तादृशविलक्षणाग्निसंयोगसत्त्वे गन्धोत्पत्तेरवश्याभ्युपगन्तव्यत्वात् तत्प्रत्यक्षवारणाय तद्गन्धस्याऽनुद्भूतत्वस्याऽवश्यं कल्पनीयत्वप्रसक्त्या अनुद्भूतगुणमात्रनिरासानुपपत्तेः । ननु गन्धस्थले एकस्मिन्नेव परमाणौ तदुद्भवानुद्भवयोः प्रामाणिकत्वेऽपि रूपस्थले तथात्वे मानाभावः, न हि तादृशं किञ्चिद्वस्तु प्रसिद्ध्यति, यत्रैकस्मिन्नेव रूपस्योद्भवानुद्भवौ स्याताम्, यथा पाषाणारम्भकपरमाणौ गन्धस्योद्भवानुद्भवौ दृष्टचरौ, अत एव अतितप्ततैलादौ उद्भूतरूपस्य तेजसः प्रवेशादेव प्रत्यक्षमिति ग्रन्थकृतामुक्तिरपि स्वारस्येन सङ्गच्छते इति चेन्न । विलक्षणद्रव्यमिश्रणेन साधितायामदृश्यमस्यामादौ रूपानुपलम्भेऽपि अग्निसंयोगाश्नीलादिरूपोत्पत्तेरनुभवसिद्धतया एकस्मिन्नपि वस्तुनि रूपस्योद्भवानुद्भवयोर्दृष्टत्वात् । तथा च अनुद्भूतरूपानुपगमे तत्र मस्यां मन्दस्याग्नेः संयोगकाले श्यामादिरूपोत्पत्त्यापत्तौ रूपाभावस्य प्रतिबन्धकत्वमभ्युपगम्य न वारयितुं शक्यते, अतस्तत्र रूपोत्पत्तिरवश्यमभ्युपगन्तव्या, तथा च तत्काले प्रत्यक्षापत्तिवारणायाऽनुद्भूतत्वेन तस्य प्रतिबन्धकत्वं कल्पनीयम् । एवमेव लवणस्य जलादौ प्रक्षेपेऽग्निसंयोगवशाद्विलीनस्य तस्य पूर्वरूपनाशः पुनर्जलशोषणेनाऽग्निसंयोगकाले पूर्वरूपसजातीयरूपान्तरोत्पत्तिरप्युपपद्यते, जलावच्छिन्नस्याऽग्निसंयोगस्य लवणरूपनाशकत्वात् । न च लवणस्य जले प्रक्षेपे सर्वत्र नाऽग्निसंयोगनियम इति वाच्यम् । जलस्य तरलतादशायां तेजःसंयोगस्य तत्राऽवश्यमभ्युपेयत्वात्, अन्यथा हिमकरकापत्तिप्रसङ्गात्, हिमकरकादौ च लवणस्याऽविलयनमनुभवसिद्धमेव । इत्थमेव जलशोषणकालेऽपि अग्निसंयोगः सर्वत्र दृष्टः । न च लवणे विलीने जलात्मकदोषवशाद्रूपं नोपलभ्यते, न तु अनुद्भूतत्वादिति वाच्यम् । तादृशदोषस्य प्रत्यक्षप्रतिबन्धकत्वकल्पनापेक्षया तद्गतरूपस्यैवैकवैजात्यपुरस्कारेण तादात्म्येन तत्प्रतिबन्धकत्वौचित्यात्, हिमात्मकजलसंयोगकालेऽपि लवणरूपोपलम्भेन जलमात्रस्य प्रतिबन्धकत्वानौचित्यात्, अग्निसंयोगतारतम्यवशाल्लवणरूपनाशशैघ्र्यस्याऽतितप्तजलादावनुभवसिद्धत्वाच्च । न च तत्र लवणमेव नश्यतीति कल्पयितुं शक्यम्, लवणाप्रतीतावपि तद्रसप्रतीतेरबाधितत्वात् । न च जलरूपेणाऽभिभवादेव तत्र न रूपोपलब्धिरिति वाच्यम् । एवमपि यत्र भाण्डविशेषे विलीनलवणं जलं शोषितं, पुनरुर्वरितश्च सर्वोऽपि लवणांशस्ततो निष्कासितः, अनन्तरं तत्राऽग्निसंयोगे कृष्णरूपोत्पत्तिरनुभवसिद्धा, सा तावन्न भाण्डे सञ्जायते, भाण्डान्तरेऽनुपलब्धेः, किंतु लवणेऽनुद्भूते, न हि तत्र जलरूपमभिभावकमिति कल्पयितुं शक्यम्, तस्य पूर्वमेव विनष्टत्वात् । न च भाण्ड एव तत् कृष्णरूपमुत्पद्यते, लवणसंयोगस्य नियामकत्वाच्च नाऽतिप्रसङ्ग इति वाच्यम् । भाण्डसहिते कृष्णद्रव्ये तत्र भाण्डपरिमितगुरुत्वाधिकगुरुत्वादर्शनात् लवणेऽपि पाकानुमानात् । इत्थमेव च जलपतितस्याऽयसो विकारस्तेजःसंयोगेनाऽऽयसभागापसारणादवशिष्टस्य च वायूपनीतादृश्यभागसंपृक्तस्य पाकवशाद्रूपान्तरोत्पादोऽप्युपपादनीय इति । नन्वेवमनुद्भूतरूपमात्रं सिद्ध्यति, न तु तत्र शुक्लत्वादिकमिति चेदुच्यते । लवणाग्निसंयोगस्य शुक्लरूपोत्पादकत्वं भवतैवेष्यते, अन्यथा जलशोषणानन्तरं पुनर्लवणभावापत्तौ नियमतः शुक्लोत्पादानुपपत्तेः, जलप्रक्षेपकाले च रूपनाशो भवतामिष्टः, जलमध्यप्रविष्टेऽपि लवणेऽग्निसंयोगस्याऽबाधितत्वाद्रूपोत्पत्तिरपि स्वीकृता, तर्हि तत्काले शुक्लोत्पत्तिरप्यभ्युपगन्तव्या, केवललवणाग्निसंयोगस्य शुक्लरूपोत्पादकताया एवाऽनुभवसिद्धत्वात्, तस्य च शुक्लरूपस्याऽनुद्भूतत्वमङ्गीकर्तव्यम्, अन्यथा प्रत्यक्षप्रसङ्गात्, तच्च तद्गतानुगतवैजात्यपुरस्कारेण प्रत्यक्षे तेषां प्रतिबन्धकत्व एव सम्भवति, तद्वैजात्यस्य प्रत्यक्षप्रतिबन्धकतावच्छेदकतयैव सिद्धेः, तदधीनस्य अनन्तानामननुगतानां तादृशविलक्षणजलसंयोगादीनां तत्तद्वैजात्यावच्छिन्नं प्रति जनकत्वकल्पनागौरवस्य च फलमुखत्वेनाऽदोषत्वात्, तथा च शुक्लत्वादिना साङ्कर्यादुद्भूतत्वं जातिरिति कथं कल्प्येत ? तस्मादुद्भूतत्वस्याऽनुद्भूतत्वाभावकूटरूपत्वे सिद्धे तद्विशिष्टरूपत्वेनैव चाक्षुषप्रयोजकतया नाऽनुद्भूतरूपादावव्याप्तिसम्भवः । किं चाऽनुद्भूतरूपे शुक्लत्वाद्यनभ्युपगमे उद्भूतत्वस्य वैजात्यरूपत्वमापाद्य तादृशवैजात्या-

रामरुद्री ।

भावादनुद्भूतरूपेऽव्याप्तिप्रदर्शनेन सहकारित्वस्य लक्षणान्तरत्वखण्डने तुल्ययुक्त्या द्रव्याद्युपलम्भकत्व-रूपमूलाभिमतलक्षणस्याऽपि तत्राऽव्याप्तिर्दुष्परिहरैव प्रसज्यत इति मूलमिदं रूपस्याऽनुद्भूतत्वानभ्युप-गन्तृमताभिप्रायेणाऽनुभूतरूपे शुक्लत्वाद्यनभ्युपगन्तृमताभिप्रायेण वा सङ्गमनीयमिति रीत्या निरुक्तलक्ष-णस्य परिष्कारसम्भवेन पूर्वोक्तमूलद्वयस्य साधर्म्यद्वयव्यवस्थापनपरत्वे सम्भवति मुक्तावलीकृतामीदृशा-भिप्रायवर्णनमनुचितमिति चेत्—

अत्र केचित्, आलोकत्वं जातिविशेष एव प्रत्यक्षसिद्धः। तथा च आलोकस्य चक्षुःसहकारित्वेऽपि तादृशसहकारितावच्छेदकत्वरूपं सहकारित्वमालोकस्यैव, न तु रूपस्य, अत एवेहाऽन्धकार इति प्रत्यक्ष-मप्युपपद्यते, अन्यथोद्भूतानभिभूततेजःसामान्याभावरूपत्वे तस्याऽनुद्भूतत्वाभावात्मकायोग्यवस्तुघटि-तमूर्तिकतया प्रत्यक्षत्वानुपपत्तेः, आलोकत्वात्मकवैजात्यावच्छिन्नाभावरूपत्वे च न तदनुपपत्तिरितीति नव्यमते मूलोक्तपङ्क्तिद्वयस्य भवदुक्तलक्षणद्वयाभिप्रायकतायाः कल्पयितुमशक्यतया तन्मतानुसारेणैव द्वितीयमूलस्य पूर्वमूलविवरणरूपताया ग्रन्थकृताऽभिधानादिति वदन्ति।

प्राञ्चस्तु चक्षुरादीन्द्रियं स्वनिष्ठरूपादिसहकृतमेव रूपादिप्रतिनियतविषयग्राहकमिति रीत्या चक्षुषः सहकारि रूपं भवतीत्याहुः।

तदसत्, चक्षुष्ट्वादिजातिपुरस्कारेणैव चाक्षुषहेतुत्वोपपत्तावीदृशरीत्या रूपस्य तत्सहकारित्वे मानाभा-वादिति दीधितिकृत्प्रभृतयः।

अत्र मते घ्राणादीनां पार्थिवत्वादिकं न सिद्ध्येत्। न च घ्राणेन्द्रियं पार्थिवं, रूपादिषु मध्ये गन्ध-स्यैवाऽभिव्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकघृतवदित्यनेन घ्राणस्य, रसनं जलीयमित्यादिना च रसना-देरपि पार्थिवत्वजलीयत्वादिकं साधनीयमिति वाच्यम्। उक्तहेतूनामप्रयोजकत्वात्, प्रथमानुमाने कुङ्कुमग-न्धाभिव्यञ्जक आतपे, रसनस्य जलीयत्वानुमाने च जलरसाभिव्यञ्जिकायां हरीतक्यां, चक्षुस्तैजसमित्या-द्यनुमाने च घर्षणादिना भाण्डादिरूपाभिव्यञ्जिकायां मृत्तिकायां, त्वचो वायवीयत्वानुमाने च मृत्तिका-मार्दवव्यञ्जिकास्वप्सु च व्यभिचाराच्च। न चाऽत्राऽभिव्यञ्जकत्वमभिव्यक्तिहेतुत्वम्, अभिव्यक्तिश्च साक्षात्कारमात्रम्, तथा च कुङ्कुमगतगन्धाभिभावकजलापसरणकारित्वमेव तेजस आतपस्य,न तु तत्सा-क्षात्कारहेतुत्वमपि, इत्थमेव हरीतक्या अपि भक्षणं जिह्वावृत्तिमलापसारणेन रसनाभिभावकापकर्ष-णद्वारैवोपयुज्यते, मृत्तिकादिकं च भाण्डोपरिभागवृत्तिमलापसरणे, जलमपि मृदवयवेषु प्रचयोत्पादन इति वाच्यम्। एवं सति तत्तदनुमाने घृतादिदृष्टान्तकथनस्याऽप्यसङ्गतत्वापातात्। तथा हि—दूरे स्थितस्य घृतादेरनुभवं गन्धोपलब्ध्युपपत्तये तादृशतघृतो विशीर्यमाणानामुत्पतिष्णूनामवयवानां कल्पनमावश्य-कम्, तथा च कुङ्कुमादिष्वितरजडद्रव्यजलादिप्रवेशे कुङ्कुमान्तर्गतसुरभिभागस्याऽभिभूततया तस्याऽनु-भवितृनासिकापर्यन्तगमनासम्भवेन जलादिप्रचुरदेशविशेषस्थापितकुङ्कुमगन्धः प्रत्यक्षतो नाऽभिव्यज्यते। घृतादिना च तस्य संयोजने कुङ्कुमदलानां सच्छिद्रतया तन्मार्गेणाऽन्तःप्रविष्टा उत्पतिष्णवो घृतावयवाः स्वयमुत्पतन्तो गन्धवतः कुङ्कुमावयवानपि वेगबलादुद्भावयन्तीति स्थितिः। तथा चाऽनया रीत्या कुङ्कुम-गन्धाभिव्यक्तिप्रयोजकत्वमेव तत्राऽऽयाति, न तु हेतुत्वमपि, एवमेव रसनस्य जलीयत्वानुमाने सक्तुर-साभिव्यञ्जकोदकदृष्टान्तोक्तिरप्ययुक्ता, तस्य लुप्ताक्षरमसीनीलरूपादिव्यञ्जकत्वेन रूपाद्यव्यञ्जकत्वासम्भ-वात्, चतुर्थानुमाने अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनदृष्टान्तोऽप्ययुक्तः, तस्य स्वेदगततेजःपर-माणवपसारणद्वारैव तदीयस्पर्शाभिव्यक्त्युपयोगित्वादिति। तस्मादेतन्मते न कथञ्चिदपि घ्राणादीनां पार्थिवत्वादिसाधनं सम्भवति।

अस्मन्मते तु घ्राणेन्द्रियं पार्थिवं, रूपाद्यभिव्यक्त्यप्रयोजकत्वे सति गन्धसाक्षात्कारप्रयोजकविशेष-गुणवत्त्वात्, वायूपनीतसुरभिघृतभागवदित्यनुमानेन घ्राणस्य पार्थिवत्वसिद्धिः। तथा हि घृतादिगतानां-मप्युत्कटगन्धानामवयवानामेव कुङ्कुमगन्धाभिव्यञ्जकत्वं वक्तव्यम्, अन्यथा मृदादिसंमेलनेनाऽभिभूत-गन्धस्याऽपि घृतस्य कुङ्कुमगन्धाभिव्यञ्जकत्वापत्तेः। न च मृदवयवैरभिभवाद्घृतावयवानामुत्पतनासम्भवा-देव न तत्र गन्धाभिव्यक्तिरिति गन्धस्याऽभिव्यक्तिप्रयोजकत्वकथनमनावश्यकमिति वाच्यम्। गन्धोत्कर्षेण

रामरुद्री।

कुङ्कुमगन्धाभिव्यञ्जने पाटवातिशयस्य घृतादौ प्रत्यक्षत्वात्। तथा चाऽनुमानेनाऽनेन घ्राणस्य पार्थिवत्वसिद्धिः। न चेदमप्रयोजकम्। घ्राणजत्वावच्छिन्नं प्रति घ्राणत्वेन जनकत्वाभ्युपगन्तृनयेऽपि घ्राणत्वावच्छिन्नं प्रति अनभिभूतगन्धवतामवयवानां हेतुत्वस्याऽऽवश्यकत्वात्। अन्यथा प्रतिश्यायै गन्धोपलम्भापत्तिः। अस्मन्मते तु प्रतिश्यायहेतुजलावयवानां घ्राणावयवप्रवेशेन तदवयवगन्धस्याऽभिभवे सति घ्राणस्यैवोत्पत्त्यसम्भवान्न तदानीं सौरभादिप्रत्यक्षमिति कल्पयितुं शक्यते। न चाऽनभिभूतत्वं तावत् बलवद्विजातीयसम्बन्ध एव, तथा चाऽनभिभूतगन्धवत्त्वेन घ्राणजनकतापेक्षया बलवद्विजातीयसंयोगाभावविशिष्टानां तदवयवानामेव तदारम्भकत्वं युक्तमिति वाच्यम्। केषांचित्तीक्ष्णघ्राणता, केषांचिच्च मन्दघ्राणता, यथा गवां, अस्मदादीनां च। तन्निर्वाहाय यावदपकृष्टगन्धग्रहणसामर्थ्यं यस्य घ्राणस्य, तावदपकृष्टगन्धवत्तामेव पार्थिवावयवानां घ्राणविशेषोत्पादकत्वं लाघवात् कल्पनीयम्, तन्निर्वाहायाऽनन्तघ्राणावयवगतवैजात्यविशेषकल्पनस्याऽयुक्तत्वात्। न च त्वन्मतेऽपि तादृशविजातीयगन्धवदवयवजन्यतावच्छेदकतया घ्राणे वैजात्यभेदः कल्पनीय एवेति न गौरवमिति वाच्यम्। अनन्तावच्छिन्नतादृशजातिविशेषकल्पनापेक्षयाऽस्मन्मते घ्राणविशेषभेदनिर्वाहाय तत्तदपकृष्टगन्धवत्ताया घ्राणेऽभ्युपगमात्तत्पुरस्कारेणैव तेषां विशेषतो गन्धसाक्षात्कारं प्रति हेतुतायाः कल्पनीयत्वात्। न चैवं घ्राणत्वजात्यसिद्धिप्रसङ्ग इति वाच्यम्। घ्राणजसामान्यं प्रति कारणतावच्छेदकतयैव तत्सिद्धेः। न च तत्राऽपि गन्धवत्त्वेनैव हेतुत्वमस्तु, घ्राणत्वजातिकल्पने गौरवादिति वाच्यम्। चर्ममनःसंयोगादेर्ज्ञानहेतुतामते चर्मणोऽपि विषयसंयुक्तात् गन्धप्रत्यक्षापत्तिवारणायैव वैजात्यकल्पनस्याऽऽवश्यकत्वात्। न च तत्राऽपकृष्टगन्धवदिन्द्रियसंयोगाख्यविशेषकारणाभावादेव घ्राणजप्रत्यक्षाभावोपपादनसम्भवे घ्राणस्य वैजात्यपुरस्कारेण गन्धसाक्षात्कारहेतुत्वकल्पनमयुक्तमिति वाच्यम्। विशेषकारणाभावकूटस्य घ्राणजसामान्याभावप्रयोजकत्वकल्पने गौरवमनुसन्धायैव घ्राणजत्वावच्छिन्नं प्रति घ्राणत्वेन हेतुतायाः कल्पनीयतया विशेषकार्यकारणभावबलावलम्बनेन सामान्यकार्यकारणभावापलापस्याऽपसिद्धान्तत्वात्। किं च चर्मसंयुक्ते वस्तुनि विशेषकारणविरहोऽप्यसिद्धः, तस्य घ्राणेनाऽपि संयोगसम्भवात्। न च तर्हि प्रत्यक्षमपि तत्रोत्पद्यत एवेति वाच्यम्। नर्तकीदर्शनादिव्यापृते चक्षुषि चर्ममनःसंयोगस्य भवदभिमतघ्राणविशेषविषयसंयोगस्य चाऽबाधिततया तत्र घ्राणजोत्पादापत्तेर्दुर्वारत्वात्। न च तादृशघ्राणविशेषमनःसंयोगोऽपि घ्राणजे कारणमिति नैतदापत्तिसम्भव इति वाच्यम्। एतादृशरीत्याऽनन्तकार्यकारणभावकल्पनापेक्षया घ्राणसामान्यमनःसंयोगस्य घ्राणजत्वावच्छिन्नं प्रति हेतुत्वकल्पनाया एवोचितत्वादिति दिक्। अनयैव च रीत्या रसनादीनामपि जलीयत्वादिकं साधनीयम्। तत्राऽपि तीक्ष्णरसननयनत्वगिन्द्रियताया उपपादनाय यत्पुरुषीयरसननयनत्वगादिग्राह्यरसरूपस्पर्शेषु यत्सर्वतोऽपकृष्टं तद्रसादिमत्त्वस्य तत्तदिन्द्रियेषु प्रागुक्तयुक्त्या स्वीकरणीयत्वात्। श्रोत्रेन्द्रियस्याऽऽकाशत्वमप्यनयैव रीत्या साधनीयम्। तादृशशब्दयुक्तस्यैव तस्य तद्ग्राहकत्वाभ्युपगमादिति विवेचनीयम्। न चैवंक्रमेण रसनस्य जलीयत्वं न सिद्ध्येत्, रसस्य पृथिव्यादिसाधारणतया जलीयत्वासाधकत्वादिति वाच्यम्। गन्धाभाववत्त्वे सति रसवत्त्वेनैव जलीयत्वस्य साधनीयत्वात्। न च गन्धासामानाधिकरण्यमेव तत्र निश्चेतुमशक्यमिति वाच्यम्। गन्धवत्त्वे रसनयाऽपि गन्धोपलब्ध्यापत्तेरेव बाधकत्वात्। ननु यत्पुरुषीयघ्राणग्राह्यगन्धमध्ये यो गन्धः सर्वतोऽप्यपकृष्टस्तद्गन्धसजातीयगन्धवत्त्वेन घ्राणस्य विशेषकार्यकारणभावसम्भवेऽपि रसनादेर्जलीयत्वमभ्युपगम्य तादृशविशेषकार्यकारणभावाः कल्पयितुं न शक्यन्ते, त्वदुक्तरीत्या अपकृष्टतिक्तादिग्राहकस्येन्द्रियस्य तद्रसवत्ताया अप्यावश्यकत्वात्, तस्य च जलेऽसम्भवात्। एवमेव कृष्णरूपादिग्राहिणस्तेजसोऽपि तद्रूपवत्त्वासम्भव इति कथं रसनादीनां जलीयत्वादिसिद्धिसम्भव इति चेन्न। कस्याऽपि रसनस्य जलरसाग्राहित्वानभ्युपगमेन भवदुक्तापत्तेरसम्भवात्, जलरसस्य च सर्वापेक्षयाऽपकृष्टत्वात्। एवमेव तेजोरूपाग्राहिणो नयनस्याऽनभ्युपगमात् तेजोरूपविशेषस्य च सकलेतररूपापेक्षयाऽपकृष्टत्वाभ्युपगमेन नयनादीनां रूपवत्त्वेन ग्राहकत्वमुपपन्नम्। न च तर्हि केषांचित्तीक्ष्णरसनता केषांचिन्मन्दरसनतेत्यादिनियमो न स्यादिति वाच्यम्। जलादावपि रसादितारतम्याभ्युपगमात्तदुपपत्तेरिति। तदेतदभिसन्धायोक्तम्। मूले—चक्षुषः

शुक्लादिकमनेकधेति। तच्च रूपं शुक्ल-नील-पीत-रक्त-हरित-कपिश-कर्बुरादिभेदादनेकप्रकारकं भवति। इति रूपविभागः।

नन्वु कथं कर्बुरमतिरिक्तं रूपं भवति? इत्थम्-नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीरूपः, अप्रत्यक्षत्वप्रसङ्गात्। नाऽपि व्याप्यवृत्ति नीलादिरूप-

दिनकरी।

अप्रत्यक्षत्वप्रसङ्गादिति। द्रव्यचाक्षुषं प्रति समवायसम्बन्धेनोद्भूतरूपस्य हेतुत्वा-

रामरुद्री।

सहकारीतीत्येव सम्यक्। अत एव रसनिरूपणे 'सहकारी रसज्ञायाः—'इत्याद्युक्तिरपि सङ्गच्छते, अन्यथा मुक्तावलीकृदुक्तदिशा अस्याः पूर्वविवरणरूपत्वाङ्गीकारवत् तस्यास्तथाकल्पनासम्भवेन तन्मूलस्याऽसाङ्गत्यापत्तेर्ब्रह्मणाऽपि वारयितुमशक्यत्वात्। उद्भूतरूपस्य चाक्षुषं प्रति हेतुत्ववत् रसादीनां रासनादिहेतुत्वस्य केनचिदपि व्यवस्थापयितुमशक्यत्वादिति। विवेचयिष्यते चैतद्रसादिनिरूपणे।

वस्तुतस्तु घ्राणादीनामिन्द्रियाणां प्रत्येकं भिन्नभिन्नप्रमाणबलादेव पार्थिवत्वादिसिद्धिः। तत्र घ्राणस्य पार्थिवत्वं तावत् प्रागुक्तदिशैव। रसनस्य तु जलीयत्वे मुखशोषिणां रसानभिव्यक्तिः प्रमाणम्। मुखशोषिणां हि पित्तवशाज्जिह्वाग्रवर्तिलालाद्रव्यापगमे रसज्ञानं न भवतीति प्रत्यक्षसिद्धम्, यदि रसनं जलीयं न स्यात् तर्हि तत् मुखशोषिणामप्यबाधितमिति तेषां रसप्रत्यक्षाभावोऽनुपपन्नः स्यात्, जलीयत्वे तु पित्तनाश्यत्वं सम्भवति, तस्माज्जलीयं रसनम्। नयनस्य च तैजसत्वं तेजःसदृशपृथ्वग्रसूक्ष्ममूलतापन्नप्रसरणविशेषेण तेजःस्वभावेन सिद्धम्। त्वचस्तु कुष्ठादितो वाय्वशुद्धिनिबन्धनत्वगिन्द्रियनाशपुरुषान्तरीयत्वगिन्द्रियनाशादिना वायवीयत्वमनुमेयम्।

मूले-उद्भूतरूपं कारणमिति। नन्वनुद्भूतरूपे मानाभावाज्जनकतावच्छेदककोटावुद्भूतत्वप्रवेशो व्यर्थः। न च चक्षुरादावपि तेजस्त्वादिना रूपमनुमीयत इति वाच्यम्। अप्रयोजकत्वादिति चेन्न। यत्र कपालेऽग्निसंयोगतो नीरूपे नीलरूपवता कपालान्तरेण तस्य संयोगाद्घटोत्पत्तिरित्येकः कालः, तत्र तदुत्तरक्षणे घटे नीलोत्पादापत्तिः। न चेष्टापत्तिः सम्भवति, तदुत्तरक्षणे तत्र कपाले पीतरूपोत्पत्तौ तदनन्तरं चित्रोत्पादानुपपत्तेर्नीलोपलब्धिप्रसङ्गाच्च, अतो रूपं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकरूपाभावः सामानाधिकरण्यसम्बन्धेन प्रतिबन्धको वक्तव्यः। तथा च चम्पकाद्यारम्भकावयवान्तःपातिवायूपनीतसुरभिभागानामरूपत्वे चम्पके रूपोत्पादानुपपत्तिः, अतोऽनुद्भूतरूपकल्पनायास्तत्राऽऽवश्यकत्वात्। न चैवं भवन्मतेऽपि चम्पकादौ पीताद्युत्पादानुपपत्तिर्दुष्परिहरैव, पीतादिकं प्रति पीतान्यरूपस्य प्रतिबन्धकतया भवदभिमतानुद्भूतरूपप्रतिबन्धेन तदुत्पादासम्भवादिति वाच्यम्। इष्टापत्तेः, तत्र चित्ररूपोत्पादस्यैवाऽभ्युपगमात्। न चैवं तत्र चित्रप्रत्यक्षापत्तिरिति वाच्यम्। चित्रत्वप्रकारकप्रत्यक्षेऽवयवगतनानारूपप्रत्यक्षस्य हेतुतया तदभावेनैवाऽत्र तदसम्भवात्। न च तत्र पीतत्वप्रकारकप्रत्यक्षानुपपत्तिरिति वाच्यम्। तस्या इतरचित्रस्थलेऽपि विजातीयरूपद्वयाग्रहणकालजायमाननीलादिप्रतीतिवद्भ्रमत्वस्येष्टत्वात्।

वस्तुतस्तु चम्पकादौ पीतत्वादिप्रकारकप्रत्यक्षस्य भ्रमत्वमनुभवविरुद्धमेव। तस्मात् तत्र पीतमेवोत्पद्यते इति वक्तव्यम्। न चाऽनुद्भूतरूपस्य प्रतिबन्धकत्वात् कथं तदुत्पादसम्भव इति वाच्यम्। अत एव कारणात् चम्पकारम्भकावयवगतानुद्भूतरूपे पीतत्वस्याऽपि कल्पनीयत्वात्, तथा च न तत्र पीतानुपपत्तिरिति परैरलक्षितः पन्थाः। इति रूपलक्षणग्रन्थः॥

मूले—ननु कथमित्यादि। अत्र रूपत्वं नीलाद्यन्यवृत्ति न वेति विप्रतिपत्तिः, तत्र विधिकोटिश्चित्ररूपवादिनाम्, निषेधकोटिरितरेषामिति बोध्यम्। अप्रत्यक्षत्वप्रसङ्गादिति। इदमत्र चिन्तनीयम्-द्रव्यचाक्षुषं प्रत्युद्भूतरूपत्वेन हेतुत्व एव मानाभावः। न च घ्राणादीनां प्रत्यक्षवारणाय तदभ्युपगम आवश्यक इति वाच्यम्। तद्वारणायोद्भूतैकत्वादिनाऽपि हेतुत्वसम्भवात्, यत्रैकस्मिन्नेव वस्तुनि पाकवशादुद्भूतरूपतदभावौ तत्र प्रत्यक्षाप्रत्यक्षोपपादनं व्यभिचारान्न सम्भवतीत्यपि नक्ष-

**मुत्पद्यते, पीतावच्छेदेनाऽपि नीलोपलब्धिप्रसङ्गात् । नाऽप्यव्याप्यवृत्ति**

**रामरुद्री ।**

वचम्, तादृशस्थलस्य विवादास्पदत्वादिति । अथैतन्मते उद्भूतत्वादेरपि न चाक्षुषे हेतुता, वैयर्थ्यात्, अनुद्भूतरूपे ग्रीष्मोष्मादौ प्रत्यक्षानुत्पादस्य रूपविषयकत्वात्मकद्रव्यप्रत्यक्षत्वव्यापकधर्मावच्छिन्नसामग्रीविरहप्रयोज्यत्वात् । कथं तर्हि 'गृह्णाति चक्षुःसम्बन्धादालोकोद्भूतरूपयोः ( ५५ )—'इति पूर्वंकारिका सङ्गमनीयेति चेत्, उद्भूतरूपप्रयोज्यतामादायैव, व्यापकधर्मावच्छिन्नसामग्रीमध्यपतितस्य व्याप्यधर्मावच्छिन्नप्रयोजकत्वाच्चतेः । नन्वेवमालोकसंयोगस्याऽपि द्रव्यचाक्षुषहेतुत्वानुपपत्तिः, अन्धकारे द्रव्यचाक्षुषापत्ते रूपचाक्षुषहेतुसामग्रीघटकालोकसंयोगविरहादेव वारणीयत्वादिति चेन्न, अन्धकारे रूपचाक्षुषसामग्र्यभावो नाऽस्ति, नीलरूपभ्रान्तिहेतोर्दोषस्य विद्यमानत्वात्, द्रव्यप्रत्यक्षं च न भवत्येव, अत आलोकसंयोगस्य हेतुत्वमावश्यकमिति चेन्न । रूपभ्रमहेतुदोषसत्त्वे वाय्वादीनामपि चाक्षुषापत्तेः, बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानजनकत्वायोगादिष्टापत्तेरसम्भवादिति, प्रकृते तु निरुक्तरीत्या चाक्षुषप्रत्यक्षस्य रूपाविषयकस्य कथञ्चिदप्यसम्भवेन रूपभ्रमहेतुदोषविरहदशायां रूपचाक्षुषत्वरूपव्यापकधर्मावच्छिन्नसामग्रीविरहादेव घटप्रत्यक्षानुपपत्तिश्चित्ररूपं समर्थयतीति बोध्यम् । **मूले—नाऽपि व्याप्यवृत्ति नीलादिकमिति ।** निरवच्छिन्नवृत्तिकमित्यर्थः । **पीतावच्छेदेनाऽपि नीलोपलब्धिप्रसङ्गादिति । पीतावच्छेदेनाऽपि**—पीतावच्छेदेनोत्पन्नचक्षुःसंयोगघटितचक्षुःसंयुक्तसमवायरूपसन्निकर्षेणाऽपि । तेन व्याप्यवृत्तित्वस्य नीलादिनिष्ठस्य पीताद्यवच्छेदेनोपलब्ध्यापादकत्वं न सम्भवति, व्याप्यवृत्तित्वस्य निरवच्छिन्नवृत्तित्वात्मकतया किञ्चिदवच्छेदेनोपलब्धिविरोधित्वादिति प्रत्युक्तम् (१) ।

**नाऽप्यव्याप्यवृत्तीति ।** सावच्छिन्नवृत्तिकमित्यर्थः । अथैवमपि पीतावच्छेदेन चक्षुःसंयोगकाले नीलरूपप्रत्यक्षापत्तिर्दुर्वारैव, तदानीमपि चक्षुःसंयुक्तसमवायरूपसन्निकर्षस्याऽबाधितत्वात् । न च चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायत्वादिना स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन चक्षुःसंयोगविशिष्टसमवायत्वादिना वा सन्निकर्षत्वोपगमान्नोक्तदोषः, तत्काले तादृशसन्निकर्षविरहादेव प्रत्यक्षापत्तिवारणसम्भवादिति वाच्यम् । आद्ये व्याप्यवृत्तिनीलादिप्रत्यक्षानुपपत्तेः, तत्र चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायस्याऽसम्भवात् । द्वितीये व्यक्त्यन्तरे चक्षुःसंयोगदशायां घटनीलप्रत्यक्षापत्तेः, तदानीमपि स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन तत्समवायस्य तत्र सत्त्वात्, तस्य किञ्चिदनवच्छिन्नत्वेन सर्वदैव स्वानवच्छेदकानवच्छिन्नत्वादिति चेन्न । स्वसमानाधिकरणनिष्ठत्व-स्वानवच्छेदकानवच्छिन्नत्वोभयसम्बन्धेन

---

( १ ) ननु स्वप्रतियोगित्व-स्वसामानाधिकरण्योभयसम्बन्धेनाऽभावविशिष्टान्यत्वरूपमेव व्याप्यवृत्तित्वमिह विवक्षितम्, तच्च न सावच्छिन्नवृत्तिमत्त्वेन विरुध्यते । न च रूपस्याऽपि कालिकादिघटितसामानाधिकरण्यघटितोक्तसम्बन्धद्वयेन स्वाभावविशिष्टत्वात् व्याप्यवृत्तित्वासम्भव इति वाच्यम् । प्रतियोगिताविशिष्टप्रतियोगिताश्रयत्वस्यैव तथात्वात् । वैशिष्ट्यं च स्वतादात्म्य-स्वविशिष्टाधेयतानिरूपिताधिकरणतावन्निरूपिताधेयताविशिष्टत्वोभयसम्बन्धेन । आधेयतायां स्ववैशिष्ट्यं च स्वनिरूपकाभावत्वावच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वा वच्छेदकावच्छिन्नवत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । आधेयतावैशिष्ट्यं च प्रतियोगितायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेनेति चेन्न । एवं सति सावच्छिन्नत्वं तत्र रूपे नीलावच्छिन्नत्वप्रयुक्तमेव, न तु पीतावच्छिन्नत्वप्रयुक्तमित्यभ्युपगमेऽपि भवदुक्तव्याप्यवृत्तित्वस्याऽक्षततया पीतावच्छेदेनोपलब्धौ निरुक्तव्याप्यवृत्तित्वस्याऽऽपादकत्वासम्भवात् । न च तस्य रूपस्य सर्वावयवावच्छिन्नत्वमेव स्वीकरणीयम्, अन्यथा पीतावच्छेदेन तदभावसत्त्वाद्व्याप्यवृत्तित्वभङ्गप्रसङ्गादिति वाच्यम् । यो यद्धर्मस्याऽनवच्छेदकः स तदभावावच्छेदक इति व्याप्त्यैव पीतावयवावच्छेदेन नीलाभावस्य साधनीयतया गुणाद्यनवच्छेदकप्रमेयत्वादौ व्यभिचारेण तादृशव्याप्त्यसम्भवे पीतावच्छेदेन नीलाभावासिद्धेः । स्पष्टं चैतत् सिद्धान्तलक्षणदीधितौ जागदीशीगादाधर्योश्च । व्याप्यवृत्तेः सर्वावयवावच्छिन्नत्वस्वीकारेऽपि प्रमाणाभावाच्चेति बोध्यम् ।

नीलादिकमुत्पद्यते, व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्, तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते। अत एवैकं चित्ररूपमित्यनुभवोऽपि नानारूपकल्पने गौरवात्।

इत्थं च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः।

## दिनकरी।

दिति भावः। व्याप्यवृत्तिजातीयेति। व्याप्यवृत्तिवृत्तिजातिश्च सविषयावृत्तिर्बोध्या। तेन व्याप्यवृत्तीश्वरज्ञानजातीयस्याऽस्मदादिज्ञानस्याऽव्याप्यवृत्तित्वेऽपि न क्षतिः। ननु वृक्षाणां बहुत्वेऽप्येकं वनमितिवद्रूपसमुदायगतमेकत्वमादायैकं चित्रमित्यनुभवोपपत्तिरत आह। नानेति। गौरवादिति। चित्रमितिप्रतीतिविषयताया अनेकत्र कल्पने गौरवादित्यर्थः।

ननु चित्ररूपाधिकरणे घटादौ स्वाश्रयसमवेतत्वसम्बन्धेन कपालनीलादीनां कारणानां सत्वात् कथं तत्र न नीलाद्युत्पत्तिरित्यत आह। इत्थं चेति। उक्तलाघवेन चित्ररूपसिद्धौ चेत्यर्थः। प्रतिबन्धकत्वकल्पनादिति। समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन

## रामरुद्री।

चक्षुःसंयोगविशिष्टसमवायस्य सन्निकर्षत्वाभ्युपगमात्। व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे-व्याप्यवृत्तितावच्छेदकगुणत्वव्याप्यजातेरवच्छेदकत्वसम्बन्धावच्छिन्नकार्यतावच्छेदकत्वे। विरोधात्—उपजीव्यविरोधप्रसङ्गात्। कपालनीलादितो घटनीलाद्युत्पत्तिमुपजीव्य हि नीलत्वादेर्नीलादिजन्यतावच्छेदकत्वं स्वीक्रियते, कार्यतायामवच्छेदकतासम्बन्धस्याऽवच्छेदकविधया निवेशे तद्विरोधप्रसङ्गः, केवलनीलकपालजन्यघटनीलस्य व्याप्यवृत्तितया तस्याऽवच्छेदकतासम्बन्धेनोत्पत्त्ययोगात्, नानारूपवदवयवारब्धघटस्थले च नीलोत्पत्तिः सन्दिग्धैव, अतो न तामुपजीव्याऽवच्छेदकत्वसम्बन्धावच्छिन्ना नीलादेः कार्यताऽभ्युपगन्तुं शक्येत्यत्र तात्पर्यम्। एतेन व्याप्यवृत्तिभगवज्ज्ञानेच्छादिजातीयस्य ज्ञानेच्छादेरव्याप्यवृत्तित्वात्, उक्तनियमस्याऽप्रयोजकत्वाच्चेदमयुक्तम्, कर्मत्वे व्यभिचाराच्च, चलति शाखासमूहे निश्चले मूले महीरुहश्चलतीति प्रतीतेः क्वचित् कर्मणोऽप्यव्याप्यवृत्तित्वात्। न च तत्राऽवयवक्रियैव परम्परयाऽवयविनि भासते, अवयवी तु निश्चल एवेति वाच्यम्। साक्षात्सम्बन्धे बाधकाभावात्, अन्यथा कर्मणः प्रायेणाऽव्ययविगतत्वमेव विलीयेत, सामग्रीसत्त्वेन सिद्धिस्तुल्यैव। सामग्र्येव नाऽस्ति, अभिघातादेरवयवगतत्वात्, अवयविनि तत्प्रत्ययस्य परम्परयैवोपपत्तेरित्यपि तुल्यम्। न चैवमवयविनि पूर्वदेशविभागादिर्न स्यादिति वाच्यम्। किं तेन? अवयव एव स इति स्वीकारादिति केषाञ्चिच्छङ्का परास्ता। टीकाकृता तु प्रौढ्यैव यथाश्रुतार्थमादाय व्याख्यानं कृतम्। न च नीलादेः समवायावच्छेदकत्वाभ्यां प्रत्येकमवच्छिन्नं कार्यताद्वयमभ्युपगम्यत इति न दोष इति वाच्यम्। गौरवात्। अथ भवन्मतेऽपि चित्रत्वावच्छिन्नं प्रति कारणतान्तरं कल्प्यमिति कार्यकारणभावद्वयकल्पनं भवतोऽपि दुष्परिहरमेवेति चेन्न। भवन्मतेऽवच्छेदकतासम्बन्धेन नीलं प्रति समवायेनैव नीलस्य हेतुत्वं वाच्यमिति केवलनीलकपालस्थलेऽपि कपालेऽवच्छेदकतासम्बन्धेन नीलोत्पादापत्तेरेव दोषत्वादिति प्रघट्टकार्थः। टीकायाम्—नन्वित्यादि। अनुभवोपपत्तिरिति। वृक्षेषु तदेकत्वबोधस्य तत्राऽसम्भवात् यथा तत्र विशेषणीभूतसमुदायस्वगतमेवैकत्वं प्रतीयत इत्यभ्युपगम्यते तथेत्यर्थः।

ननु पीतादिकं प्रति नीलादीनां प्रतिबन्धकत्वं मूलोक्तं न सङ्गच्छते, तथा हि पीतं प्रति न नीलत्वादिना प्रत्येकं षड्वा बहूनि वा प्रतिबन्धकत्वानि कल्पयितुं युक्तानि, महागौरवादित्यत आह। समवायेनेति। इदं त्ववधेयम्। यत्रैककपाले पाकाद्विनश्यदवस्थः पीतः कपालान्तरे चाऽविनश्यदवस्थो नीलः, तत्र द्वितीयक्षणे पीतनाशे सति तृतीयक्षणे नीलोत्पादापत्तिः, तत्र नीलान्यरूपस्य प्रतिबन्धकस्य तदानीं

रामरुद्री।

मभावात्। न चेष्टापत्तिः, अग्रे तेजःसंयोगवशात्पीतरूपोपलक्षितकपाले रक्तोत्पत्तौ घटे तत्काले नीलोपलब्ध्यापत्तेः, चित्ररूपोत्पादानुपपत्तेश्च, समवायेन रूपं प्रति समवायेन रूपस्य प्रतिबन्धकत्वात्। ननु एककपालानीलतादशायां कपालान्तरे नीलसत्त्वे च घटे कीदृशनीलव्यक्तिरापाद्यत इति वक्तव्यम्, न तावत्पूर्वनीलव्यक्तिरापादयितुं शक्या, तत्कारणत्वस्य विनष्टनीलव्यक्तावपि स्वीकरणीयतया तदभावादेवाऽऽपत्तिवारणात्। नाऽपि अग्रे पुनर्जातेन पाकेन तत्काले नीलान्तरोत्पत्तौ भविष्यन्ती नीलव्यक्तिरापादयितुं शक्या, तत्कारणस्य भविष्यन्नीलव्यक्तेरभावात्। तस्मात् कस्याश्चिदपि नीलव्यक्तेरापादनासम्भवात् न कश्चिद्दोष इति। न चैवं नीलेतररूपत्वादिना प्रतिबन्धकत्वाभ्युपगमोऽप्यनुचितः, तत्राऽपि विशेषकारणविरहादेव नीलोत्पादापत्तेर्वारयितुं शक्यत्वात्। यद्यपि यत्र नीलेन कपालद्वयेन पूर्वमेको घट उत्पादितस्ततः कुतश्चित् कारणात्तद्घटविनाशे ताभ्यामेव कपालाभ्यां पीतकपालान्तरसंयुक्ताभ्यां घटान्तरमुत्पादितं, तत्र घटान्तरे पूर्वनीलापत्तिः सम्भवति, तथाऽपि तेनैव कपालद्वयेन कपालान्तरासहकृतेन चेत् घटान्तरमुत्पादितं, तत्र पूर्वघटेऽपरघटनीलोत्पादापत्तेर्वारणाय समवायिकारणस्याऽपि तत्तद्व्यक्तित्वेन हेतुत्वस्याऽऽवश्यकतया तदभावादेव घटान्तरे नीलोत्पादवारणसम्भवादीदृशप्रतिबध्यप्रतिबन्धकभावो निर्युक्तिक एवेति वाच्यम्। यादृशनीलकपालाभ्यां पीतकपालासम्पृक्ताभ्यां घटद्वयं न जनितं, तादृशानन्तस्थलेऽनन्तानां समवायिकारणव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुत्वमपेक्ष्येदृशप्रतिबध्यप्रतिबन्धकभावकल्पनस्य युक्ततया तत्स्वीकारादिति चेन्न। तथा सति लाघवात् नीलादिकं प्रति सामानाधिकरण्यसम्बन्धेन नीलाद्यभावत्वेन षट्प्रतिबन्धकत्वकल्पनाया एवोचितत्वात्, नीलान्यरूपत्वादिना षण्णां रूपाभावत्वेन च सप्तमस्य प्रतिबन्धकत्वस्य कल्पनानौचित्यात्। ननु पाकजस्थले व्यभिचारान्न नीलाभावत्वादिनाऽपि प्रतिबन्धकत्वं कल्पयितुं शक्यम्, अपाकजत्वस्य प्रतिबध्यतावच्छेदककोटावुपादाने च तस्याऽननुगतत्वादनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनाप्रसङ्गः, यत्रैकस्मिन् कपाले नीलरूपसत्त्वदशायामपरत्र नीलजनकाग्निसंयोगस्तदुत्तरं नीलरूपानुत्पादप्रसङ्गश्च, तत्र कथञ्चिदिष्टापत्तिसम्भवेऽपि* नीलपीतरक्तकपालानां यत्र प्रथमक्षणे उत्पत्तिः, ततस्तेषां रूपोत्पत्तिः, रक्तरूपविनाशकतेजःसंयोगः, परस्परं च संयोगो घटारम्भकः, ततो रक्तनाशो घटोत्पत्तिश्चेत्येकः कालः; तदुत्तरक्षणे चित्ररूपानुत्पादप्रसङ्गो दुर्वार एव। न चेष्टापत्तिः, तत्क्षणे चक्षुःसंनिकर्षादुत्तरक्षणे चित्ररूपप्रत्यक्षानुपपत्तेः। न च न प्रत्यक्षानुपपत्तिः, घटोत्पत्तिकाले रक्तनाशेऽपि तदुत्तरक्षणे तत्रैव कपाले पाकवशाद्रूपान्तरस्योत्पन्नतया बाधकाभावाद्घटेऽपि रूपोत्पादे तृतीयक्षणे चित्ररूपसमर्थनात्, द्वितीयक्षणे प्रथमक्षणे वा प्रत्यक्षं तु भवद्भिरपि नाऽभ्युपगन्तुं शक्यम्, तत्कारणस्य चक्षुःसन्निकर्षस्याऽसम्भवादिति वाच्यम्। प्रत्यक्षकारणीभूतस्य विषयस्य सन्निकर्षस्य च पूर्वं विरहेण त्वदुक्तयुक्त्यैव तदा तदसम्भवात्। यावदवयवगतरूपप्रत्यक्षस्याऽपि चित्रप्रत्यक्षहेतुत्वमावश्यकम्, अन्यथा नीलपीतकपालद्वयारब्धघटे अन्यतररूपाग्रहदशायां चित्रप्रत्यक्षापत्तेः, तथा च एकावयवनीरूपतादशायां यावदवयवरूपप्रत्यक्षात्मककारणविरहात्तत्काले चित्रप्रत्यक्षासम्भव इति चेन्न, तत्र चतुर्थक्षण एव चित्रप्रत्यक्षोपगमेन तृतीयक्षणे तदसम्भवेऽपि क्षत्यभावात्, क्षणविलम्बस्य शपथनिर्णेतव्यत्वात्, यावदवयवत्वस्याऽननुगतस्य निर्वक्तुमशक्यतयेदृशकार्यकारणभावस्य कथञ्चिदप्यसम्भवात्, अन्यथा पुष्पादिषु अनुद्भूतरूपाणामप्यवयवानां स्वीकृततया तत्र चित्रप्रत्यक्षानुपपत्तेः। न च तेषां संयोगिद्रव्यत्वमेव, न त्वारम्भकत्वमिति न तत्र चित्ररूपप्रत्यक्षानुपपत्तिरिति वाच्यम्। तेषां संयोगिद्रव्यत्वे पुष्पे सौरभारम्भकावयवान्तराभावेन पुष्पं सुरभीति प्रतीतेर्भ्रमत्वापत्तेः, पुष्पम्लानौ तादृशानुद्भूतरूपावयवापसरणप्रयुक्तस्यैव गन्धविनाशस्य कल्पनीयत्वात्, अन्यथा पुष्पघटकप्रत्यक्षभागानां यथापूर्वमवस्थिततया तत्र गन्धस्वीकारे तत्कालेऽपि तत्प्रत्यक्षापत्तेः। न च तत्र तेजःसंयोगवशादेवोद्भूतावयवानामपि गन्धो नश्यतीति कल्प्यते इति वाच्यम्। तेजःसंयोगसम्भावनारहितदेशस्थापितेऽपि पुष्पादौ

---

*तत्र तदुत्तरक्षणेऽवयविनि नीलरूपं नोत्पद्यत एव, किन्तु अवयवे पाकाद्रूपोत्पत्तौ कारणगुणपूर्वक एव नीलादिर्घटे उत्पद्यते, क्षणविलम्बस्य शपथनिर्णेतव्यत्वादिति रीत्येत्यर्थः।

दिनकरी।

नीलातिरिक्तरूपत्वेन, पीतरूपं प्रति पीतातिरिक्तरूपत्वेन प्रतीबन्धकत्वमिति रीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनात्, अन्यथा नानाजातीयरूपवत्कपालारब्धे घटे नीलकपालावच्छेदेन पीतोत्पादापत्तेर्दुर्वारत्वादिति भावः।

रामरुद्री।

किञ्चित्कालं तादृशानुद्भूतावयवापगमे गन्धन्यूनीभावानुभवेन गन्धान्तरोत्पादस्याऽऽवश्यकतया तस्य पूर्वगन्धनिवृत्तिनान्तरीयकतया तत्स्वीकारस्याऽऽवश्यकत्वात्, अनुद्भूतावयवापगमस्य च तत्स्थले वायौ सौरभानुभवान्यथानुपपत्त्याऽवश्यकल्प्यत्वात्। नीलपीतारब्धस्थले तदेकतरपिधानदशायां चित्रप्रत्यक्षापत्तिवारणाय तु विषयतया चित्रप्रत्यक्षं प्रति नीलेतररूपवदवयवावच्छिन्नचक्षुःसंयुक्तसमवायत्व—पीतेतररूपवदवयवावच्छिन्नचक्षुःसंयुक्तसमवायत्वादिना षड्वा बहवो वा कार्यकारणभावाः कल्पनीयाः, केवलनीलावयवावच्छिन्नसन्निकर्षकाले रक्तरूपादिग्रहसत्त्वे तदवयवावच्छिन्नचक्षुःसंयोगविरहदशायामपि यदि चित्रप्रत्यक्षमनुभवसिद्धं, तदा नीलमात्रारब्धे नानाजातीयरूपवदवयवारब्धत्वभ्रमकालोपजायमानं चित्रप्रत्यक्षमिवोपनीतभानात्मकमेव तदभ्युपेयम्, न तु लौकिकसन्निकर्षजन्यमतो न व्यभिचारः। रक्तशुक्लाद्यारब्धघटे शुक्ले रक्तत्वभ्रमदशायां तथाविधसन्निकर्षसत्त्वेऽपि दोषेण प्रतिबन्धादेव न चित्रप्रत्यक्षमिति सिद्धान्तस्यैव स्वरसतस्तत्त्वादिति निगर्वः।

परे तु चित्रेतररूपत्वावच्छिन्नं चित्रं कार्यकालवृत्तितया प्रतिबन्धकम्। न चैकावयवे नीलसत्त्वेऽपरत्र पीतजनकाग्निसंयोगसत्त्वे नीलापत्तिः, तदानीं चित्राभावसत्त्वादिति वाच्यम्। जन्यरूपत्वावच्छिन्नं प्रति सामानाधिकरण्यसम्बन्धेन रूपाभावस्य प्रतिबन्धकत्वादेव तद्वारणात्। न च पाकजरूपे व्यभिचार इति वाच्यम्। रूपसामानाधिकरण्यविशिष्टरूपाभावस्यैव प्रतिबन्धकत्वोपगमात्। न च घटादेर्यत्किञ्चिदवयवपाकस्थले घटे चित्ररूपानुत्पादप्रसङ्गः, तत्र रूपसामानाधिकरण्यविशिष्टरूपाभावसत्त्वादिति वाच्यम्। इष्टापत्तेः, तादृशावयवे रूपोत्पादानन्तरमेव चित्रोत्पादस्य स्वीकरणीयत्वादिति प्राहुः।

वैशेषिकैकदेशिनस्तु नीलादिकं प्रति नीलप्रागभावत्वेनैव हेतुना, अतो न चित्रघटस्थले तदापत्तिः। न च परमाणौ रक्ततादशायां भाविनीलव्यक्तेरुत्पादापत्तिः, तत्प्रागभावस्य सत्त्वादिति वाच्यम्। अपाकजनीलव्यक्तेः प्रागभावविरहेणाऽऽपादयितुमशक्यत्वात्, पाकजन्यायाश्चाऽग्निसंयोगविरहादेवाऽनापादनीयत्वात्। अथ नीलादिकं प्रति नीलादेर्हेतुत्वे मानाभाव इति चेन्न। प्रागभावस्य प्रतियोगिसमवायिनीव देशकालाधिकरणादावपि भविष्यतीतिप्रत्ययानुरोधेन स्वीकरणीयतया देशकालादौ तदापत्तिवारणाय तत्स्वीकारावश्यकत्वादित्याहुः।

ननु समवायेन नीलादिकं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन हेतुत्वस्वीकारेऽपि भवन्मते समवायेन नीलादिकं प्रति नीलान्यरूपत्वादिना प्रतिबन्धकताकल्पनगौरवमधिकम्। न च स्वसमवायिसमवेतत्वसम्बन्धेन नीलादेर्हेतुत्वे नीलपीतारब्धस्थले नीलावच्छेदेनेव पीतावच्छेदेनाऽपि नीलापत्तिवारणायैव पूर्वोक्तः प्रतिबध्यप्रतिबन्धकभावः स्वीक्रियत इति वाच्यम्। पीतावच्छेदेन नीलापत्तिर्न सम्भवति, आपादकाभावात्। न च पीतकपालावच्छिन्नचक्षुःसन्निकर्षादिकाले नीलोपलब्ध्यापत्तिरेव दोष इति वाच्यम्। चित्ररूपवादिमतेऽपि केवलनीलकपालावच्छेदेन सन्निकर्षकाले नीलो घट इति प्रत्यक्षमुपपादनीयम्, न तावत्तत् सामानाधिकरण्येन नीलावगाहीति वक्तुं शक्यम्, अनुगताकारत्वव्याघातप्रसङ्गात्। किं तु सामानाधिकरण्यात्मकदोषवशात् घटे नीलभ्रमो जायत इत्यभ्युपगन्तव्यम्। तथा च स्वाव्यवहितोत्तरघटधर्मिकनीलादिभ्रमं प्रति नीलरूपवदवयवावच्छिन्नचक्षुःसंयुक्तसमवेतत्वं कारणमिति पर्यवसितम्। तत्र कार्यतावच्छेदककोटौ भ्रमत्वस्थाने लाघवात् ज्ञानत्वमेव निवेश्यते। तथा च पीतावच्छेदेन सन्निकर्षकाले न नीलादिप्रत्यक्षापत्तिरिति। न च यत्र पीतावच्छेदेनाऽपि चक्षुःसन्निकर्षः, तत्र नीलप्रत्यक्षापत्तिरिति वाच्यम्। इष्टापत्तेः, विशेषादर्शिनां तथा भ्रमसम्भवात्, विशेषदर्शनाभाववैशिष्ट्यस्य प्रतिबन्धकतावच्छेदककोटौ त्वयेव मयाऽपि निवेशनीयत्वात्, नीलाभाववदवयवावच्छिन्नचक्षुःसंयोगासमानकालीनत्व-

दिनकरी ।

अत्र नव्याः, नानाजातीयरूपवत्कपालारब्धे घटे पीतकपालावच्छेदेन नीलापत्तिवारणाय न पूर्वोक्तः प्रतिवध्यप्रतिबन्धकभावः कल्प्यते, किं त्ववच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलादेः कारणत्वं कल्प्यते, चित्ररूपाङ्गीकारे तु समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलत्वादिना हेतुत्वस्य पूर्वोक्तप्रतिवध्य प्रतिबन्धकभावस्य च कल्पनात् गौरवमित्याहुः,

तन्न, अवच्छेदकतासम्बन्धघटितोक्तकार्यकारणभावाङ्गीकारेऽप्यवच्छेदकतासम्बन्धेन कपालादौ जायमानस्य नीलादेः समवायेन घटादाविव गगनादावप्युत्पत्तिवारणाय समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्हेतुत्वस्य तवाऽप्यावश्यकत्वात् । किंच चित्रमितिप्रतीतिविषयताया अनेकत्र कल्पने गौरवम्, एकत्र कल्पने लाघवमिति लाघवानुरोधेनाऽतिरिक्तचित्ररूपसिद्धौ पूर्वोक्तप्रतिवध्यप्रतिबन्धकभावकल्पनागौरवस्य न दोषत्वं, फलमुखत्वादित्यन्यत्र विस्तरः ।

रामरुद्री ।

स्याऽपि वा जनकतावच्छेदककोटौ निवेशनीयत्वादित्यत आह । **किं चेति** । किं च यत्र नीलपीतारब्धघटस्थले रक्तजनकोऽग्निसंयोगः संवृत्तः, तत्र घटे रक्तोत्पादवारणाय सामानाधिकरण्येन नीलान्यरूपस्य नीलादिकं प्रति प्रतिबन्धकत्वमभ्युपेयम् । न च तत्र घटेऽपि नीलपीतयोरुत्पादस्वीकारेण समवायेन तस्यैव प्रतिबन्धकत्वात्तत्र न रक्तापत्तिः सम्भवतीति वाच्यम् । नीलपीते हि त्वया तत्राऽवच्छेदकतासम्बन्धेन नीलादिकं प्रति तेनैव सम्बन्धेन प्रतिबन्धके वक्तव्ये, रक्तरूपापत्तिस्तु समवायसम्बन्धेन दीयत इति केन किं वार्येत ? न च पूर्वोक्तदिशा नीलपीतयोर्व्याप्यवृत्त्योरेव तत्रोत्पत्तिः स्वीक्रियते, तद्धटधर्मिकनीलादिप्रत्यक्षे तादृशनीलरूपावयवावच्छिन्नचक्षुःसंयोगघटितसन्निकर्षस्य कारणत्वं च कल्पनीयमिति वाच्यम् । विशेषादर्शिनां भवतां नीलपीतोभयावच्छेदेन सन्निकर्षकालेऽपि रूपप्रत्यक्षस्यैवाऽनुत्पादप्रसङ्गात्, चित्ररूपाभावेन तत्प्रत्यक्षस्येतररूपवदवयवावच्छिन्नचक्षुःसंयोगसत्वेन नीलपीतयोरपि प्रत्यक्षासम्भवादित्याद्यपि नीलादौ नीलान्यरूपाणां प्रतिबन्धकत्वे साधकं भविष्यतीति सूचयति । **अन्यत्र विस्तर इति** । शेषं स्पष्टम् । वस्तुतस्तु नीलपीतयोर्व्याप्यवृत्त्योरेव तत्रोपगमे नीलावच्छेदेन सन्निकर्षकाले पीतप्रत्यक्षापत्तिर्न सम्भवति, तस्य पीतप्रत्यक्षाहेतुत्वात् । नाऽपि पीतावच्छिन्नसन्निकर्षसमकालीनत्वान्नीलप्रत्यक्षानुपपत्तिः, तादृशसमानकालीनत्वाभावस्य जनकतावच्छेदककुक्षिप्रवेशवैयर्थ्यात् । नीलपीतोभयावच्छेदेन सन्निकर्षकालेऽपि विशेषादर्शिनां तदुभयसमूहालम्बनसम्भवात् । किं तु पीतावयवावच्छिन्नचक्षुःसन्निकर्षादिकाले दोषवशाज्जातस्य नीलज्ञानस्य भ्रमत्वानुपपत्तेरेव व्याप्यवृत्तिनीलपीतयोरेकत्र स्वीकारासम्भव इति दिक् ।

श्रीरामतर्कवागीशास्तु—नन्वस्तु तत्र नीलादिकं, प्रतीतेर्दुर्वारत्वात्, चित्रमपि दुर्वारम्, अनुगतचित्रप्रत्ययस्याऽन्यथोपपादयितुमशक्यत्वात् । न च विजातीयनानारूपावगाहित्वेन तदुपपादनम्, वैजात्यं हि न नीलत्वपीतत्वादिकं सर्वम्, नीलत्वपीतत्वे एव वा, नीलपीतोभयमात्रवति श्वेतरक्तोभयमात्रवति च चित्रप्रत्ययानुपपत्तेः । स्वसमानाधिकरणत्वे सति स्वावृत्तिजातिमत्त्वं विजातीयत्वम्, इत्थं च नानात्वं न वाच्यमित्यपि न युक्तम्, स्वत्वस्याऽननुगतत्वेनाऽनुगतप्रत्ययानुपपत्तेस्तादवस्थ्यात् । न च नीलेतरपीतेतररूपादिसमुदायवत्त्वेन तदुपपादनम्, नीलपीतमात्रवति रक्ताद्यप्रतिसन्धानेन तदप्रतीतावपि चित्रप्रत्ययात्, इतरथा तत्तत्पीतादिभेदकूटवद्रूपवत्त्वादिना नीलादिप्रतीत्युपपत्तौ नीलत्वादिविलोपापत्तेः । अस्तु तर्हि नीलादिसमानाधिकरणपीतादिषु चित्रत्वं जातिरिति चेन्न, नीलत्वादिना सङ्करप्रसङ्गात् । न च नीलत्वादि नाना, नीलाद्यनुगतमित्यनापत्तेरिति नीलत्वादिविरुद्धमेव चित्रत्वमिति तदाश्रयोऽप्यधिक इत्यधिकचित्ररूपरसगन्धस्पर्शाः केन वारणीयाः ? सिद्धे चाऽतिरिक्ते चित्रे तत्राऽसमवायिकारणभावोऽ-

एतेन स्पर्शोऽपि व्याख्यातः।

रसादिकमपि नाऽव्याप्यवृत्ति, किं तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः, तत्र रसनयाऽवयवरस एव गृह्यते, रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावात् अवयविनो नीरसत्वेऽपि क्षतेरभावात्।

नव्यास्तु तत्राऽव्याप्यवृत्त्यैव नानारूपं, नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्। अत एव—

"लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते—"

इत्यादिशास्त्रमप्युपपद्यते। न च व्याप्याव्याप्यवृत्तिजातीयद्वयोर्विरोधः, मानाभावात्। न च लाघवादेकं रूपं, अनुभवविरोधात्, अन्यथा घटादेरपि लाघवादैक्यं स्यात्। एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति ॥ १०० ॥ इति चित्ररूपनिरूपणम्।

दिनकरी।

स्पर्शोऽपि व्याख्यात इति। कोमलकठिनस्पर्शवदवयवाभ्यामारब्धे घटादौ स्पर्शानङ्गीकारे घटस्य स्पार्शनानापत्तिरित्यादिरीत्या चित्रस्पर्शोऽप्यावश्यक इति भावः।

अवयविनो नीरसत्वेऽपि क्षतेरभावादिति। न च चित्रो रस इतिप्रतीतिविषयतयाऽतिरिक्तचित्रसिद्धिरिति वाच्यम्। तादृशप्रतीतेरवयवगतनानारसैरुपपत्तेरतिरिक्तचित्ररसतत्प्रागभावध्वंसादिकल्पने गौरवात्। न चैवं द्व्यणुकगतरसस्याऽयोग्यतया मधुरादिरसप्रतीतिनियामकत्वासम्भवेनाऽस्तु त्र्यणुके मधुरादिरसः, चतुरणुकाद्यन्त्यावयविपर्यन्तं मधुरादिरसवत्त्वे मानाभावः, त्र्यणुकगतमधुररसेनैव मधुरादिप्रत्ययोपपत्तेरिति वाच्यम्। समवायेन मधुररसं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन मधुररसत्वेन हेतुतायास्त्र्यणुकगतमधुररसान्यथानुपपत्त्या क्लृप्ततया तादृशकारणबलाच्चतुरणुकादौ मधुरादिरसोत्पत्तेर्दुर्वारत्वात् ॥ १०० ॥ इति चित्ररूपनिरूपणम् ॥

रामरुद्री।

न्ततोऽनुगत एव कल्पनीयः। वस्तुतो नीलपीतमात्रारब्धनीलरक्तपीतत्रितयमात्रारब्धेषु चित्रेषु विविधवैचित्र्यानुभवाच्चित्रत्वव्याप्या नानाजातयो दुर्वाराः। तथा च तत्तज्जात्यवच्छिन्नं प्रति नीलत्वपीतत्वाभ्यां नीलत्वरक्तत्वाभ्यां नीलत्वपीतत्वरक्तत्वैरेवमन्यान्यजातिभिरप्यसमवायिकारणत्वमावश्यकम्। इत्थं च नीलपीतरक्तारब्धे चित्रत्रयम्, एकं व्याप्यवृत्ति, द्वयमव्याप्यवृत्तीत्याहुः।

वस्तुतस्तु रूपत्वावच्छिन्नं प्रति रूपत्वेनाऽप्यसमवायिकारणतायाः आवश्यकतया नीलादिभिन्नं रूपमात्रं यत् तत्रोत्पद्यते तदेव चित्रमितिव्यवह्रियत इत्यवधेयम्।

नव्यास्त्विति। अव्याप्यवृत्त्यैवेति। तत्तदवयवावच्छेदेन वर्तमानमित्यर्थः। नन्ववच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलादेर्हेतुत्वमङ्गीकृत्यैव भवन्मते पीताद्यवच्छेदेन नीलोत्पत्तिर्वारणीया, तथा च भवदुक्तकार्यकारणभावो वाऽङ्गीकर्तव्यः, पीतादीनां प्रतिबन्धकत्वं वाऽङ्गीकर्तव्यमित्यत्र विनिगमनाविरह इत्यत आह। अत एवेति। नीलादेः पीताद्यप्रतिबन्धकत्वादेवेत्यर्थः। अन्यथा वृषस्य नानारूपवत्त्वबोधकं तच्छास्त्रं व्याहन्येतेति भावः। वदन्तीत्यस्वरसोद्भावनम्। तद्बीजं तु नवीनमतरीत्याऽपि प्रागुदाहृतशास्त्रं न पुच्छाद्यवच्छेदेन नीलरूपवत्त्वं वृषस्य बोधयितुं शक्नोति, तन्मतेऽपि वृषे

**जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम् ।**

जलादीति । **जलपरमाणौ तेजःपरमाणौ च रूपं नित्यं, पृथिवीपरमाणुरूपं तु न नित्यं, तत्र पाकेन रूपान्तरोत्पत्तेः, न हि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते, न हि रक्तकपालस्य कपालिका नीलावयवा भवति, एवं क्रमेण परमाणावपि पाकसिद्धेः । अन्यत्–जलतेजःपरमाणुरूपभिन्नं रूपं, सहेतुकम्–जन्यम् । इति रूपग्रन्थः ।**

दिनकरी ।

ननु घटादावेवाऽऽयातु पाकः, न तु परमाणावत आह । **न हि रक्तेति** । ॥इति रूपग्रन्थः॥

रामरुद्री ।

श्वैत्यादेर्जनकस्यैवाऽभावात् । न हि वृषारम्भकावयवेषु मुखपुच्छादिषु श्वैत्यं वर्तते, मुखस्य चर्मास्थिमांसाद्यारब्धत्वेन श्वेतरूपवत्त्वासम्भवात्, मुखवर्तिलोम्नः श्वैत्येऽपि तस्य वृषानारम्भकतया तद्गतरूपवत्त्वेन वृषे रूपोत्पादस्य वक्तुमशक्यत्वात् । खुरविषाणलोमादीनां शरीरसंयोगिद्रव्यत्वस्यैव सर्वैः स्वीकृतत्वात् । अन्यथा शरीरोत्पत्त्यनन्तरं लोमाद्युत्पादबोधकं वैद्यकशास्त्रं व्याहन्येत । तस्मात् नेदं शास्त्रं नव्योक्तरीत्याऽपि मुखाद्यवच्छेदेन तत्तद्रूपवत्त्वं बोधयति, अपि तु श्वेतसम्बन्धित्वमेव मुखाद्यवच्छेदेन बोधयतीति स्वीकरणीयम् । तथा च न वृषेऽव्याप्यवृत्तिरूपबोधकत्वमुक्तशास्त्रस्य युक्तमिति बोध्यम् । एतत्तत्त्वं प्रागेव निरूपितम् । इति चित्ररूपनिरूपणम् ॥

**एवंक्रमेणेति** । तद्घटारम्भकत्रसरेणोरपक्वस्याऽनुपलब्ध्या तत्र पाकाङ्गीकारावश्यकत्वे तदवयवे द्व्यणुकेऽपि पाकाङ्गीकार आवश्यकः, अन्यथा द्व्यणुकनिष्ठस्य पूर्वरूपस्य श्यामादेरविनष्टस्य त्रसरेणौ पाकजरक्तोत्पत्तिप्रतिबन्धकस्य सत्त्वात्त्रसरेणावपि रक्तं रूपं नोत्पद्येत, समवायेन रक्तरूपं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन रक्तान्यरूपत्वादिना प्रतिबध्यप्रतिबन्धकभावस्य नीलपीतावयवारब्धे घटे नीलाद्युत्पत्तिवारणार्थमवश्याङ्गीकरणीयत्वात्, तथा च त्रसरेणौ रक्तरूपोत्पादान्यथानुपपत्त्या द्व्यणुकगतश्यामादेर्नाशोऽवश्यमभ्युपेयः, स च निमित्तान्तरासम्भवेनाऽग्निसंयोगज एवेति कल्प्यते, इत्थं च प्राक्तनद्व्यणुकगतश्यामविनाशेऽपि परमाणुगतश्यामरूपबलात् पुनस्तत्र श्यामरूपोत्पादस्य दुर्वारतया पुनस्त्रसरेणौ रक्तरूपोत्पादानुपपत्तिरतः परमाणावपि प्राक्तनरूपनाशः सिद्ध्यतीति भावः । न च त्र्यणुकद्व्यणुकयोरग्निसंयोगाविरेकः कालः, ततोऽग्निसंयोगवशात्तयो रूपनाशः, रक्तरूपोत्पादकाग्न्यन्तरसंयोगश्चेत्येकः कालः, तदुत्तरक्षणे त्रसरेणौ रक्तरूपोत्पादे बाधकाभावः, तत्पूर्वक्षणे श्यामरूपस्य नष्टत्वेन तेन प्रतिबन्धासम्भवादिति परमाणौ प्राक्तनरूपनाशानभ्युपगमेऽपि न क्षतिरिति वाच्यम् । एवं सति त्र्यणुके रक्तोत्पादक्षणे द्व्यणुके परमाणुश्यामरूपात्मककारणबलाच्छ्यामरूपोत्पत्तौ बाधकाभावेन तस्य कार्यकालवृत्तितया त्रसरेणौ रक्तोत्पादप्रतिबन्धकत्वस्य दुर्वारत्वात् । न चाऽस्त्वनया रीत्या परमाणुश्यामरूपस्याऽपि नाशस्तथाऽपि तत्र रूपान्तरोत्पादे मानाभाव इति वाच्यम् । श्यामरूपनाशानन्तरमुत्पन्नरक्तरूपांस्तानेव द्व्यणुकपर्यन्तान्विनाश्य पुनस्तैरेव परमाणुभिः कार्यान्तरारम्भे पुनरवयविषु रक्तरूपोत्पादनिर्वाहाय तत्र रूपान्तरोत्पादकल्पनाया अप्यावश्यकत्वात्, अन्यथा तत्र रक्तरूपकारणीभूतस्याऽग्निसंयोगस्य रक्तरूपस्य वा विरहेण तादृशावयविसमूहस्य नीरूपस्यैवोत्पादप्रसङ्गात्, तादृशद्रव्येषु रक्तरूपकारणीभूतस्य विलक्षणोष्णस्पर्शवदग्निसंयोगस्याऽबाधितत्वेन तेषु रक्तरूपोत्पादे बाधकाभावाच्च । न च केवलं विलक्षणोष्णस्पर्शवदग्निसंयोगत्वेन रक्तरूपं प्रति कारणत्वमसम्भवि, अग्निसामान्येन संयोगेऽपि काष्ठादौ तप्ताङ्गारत्वापादकरक्तरूपोत्पाददर्शनात्, मृदादौ च तीव्रतराग्निसंयोगस्यैव रक्तरूपजनकत्वात्, तथा च विलक्षणोष्णस्पर्शवदग्निप्रतियोगिककाष्ठानुयोगिकसंयोगस्य तज्जन्यरक्तरूपं प्रति, तदपेक्षया विलक्षणोष्णस्पर्शवदग्निप्रतियोगिकमृदाद्यनुयोगिकसंयोगस्य च तज्जन्यरूपं प्रतीत्यादिरीत्या विशेषतः कार्यकारणभावो वाच्यः । मृत्त्व–काष्ठत्वादिद्रव्यत्वव्याप्यव्याप्यजातीनां च परमाणावभावादग्निसंयोगस्य परमाणौ रक्ताद्युत्पादकतानुपपत्तिरिति वाच्यम् । मृदाद्यनुयोगिकत्वस्थाने समवायता-

**रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥**
**सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।**
**घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥**

**रसं निरूपयति ।** रसस्त्विति । सहकारीति । **रासनज्ञाने रसः कारणमित्यर्थः ।** पूर्ववदिति । **जलपरमाणौ रसो नित्यः, अन्यः सर्वोऽपि रसोऽनित्य इत्यर्थः ।** इति रसग्रन्थः ॥

**गन्धं निरूपयति ।** घ्राणग्राह्य इति । उपकारक इति । **घ्राणजन्यज्ञाने सहकारी**

रामरुद्री ।

दात्म्यान्यतरसम्बन्धेन मृद्विशिष्टानुयोगिकत्वस्यैव निवेशेन परमाणुद्व्यणुकादिरूपसाधारणकार्यकारणभावसम्भवात् । यद्वा मृदनुयोगिकताद्दृशसंयोगत्वादिना कारणत्वं नाऽभ्युपगम्यते, काष्ठरूपपरावृत्त्यनुकूलोष्णवदग्निसंयोगदशायां मृदादौ रक्तरूपानुत्पादस्य काष्ठगतरूपविशेषकारणस्य तत्तदग्निसंयोगस्य विरहेणैव निर्वाहात् । तेन मृद्विशिष्टानुयोगिकत्वमित्यत्र वैशिष्ट्यमुपलक्षणविधयैव प्रवेश्यम्, अन्यथा द्व्यणुकात्मकमृच्छून्यतादशायां पीलुपाकवादिमते च परमाणौ रूपान्तरानुत्पादप्रसङ्गात्, तदानीं मृद्विशिष्टानुयोगिकस्याऽग्निसंयोगस्याऽसम्भवात् । मृदुपलक्षितानुयोगिकसंयोगत्वेन कारणत्वे च येन परमाणुना प्रथमं काष्ठानुगुणरूपादिमता काष्ठमुत्पाद्य चिरेण कालेन पाकवशान्मृदनुगुणरूपादिमता मृदुत्पादिता, तत्र काष्ठदशायामग्निसंयोगस्याऽपि मृदुपलक्षितानुयोगिकत्वेन तत्कालेऽपि मृद्रूपोत्पादापत्तिः । न च मृदुपलक्षितानुयोगिकाग्निसंयोगस्य स्वाव्यवहितोत्तररूपत्वावच्छिन्नं प्रत्येव जनकत्वं, न तु मृद्रूपं प्रतीति तत्काले मृद्रूपानुत्पादेऽपि न क्षतिः, काष्ठरूपोत्पादेनैव निर्वाहादिति वाच्यम् । एवमपि यत्रैकेन परमाणुना मृदमुत्पाद्य पश्चात्पाषाण उत्पादितस्तत्र पाषाणारम्भदशायां मृद्रूपपरावर्तनमात्रसमर्थोष्णस्पर्शवदग्निसंयोगवशाद्रूपसामान्योत्पादापत्तेर्दुर्वारत्वात्, तत्काले च रूपान्तरानुत्पादस्य सर्वानुभवसिद्धत्वात् । किं च तत्तद्रूपर्थं प्रत्यावश्यकेन तत्तदग्निसंयोगस्य कारणत्वेनैव सकलातिप्रसङ्गादिभङ्गे ईदृशकार्यकारणभावे मानाभाव एवेति निरस्तम् । इष्टत्वात् , इति समासः ।

ऋजवस्तु अवयविषु पच्यमानेषु अवयवानामपक्वानामनुपलब्ध्याऽवयवेषु पाकाङ्गीकारस्याऽऽवश्यकतया परमाणुषु पाकसिद्धिरिति व्याकुर्वते, तन्मन्दम् । परमाणूनामतीन्द्रियतया तद्गतस्य पाकस्य प्रत्यक्षेण प्रतिपत्तुमशक्यत्वादिति ध्येयम् । ॥ इति रूपग्रन्थः ॥

**मूले-रसः कारणमित्यर्थं इति ।** विषयविधयेति शेषः । अनयैव रीत्या गन्धादिनिरूपणेऽपि सहकारित्वं बोध्यम् ।

वस्तुतस्तु चक्षुरादिकरणानां स्वनिष्ठगुणादिसहकारेणैव कारणत्वात् तादृशसहकारित्वमेवाऽत्र विवक्षितमिति प्राञ्चः ।

केचित्तु रूपादे रासनवारणाय द्रव्यसमवेतनिष्ठलौकिकविषयतासम्बन्धेन रासनं प्रति तादात्म्येन रसः कारणमित्यादिरीत्या रसगन्धयोः कारणत्वं वक्तव्यम् । चाक्षुषे तु रसादिगुणानां प्रतिबन्धकत्वमेव, न तु रूपस्य तादात्म्येन हेतुत्वम्, सङ्ख्यादीनामचाक्षुषतापत्तेः । अत एव रूपनिरूपणे 'चक्षुषः सहकारि स्यात्—'इति कारिका चाक्षुषं प्रत्युद्भूतरूपत्वेन कारणत्वपरतया व्याख्यातेति वदन्ति । तन्न, एवं सति द्रव्यसमवेतसमवेतरसत्वादिनिष्ठलौकिकविषयतया रासनापत्तौ रूपत्वादावव्याधितैवेति त्वया तादृशसम्बन्धेन रासने रसवृत्तिजातेर्हेतुत्वं वाच्यमिति कार्यतावच्छेदकसम्बन्धद्वयगौरवात् । अस्माकं तु विषयतया रासनं प्रति तादात्म्येन रूपस्य तद्वृत्तिजातेश्च प्रतिबन्धकत्वमिति लाघवम् । न च त्वन्मत एव स्पर्शादीनामप्येतादृशप्रतिबन्धकत्वान्तरं कल्प्यमिति गौरवमिति वाच्यम् । विषयतासम्बन्धेन रासने रसतद्वृत्तिजात्येतद्द्वयान्यत्वेन प्रतिबन्धकत्वस्यैकस्य विशकलितरसान्यत्व—तद्वृत्तिजात्यन्यत्वादिना वा प्रतिबन्धकत्वद्वयस्य कल्पनेन लाघवादिति । ॥ इति रसग्रन्थः ॥

सौरभं चाऽसौरभं च (१) स द्वेधा परिकीर्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥
अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः ।
काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥

स इत्यर्थः : सर्वोऽपि गन्धोऽनित्य एव । इति गन्धग्रन्थः ॥

स्पर्शं निरूपयति । स्पर्श इति । उपकारक इति । स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः । अनुष्णाशीतेति । पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः, जले शीतः, तेजस्युष्णः, कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः, । कठिनत्वादिकं तु न संसयोगगतो जातिविशेषः, चक्षुर्ग्राह्यत्वापत्तेः । पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्याः, तद्भिन्नास्त्वनित्या इत्यर्थः ॥ १०१–१०४ ॥ इति स्पर्शग्रन्थः ॥

एतेषां—रूपरसगन्धस्पर्शानाम् । नाऽन्यत्रेति । पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिरग्निसंयोगादुपलभ्यते, न हि शतधाऽपि ध्मायमाने जले रूपादिकं परिवर्तते, नीरे सौरभमौष्ण्यं चाऽन्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते, पवनपृथिव्योः शीतस्पर्शादिवत् ।

तत्राऽपि—पृथिवीष्वपि मध्ये, परमाणावेव रूपादीनां पाक इति वैशेषिका वदन्ति । तेषामयमाशयः—अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति,

दिनकरी ।

न संयोगगत इति । कठिनः संयोग इति प्रतीतिस्तु कठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वमवगाहत इति भावः ॥ १०१-१०४ ॥ इति स्पर्शग्रन्थः ॥

रूपादीनां पाक इति । रूपादीनां परावृत्तिरित्यर्थः । पाको न सम्भवतीति । रूपादिपरावृत्तिफलकस्तेजःसंयोगो न सम्भवतीत्यर्थः । रूपादिपरावृत्तिर्न सम्भवतीति

रामरुद्री ।

अनुष्णाशीत इति । ननु प्रत्यक्षतस्तावत् शीतमुष्णश्च स्पर्शो गृह्यते, न तु तदुभयविलक्षण इति अनुष्णाशीतस्पर्शे मानाभाव इति चेन्न, वृश्चिकादिस्पर्शस्य शीतोष्णभिन्नस्य प्रत्यक्षसिद्धत्वादिति व्यक्तमाकरे । चक्षुर्ग्राह्यत्वापत्तेरिति । यद्यपि चक्षुर्ग्राह्यत्वस्य न संयोगनिष्ठत्वमापादकं, आत्ममनः संयोगगतज्ञानादिजनकतावच्छेदकवैजात्ये व्यभिचारात् । योग्यसन्निकर्षादिसहितं तच्च न सम्भवति, आपाद्यापादकयोर्व्याप्तिनिश्चयस्याऽप्रयोजकत्वशङ्कया प्रतिरुद्धत्वादिति, तथाऽपि संयोगगतत्वे चक्षुषा तत्प्रत्यक्षवारणमशक्यमतः स्पर्शनिष्ठत्वमावश्यकम् । यद्यपि विषयतया चाक्षुषं प्रति कोमलत्वकठिनत्वादेस्तादात्म्येन प्रतिबन्धकताया भवताऽपि कल्पनीयतया तत एव तच्चाक्षुषवारणसम्भवे तस्य वारणाय कोमलत्वादेः स्पर्शनिष्ठत्वाभ्युपगमो निर्युक्तिकः, तथाऽपि कोमलत्वादेः संयोगनिष्ठत्वे तेषां तत्तद्व्यक्तित्वेन चाक्षुषेऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनमावश्यकम्, स्पर्शनिष्ठत्वे तु स्पर्शत्वादिचाक्षुषवारणाय विषयतया चाक्षुषं प्रति स्पर्शमात्रवृत्तित्वेन प्रतिबन्धकताया आवश्यकतया तत एव तच्चाक्षुषस्याऽपि वारणसम्भवात्तादृशतत्तद्व्यक्तित्वावच्छिन्नप्रतिबन्धकत्वाकल्पनेन लाघवमिति लाघवानुसन्धानेन तस्य स्पर्शे स्वीकार इति निष्कर्षः ॥ १०१—१०४ ॥ इति स्पर्शग्रन्थः ॥

मूले-अवष्टब्धेष्विति । स्वकारणीभूतसंयोगाश्रयत्वसम्बन्धेनाऽऽश्रितेष्वित्यर्थः । यत्तु कारणत्व-

(१) सौरभश्चासौरभश्च इति पाठान्तरम्

रामरुद्री ।

मिह प्रयोजकत्वम्; संयोगाश्रयत्वमपि प्रयोज्यत्व-समवायान्यतरसम्बन्धेन। तेन कपालसंयोगस्यैव घटजनकतया तस्य च यत्किञ्चित्कापालिकावयवावच्छेदेनैवोत्पत्तेः कापालिकावयवान्तरावच्छेदेन कपाले घटावष्टब्धत्वविरहेऽपि न तदवच्छेदेन पाकोत्पादापत्तिः। तदवच्छेदेन प्रयोजकीभूतकापालिकावयवसंयोगस्यैव कपाले सम्भवात्। प्रयोजकत्वं च कारण-तत्कारणादिसाधारणमेव बोध्यमिति कैश्चिदुक्तम्, तत्तुच्छम्। कापालिकावयवे कपालावष्टब्धत्वसत्त्वेनैव पाकाभावे कपाले पाकस्य कथञ्चिदप्यसम्भवात्। टीकायां वक्ष्यमाणस्य रूपनाशकारणस्य साक्षात्परम्परासाधारण-सर्वावयवावच्छेदेन तेजःसंयोगस्य विरहादिति यथाश्रुतटीकातन्मतानुसारिणः।

स्वतन्त्रास्तु—**अवयविनाऽवष्टब्धेष्विति**। अवयविकारणीभूतसंयोगाश्रयेष्वित्यर्थः। तादृशसंयोगावच्छेदकावच्छेदेनेति परमार्थः। पाकः—रूपान्तरोत्पादकस्तेजःसंयोगः। **न सम्भवतीति**। स्पर्शवद्द्रव्यसंयोगं प्रति समानावच्छेदकत्वप्रत्यासत्त्या स्पर्शवत्संयोगस्य प्रतिबन्धकत्वात् अवयवसंयोगावच्छेदकावच्छेदेन तेजःसंयोगस्याऽसम्भवे तदवच्छेदकीभूतकपालिकाद्यवयवगतश्यामरूपानाशात् तदाश्रितश्यामरूपेणाऽवयविनोऽवयवे कपालादौ रूपान्तरप्रतिबन्धेन तदुत्पादासम्भवात्तदारम्भककारणबलाच्च श्यामरूपोत्पादे तेन प्रतिबन्धादवयविन्यपि घटादौ रूपान्तरोत्पादासम्भवादिति भावः*। नन्ववयविनोऽवयवे पूर्वरूपनाशकालेऽवयविनि रूपान्तरोत्पादो दुर्वारः। न च श्यामनाशकाल एवाऽवयविनोऽवयवे तदवयववर्तिश्यामरूपात्मककारणबलाच्छ्यामान्तरोत्पादे बाधकाभावात्त एव प्रतिबन्धादवयविन्यपि रूपान्तरोत्पादसम्भव इति वाच्यम्। एकैकस्यैवाऽवयवावयवरूपस्याऽवयवनिष्ठद्विविधरूपहेतुत्वाङ्गीकारे तद्बलात् प्रथमरूपसत्त्वदशायामेव रूपान्तरोत्पादापत्तेर्वारणाय पूर्वरूपनाशस्य तदुत्तररूपव्यक्तौ खण्डपटन्यायेन**हेतुत्वस्य, श्यामरूपादिसत्त्व एवाऽग्निसंयोगवशाद्रूपान्तरोत्पादवारणाय रूपं प्रति रूपत्वादिना च प्रतिबध्यप्रतिबन्धकभावस्याऽवश्यं स्वीकरणीयतया पूर्वं प्राक्तनश्यामरूपात्मकप्रतिबन्धकसत्त्वेन श्यामनाशक्षणे उदीच्यश्यामरूपोत्पादासम्भवादिति चेन्न, इत्थं सति अवयविनि रक्तरूपोत्पादसमये कपाले पुनः श्यामरूपोत्पत्तिप्रसङ्गस्याऽबाधिततया घटे रक्तरूपोत्पादानन्तरं कपाले श्यामरूपप्रत्यक्षापत्तेर्दुर्वारत्वात्। तद्वारणाय च श्यामादिरूपस्य स्वसमवायिसमवेतत्वसम्बन्धेन समवायेन रक्तादिकं प्रति प्रतिबन्धकत्वस्याऽऽस्थेयतया तद्बलादेवाऽवयविनि रक्तरूपोत्पादासम्भवस्याऽबाधितत्वात्। न चैवं यत्र घटतदारम्भकावयवादिषु बहिरग्निसंयोगस्तत्र युगपदेव कपालतदवयवादीनामपि घटरूपनाशकाल एव रूपनाशात्तदुत्तरक्षणे तदारम्भकद्व्यणुकेषु परमाणुगतरूपवशात् पुनः पूर्वरूपसजातीयरूपान्तरोत्पादवारणेऽपि घटे तत्काले विजातीयरूपोत्पादापत्तिर्न वारयितुं शक्या, तत्पूर्वं तदारम्भके कपाले पूर्वरूपविरहेण तत्क्षणे पूर्वरूपसजातीयरूपोत्पादकविरहादिति वाच्यम्। यतः कपाले उत्पद्यमानस्य घटस्य कपालावयवतदवयवादिष्वपि समवायसम्बन्धेन सत्त्वमावश्यकम्, अन्यथा कपाल इव तदवयवेष्वपि घट इति प्रत्ययस्य सर्वानुभवसिद्धस्याऽपलापापत्तेः, यत्र कपालद्वयारम्भकाले यावदवयवानां युगपदेव परस्परं संयो-

---

* इदमत्र तत्त्वम्—अवयविषु रूपान्तरोत्पाद एव न सम्भवति, रूपनाशः परं जायतां, का नाम नो हानिः? पीलुपाकवादिभिरवयविनि रूपान्तरोत्पादस्यैव मुख्यतया प्रतिक्षेप्यत्वात्, प्रकृते च यत्र घटादौ कपालबहिर्देशावच्छेदेनाऽग्निसंयोगस्तत्र कपालेऽपि तादृशाग्निसंयोगस्याऽबाधितत्वात् कपालघटयोस्तद्बलात् पूर्वं श्यामरूपं तत्क्षणे निवर्तताम्, तथाऽपि तद्द्वितीयक्षणे नाऽग्निसंयोगवशात्तत्र रक्ताद्युत्पादसम्भवः, तत्पूर्वश्यामरूपबलात्कपालेऽपि श्यामरूपोत्पादस्याऽबाधितत्वादिति।

** महापटारम्भकतन्त्वन्तर्गतकिञ्चित्तन्त्वपसारणे खण्डपटव्यक्तिरुत्पद्यते, तत्र पूर्वसिद्धस्याऽवशिष्टतन्तुसंयोगस्यैव हेतुत्वं वाच्यम्। तस्य च महापटारम्भप्राक्क्षणेऽपि सत्त्वात्तत्क्षणे भाविताहशखण्डपटव्यक्तेरापत्तिवारणाय महापटनाशस्याऽपि तादृशखण्डपटव्यक्तौ हेतुत्वं यथा तत्र कल्प्यते, तन्न्यायेनेत्यभिप्रायः। स्पष्टश्चाऽयमर्थः सामान्यलक्षणाजागदीश्याम्

**परन्तु वह्निसंयोगेनाऽवयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, पुन-**

**दिनकरी ।**

यावत् । रूपादिनाशं प्रति साक्षात्परम्परासाधारणसर्वावयवावच्छेदेन तेजःसंयोगस्य हेतुतयाऽवयविनाऽवष्टब्धेष्ववयवेषु सत्सु अवयविनि रूपादिनाशो न सम्भवति, तद्धेतोः सर्वावयवावच्छेदेन तेजःसंयोगस्याऽभावादिति भावः । न च विद्यमानेऽपि घटादौ सर्वावयवावच्छेदेन तेजःसंयोगः कुतो नोत्पद्यत इति वाच्यम् । तथा सत्यारम्भकसंयोगावच्छेदेनाऽवयविनि तेजःसंयोगोत्पादकाले तदवच्छेदेनाऽवयवेष्वपि नोदनाभिघातयोरन्यतरस्योत्पा-

**रामरुद्री ।**

गस्तत्र क्षणविलम्बेन घटोत्पत्तेः शपथनिर्णेतव्यत्वात्, कपालस्तदवयवा वा घटकारणमित्यत्र विनिगमनाविरहेण च सर्वेषामेव तद्धेतुत्वस्याऽऽवश्यकत्वात्, तथा च प्रकृते तादृशघटस्य परमाणावपि सत्त्वेन तन्निष्ठरूपबलादेव घटेऽपि पूर्वरूपसजातीयरूपोत्पादेन पाकासम्भवादिति । न च तत्राऽग्निसंयोगस्याऽप्यनपायात् तत्काले कुतो न विजातीयरूपोत्पत्तिरिति वाच्यम् । पूर्वरूपस्य प्रतिबन्धकत्वात् । न च तर्हि श्यामरूपमपि न स्यात्, पूर्वरूपस्य प्रतिबन्धकत्वादिति वाच्यम् । नीलपीतारब्धघट इव विजातीयरूपेण प्रतिबन्धादेव तत्र रक्तोत्पादासम्भवोपगमादिति । नन्वेवं कपालादौ पूर्वरूपस्याऽग्निसंयोगवशान्नाशसम्भवेऽपि तदवयवनिष्ठरूपेण प्रतिबन्धाद्विजातीयं रूपं नोत्पद्यत इत्येव सिद्धयति, एवं चेत् परमाणौ बहिर्देशावच्छेदेनाऽग्निसंयोगस्याऽबाधिततया तद्बलात्तत्रैव श्यामरूपं कुतो न नश्यति ? इष्टापत्तौ च तात्कालिकद्व्यणुकादिरूपनाशस्याऽप्युत्पादेन पुनरग्निसंयोगबलात् पाकोत्पादापत्तिर्दुर्वारैव । न च तदवच्छिन्नरूपनाशं प्रति तदवच्छिन्नाग्निसंयोगस्य हेतुत्वकल्पनात् बहिर्देशावच्छिन्नरूपनाशत्वव्यापकीभूतान्तर्देशावच्छिन्नरूपनाशत्वावच्छिन्नसामग्रीघटकस्याऽन्तर्देशावच्छिन्नाग्निसंयोगस्य विरहादेव न बहिर्देशावच्छिन्नरूपनाशोत्पादसम्भव इति वाच्यम् । ईदृशः कार्यकारणभावो न सम्भवति, यत्र घटनाशाद्रूपनाशः, तस्याऽपि तत्तद्देशावच्छेदेनैवोत्पत्त्या तत्र तत्तदवच्छिन्नाग्निसंयोगस्य विरहेण व्यभिचारात् । न च अभावीयविशेषणताविशेषस्यैव कार्यावच्छेदकत्वाभ्युपगमान्न तदानीं दोषः, तादृशरूपनाशस्य तादृशसम्बन्धेन कुत्राऽप्यनुत्पत्त्या व्यभिचारवारणादिति वाच्यम् । तादृशकार्यकारणभावे मानाभावात् । तदभ्युपगमे तु निरुक्तरीत्या घटेऽपि पाकवारणसम्भवात् साक्षादवयविन्येव पाको न सम्भवति, निरुक्तहेतोरित्यनुक्त्वा **'अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति'** इति ग्रन्थकृदुक्तेः शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वापातादिति चेन्न । तद्ग्रन्थस्य परितोऽवष्टब्धावयवविषयकतया कपालारम्भकबाह्यपरमाणुषु बहिर्देशावच्छेदेन रूपनाशसम्भवेऽपि आन्तरपरमाण्ववच्छेदेन रूपनाशासम्भवप्रतिपादकत्वात्, प्रकृते च तादृशान्तरपरमाणौ परितोऽवष्टब्धे किञ्चिदवच्छेदेनाऽपि तेजःसंयोगासम्भवेन पाकासम्भवादिति निष्कर्षः । **वह्निसंयोगेनाऽवयविषु विनष्टेष्विति ।** वह्न्यभिघातादिना परमाणौ क्रियाविभागादिक्रमेण जातात्पूर्वसंयोगनाशादित्यादिः । **'वह्निसंयोगेन'** इत्यत्र तृतीयार्थः प्रयोज्यत्वम्, तेन वह्निसंयोगस्य साक्षादवयव्यनाशकत्वेऽपि न क्षतिः । **स्वतन्त्रेष्विति ।** तेजःसंयोगप्रतिबन्धकरहितेष्वित्यर्थः । **पाक इति ।** रूपनाशरूपान्तरोत्पादावित्यर्थः । तेजःसंयोगादिति शेषः । नन्वेवं पाकानन्तरं घटप्रत्यक्षानुपपत्तिरिति शङ्कां निरस्यति । **पुनरिति ।** अनन्तरमित्यर्थ इति प्राहुः ।

टीकायां— **रूपादिनाशं प्रतीति ।** स्वरूपसम्बन्धेन तद्वृत्तीयरूपनाशं प्रति तत्तदवयवनिष्ठावच्छेदकतासम्बन्धेन तद्वृत्त्यग्निसंयोगः कारणमिति भावः । तेन सर्वावयवावच्छिन्नैकाग्निसंयोगाऽप्रसिद्धावपि न क्षतिः । न च सर्वावयवावच्छेदेनैकस्याऽग्निसंयोगस्योत्पत्त्यभ्युपगमे किं बाधकमिति वाच्यम् । शाखाभिमुखक्रियया मूलावच्छेदेन संयोगोत्पत्त्यापत्तिः, तत्कारणीभूतस्य कर्मणो वृक्षस्य च सत्त्वात्, अतः शाखादितत्तदवयवावच्छिन्नवृत्तिकसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्याऽऽवश्यकतया वृक्ष इवाऽन्यावयविष्वपि सर्वावयवावच्छिन्नवृत्तिकैकविलक्षणसंयोगासम्भवात् । न च कीदृशी संयोगव्यक्तिर्मूले आपाद्यते ? न तावन्मूलावच्छिन्ना, तत्कारणक्रियाविशेषाभावेन तद्वारणात्, तादृशक्रियाविशेषसत्त्वे

रामरुद्री ।

चेष्टापत्तिसम्भवात् । नाऽप्यग्रावच्छिन्ना, आपादकाभावात् । यो यद्धर्माश्रयनिष्ठजन्यतानिरूपितजनकतावच्छेदकावच्छिन्नसमुदायजन्यः, स तद्धर्मवानिति व्याप्तिबलेन मूलावच्छिन्ने संयोगे शाखावच्छिन्नत्वापत्तिरित्यपि न, शाखावच्छिन्नत्वाश्रयसंयोगनिष्ठतत्तद्व्यक्तित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकावच्छिन्नजन्यत्वविरहादेव मूलावच्छिन्नसंयोगे शाखावच्छिन्नत्वापादनासम्भवात् । न च तत्तद्व्यक्तिं प्रति तत्तत्क्रियात्वादिना कारणत्वं नाऽभ्युपगम्यते, एकव्यक्तेरपरव्यक्त्युत्पादापत्तिवारणं च मूलावच्छिन्नसंयोगे शाखावच्छिन्नत्वापत्तिवारणायाऽवश्यकल्प्येनाऽवच्छेदकतासम्बन्धेन तत्तत्संयोगव्यक्तिं प्रति अवच्छेदकतासम्बन्धेन तत्तत्संयोगविशिष्टस्य तादात्म्येन हेतुत्वेनैव सम्भवति, एकक्रियाजन्यसंयोगे तल्लक्षणस्याऽप्यवच्छेदकतया तद्विरहादेव अपरक्रियातस्तदापत्तिवारणसम्भवादिति वाच्यम् । एतादृशकार्यकारणभावाङ्गीकारेऽपि एकक्रियातोऽपरसंयोगोत्पादवारणासम्भवात्, यत्रैकैकक्षणावच्छेदेनैवोत्पन्नाभ्यां व्यधिकरणाभ्यां कर्मभ्यां समानाधिकरणौ संयोगौ जनितौ, तत्रैकसंयोगेऽपरसंयोगनिष्ठतद्व्यक्तित्वापादनस्य दुष्परिहरत्वात् । यदि च तत्र समवायिकारणभेदाद्भेद इष्यते, अव्यधिकरणाभ्यामेककालोत्पन्नाभ्यां क्रियाभ्यामारब्धस्य च संयोगस्यैक्यमिष्यत एवेत्युच्यते, तदाऽपि समवायिकारणभेदात् भेदो वा असमवायिकारणव्यक्तिभेदाद्भेदो वेत्यत्र विनिगमनाविरहेण क्रियाया अपि तत्तद्व्यक्तित्वेन कारणत्वमावश्यकम् । इत्थञ्च क्रियायास्तत्तद्व्यक्तित्वेन हेतुत्वेनैव निर्वाहे ईदृशगुरुतरकार्यकारणभावाभ्युपगमोऽसम्भवी । न चैकस्मात् कर्मणः शाखायां वृक्षे विभुषु वाय्वादिषु च तद्देशावच्छिन्नेषु नानासंयोगोत्पत्तिदर्शनात् प्रत्येकं तत्तत्संयोगव्यक्तौ तत्क्रियाया अनन्तकार्यकारणभावकल्पनमपेक्ष्य तत्क्रियाजन्यसंयोगमात्रं प्रति तत्क्रियात्वेन कार्यकारणभावोऽङ्गीकर्तव्यः, तत्तद्द्रव्यव्यक्तीनां च तत्तद्द्रव्यवृत्तिसंयोगत्वावच्छिन्नं प्रति, तथा चैकस्मादेव कर्मणो यत्र कपिहस्तावच्छेदेन शाखावच्छेदेनैकः, चरणावच्छेदेन मूलावच्छेदेनैक इति च संयोगद्वयं जनितम्, तत्र मूलावच्छिन्नसंयोगस्य शाखावच्छिन्नत्वापत्तिरिति वाच्यम् । सर्वावयवावच्छेदेनैकसंयोगाङ्गीकर्तॄणामीदृशस्थलेऽप्येकसंयोगोत्पत्तेरिष्टत्वादिति चेन्न । यत्र शाखामूलाभिमुख्येन कपिक्रियया कपेः संयोगः क्रमेण शाखावच्छिन्नो मूलावच्छिन्नश्च वृक्षे हस्तचरणावच्छेदेनोत्पद्यते, तदानीं मध्येऽवकाशत्वे शाखावच्छिन्नमूलावच्छिन्नयोरैक्यं न सर्वावयवावच्छेदेन संयोगैक्यवादिनामपि इष्टम्, सर्वावयवावच्छिन्नसंयोगे तु ऐक्यव्यवहारस्तावत् सन्दिग्धः, तथा च तत्र मूलावच्छिन्नसंयोगे शाखावच्छिन्नत्वापादनसम्भवात्तदवच्छेदकस्याऽपि तत्संयोगव्यक्तौ हेतुत्वमास्थेयम् । अन्यथा तत्स्थले पुनः कपेर्हस्तोत्पन्नक्रियया हस्तावच्छिन्नसंयोगस्येव चरणावच्छिन्नसंयोगस्याऽपि विनाशप्रसङ्गात्, इष्टापत्तौ च तदानीं शाखायां कपिवृक्षसंयोगो नाऽस्तीतिवत् मूले कपिवृक्षसंयोगो नाऽस्तीतिप्रत्ययापत्तेः । ननु तत्र शाखामूलावच्छिन्नसंयोगशाखावच्छिन्नसंयोगयोर्विनाशेऽपि पूर्वं शाखामूलयोः कपिसंयोगकाले शाखाकपिसंयोगमूलकपिसंयोगयोरप्युत्पन्नत्वेन तत्र तद्बलान्मूलावच्छिन्नवृक्षकपिसंयोगान्तरस्याऽप्यावश्यकतया तत्कालोत्पन्नकर्मणा शाखावच्छिन्नतादृशसंयोगद्वयविनाशेऽपि मूलावच्छिन्नतद्व्यक्तयविनाशान्न तथा प्रत्यय इति कल्प्यते । न च क्रियाजन्यमूलशाखावच्छिन्नप्रथमसंयोगस्यैव प्रतिबन्धकस्य सत्त्वेन तादृशसंयोगजसंयोगोत्पत्त्यसम्भवः । अन्यथा यत्र घटक्रियया तदवयवक्रियया च घटावयवघटयोर्गगनेन संयोगः, तत्र घटावयवसंयोगवशाद्घटगगनयोः संयोगान्तरोत्पादापत्तेः । संयोगजसंयोगे कर्मजन्यसंयोगस्याऽप्रतिबन्धकत्वेऽपि समानावच्छेदकत्वप्रत्यासत्त्या स्पर्शवत्संयोगस्य तादृशसंयोगे प्रतिबन्धकतया कपौ पूर्वकालीनसंयोगदशायां संयोगान्तरोत्पत्तिर्न सम्भवत्येव । ईदृशप्रतिबध्यप्रतिबन्धकभावानुपगमे मूर्तयोः समानदेशतायां विरुद्धत्वस्य दुरुपपादत्वापत्तिरिति वाच्यम् । एवं सति घटादिसंयोगकाले कपालसंयोगानुपपत्तेः । अन्यथा मूर्तयोः समानदेशताप्रसङ्गात् । न च स्पर्शवत्संयोगस्य स्पर्शवत्संयोगे कार्यपूर्वकालवृत्तितयैव प्रतिबन्धकत्वं, तथा च कपालघटयोरेकदैकस्मिन् देशे संयोगसम्भव इति वाच्यम् । तथा सति घटपटयोरपि समानदेशाभिमुखक्रियावतोरेकदेशसंयोगापत्तेः, मूर्तयोः समानदेशताविरोधस्य चैतद्रीत्या दुरुपपादत्वात् । न च नैष विरोधो दुरुपपादः, घटस्य कपालावच्छेदेन

रामरुद्री।

कपालस्य च कपालिकावच्छेदेनैव संयोगोत्पत्तेरभ्युपगन्तव्यतया तयोर्विभिन्नावच्छेदकत्वेन विरोधाभावादिति वाच्यम्। इत्थं सति घटान्तरारम्भककपालेनाऽपि घटान्तरस्य समानदेशत्वापत्तेः। न च घटसंयोगे घटारम्भकावयवान्यस्पर्शवत्संयोगस्य प्रतिबन्धकत्वमित्यादिरीत्या प्रतिबध्यप्रतिबन्धकभावस्य विशेषत एव वक्तव्यत्वान्नैष दोष इति वाच्यम्। स्पर्शवत्संयोगे स्पर्शवत्संयोगस्याऽप्रतिबन्धकत्वात्, मूर्तयोः समानदेशताविरोधस्य च वक्ष्यमाणरीत्या वारयितुं शक्यत्वादिति चेन्न। तथाऽपि कपेश्चरणहस्तयोः शाखामूलावच्छिन्नसंयोगैक्याभ्युपगमे हस्ताग्रयोः शाखावच्छिन्नः संयोगो विनष्ट इतिवत् चरणेऽपि विनष्ट इति प्रतीत्यापत्तेरेव तत्र दोषत्वात्तद्वारणस्य तत्र संयोगभेदकल्पनाया आवश्यकत्वात्। न चाऽवयविकर्मणो यावदवयवकर्मनियततया शाखावच्छेदेन संयोगनाशककर्मोत्पत्तिकाले चरणावच्छिन्नसंयोगनाशकं कर्म कपौ कल्प्यमेव, अन्यथा शाखावच्छिन्नसंयोगस्याऽविनाशापत्तेरिति वाच्यम्। एवमपि यत्र कपिक्रियया शाखामूलावच्छिन्न एकः संयोगः, ततः शाखायाश्चलनं, तत्र शाखामूलावच्छिन्नसंयोगस्य विनाशाय शाखावच्छेदेन वृक्षेऽपि कर्मोत्पत्तिमङ्गीकृत्य शाखावच्छिन्नसंयोगविनाशस्योपपादनीयतया कर्मणो व्याप्यवृत्तित्वासम्भवात्। तस्मादेकक्रियोत्पन्नतादृशसंयोगभेदस्थले अवच्छेदकभेदेन संयोगभेद आवश्यकः। तादृशस्थले शाखायां वृक्षे कपिश्चरणे संयुक्त इतिप्रत्ययापत्तिवारणायाऽपि ईदृशकार्यकारणभाव आवश्यकः। एवं च मूलावच्छिन्नसंयोगे शाखावच्छिन्नत्वापत्तिवारणाय अवच्छेदकतासम्बन्धेन शाखावच्छिन्नत्वोपलक्षितसंयोगं प्रति तादात्म्येन शाखादीनां कारणत्वमुपगन्तव्यम्, तथा च तद्विरहादेव न मूले शाखावच्छिन्नसंयोगोत्पादापत्तिरिति* सर्वावयवावच्छिन्नैकसंयोगाप्रसिद्धिर्दुर्वारा। अथेदृशः कार्यकारणभावो न स्वीकर्तुं शक्यः, शाखावच्छेदेन जायमानस्य कपिसंयोगस्य कपिचरणेऽप्यवच्छेदकतासम्बन्धेनोत्पद्यमानतया तत्र च शाखात्मकहेतोर्विरहाद्व्यभिचारात्। न च शाखावच्छिन्नत्वविशिष्टसंयोगत्वमेव कार्यतावच्छेदकं वाच्यमिति नैष दोषः, कपिचरणे विशिष्टाधिकरणताविरहेणैवाऽतिप्रसङ्गवारणसम्भवादिति वाच्यम्। तथा सति शाखावच्छिन्नत्वोपलक्षितसंयोगस्य शाखायामिव मूलेऽप्युत्पत्तौ बाधकाभावेन सर्वावयवावच्छिन्नैकसंयोगखण्डनानुपपत्तेः, ईदृशकार्यकारणभावबलेन वारणीयस्य मूले शाखावच्छिन्नसंयोगोत्पादस्याऽपि दुर्वारत्वाच्च। न चानुयोगितावच्छेदकतासम्बन्धेन शाखावच्छिन्नानुयोगिताकसंयोगं प्रति शाखायाः कारणत्वान्नोक्तातिप्रसङ्गः, कपिचरणस्य तादृक्संयोगप्रतियोगितावच्छेदकत्वात्। यत्र कप्यनुयोगिकः शाखावच्छिन्नप्रतियोगिताक एव वृक्षस्य संयोगो जातस्तस्य मूलावच्छेदेनोत्पत्तिवारणाय च प्रतियोगितावच्छेदकतासम्बन्धेनाऽपि शाखावच्छिन्नप्रतियोगिताकसंयोगं प्रति शाखाया हेतुत्वमावश्यकमिति वाच्यम्। एवमप्यनुयोगितावच्छेदकताया अपि कालदिगादिसाधारणतया तत्र व्यभिचारस्य दुर्वारत्वात्, तयोरपि प्रतीतिबलेन तत्कल्पनस्याऽऽवश्यकत्वात्। न च शाखावृत्त्यनुयोगितावच्छेदकतासम्बन्ध एव कार्यतावच्छेदको वाच्य इत्येष दोषो दुर्घट इति वाच्यम्। तथा सति मूलावच्छिन्नावच्छेदकतासम्बन्धेन तदापत्तेस्तत्र दुर्वारत्वात्—इति चेन्न, तत्र कीदृशी आपत्तिः? न तावन्मूलं मूलनिष्ठानुयोगितावच्छेदकतासम्बन्धेन शाखावच्छिन्नसंयोगवत् स्यादिति, आपादकाभावात्। नाऽपि शाखावृत्तितादृशावच्छेदकतासम्बन्धेन शाखावच्छिन्नसंयोगवत् स्यादिति, तथाऽप्यापादकाभावात्। नाऽपि मूलावच्छिन्नसंयोगः शाखावच्छिन्नत्ववान्, शाखावच्छिन्नत्वसमानाधिकरणजन्यतानिरूपितजनकतावच्छेदकावच्छिन्नसमुदायजन्यत्वादिति, तस्य तादृशशाखात्वावच्छिन्नजन्यत्वविरहादेव तदापत्तिवारणसम्भवादित्याद्याप्रसिद्ध्यैवाऽऽपत्त्ययोगादित्यन्यत्र विस्तरः।

अत्राऽवयवपदं प्रदेशानामेवोपग्राहकम्। तथा च सर्वप्रदेशावच्छिन्नसंयोगः कारणमिति फलितोऽर्थः। तेन सर्वावयवावच्छिन्नतेजःसंयोगस्य पाकहेतुत्वं पिठरपाकवादिभिरभ्युपगतमिति न वक्तुं शक्यते,

---

*ईदृशकार्यकारणभावः 'अतिप्रसङ्गभङ्गाय शाखादितत्तदवयवावच्छिन्नवृत्तिकसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्याऽऽवश्यकतया वृक्षे व्याप्यवृत्तिगगनसंयोगस्याऽसम्भवात्—' इत्यादिना सिद्धान्तलक्षणजागदीश्यामुक्तः।

दिनकरी।

दनियमेनाऽवयवेषु विभागहेतुक्रियोत्पादेनाऽऽरम्भकसंयोगनाशादवयविनाशापत्तेः। न चाऽवयवेषु तेजोभिघातानन्तरं पञ्चमक्षण एवाऽवयविनाशसम्भवेन तत्पूर्वमवयविनि रूपादिनाशोत्पादाभ्युपगमे बाधकाभाव इति वाच्यम्। तत्र पूर्वावयविनाशावयव्यन्तरोत्पादयोरावश्यकत्वात् पूर्वावयविनि रूपादिपरावृत्तिजनकविजातीयतेजःसंयोगस्य मानाभावेना-

रामरुद्री।

तन्मते स्वव्याघातप्रसङ्गात्। नाऽपि पीलुपाकवादिभिः, प्रमाणाभावादिति टीकोक्तिरेषाऽयुक्तेति केषाञ्चिदाक्षेपः परास्तः। एतादृशकार्यकारणभावश्चाऽनुभवबलादेवाऽभ्युपगन्तव्यः। स्पर्शवत्संयोगस्य स्पर्शवत्संयोगे प्रतिबन्धकत्वमभ्युपगम्य पूर्वोक्तरीत्या अवयविनि पाकवारणोपपादनसम्भवेऽपि द्व्यणुकादौ तद्वारणं न सम्भवति। तत्र सत्यप्यवयविन्यग्निना यावदवयवसंयोगसम्भवादित्यत एतावान् प्रयासः। पूर्वमतं तु द्व्यणुकादौ तादृशाग्निसंयोगमनङ्गीकृत्योपपादनीयम्। न हि प्रत्यक्षं तत्र मानमस्ति, अवयव्युपष्टब्धद्व्यणुकमन्तराऽन्यत्राऽग्निसंयोगे मानाभावात्। त्र्यणुकादावितरानुपष्टब्धेऽग्नेः संयोगस्य प्रत्यक्षतः प्रतिपत्तिसम्भवेऽपि तत्राऽऽभ्यन्तरपरमाण्वग्निसंयोगाभावो निर्वहति। प्रत्युत पूर्वोक्तरीत्या घटस्थले पाकजनकस्याऽग्नेर्द्रव्यविनाशकत्वसिद्धौ सर्वत्र द्रव्यविनाशावश्यकतया तत्र रूपाद्युत्पादकल्पनमनुचितमित्यतः पार्थिवपरमाण्वग्निसंयोगस्यैव पाकजनकत्वमाश्रीयत इत्यदोषः। तेन 'न च कार्यद्रव्येष्वेव रूपाद्युत्पत्तिर्विनाशो वा सम्भवति-' इतिभाष्यविरोधोऽपि परिहृतः। रूपाद्युत्पादासम्भवं प्रदर्श्य रूपविनाशापत्तिवारणस्यैवाऽस्मद्रीत्या भाष्याभिमतत्वं तत्र पूर्वरूपनाशरूपान्तरोत्पत्त्योः क्रमविपर्ययेण ज्ञायते।

वस्तुतस्त्वेतादृशानन्तकार्यकारणभावापेक्षया रूपनाशं प्रति अग्निसंयोगसामान्याभाव एव प्रतिबन्धको लाघवात्। एतादृशश्च पक्षः द्रव्ये तत्तदवयवावच्छेदेन संयोगसामान्याभावे बाधकाभाव इति प्राचीनमतमनुसृत्यैव टीकाकृता परित्यक्तः। अन्यथा तेजःसंयोगस्य तदवयवावच्छेदेन सत्त्वेऽपि द्रव्यत्वावच्छेदेन तदभावस्याऽबाधिततया पीलुपाकवादस्य कथञ्चिदपि समर्थनानुपपत्तेरिति ध्येयम्।

**विजातीयतेजःसंयोगस्येति**। नन्वभिघातत्वादिना साङ्कर्यात् तेजःसंयोगे वैजात्यं नोपेयते, किंतु विलक्षणविलक्षणोष्णस्पर्शवत्तेजःसंयोगत्वेनैव हेतुत्वं कल्प्यत इति मते नैष दोष इत्यत आह। **अवयवीत्यादि**। नन्ववयविनाशरूपनाशयोः कथं कार्यकारणभावः? न तावत् स्वरूपसम्बन्धेनाऽवयविरूपनाशं प्रति स्वरूपसम्बन्धेन अवयविनाशस्य हेतुत्वम्, वैयधिकरण्यप्रसङ्गात्। नाऽपि स्वरूपसम्बन्धेनाऽवयविरूपनाशं प्रति सामानाधिकरण्यसम्बन्धेनाऽवयविनाशः कारणम्, अवयविरूपनाशकालेऽवयविनो विनष्टतया तत्र अवयविरूपनाशस्याऽनाश्रयत्वात्। नाऽपि स्वप्रतियोगिसमवायिसमवायित्वसम्बन्धेन रूपनाशं प्रति अवयविनाशः स्वरूपेण हेतुः, यत्र स्थिरे कपालद्वये धर्मिणि पूर्वमेको घटो विनष्टः, अपरश्चोत्पन्नः, तत्र द्वितीयघटस्य द्वितीयक्षणे स्वनाशापत्तिः, अवयविनाशरूपस्य प्रागुत्पन्नघटनाशस्य हेतोस्तत्र सत्त्वात्। नाऽपि स्वप्रतियोगिसमवायिसमवायित्वसम्बन्धेन रूपनाशं प्रति स्वसामानाधिकरण्यस्वप्रागभावाधिकरणत्वोभयसम्बन्धेन ध्वंसविशिष्टान्यध्वंसत्वेन हेतुता, प्रकृते च द्वितीयध्वंसमादाय तादृशप्रागुत्पन्नध्वंसस्य ध्वंसविशिष्टतया न दोष इति युक्तम्, प्रागुक्तस्थल एव प्रथमघटनाशाद्रूपनाशाद्यनापत्तेः, प्रथमनाशस्य त्वदुक्तसम्बन्धेनाऽवयविनाशविशिष्टान्यत्वविरहात्। न च प्रतियोगितासम्बन्धेनाऽवयविरूपनाशं प्रति स्वप्रतियोगिसमवेतत्वसम्बन्धेन नाशो हेतुः, तथा सति पाकजरूपनाशेऽपि व्यभिचाराप्रसक्तेः, तत्राऽपि भाविनोऽवयविनाशस्य स्वप्रतियोगिसमवेतत्वसम्बन्धेन सत्त्वात्। किं च स्वप्रतियोगिसमवेतत्वसम्बन्धेन नाशस्य हेतुत्वं न वक्तुं शक्यम्, अवयविनाशसमये तस्य रूपादेरसमवेततया स्वप्रतियोगिसमवेतत्वसम्बन्धेन नाशस्य कुत्राऽप्यसम्भवादिति चेन्न। स्वप्रतियोगिसमवेतानुयोगिकालिक-कालिकोभयसम्बन्धेन नाशः प्रतियोगितासम्बन्धेन नाशे हेतुरिति वक्तव्यम्, अवयविनाशात्तद्रूपनाशस्थले अवयविनाशस्य स्वप्रतियोगिसमवायिसमवेतनिष्ठकालिककालिकोभयसम्बन्धेन तद्रूपे विद्यमानत्वान्न व्यभिचारः। पाकजनाशस्थले च व्यभिचारः सम्भवति, तत्र स्वप्रतियोगिसमवेतानुयो-

दिनकरी ।

ऽरूपनात्, अवयविरूपनाशे आश्रयनाशस्य हेतुत्वात् पाकाजन्यत्वस्य कार्यतावच्छेदक-

रामरुद्री ।

गिककालिकसम्बन्धेन भाविनोऽवयविनाशस्य सत्त्वेऽपि कालिकसम्बन्धेनाऽसत्त्वात्, अवयविनाशकाले पाकजनाशप्रतियोगिनो रूपस्याऽसत्त्वात् । एतेन द्रव्यत्वादौ स्वप्रतियोगिसमवेतत्वसम्बन्धेन नाशस्य सत्त्वात्तन्नाशापत्तिरित्यपि निरस्तम् । न च सम्बन्धमध्ये पुनः कालिकोपादानं व्यर्थमिति वाच्यम् । एवं सति सर्वत्राऽवयविरूपस्य स्वोत्पत्तिद्वितीयक्षण एव नाशापत्तेः, तत्र स्वप्रतियोगिसमवेतनिष्ठकालिकसम्बन्धेन भाविनाशस्य सत्त्वेन सामग्रीसत्त्वात् । कालिकनिवेशे च भाविनाशस्य कालिकसम्बन्धेन तत्राऽभावान्न तत्क्षणे नाशापत्तिरिति । ननु एतादृशकार्यकारणभावस्य शब्दनाश एव व्यभिचारः । तत्र स्वप्रतियोगिसमवेतत्वसम्बन्धेन शब्दे नाशाभावात्, जन्यवृत्तिप्रतियोगिकत्वस्य कार्यतावच्छेदककोटौ निवेशेन कथञ्चित्तद्वारणेऽपि आश्रयनाशानुत्तरघटगतसंयोगनाशादौ व्यभिचारो दुर्वारः । न चाऽऽश्रयनाशाजन्यस्य संयोगनाशस्य विभागजन्यत्वमसमवायिकारणनाशजन्यत्वं वाऽऽवश्यकम्, तथा च कार्यतावच्छेदककोटौ असमवायिकारणनाशाजन्यत्वमपि निवेश्यत इति न व्यभिचारः । इत्थमेवाऽन्यत्राऽप्याश्रयनाशाजन्यनाशस्थले तादृशनाशो यादृशहेतुप्रयुक्तस्तादृशहेत्वजन्यत्वं कार्यतावच्छेदककोटौ निवेश्यते, गत्यन्तरविरहात् । अवयविनि पाकजन्यरूपनाशस्य च विवादग्रस्ततया तत्र व्यभिचारसन्देहे पाकाजन्यत्वस्य कार्यतावच्छेदकत्वं गौरवादेव त्यज्यत इति वाच्यम् । संयोगादिनाशे व्यभिचारवारणाय स्वसामानाधिकरण्यस्वप्रतियोगिकत्वोभयसम्बन्धेन वस्तुविशिष्टान्यत्वस्यैकस्यानुगतस्य कार्यतावच्छेदकत्वेन प्रवेश एव तत्तज्जन्यत्वाभावानामनन्तानां निवेशापेक्षया लाघवात् तथाप्रवेशाभ्युपगमे पिठरपाकस्याऽवर्जितत्वात् । तत्र पाकजन्यरूपनाशस्य निरुक्तोभयसम्बन्धेन वस्तुविशिष्टान्यत्वविरहेण आश्रयनाशकार्यतावच्छेदकानाक्रान्तत्वेन व्यभिचाराप्रसक्तेरित्यतो दूषणान्तरमाह । अवयविनीलादावित्यादि । अथैवं पाकेनाऽवयविनि नीलाद्युत्पादासम्भवेऽपि तत्र पूर्वरूपनाशो दुर्वार इति चेन्न । पाकजन्यरूपादेरेवाऽवयविनि वैशेषिकैरनभ्युपगमेन रूपनाशोत्पादानुत्पादविचारस्याऽप्रकृतत्वात् ।

यद्वा 'अवयविरूपनाशे आश्रयनाशस्य हेतुत्वात्'—इत्यादिग्रन्थस्य नाऽऽश्रयनाशरूपनाशयोर्हेतुहेतुमद्भावे व्यभिचारात्पाकेनाऽवयविनि रूपं न नश्यतीत्यर्थेऽभिप्रायः । किं तु पाकस्य अवयविनि रूपनाशहेतुत्वे व्यभिचारोद्भावनमेव तदभिप्रेतम् । स्वरूपसम्बन्धेन रूपनाशं प्रति हि तेजःसंयोगस्य समवायेन हेतुत्वं वक्तव्यम्, तच्च न सम्भवति, विनश्यदवस्थावयविनि जातात्तेजःसंयोगादपि रूपनाशापत्तेः । न चेष्टापत्तिः, तदुत्तरक्षणेऽवयविनाशेऽनन्तरमवयविरूपनाशस्याऽपि वैशेषिकैरभ्युपगन्तव्यतया तस्यैकक्षणमात्रं प्रागभ्युपगमे क्षतिविरहादिति वाच्यम् । तदुत्तरक्षणे रूपनाशोत्पत्त्यनुमतावपि स्वरूपसम्बन्धेन रूपनाशोत्पत्त्यभ्युपगमासम्भवात् । न च स्वरूपसम्बन्धेन नाशत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यं कार्यकालवृत्तितया हेतुरभ्युपगम्यते, प्रकृते च विनश्यदवस्थद्रव्योत्पन्नतेजःसंयोगादूर्ध्वं नाशापादनकाले द्रव्याभावादेव नाऽऽपत्तिसम्भव इति वाच्यम् । तर्ह्याश्रयनाशजन्यनाशस्य समूलमुच्छेदापत्तेः, तत्राऽपि नाशोत्पत्तिकाले तादात्म्येन द्रव्याभावस्य तुल्यत्वात् । न चाऽऽश्रयनाशाजन्यत्वमपि कार्यतावच्छेदककोटौ निवेश्यत इति न दोष इति वाच्यम् । महागौरवात् । किं तु प्रतियोगितासम्बन्धेन रूपनाशं प्रति सामानाधिकरण्यसम्बन्धेन तेजःसंयोगस्य हेतुत्वं वक्तव्यम् । तथा च विनश्यदवस्थोत्पन्नतेजःसंयोगादपि रूपनाशोपपत्तिः । रूपनाशहेतुतेजःसंयोगस्य सामानाधिकरण्यसम्बन्धेन स्पर्शादावपि सत्त्वात्तन्नाशापत्तिवारणाय रूपप्रतियोगिकत्वं कार्यतावच्छेदककोटौ निवेशितम् । न चैवमपि रूपप्रतियोगिकनाशापत्तिस्तत्र दुर्वारैवेति वाच्यम् । रूपनाशत्वावच्छिन्नं प्रति रूपस्याऽपि तादात्म्येन हेतुतया तद्विरहादेव स्पर्शे रूपनाशापत्त्यसम्भवात् । इत्थं च आश्रयनाशजन्यरूपनाशे व्यभिचारो दुर्वारः, अतः कार्यतावच्छेदककोटौ आश्रयनाशाजन्यत्वं निवेशनीयमिति गौरवं पिठरपाकवादिनाम् । वैशेषिकैस्तु तेजःप्रतियोगिकासमवेतपृथिव्यनुयोगिकसंयोगस्यैव स्वरूपसम्बन्धेन रूपनाशहेतुत्वमभ्युपगम्यते, तन्मते

रामरुद्री।

च नैयायिकमत इव प्रागुक्तविनश्यदवस्थघटाद्युत्पन्नतेजःसंयोगाद्रूपनाशासम्भवप्रयुक्तोऽन्वयव्यभिचारो न सम्भवति, तन्मते विनश्यदवस्थवस्तूत्पन्नतेजःसंयोगस्य पण्डतया तत्र रूपनाशासम्भवेऽपि क्षत्यभावात्। परमाणुतेजःसंयोगस्य च विनश्यदवस्थे वस्तुनि कथञ्चिदप्यसम्भवेन तत्र तदापत्त्यसम्भवात्। परमाणूनां नित्यतया विनश्यदवस्थत्वायोगादिति। एतन्मते **'पाकजन्यत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवात्'** इत्येव पाठः। आश्रयनाशाजन्यत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवादिति च तदर्थः।

वस्तुतस्तु प्रतियोगितासम्बन्धेन रूपनाशं प्रत्येव तेजःसंयोगाश्रयनाशयोर्द्वयोरपि हेतुत्वस्य नैयायिकमते वक्तव्यतयाऽऽश्रयनाशजन्यनाशस्थल एव तेजःसंयोगाभावाद्व्यभिचारापत्तिरतस्तेजःसंयोगकार्यतावच्छेदककोटौ स्वजन्यत्वमपि निवेशनीयम्। ततश्च गौरवापत्तिः। वैशेषिकमते तथाविधकार्यकारणभावाकल्पनाल्लाघवम्। अत एव **'पाकजन्यत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवात्'** इति टीकाग्रन्थोऽपि सङ्गच्छते। **'पाकजन्यत्वस्य'** इत्येव पाठः। **'पाकाजन्यत्वस्य'** इति तु प्रामादिक एवेति वदन्ति।

**'पाकाजन्यत्वस्य'** इति पाठ आश्रयनाशस्य हेतुतायां व्यभिचारवारणाय पाकाजन्यत्वं कार्यतावच्छेदककोटौ निवेशनीयमिति च तदर्थः। अन्यथाऽऽश्रयनाशतेजःसंयोगयोर्द्वयोरपि कार्यतावच्छेदकस्य प्रतियोगितासम्बन्धस्याऽविशिष्टत्वेन तेजःसंयोगजन्यपरमाणुरूपनाशे आश्रयनाशस्य व्यभिचार इत्यतः पाकाजन्यत्वमाश्रयनाशजन्यतावच्छेदककुक्षौ निवेशनीयमिति। न चैवं वैशेषिकैरपि पाकाजन्यत्वमाश्रयनाशजन्यतावच्छेदककोटौ निवेशनीयमिति पाकाजन्यत्वस्य कार्यतावच्छेदककोटिनिवेशप्रयुक्तं गौरवमुभयोरपि समानमिति वाच्यम्। वैशेषिकैः स्वरूपसम्बन्धेन रूपनाशं प्रति समवायेन पृथिवीपरमाणुतेजःसंयोगस्य हेतुत्वाभ्युपगमेनेदृशरीत्या व्यभिचारस्याऽसम्भवात्। न च तथाऽपि आश्रयनाशस्य कार्यकारणभावे व्यभिचारो दुर्वार एवेति वाच्यम्। आश्रयनाशजन्यतावच्छेदककोटौ रूपप्रतियोगिकत्वनिवेशे स्पर्शनाशादेरप्यनया रीत्या कार्यकारणभावकल्पनापत्तिभिया वैयर्थ्येन च तस्याऽनिवेशात् लाघवेन पाकाजन्यत्वस्यैव निवेशात्। न च नाशत्वावच्छिन्नं प्रत्येव तस्य स्वप्रतियोगिसमवेतत्वसम्बन्धेन हेतुतया तस्य घटगतसंयोगादिनाशे व्यभिचारवारणाय कार्यतावच्छेदककोटाववश्यनिवेशनीयेन प्रतियोगित्वसामानाधिकरण्योभयसम्बन्धेन वस्तुविशिष्टान्यत्वेनैव सकलातिप्रसङ्गभङ्गः, स च कार्यकारणभावो नैयायिकानामप्यनुमत एवेति नैतद्बलात् पिठरपाकवादनिराससम्भव इति वाच्यम्। पूर्वोक्तयुक्त्या परमाणुतेजःसंयोगस्यैव रूपनाशहेतुत्वावश्यकतयैवमपि पिठरपाकानुपपत्तेः। न च तथा सति तन्मते प्रतियोगितासम्बन्धेन वस्तुविशिष्टान्यनाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसमवेतत्वसम्बन्धेन नाशत्वेन हेतुत्वमिति फलितम्, तत्र च नाशस्य स्वप्रतियोगिसमवेतत्वसम्बन्धेन घटगतसंयोगादावपि सत्त्वात्तत्र वस्तुविशिष्टान्यनाशापत्तिर्दुर्वारेति वाच्यम्। नाशं प्रति प्रतियोगिनोऽपि कारणतया वस्तुविशिष्टान्यनाशप्रतियोगिनस्तत्र तादात्म्येनाऽभावादेव तादृशव्यभिचारवारणादित्यादिकं बहुतरमूहनीयम्।

नन्वनया युक्त्याऽवयविनि रूपनाश एव प्रतिषिद्धो भवति, न तु पाकजं रूपम्। न चाऽवयविनि रूपनाशप्रतिषेधेनैव पाकजरूपोत्पत्तिप्रतिषेधोऽपि सम्भवत्येव, न हि पूर्वं रूपमविनाश्य रूपान्तरमग्निसंयोगेन जनयितुं शक्यम्, समवायेन रूपं प्रति समवायेन रूपस्य प्रतिबन्धकत्वात्, ईदृशप्रतिबध्यप्रतिबन्धकभावस्य च घटादौ सति रूपे पुनस्तदुत्पादवारणायाऽवश्याभ्युपगन्तव्यत्वादिति वाच्यम्। यत्र कपालद्वयसंयोगाद्घटोत्पत्तिः, कपालरूपनाशकोऽग्निसंयोगो घटाग्निसंयोगश्चेत्येकः कालः, ततः कपालरूपनाशः, तत्र तत्क्षणे पाकवशाद्रूपोत्पादापत्तेरपरिहार्यत्वात्, न ह्यत्र रूपं प्रतिबन्धकमिति कल्पयितुं शक्यम्, घटोत्पत्तिद्वितीयक्षण एव रूपोत्पादस्याऽभ्युपगन्तव्यतया तस्य च तत्क्षण एव कपालरूपात्मकासमवायिकारणविनाशेनाऽभ्युपगन्तुमशक्यत्वात्। असमवायिकारणस्य कार्यसहभावेन हेतुत्वात्। न चैवं पीलुपाकवादिभिरवयविनाऽवष्टब्धेष्ववयवेषु पाकानभ्युपगमात्तन्मते समवायेन द्रव्यस्य द्रव्यारम्भकसंयोगस्य वा रूपनाशे प्रतिबन्धकत्वमभ्युपेयते, तथा च निरुक्तस्थले घटोत्पत्तिद्वितीयक्षणे कपाले रूपनाशो न सम्भवत्येवेति वाच्यम्। ईदृशप्रतिबध्यप्रतिबन्धकभावकल्पने प्रमाणाभावात्। न च

दिनकरी।

कोटिप्रवेशे गौरवादवयविनाशं विना पाकेनाऽवयविरूपनाशासम्भवात्, अवयविनीलादावयवनीलादेर्हेतुतायां व्यभिचारापत्त्या पाकेनाऽवयविनि नीलाद्युत्पादासम्भवाच्चेत्यभिमानः। **अवयविषु विनष्टेष्विति**। घटाद्यारम्भककपालादिपरमाणुपर्यन्तेष्वग्निसंयोगेन पूर्वोक्तरीत्या घटादिद्व्यणुकपर्यन्तं नाशसम्भवादिति भावः। **स्वतन्त्रेषु—कार्यद्रव्यध्वंस**-

रामरुद्री।

नीलपीतारब्धघटे नीलाद्युत्पादवारणाय नीलादिकं प्रति नीलाद्यभावानां सामानाधिकरण्येन प्रतिबन्धकतया कपाले रूपनाशानन्तरं घटे रूपोत्पत्तिर्न सम्भवतीति वाच्यम्। एवमपि कपालरूपनाशकाल एव पाकजरूपापत्तेरवारणात्। तत्पूर्वं सामानाधिकरण्येन रूपाभावविरहात्, रूपस्य चैतावत्पर्यन्तमनुदयात्। न च रूपाभावस्य सामानाधिकरण्यसम्बन्धेन कार्यकालवृत्तितया प्रतिबन्धकत्वमभ्युपेयत इति न तदापत्तिस्तन्नाशकाले सम्भवति, अन्यथा यत्र विनश्यन्नीलरूपेणैकेन कपालेन पीतकपालसंयुक्तेन घट आरब्धः, तत्र तदुत्तरक्षणे नीलरूपविनाशसमये चित्रोत्पादापत्तेरिति वाच्यम्। सामानाधिकरण्येन रूपाभावस्य कार्यकालवृत्तितया प्रतिबन्धकत्वे मानाभावात्, निरुक्तस्थले च नीलान्यरूपपीतान्यरूपात्मकषट्कारणानां विरहादेव चित्रोत्पादवारणसम्भवादीदृशप्रतिबन्धकाभावस्याऽहेतुत्वात्। तेषामसमवायिकारणतया कार्यकाले हेतुत्वात्। न च विनिगमनाविरहादुभयोरपि कार्यकाले हेतुत्वमावश्यकमिति वाच्यम्। असमवायिकारणस्य कार्यसहभावेन हेतुत्वस्य क्लृप्तत्वा*दित्यतो दूषणान्तरमाह। **अवयविनीलादावित्यादि**। अयमभिप्रायः, समवायेन नीलादिकं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलादेर्हेतुतया कपाले रूपविरहदशायां घटे रूपोत्पादासम्भवः, तत्कालेऽसमवायिकारणस्य कपालरूपस्य विरहात्, असमवायिकारणस्य च कार्यसहभाविनो हेतुत्वात्। अन्यथा यत्र कपालद्वये घटोत्पत्ती रूपनाशकाग्निसंयोगश्चेत्येकः कालः, ततः सामग्रीसम्पत्त्याऽग्निनाशः, तदुत्तरमग्निसंयोगविनाशः कपालरूपनाशः, तत्क्षणे घटे रूपोत्पादापत्तेः, इष्टापत्तौ च घटे तद्रूपनाशहेतुविरहादुत्तरक्षणे तद्रूपोपलम्भापत्तेस्ततस्तदुत्तरक्षणोत्पन्नरूपान्तरेण कपालेन तदुत्तरक्षणे घटे रूपान्तरोत्पादानुपपत्तेश्च, रूपे रूपस्य प्रतिबन्धकत्वात्। न च तत्र विनश्यदवस्थेन कपालाग्निसंयोगेन घटेऽपि अग्निसंयोग उत्पद्यते, तन्नाशादेव घटे तद्रूपनाशादनन्तरं रूपान्तरोत्पत्तिरपि सम्भवति, क्षणविलम्बस्य शपथनिर्णेतव्यत्वादिति वाच्यम्। तत्क्षणेऽग्निनाशेन तदुत्पादासम्भवात्, समवायिकारणस्य कार्यसहभावेन हेतुत्वात्। अन्यथा तदुत्तरक्षणे तस्यैवाऽग्निसंयोगस्याऽनुवृत्तिप्रसङ्गात्। न चाऽऽश्रयनाशादेव सोऽपि नश्यतीति वाच्यम्। प्रतियोगितासम्बन्धेन नाशं प्रति स्वप्रतियोगिसमवेतानुयोगिककालिक—कालिकोभयसम्बन्धेन नाशत्वे नाऽऽश्रयनाशस्य हेतुतया निरुक्तस्थले च समवायिकारणनाशकाले संयोगोत्पत्त्युपगमेऽग्निनाशस्य स्वप्रतियोगिसमवेतानुयोगिककालिकघटितोक्तसम्बन्धद्वयेन संयोगेऽसत्त्वात्तन्नाशाजनकत्वात्। न च तत्राऽपीष्टापत्तिः, अग्निनाशे सति कपालाग्निसंयोगस्याऽपि नाशावश्यकतया तत एव घटाग्निसंयोगस्याऽपि नाशसम्भवादिति वाच्यम्। असमवायिकारणनाशस्य कार्यगुणनाशाजनकत्वात्, तुल्ययुक्त्या यत्र कपालद्वयं विनश्यदवस्थमेव संयुज्यते, ततो घटोत्पत्तेरपि सम्भवेन कपालनाशेऽपि तद्घटनाशानुपपत्तेश्च, इष्टापत्तौ च कपालनाशानन्तरं तृतीयक्षणे घटोपलम्भप्रसङ्गात्, कपालसंयोगनाशादपि तन्नाशोपपादनं न प्रकृतापत्तिं वारयति। न च तत्राऽपीष्टापत्तिः, तदुत्तरं कपालद्वयसंयोगनाशाद्घटनाशोपपत्तेरिति वाच्यम्। स्वरूपेण घटनाशं प्रति स्वरूपेणैव कपालद्वयसंयोगनाशस्य कारणताया वक्तव्यतया तदसम्भवात्। अथ प्रतियोगितासम्बन्धेन नाशं प्रति स्वप्रतियोगिनिष्ठ—स्वसमवायिसमवेतत्वसमवा-

---

*लाघवेनेत्यादिः। तथा च रूपाभावस्य नीलाद्यभावषट्कस्य च सामानाधिकरण्यसम्बन्धेन कार्यकालवृत्तितया रूपप्रतिबन्धकत्वं नाऽभ्युपगम्यत इति भावः। अत एव चित्ररूपनिरूपणग्रन्थेऽपि टीकायां नीलान्यरूपत्वादिनैव हेतुत्वमुक्तम्।

श्च पकपरमाणुसंयोगात् द्व्यणुकादिप्रक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः, तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो (१) झटिति व्यूहान्तरोत्पत्तिश्चेति ।

दिनकरी।

विशिष्टेषु । ननु तत्र संस्थानभेदादिः कथं न प्रतीयत इत्यत आह तेजसामिति । व्यूहः—संस्थानम् ।

रामरुद्री ।

यान्यन्तरसम्बन्धावच्छिन्नजनकतानिरूपितजन्यतावत्त्व—कालिकोभयसम्बन्धेन नाशो हेतुरित्यनयैव रीत्याऽसमवायिकारणनाशस्य नाशकत्वं वक्तव्यम्, अत एवाऽसमवायिकारणत्वनिरूपणग्रन्थे पूर्वं तुरीतन्तुसंयोगादीनामसमवायिकारणत्वप्रतिषेधोऽपि सङ्गच्छते, अन्यथा तुरीतन्तुसंयोगनाशादपि पटनाशापत्तेः । ननु संयोगासमवायिकारणस्य कर्मणो नाशेऽपि संयोगनाशानुत्पादात्तत्र व्यभिचारवारणाय संयोगनाशान्यत्वं कार्यतावच्छेदककोटौ निवेशनीयं, तेन न संयोगनाशात्संयोगनाशापत्तिः, अत एव रूपनाशाद्यन्यत्वमपि कार्यतावच्छेदककोटौ निवेशनीयम्, अन्यथात दसमवायिकारणाग्निसंयोगविनाशादपि तन्नाशापत्तेः । तथासत्यग्न्यग्निसंयोगनाशादपि तद्दारुघ्याग्निसंयोगनाशानुपपत्तिः। किं चैतादृशरीत्याऽनन्तभेदानां कार्यतावच्छेदककोटिनिवेशापेक्षया लाघवाद्गुणकर्मनाशान्यत्वमेव निवेश्यतामिति न गुणकर्मणोरसमवायिकारणनाशनाश्यत्वप्रसङ्गः । द्रव्यनाशस्य चाऽऽवश्यकतया तदन्यत्वं न निवेश्यते । इत्थं च स्वसमवायिसमवेतत्वसम्बन्धस्य कारणतावच्छेदककोटावुपादानवैयर्थ्यम् । असमवायिकारणत्वनिरूपणग्रन्थे तु तुरीतन्तुसंयोगादिभिन्नत्वोपादानं नैतादृशकार्यकारणभावघटकतया तदुपादानाभिप्रायकम्, किं तु असमवायिकारणत्वशब्दस्य तैर्थिकाभिमतपरिभाषाविशेषनिमित्ततया तदतिप्रसङ्गवारणार्थमेव, अन्यथा आत्मविशेषगुणान्यत्वं सामान्यलक्षणे देयम्, विशेषलक्षणे तु यथार्थं तत्तद्भिन्नत्वं देयमित्यभिप्रायकस्तत्रत्यग्रन्थो विरुद्ध्येत, सामान्यलक्षणे देयमित्यनेन सामान्यकार्यकारणभावघटककारणतावच्छेदककुक्षावुपादेयमित्यर्थस्यैव भवता वक्तव्यतया सामान्यकार्यकारणभावे तुरीतन्तुसंयोगादिभेदानामनिवेशेन तुरीतन्तुसंयोगादिनाशात्मकसामान्यकारणबलात् पटनाशप्रसक्तेः । न च असमवायिकारणनाशाद्गुणनाशोऽपि कचिदिष्यत एव । अन्यथा परत्वापरत्वनैमित्तिकद्रवत्वादीनां यथायथं कचित्सर्वथा चाऽनाशप्रसङ्गात् । कर्मनाशस्थले कचिदसमवायिकारणनाशविरहा*द्व्यभिचारवारणाय कर्मनाशान्यत्वं कार्यतावच्छेदककुक्षौ निवेश्यते, न तु कारणतावच्छेदके वेगनाशद्रवत्वनाशाद्यन्यत्वं, तथा सत्यपि व्यभिचारानुद्धारात् । तुरीतन्तुसंयोगनाशाद्यन्यनाशत्वेन पटनाशं प्रति विशेषकार्यकारणभावस्याऽपि स्वीकरणीयत्वान्नाऽन्वयव्यभिचारः, तुरीतन्तुसंयोगनाशस्थले तदन्यनाशात्मकविशेषकारणविरहादेव पटनाशापत्तिवारणसम्भवात् । सामान्यकार्यकारणभावघटककारणतावच्छेदककोटौ तु तुरीतन्तुसंयोगनाशात्तुरीपटसंयोगनाशोपपादनार्थं तुरीतन्तुसंयोगनाशान्यत्वं न निवेश्यते, अन्यथा तुरीतन्तुसंयोगनाशान्यत्वेन सामान्यतः कारणत्वे तत्स्थले तादृशसामान्यकारणविरहेण नाशासम्भवादिति वाच्यम् । एवं सति कर्मणः संयोगासमवायिकारणस्य नाशादपि संयोगनाशप्रसङ्गेन कर्मनाशान्यत्वस्याऽपि कारणतावच्छेदककुक्षौ प्रवेशावश्यकत्वेन कर्मान्यत्वमप्यसमवायिकारणलक्षणे देयमितिकथनप्रसङ्गात् । न च नैषाऽनुपपत्तिः, कर्मनाशान्यत्वं हि कुत्र कार्यकारणभावे कारणतावच्छेदककोटौ निवेश्यते ? न तावत् सामान्यतः, वैयर्थ्यात्, सत्यां हि तादृशकारणवशात् कस्यचिन्नाशप्रसक्तौ तद्वारणाय कारणतावच्छेदकं विशेषणीयम्, प्रकृते च न तादृशी

(१) 'व्यूहनाशे' इति पाठः ।

*प्रयत्नवदात्मसंयोगजन्यकर्मस्थले इत्यभिप्रायः । तत्राऽऽत्मसंयोगसत्त्वेऽपि कर्मणः पञ्चमक्षणे नाशादिति । तत्राऽऽत्मसयोगनाशाभ्युपगमेऽपि वेगवद्द्रव्यसंयोगजन्यकर्मस्थले तादृशद्रव्यसंयोगसत्त्वदशायां जाते कर्मनाशे व्यभिचारो बोध्यः। न ह्येतयोः स्थलयोःप्रयत्नस्य वेगस्य वा नाशात्तन्नाश उपपादयितुं शक्यः, तयोर्व्यधिकरणत्वेनाऽसमवायिकरणत्वाभावात् ।

अत्र द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्यार्थं क्षणप्रक्रिया (१)।

दिनकरी

वैशद्यम्—उत्पत्तिः। प्रक्रिया—द्व्यणुकनाशादिरूपाद्युत्पत्तिक्षणनिरूपणम्। क्रियत इति शेषः।

रामरुद्री।

काचिदापत्तिः, कर्मनाशात्तदसमवायिकारणकसंयोगविभागादिनाशप्रसक्तेर्विशेषकारणविरहादेव वारणीयत्वात्, संयोगनाशादौ विभागादेर्हेतुत्वादिति वाच्यम्। एवं सत्यात्मविशेषगुणान्यत्वस्य सामान्यकारणतावच्छेदककुक्षौ निवेशवैयर्थ्यात्। तत्रापि ज्ञानादिनाशादेच्छादिनाशप्रसक्तेर्योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमावलम्बनेन वारयितुं शक्यत्वात्। न च ज्ञानादिनाशोऽपि चेदसमवायिकारणनाशजन्यतावच्छेदकाक्रान्तः स्वीक्रियते, तर्हि अपेक्षाबुद्धेर्द्वितीयक्षण एव नाशप्रसङ्गः, तत्पूर्वक्षणे तदुत्पादकविशेषणज्ञानादिनाशसम्भवात्, अत आत्मविशेषगुणान्यत्वं कारणतावच्छेदककुक्षावुपादेयमेवेति वाच्यम्। अपेक्षाबुद्धिनाशे स्वातन्त्र्येण तत्तृतीयक्षणोत्पन्नज्ञानव्यक्तीनामेव विशिष्य हेतुतया तेनैव सकलातिप्रसङ्गादिभङ्गे आत्मविशेषगुणान्यत्वस्य निरुक्तनाशकतावच्छेदककुक्षौ स्वातन्त्र्येणोपादानायोगात्। न च यत्रेष्टसाधनताज्ञानेच्छाप्रवृत्तयः क्रमेण जातास्तादृशस्थले प्रवृत्ताविष्टसाधनताज्ञानस्यासमवायिकारणत्वापातात् तन्नाशरूपसामग्रीवशात्तदुत्तरक्षणे प्रवृत्तिनाशपत्त्या प्रवृत्त्यादेः क्षणिकत्वापत्तिरित्यत आत्मविशेषगुणान्यत्वं कारणतावच्छेदककुक्षौ निवेशितम्, शब्दस्थले च स्वपूर्वपूर्वशब्दस्य स्वस्मिन्नकारणत्वान्न स्वस्य क्षणिकत्वप्रसङ्ग इति न शब्दान्यत्वं निवेशितमिति वाच्यम्। एवं सति ज्ञानादेः स्वतृतीयक्षणेऽपि नाशानुपपत्तेः। तत्राऽऽत्मविशेषगुणान्यप्रतियोगिकनाशविरहेण व्यतिरेकव्यभिचारात्, कार्यतावच्छेदककोटावप्यात्मविशेषगुणान्यत्वनिवेशे च व्यर्थमेव कारणतावच्छेदककोटौ तदुपादानमिति। न च आदिमज्ञानधर्माधर्मादिनाशस्थलेऽसमवायिकारणनाशविरहाद्व्यतिरेकव्यभिचारवारणायाऽऽत्मविशेषगुणनाशान्यत्वं स्वाव्यवहितोत्तरत्वं वा कार्यतावच्छेदककोटाववश्यं निवेशनीयम्, इत्थं च कारणतावच्छेदककोटावप्यात्मविशेषगुणान्यत्वं निवेश्यमेव, अन्यथा ज्ञानाद्युत्पत्तिक्षणे तन्नाशाभावप्रयोजकालाभात्, तत्तदुत्तरात्मविशेषगुणाभावकूटस्याऽऽत्मविशेषगुणान्यनाशाभावे तथात्वाभावात्। कर्मनाशस्थले तु सर्वत्रैव तदसमवायिकारणनाशः स्वीक्रियत एवेति न व्यभिचारः। आद्यशब्दनाशस्थलेऽपि वाय्वादिसंयोगात्मकासमवायिकारणविनाशो वायुनाशाधीनः स्वीक्रियत इति न तत्राऽपि व्यभिचारः। न ह्यनयैव रीत्याऽऽद्यज्ञाननाशस्थले मनःसंयोगनाशः स्वीकर्तुं शक्य इति। एवं च शब्दानामसमवायिकारणविनाशनाश्यत्वमिष्यत एव, इतरत्राऽन्वयव्यभिचाराश्च विशेषसामग्रीविरहादेव वारणीया इति वाच्यम्। एवं सति हि यत्किञ्चित्कार्यनाशजनकनाशप्रतियोगित्वं सामान्यतोऽसमवायिकारणत्वं तत्तत्कार्यनाशजनकनाशप्रतियोगिकारणत्वं च विशेषतस्तत्तत्कार्यासमवायिकारणत्वमिति फलति, इत्थं च सति आत्ममनःसंयोगादेर्ज्ञानाद्यसमवायिकारणत्वं कथमित्यपि वर्णनीयम्। अभिघाते वेगस्याऽसमवायिकारणत्वापत्तिश्चोक्तरीत्या वारयितुं न शक्यते। वेगनाशादभिघातनाशप्रसक्तेर्भवदुपदर्शितदिशा विशेषसामग्रीविरहबलादेव वारणीयत्वात्। तस्मादसमवायिकारणत्वसंज्ञा वैशेषिकेष्वर्थशब्दवत् न्याये प्रमेयशब्दवच्च परिभाषाविशेषेण क्वचिदेव कारणतामु प्रवर्तत इत्येव तत्त्वं वाच्यमिति चेन्न, तथाऽपि गुणकर्मादिनाशसाधारण्येन पूर्वोक्तकार्यकारणभावस्वीकारे बाधकाभावात्, व्यतिरेकव्यभिचारस्याऽव्यवहितोत्तरत्वकार्यतावच्छेदकीकरणेनाऽन्वयव्यभिचारस्य च विशेषसामग्रीविरहेण वारणीयत्वादिति,

नैवम्, समवायिकारणविनाशकाले कार्योत्पत्तेरसम्भवादेवाग्निनाशकाले तत्संयोगासम्भवात्। समवायेन कार्यं प्रति तादात्म्येन द्रव्यस्य कारणतया तादृशकार्यस्य चाऽसमवेततया समवायिकारणज-

(१) 'वैशद्याय प्रक्रिया' इति पाठः।

तत्र विभागजविभागानङ्गीकारे नवक्षणा।

तदङ्गीकारे तु विभागः किञ्चित्सापेक्षो विभागं जनयेत्, निरपेक्षस्य तत्त्वे कर्मत्वं स्यात्, 'संयोगविभागयोरनपेक्षं कारणं कर्म(१)–'इति हि वैशेषिकसूत्रम्। स्वोत्तरोत्पन्नभावानपेक्षत्वं तस्याऽर्थः। अन्यथा कर्मणोऽप्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यादिति। तत्र यदि द्रव्यारम्भ-

दिनकरी।

**विभागजविभागानङ्गीकार इति।** कारणाकारणविभागात् कार्याकार्यविभागवत् कारणमात्रविभागात्कारणाकारणविभागानङ्गीकार इत्यर्थः। द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तदनारम्भकसंयोगप्रतिद्वन्द्विविभागाजनकत्वनियमे मानाभावादिति भावः।

अत्र च विभागग्रन्थे वक्ष्यमाणविकसत्कमलभङ्गप्रसङ्गभिया उक्तनियमाङ्गीकार आवश्यकः, एवं च द्व्यणुकारम्भकपरमाणुक्रियया यत्र द्व्यणुकारम्भकसंयोगप्रतिद्वन्द्विविभागो जनितस्तत्र तया तत्परमाणुक्रियया तत्परमाण्वाकाशादिसंयोगप्रतिद्वन्द्विविभागोत्पत्तिर्न सम्भवति। न च माऽस्तु तत्र परमाण्वाकाशविभागः, का क्षतिरिति वाच्यम्। तथा सति नाशकविभागाभावेन परमाण्वाकाशसंयोगस्य नित्यत्वापत्तेः। एवं परमाण्वाकाशसंयोगरूपस्य पूर्वदेशसंयोगस्य प्रतिबन्धकस्य सत्त्वात् परमाणावुत्तरदेशसंयोगानुत्पत्त्या परमाणुगतक्रियानाशानुपपत्तेश्च, अतस्तादृशपरमाण्वाकाशविभागजनकः परमाण्वोर्विभागो वाच्य इत्यभिप्रायवानाह। **तदङ्गीकारे त्विति।** अनयोः पक्षयोः प्रथमपक्ष एव सम्यक्, यदवच्छेदेन कमलारम्भकसंयोगस्तदवच्छेदेन क्रियानुत्पत्त्या च न विकसत्कमलभङ्गप्रसङ्ग इति ध्येयम्। **तत्त्वे**–विभागजनकत्वे। **कर्मत्वं**-कर्मलक्षणस्याऽतिव्याप्तिः। 'संयोगविभागयोरनपेक्षं कारणं कर्म' इति सूत्रस्य संयोगस्य विभागस्य वाऽनपेक्षं कारणं कर्मेति लक्षणद्वये तात्पर्यमित्यभिप्रायेण द्वितीयलक्षणस्य तत्राऽतिव्याप्त्यभिधानमिदम्।

रामरुद्री।

न्यत्वासम्भवात्। असमवेतभावकार्योत्पादस्य चाऽनिष्टत्वादिति*। **अभिमान इति।** अप्रामाण्यज्ञानानास्कन्दितो भ्रम इत्यर्थः। तद्बीजं तु वक्ष्यते। **कार्यद्रव्यध्वंसविशिष्टेष्विति।** स्वसमानाधिकरणद्रव्यासमानकालीनेत्यादिः। तेन परमाणूनां सर्वदैव कार्यद्रव्यध्वंसविशिष्टत्वेऽपि न क्षतिः। एतत्परिचयार्थैव कार्यपदम्। द्रव्यानाधारेष्विति परमार्थः।

पूर्वं पीलुपाकवादिनां मते युक्तिद्वयं प्रदर्शितम्, एकं टीकाकारानुरोधि, अन्यत् तदनुरोधि, तत्र प्रथमे स्पर्शवत्संयोगं प्रति समानावच्छेदकत्वप्रत्यासत्त्या स्पर्शवत्संयोगस्य प्रतिबन्धकत्वात्परितः परमाण्वन्तरावष्टब्धे आभ्यन्तरपरमाणाववष्टम्भकपरमाणुसंयोगनिवृत्तिमन्तरेण तेजःसंयोगासम्भवात्, तत्र रूपविनाशासम्भवे तादृशरूपबलादेवाऽवयविन्यपि पुनः पूर्वरूपसजातीयरूपान्तरोत्पादे पाकायोग इति रूपान्तरोत्पादाय तत्राऽऽभ्यन्तरपरमाणुना सह कथञ्चिदग्निसंयोग उपपादयितव्यः, स च नाऽवष्टम्भकसंयोगनिवृत्तिमन्तरेणेति तन्निवृत्त्यनुष्ठाने द्व्यणुकमपि विनश्यतीति काऽवयविनि पाकसम्भावनेत्यङ्गीकृतम्, तदनुसारेणेदानीं क्षणप्रक्रिया व्याख्यायते। 'विभागजविभागानङ्गीकारे' इत्यादिग्रन्थभावार्थोऽग्रे व्याख्यास्यते। कर्मसूत्रमपि विभागग्रन्थे व्याख्यास्यते।

---

(१) वैशेषिकसूत्रम्। अ० १ सू० १७

*अयं भावः। कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मघटितमेव खलु कारणत्वम्, कार्यस्य चाऽसमवेतत्वे तदधिकरणाप्रसिद्ध्या तद्घटितनिरुक्तकारणत्वस्वरूपपरिचितिर्युक्तैवेति।

कसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्, तदा दशक्षणा।

अथ द्रव्यनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्, तदैकादशक्षणा। तथा हि-

अथ नवक्षणा—

वह्निसंयोगात् परमाणौ कर्म, ततः परमाण्वन्तरेण विभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १, ततः परमाणौ श्यामादिनाशः २, ततो रक्ताद्युत्पत्तिः ३, ततो द्रव्यारम्भानुगुणा क्रिया ४, ततो विभागः ५, ततः पूर्वसंयोगनाशः ६, ततः आरम्भकसंयोगः ७, ततो द्व्यणुकोत्पत्तिः ८, ततो रूपाद्युत्पत्तिः ९। इति नवक्षणा।

दिनकरी।

वस्तुतस्तु 'संयोगविभागयोरनपेक्षं कारणं कर्म' इति सूत्रम्। तत्र संयोगस्यानपेक्षं कारणमित्युक्तौ कारणाकारणसंयोगेऽतिव्याप्तिः, तस्य कार्याकार्यसंयोगे किञ्चिदनपेक्ष्य कारणत्वात्, एवं विभागस्याऽनपेक्षेत्युक्तौ कारणाकारणविभागेऽतिव्याप्तिरत उक्तं संयोगविभागयोरिति। अनपेक्षत्वं च स्वोत्तरोत्पन्नभावानपेक्षत्वम्। अन्यथा कर्मणोऽपि संयोगजनने द्रव्यस्य पूर्वसंयोगनाशस्य चापेक्षणादसम्भवापत्तेः। विभागासमवायिकारणत्वे सति संयोगहेतुत्वं वा तत्। पूर्वदेशविभागस्तु नोत्तरदेशसंयोगे कारणम्, व्यवहाराभावेनाऽन्यथासिद्धेः। संयोगस्य विभागं प्रति कारणत्वाभावादेव नाऽसमवायिकारणत्वमिति न तत्राऽतिव्याप्तिः। इत्थं च कारणमात्रविभागस्य पूर्वसंयोगनाशं द्रव्यनाशं चाऽनपेक्ष्य कारणाकारणविभागजनकत्वेऽपि नाऽतिव्याप्तिः, तस्य विभागजनकत्वेऽपि संयोगविभागोभयजनकत्वाभावादिति ध्येयम्। **द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्येति**। द्रव्यारम्भकसंयोगनाशोत्पत्त्यधिकरणक्षणोत्तरक्षण इत्यर्थः। कारणता तु द्रव्यारम्भकसंयोगनाशत्वेनैव, लाघवादिति ध्येयम्। एवमग्रेऽपि। नवदशैकादशक्षणाः प्रक्रियाः क्रमेणोपपादयति-**तथा हीत्यादिना**।

**परमाणौ कर्म**-द्व्यणुकारम्भकपरमाण्वोर्मध्ये एकस्मिन् परमाणौ कर्म। **परमाण्वन्तरेण** द्व्यणुकारम्भकपरमाण्वन्तरेण। **आरम्भकेति**। द्व्यणुकारम्भकेत्यर्थः। **ततः पर-**

रामरुद्री।

**इति नवक्षणेति**। यत्राऽग्निक्रिया, घटारम्भकबाह्याभ्यन्तरपरमाण्वोरारम्भकसंयोगविरोधिन्यौ क्रिये चेत्येकः कालः, ततोऽग्निपूर्वदेशविभागो घटारम्भकतादृशपरमाणुद्वयपूर्वदेशविभागश्च, ततोऽग्निपूर्वदेशसंयोगनाशो घटारम्भकतादृशपरमाणुद्वयपूर्वदेशसंयोगनाशश्च, ततोऽग्निबाह्यपरमाण्वोरेव संयोगः, ततस्तयोः क्रियानाशः, ततश्चोभयोरपि कर्मणी, ततश्च विभागः, ततः पूर्वसंयोगनाशः द्व्यणुकारम्भकबाह्याभ्यन्तरपरमाणुद्वयसंयोगनाशश्च, ततो बाह्यपरमाणोरुत्तरदेशेनाग्नेश्च तदुत्तरदेशेनाऽऽभ्यन्तरपरमाणुना संयोगौ, द्व्यणुकनाशश्च १, ततस्तयोः क्रियानाशः, आभ्यन्तरपरमाणौ श्यामरूपनाशश्च २, तत आभ्यन्तरपरमाणौ रक्तोत्पत्तिरग्नौ क्रिया च ३, ततोऽग्नौ आभ्यन्तरपरमाणुविभागः, आभ्यन्तरपरमाणौ च क्रियोत्पत्तिः ४, ततः अग्नितत्परमाणुसंयोगनाशः, परमाणुपूर्वदेशविभागश्च ५, ततोऽग्नेराभ्यन्तरपरमाणौ संयोगः, परमाणुपूर्वदेशसंयोगनाशश्च ६, तत आभ्यन्तरबाह्यपरमाणुसंयोगः ७, ततो द्व्यणुकोत्पत्तिः ८, ततो रूपोत्पत्तिः ९, तादृशस्थल इत्यर्थः। एतेन तावत्कालमग्निसंयोगो नाऽनुवर्तितुमीष्टे, तथा हि प्रथमं बाह्यपरमाणावग्निसंयोगः ततो बाह्यपरमाणौ कर्म, अग्नौ कर्मनाशश्च, ततः परमाणुद्वयविभागः, अग्नौ

ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियाऽस्त्विति चेन्न। अग्निसंयुक्ते परमाणौ यत् कर्म, तद्विनाशमन्तरेण,

दिनकरी।

माणौ। श्यामादिनाश इति। परमाणुगतरूपनाशं प्रति द्व्यणुकात्मकद्रव्यस्य प्रतिबन्धकतया तत्पूर्वं श्यामनाशासम्भवादिति भावः। द्रव्यारम्भकेति। द्व्यणुकारम्भकेत्यर्थः। आरम्भकेति। द्व्यणुकारम्भकेत्यर्थः।

तद्विनाशमन्तरेणेति। द्व्यणुकनाशोत्पत्तिक्षणोत्पत्तिकोत्तरसंयोगेन श्यामनाशक्षण

रामरुद्री।

कर्मान्तरं च, ततः परमाणुद्वयसंयोगनाशः, अग्नौ कर्मजन्यो विभागश्च, ततो द्व्यणुकनाशपरमाणूत्तरसंयोगौ, अग्निसंयोगनाशश्चेति क्रमेण द्व्यणुकनाशसमये परमाणुकर्मजनकसंयोगनाशात्। न चैकेनाऽग्निसंयोगेन पाकोऽनेन न प्रतिपाद्यते येनोक्तदोषः स्यात्, अपि त्वग्निसंयोगान्तरेण, तच्चाऽग्निसंयोगान्तरं द्व्यणुकनाशसमय एव सम्भवति। तथा हि-प्राक्पश्चिमपरमाणुद्वयारब्धद्व्यणुकस्थले प्राग्देशस्थवह्निना प्राग्देशस्थस्य प्रत्यग्देशस्थस्य च पश्चिमेन परमाणुना संयोगौ, ततस्तयोः क्रियानाशः, ततः परमाणुद्वये क्रिया, ततः परमाणुद्वयस्य परस्परं विभागः, अग्नितश्च विभागः, ततः पूर्वसंयोगनाशः, तत उत्तराग्निसंयोगद्व्यणुकनाशौ, ततः श्यामनाश इतीति वाच्यम्। एतादृशस्थले श्यामनाशार्थमेतावद्दूरपर्यन्तापेक्षानौचित्यात्, प्राक्प्रतीचोः परमाण्वोरुभयोरपि अग्निसंयोगेन तदुत्तरमेव रूपनाशरूपान्तरोत्पादयोः सम्भवेन तत्र द्व्यणुकनाशस्यैतन्मते व्यर्थत्वादिति निरस्तम्।* अत्राऽग्निक्रियाया द्वितीयतृतीयचतुर्थक्षणेषूत्पत्तिमुपगम्य तस्याऽग्रस्तत्पूर्वं स्वकर्मणा बाह्यपरमाणुसंयुक्तत्वाभ्युपगमे एतावत्कालपर्यन्तमारम्भकसंयोगप्रतिद्वन्द्विविभागानुगुणकर्मण उत्पादो दुर्वारः। ततश्च द्व्यणुकनाशसमये प्रागुक्तरीत्याऽग्निसंयोगविनाशप्रसङ्गः। बाह्यपरमाण्वसंयुक्तत्वाभ्युपगमे च परमाणुक्रियायैवैतश्चतुर्थक्षणेऽग्निसंयोगो वाच्यः, ततश्च परमाणुकर्मनाशानन्तरमेतदग्निसंयोगात्मककारणबलादेव बाह्याभ्यन्तरपरमाण्वोरारम्भकसंयोगविरोधिविभागजनकक्रियोत्पत्तौ अग्नौ बाह्यपरमाणुसंयोगानन्तरं प्रागुत्पन्नक्रियानाशादुत्तरक्षणे पुनरुत्पन्नेन क्रियान्तरेणाऽऽभ्यन्तरपरमाणुसंयोगस्य च सम्भवेऽपि क्रियानाशं प्रत्यात्मसंयोगस्य हेतुत्वाभ्युपगन्तृनव्यमते तादृशस्थलेऽग्निपरमाणुसंयोगोत्तरमग्नावात्मसंयोगान्तरस्याऽनिष्पन्नतया नाशासम्भवाच्चदुत्तरक्षणेऽग्नौ कर्मान्तरोत्पत्त्यसम्भवे तस्याऽऽभ्यन्तरपरमाणुसंयोगो द्व्यणुकनाशकाले न निर्वहतीत्यतः प्रथमक्षण एवाऽग्नौ कर्म स्वीकृतम्। न च यत्र प्रथममग्निसंयोगः परमाणुक्रिया चेत्येकः कालः, यद्वा प्रथमं परमाणुक्रिया, तदुत्तरक्षणेऽग्निपरमाणुसंयोगः, तदुत्तरक्षणयोर्वा, तादृशस्थले भवदुक्तापत्तिर्न सम्भवति, परमाणौ कर्मोत्पत्तेः पूर्वमग्निसंयोगविरहादेव तत्रारम्भकसंयोगविरोधिविभागजनकक्रियापादनासम्भवात्, तदुत्तरक्षणेषु च कर्मणः प्रथमोत्पन्नस्य प्रतिबन्धकत्वात्तद्द्वारणसम्भवादिति वाच्यम्। परमाण्वग्निसंयोगस्तावत्परमाणुक्रियाजन्य उताऽग्निक्रियाजन्य इति संशये तस्य परमाणुक्रियाजन्यत्वाभ्युपगमेऽग्निसंयोगपरमाणुकर्मान्तरयोर्युगपदुत्पादासम्भवः, परमाणोः सक्रियत्वात्। क्षणविलम्बाभ्युपगमे च तत्राऽऽरम्भकसंयोगविरोधिक्रियोत्पादो दुर्निवारः। इष्टापत्तौ च परमाणुकर्मणः पूर्वमेवाऽग्निक्रियान्तरस्य प्राप्ततया द्व्यणुकनाशसमये आन्तरपरमाणावग्निसंयोगानुपपत्तिः। बाह्यपरमाणावग्निसंयोगकाले आन्तरपरमाणावपि बलवद्वेगवद्द्रव्यपरम्परासंयोगस्य सम्पत्तेरुत्तरक्षणे आन्तरेऽपि क्रियान्तरमभ्युपगम्य तद्बलादाभ्यन्तरपरमाण्वग्निसंयोगोपपादनमपि न सुघटम्, आभ्यन्तरबाह्य-

---

*यद्यपि तादृशस्थले प्रथमं प्राचीनपरमाणूत्पन्नेनाऽग्निसंयोगेन क्रियाविभागादिक्रमेण द्व्यणुकनाशसमये पश्चिमपरमाणावग्निसंयोगान्तरं स्वीकृत्य नवक्षणप्रक्रियोपपादयितुं शक्यते, तथाऽपि निरुक्तरीत्या तदुपपादने ततोऽप्यर्वाक् प्रतीचा परमाणुना दहनसंयोगमङ्गीकृत्य नवक्षणातो न्यूनक्षणप्रक्रियाप्रसङ्ग एव दोषो बोध्यः।

**रामरुद्री ।**

परमाण्वोरारम्भकसंयोगविरोधिकर्मणोरेवाऽभ्युपगन्तव्यतया तदुपपादनाय तयोः परमाण्वोर्विरुद्धदिगभिमुखकर्मोत्पत्तेरेव स्वीकर्तव्यतया बाह्यदिक्स्थेनाऽग्निना तद्विरुद्धदिगभिमुखोत्पन्नकर्मबलादाभ्यन्तरपरमाणोः संयोगासम्भवात् । आरम्भकसंयोगविरोधिकर्मणो विरुद्धदिक्त्वनियमस्य सर्वसम्प्रतिपन्नत्वात् । परमाणुकर्मसमकालतदुत्तरकालयोरग्निसंयोगो दहनकर्मणैव जायत इत्यपि न साधु तथा सति प्रथमं परमाणुकर्म, दहनक्रियाजनितो दहनसंयोगश्चेत्येकः कालः, ततः परमाणुपूर्वदेशविभागः, दहनकर्मनाशश्च, ततः परमाणुपूर्वदेशसंयोगनाशो दहने स्वाभाविकाद्वेगात् क्रियान्तरं च, ततः परमाणूत्तरदेशसंयोगस्य दहनेन सह सम्भवेऽपि न ततो द्व्यणुकनाशसमये आभ्यन्तरपरमाणुदहनसंयोग उपपद्यते, तत्कालं दहनपूर्वदेशविभागस्य तदुत्तरक्षणे परमाणुक्रियानाशदहनपूर्वदेशसंयोगनाशयोस्तदुत्तरं परमाणुकर्मदहनदेशान्तर(१)संयोगयोस्ततः परमाणुद्वयविभागदहनक्रियानाशयोस्ततः परमाणुद्वयसंयोगनाशदहनक्रियान्तरयोरुपगन्तव्यतया द्व्यणुकनाशसमये आभ्यन्तरपरमाणौ दहनसंयोगासम्भवात् । परमाणुक्रियोत्तरक्षणे दहनक्रियाजन्यदहनसंयोगाभ्युपगमेऽपि न निस्तारः, तथा हि प्रथमं परमाणुक्रिया, ततः परमाणुपूर्वदेशविभागः, दहनक्रियाजन्यदहनसंयोगश्च, ततः परमाणुपूर्वदेशसंयोगनाशः, दहनक्रियानाशश्च ततः परमाणूत्तरदेशसंयोगः, दहनक्रियान्तरं च, ततः परमाणुकर्म, दहनपूर्वदेशविभागः, ततः परमाणुद्वयविभागः, दहनपूर्वदेशसंयोगनाशः,ततः परमाणुद्वयसंयोगनाशः, दहनोत्तरदेशसंयोगश्चेत्येव प्रक्रियाया वक्तव्यतया तथाऽपि द्व्यणुकनाशकाले आभ्यन्तरपरमाणुदहनसंयोगासम्भवस्य प्रागुक्तस्याऽवारणात्(२)। परमाणुकर्मतृतीयक्षणेऽपि दहनकर्मजनितदहनसंयोगो न सम्भवति, तथा सति प्रथमं परमाणुकर्म, ततः परमाणुपूर्वदेशविभागः, ततः परमाणुपूर्वदेशसंयोगनाशो दहनकर्मजो दहनसंयोगश्च, ततः परमाणूत्तरदेशसंयोगो दहनक्रियानाशश्च, ततः परमाणुक्रियानाशः दहनक्रियान्तरं च, ततः परमाणुक्रिया दहनपूर्वदेशविभागश्च, ततः परमाणुद्वयविभागः दहनपूर्वदेशसंयोगविनाशश्च, ततः परमाणुद्वयसंयोगविनाशः, दहनोत्तरसंयोगश्चेत्येव वक्तव्यतया तथाऽपि आभ्यन्तरपरमाणुसंयोगस्य दहनेऽसम्भवात् । न च परमाणुद्वयसंयोगनाशकाल एवाग्निक्रिययाऽग्नेराभ्यन्तरपरमाणुसंयोगः कुतो न जायते ? इष्टापत्तौ च द्व्यणुकनाशसमय एव श्यामनाशात् अष्टक्षणाया एव प्रक्रियायाः प्रसङ्गान्मूलविरोधापत्तिरिति वाच्यम् । स्पर्शवत्संयोगस्य स्पर्शवत्संयोगे प्रतिबन्धकत्वादेव आरम्भकसंयोगनाशकालेऽग्निसंयोगासम्भवात् । परमाणूत्तरसंयोगकालेऽग्निक्रियाजन्याग्निसंयोगाभ्युपगमे चाऽस्मदीयैव रीतिरनुसृतेति न किञ्चिन्नवीनमिव । परमाणुक्रियामात्रात् परमाणुदहनसंयोगाभ्युपगमोऽपि न युक्तः, स हि निष्क्रिये क्रियावति तज्जन्यविभागवति तज्जन्यपूर्वसंयोगनाशवति वा वक्तव्यः, उत्तरसंयोगवति तदभ्युपगमेऽस्मन्मतानुप्रवेशात् । स च न सम्भवति । तथाहि—नाऽऽद्यः, परमाण्वग्निसंयोगस्य दहनकर्मान्तरस्य, ततः परमाणुकर्मान्तरस्य, दहनपूर्वदेशविभागस्य चोपगन्तव्यतया क्रमेण परमाणुसंयोगनाशकाल एव दहनस्योत्तरदेशसंयोगात् । अत एव न द्वितीयतृतीयचतुर्थां अपि पक्षाः सम्भवन्ति, दहनसंयोगस्याऽपि द्व्यणुकनाशपूर्वतृतीयचतुर्थपञ्चमक्षणेषु प्रसक्त्या नवक्षणाविघातप्रसङ्गात् । एवं परमाणोर्निष्क्रियत्वेऽग्निक्रिययैव परमाणावग्निसंयोगो वक्तव्यः, तथा च सति प्रथममग्नेः क्रियाविभागादिक्रमेण बाह्यपरमाणुना सह संयोगः, ततो बाह्यपरमाणावारम्भकसंयोगविरोधिनी क्रिया, अग्निक्रियानाशश्च, ततः परमाणुद्वयविभागः, अग्निक्रियान्तरं चेति प्रक्रियया द्व्यणुकनाशानन्तरं दहनस्याऽऽभ्यन्तरपरमाणुना सह संयोगः स्यात्, तथा च दशक्षणैव प्रक्रिया, न नवक्षणेति दहनक्रियाकाल एव परमाणावपि क्रिया स्वीकृता । एकस्य परमाणोरक्रियत्वेऽपरस्य परमाणोः क्रिया नियतं द्व्यणुकारम्भकसंयोगविरोधिन्येव भवेदिति बाह्यपरमाण्वग्निसंयोगकाल एव द्व्यणुकनाशो माभूदिति तत्काल आभ्यन्तरपरमाणावपि क्रिया स्वीकृता ।

---

(१) परमाणुकर्मनाशकाले तु न क्रियान्तरं सम्भवति, पूर्वक्षणे तत्र कर्मणः सत्त्वेन तत्क्षणे तदसम्भवात्, कर्मणः कर्मप्रतिबन्धकत्वात् ।

(२) अत्र क्षणे आभ्यन्तरपरमाणुदहनसंयोगस्तु नोपपद्यते, परितः परमाणुभिरवष्टम्भात् ।

**गुणोत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्, कर्मवति कर्मान्तरानुत्पत्तेः,**

**दिनकरी।**

**एव पूर्वक्रियानाश इति भावः। परमाणौ क्रियान्तराभावादिति। तस्मिन् परमाणौ क्रियान्तराभावादित्यर्थः। अत्र हेतुमाह। कर्मवतीति। कर्मवति कर्मान्तरानुदयेन कर्मो-**

**रामरुद्री।**

यद्यपि अग्निक्रियासमकालमारम्भकसंयोगविरोधिनः कर्मणः परमाणावुत्पत्त्यभ्युपगमेऽपि न क्षतिः, तत्र द्व्यणुकनाशसमये तस्याऽग्नेर्बाह्याभ्यन्तरपरमाण्वोर्युगपत्संयोगद्वयोपगमात्, तथाऽपि अग्निसंयोगात् पूर्वं बाह्यपरमाणौ द्व्यणुकारम्भकसंयोगविरोधिक्रियोत्पत्तिर्न सम्भवत्येव, कारणाभावात्। अविरोधि तु कर्म घटस्याऽग्नौ प्रक्षेपत एव सम्भवति, अवयविकर्मणो यावदवयवकर्मनियतत्वात्, घटादिकर्मणः प्रक्षेपोत्तरकालभाविनो यावदवयवकर्मनियतत्वस्य सर्वसम्प्रतिपन्नत्वाच्च। तेनाऽवयविकर्मणो यावदवयवकर्मनियतत्वास्वीकारेऽपि न क्षतिः। द्व्यणुकनाशसमयेऽग्नेराभ्यन्तरमाणुना सह संयोगानभ्युपगमे तदुत्तरक्षणे तत्र श्यामनाशान्निर्वाह इति तत्क्षणे स स्वीकृतः। इदं स्ववधेयम्। क्षणनवकाभिधानमेतन्मते एकस्मिन् परमाणौ कर्मचिन्तने इतो न्यूनक्षणा प्रक्रिया न सम्भवतीति द्योतनाय। अधिकक्षणा तु स्यात्। तथा हि यत्र निश्चल एव घटादौ तदारम्भकबाह्यपरमाणुना सहाऽग्निक्रिययाऽग्निसंयोगः, ततो बाह्यपरमाणुक्रिया, अग्निक्रियानाशश्च, ततोऽग्नौ क्रियान्तरम्, बाह्याभ्यन्तरपरमाण्वोर्विभागश्च ततोऽग्निविभागः, बाह्याभ्यन्तरपरमाणुसंयोगनाशश्च, ततोऽग्निपूर्वसंयोगनाशः, बाह्याभ्यन्तरपरमाण्वोः संयोगनाशो द्व्यणुकनाशश्च, ततोऽग्नेरुत्तरदेशात्मकाभ्यन्तरपरमाणौ संयोगः, ततः श्यामनाशः—इत्यादिदशक्षणा। एकादशक्षणाऽपि सम्भवति, तथाहि—कुतश्चित् कारणात् परमाणुकर्म, ततो विभाग आभ्यन्तरबाह्यपरमाण्वोः, अग्नौ क्रिया च, ततः परमाणुद्वयसंयोगनाशः, ततो द्व्यणुकनाशः, अग्निविभागश्च ततोऽग्निपूर्वसंयोगनाशः, ततोऽग्निपरमाणुसंयोगः तत्रैकादशक्षणा। परमाणुसंयोगनाशकाल एवाऽग्नौ कर्मचिन्तनाद्द्वादशक्षणाऽपि, द्व्यणुकनाशसमयेऽग्नौ कर्मचिन्तने त्रयोदशक्षणाऽपि, एवमुत्तरोत्तरम्। नवक्षणातो न्यूनक्षणा तु न सम्भवति, सा हि द्व्यणुकनाशाव्यवहितप्राक्क्षणेऽग्नेः परमाणौ संयोगोत्पत्तौ स्यात्, सा च न सम्भवति, परमाणुद्वयसंयोगस्य प्रतिबन्धकत्वादिति।

**कर्मवतीति।** उत्पन्नस्य कर्मणः पुनरुत्पादवारणाय क्रियां प्रति क्रियायाः प्रतिबन्धकत्वावश्यकत्वादिति भावः। ननु निरुक्तस्थले आभ्यन्तरपरमाणौ श्यामनाशकाले कर्मोत्पत्तौ का क्षतिः*? आभ्यन्तरपरमाणोर्निष्क्रियत्वेन पूर्वश्यामरूपसत्त्वेन च तत्र क्रियोत्पत्तौ बाधकाभावादिति चेन्न, श्यामनाशकाल आभ्यन्तरपरमाणौ क्रियाभ्युपगमेऽपि सा द्रव्यारम्भानुगुणा न सम्भवति, तथा हि—तादृशरीत्याऽऽभ्यन्तरपरमाणावग्निक्रियाजन्यः संयोगः प्रथमम्, तत आभ्यन्तरपरमाणौ कर्म, अग्नौ क्रियानाशः, परमाणौ श्यामनाशश्च, तत आभ्यन्तरपरमाणोः पूर्वदेशतदाभ्यन्तरपरमाण्वोर्विभागः, अग्नौ क्रियान्तरं च, तत आभ्यन्तरपरमाणौ पूर्वदेशादिसंयोगनाशः, अग्नेर्विभागश्च, तदुत्तरं भवताऽऽभ्यन्तरपरमाणोर्बाह्यपरमाणुना संयोगो वक्तव्यः, स च न सम्भवति, परमाणौ तदग्निसंयोगरूपप्रतिबन्धकस्य पूर्वं सत्त्वात्। न च परमाणुक्रिययैव तन्नाश इति वाच्यम्। परमाणुक्रियया बाह्याभिमुख्येन संयोगमुत्पादयितुं जातया नाऽग्निसंयोगो विनाशयितुं शक्यते, अभिमुखसंयोगे क्रियामात्रस्यैवाऽनाशकत्वात्, अन्यथा शराग्रसंयुक्तस्य पत्रादेः शरक्रियया विनाशप्रसङ्गात्। पत्रक्रियया तु तत्र स्यात्, तथा च प्रकृतेऽपि नाऽऽभ्यन्तरपरमाणुकर्मणाऽग्निसंयोगविनाशसम्भवः, तस्य तत्राऽऽभिमुख्यात्, अग्निकर्मणा तु स्यात्, स च तथा सति तदुत्तरक्षण एव जायत इति कथं परमाण्वोः संयोगः सम्पद्येतेति। अत एव कार्यद्रव्यारम्भदशायामारम्भकपरमाणुद्वयमध्यस्थतेजोभागस्य बहिरपसरणेन तत्र तत्र तत्तद्द्रव्यसम्मिश्रणसमये बहिस्तेजउपचयादौष्ण्यातिशयः प्रत्यक्षमुपलभ्यते, यथा पाषाणभस्मातितप्ततैलादौ जलप्रक्षेपे। विभाग-

---

*आभ्यन्तरपरमाणोर्निष्क्रियत्वाभ्युपगम इयमाशङ्का।

**निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च । तथाऽपि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेन्न । पूर्वरूपादिध्वंसस्याऽपि रूपान्तरे हेतुत्वादिति ।**

### दिनकरी ।

त्पत्तौ कर्मणः प्रतिबन्धकत्वकल्पनादिति भावः । गुणोत्पत्तिमन्तरेण कर्मानुत्पत्तौ हेतुमाह । **निर्गुण इति ।**

### रामरुद्री ।

समये च बाह्यस्य तेजसस्तन्मध्यरन्ध्रप्रवेशेनेन्द्रियसन्निकर्षागोचरतापत्तौ औष्ण्यन्यूनीभावोपलब्धिः, यथा जलावसिक्तेऽङ्गे व्यजनादिना वीज्यमाने सति प्रविभज्यमानजलावयवमध्यरन्ध्रप्रवेशिनस्तेजसः सन्निकर्षागोचरतया जलीयशैत्यातिशयविशेष उपलभ्यते । तदिमे तेजोवमनतच्छोषणे वस्त्रादिनिष्पीडनकालीनसलिलप्रवृत्तिशुष्कवस्त्रप्रक्षेपकालीनसलिलावशोषसमानयोगक्षेमे ऊह्ये इति वैज्ञानिकसमयोऽपि साधु सङ्गच्छते । वस्तुतस्तु द्व्यणुकनाशानुगुणं कर्म बाह्ये परमाणावारभताऽग्निसंयोगेनाऽऽभ्यन्तरेऽपि तदारम्भणीयमित्यभ्युपगमे तादृशस्थलविशेष एव नवक्षणप्रक्रियाभिधानम् । तदभिधानस्य तदपेक्षया न्यूनक्षणप्रक्रियाऽसम्भवद्योतनैकपरतया सर्वत्र नवक्षणासम्भवस्याऽदूषणत्वात् । ग्रन्थस्त्वित्थं व्याख्येयः— **अग्निसंयुक्ते**—निरुक्तरीत्याऽग्निक्रियाजन्याग्निसंयोगवति, **परमाणौ**—आभ्यन्तरपरमाणौ, **यत् कर्म**—अग्निदिगभिमुखं बाह्यपरमाणावग्निसंयोगकाल एव परम्परया तन्नोदनात्मककारणसहकाराज्जायमानमिति शेषः । **तद्विनाशमन्तरेण**—तादृशाभ्यन्तरपरमाणुकर्मनाशं विनेत्यर्थः । ननु माऽस्तु श्यामनाशकाले परमाणौ द्रव्यारम्भानुगुणा क्रिया, तदुत्तरक्षणे तु स्यात्, तदानीमग्नावपि तदीयवेगजनितस्य कर्मान्तरस्याऽवश्यं स्वीकरणीयतया तद्बलात् परमाणुद्वयसंयोगे प्राक्क्षणाऽग्निसंयोगनिवृत्तेः सम्भवेन प्रागुक्तदोषानवकाशादित्यत आह । **निर्गुण इति ।** द्रव्यारम्भानुगुणक्रियायां तत्तद्रूपरसादिविशेषस्यैव हेतुताया वाच्यत्वात् तदुत्पत्तिमन्तरेण तत्र द्रव्यारम्भानुगुणक्रियोत्पत्तेरसम्भवादित्यर्थः । ननु द्रव्यारम्भानुगुणक्रियायां गुणविशेषस्य हेतुत्वे मानाभावः । न च द्रव्यत्वव्याप्यव्याप्यजातेः परमाणावनङ्गीकर्तृमते दुग्धदध्यादिप्रतिनियतद्रव्योत्पादाय रूपरसादिविशेषस्यैव तत्तद्द्रव्यारम्भे नियामकत्वं वक्तव्यमिति परमाणुक्रियायां गुणस्य हेतुत्वसिद्धिः । तथा चोक्तं कुसुमाञ्जलौ 'संस्कारः पुंस एवेष्टः—'इत्यादिकारिकाव्याख्यायामुदयनाचार्यैः—'अत एव बीजविशेषस्याऽऽपरमाण्वन्तभङ्गेऽपि परमाणूनामवान्तरजात्यभावेऽपि प्राचीनपाकजविशेषादेव विशिष्टाः परमाणवस्तं तं कार्यविशेषमारभन्ते । यथा हि कलमबीजं वानरादेर्गोधीरं माहिषादेर्जात्या व्यावर्तते तथा तत्परमाणवोऽपि*—'इत्यादि । न चैवं सर्गान्तरीयद्व्यणुकादिरूपाद्युत्पादनिर्वाहाय परमाणुषु प्रलयकालेऽपि रूपाद्यभ्युपगमो न सम्भवति, तथा सति तादृशरूपाद्यात्मककारणबलादेव प्रलयकाल एव परमाणुद्वयक्रिययाऽऽरम्भकसंयोगप्रसङ्गेन तत्कालस्य कार्यद्रव्यानधिकरणकालत्वरूपखण्डप्रलयत्वव्याघातादिति वाच्यम् । कल्पान्ताग्न्यात्मकमहत्तमतेजोवेगातिशयेनैव प्रलयानुगुणपरमाणुकर्मसम्भवात् तद्बलात्तदुत्तरमपि विलक्षणवेगं स्वीकृत्य तद्बलादागमप्रसिद्धप्रलयकालावधि क्रियासन्ततिमभ्युपगम्य पुनः सर्गादिसमये परमाण्वन्तरेण सह संयोगमारब्धवतश्च तस्य वेगस्य तत एव विनाशाभ्यनुज्ञानात्, स्पर्शवत्संयोगस्य वेगनाशकतायाः सर्वसम्प्रतिपन्नत्वात् । एतावत्कालावधि च गगनादिभिरेव परमाणुषु संयोगाभ्युपगमान्न कर्मसन्तानानुवृत्तावपि किञ्चिद्बाधकम् । तादृशकर्मसन्ततिश्च विधुविधुन्तुदयोरिवाऽऽरम्भे विरुद्धदिगभिमुख्येन जाताऽपि मण्डलभ्रमिरूपपर्यवसायितया कालान्तरेण तयोः संयोगानुगुणैव पर्यवसितुमर्हतीति नाऽत्राऽनुभवविरोधोऽपि शङ्क्यः । **पूर्वरूपादिध्वंसस्येति ।** रूपाद्यभावस्येत्यर्थः । तेन यत्किञ्चित्पूर्वरूपध्वंसस्य परमाणुषु सर्वदैव सत्त्वेऽपि न पूर्वोक्तापत्तिः । एतादृशश्च कार्यकारणभाव उत्पन्नस्य पुनरुत्पादवारणाय स्वीकरणीय इत्यभिप्राय इति बोध्यम् ।

---

*कुसुमाञ्जलिः । प्रथमस्तबकः ११ कारिका ।

अथ दशक्षणा—

**सा चाऽऽरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात्। तथा हि-वह्निसंयोगात् द्व्यणुकारम्भके परमाणौ कर्म, ततो विभागः, ततः आरम्भकसंयोगनाशः, ततो द्व्यणुकनाश-विभागजवि-**

दिनकरी।

कारणमात्रविभागस्य कारणाकारणविभागजनकत्वाभावपक्ष एव परमाण्वन्तरे कर्मचिन्तनं विनैव ग्रन्थान्तरेऽष्टक्षणा प्रक्रियोक्ता, सा च निर्गुणे द्रव्यारम्भानुगुणक्रियोत्पत्तौ बाधकाभावेन रक्तोत्पत्तिक्षण एव द्रव्यारम्भानुगुणक्रियोत्पत्तिः सम्भवतीत्यभिप्रायेण समर्थनीया।

**विभागेन विभागजनन इति।** कारणमात्रविभागेन कारणाकारणविभागजनने सतीत्यर्थः।

**विभागजविभागाविति।** आरम्भकसंयोगनाशस्य तृतीयक्षण एवोत्पन्नतया चतु-

रामरुद्री।

**अथ दशक्षणेति।** यत्राऽग्निक्रिया, बाह्यपरमाणुक्रिया च, ततोऽग्निपूर्वदेशविभागो बाह्याभ्यन्तरपरमाण्वोर्द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विपूर्वदेशविभागश्च, ततोऽग्निपूर्वदेशसंयोगनाशः, बाह्याभ्यन्तरपरमाणुपूर्वदेशसंयोगनाशश्च, ततोऽग्निबाह्यपरमाणुसंयोगः, ततस्तयोः क्रियानाशः, ततोऽग्नौ स्ववेगात् तादृशवेगवदग्निसंयोगाद्बाह्यपरमाणौ तत्संयोगादाभ्यन्तरपरमाणौ च कर्माणि, ततोऽग्निपूर्वदेशविभागः, बाह्याभ्यन्तरपरमाण्वोश्च विभागः, ततोऽग्नौ पूर्वदेशसंयोगनाशः, बाह्याभ्यन्तरपरमाण्वोरारम्भकसंयोगनाशः, ततोऽग्न्याभ्यन्तरपरमाणुसंयोगो बाह्याभ्यन्तरपरमाण्वोर्विभागजविभागौ द्व्यणुकनाशश्चेत्येकः कालः १, तत आभ्यन्तरपरमाणौ श्यामनाशः, अग्नौ क्रियानाशः, बाह्याभ्यन्तरपरमाण्वोर्गगनादिसंयोगनिवृत्तिः २, तत आभ्यन्तरपरमाणौ रक्तोत्पत्तिः, अग्न्याभ्यन्तरपरमाणुविभागानुगुणाऽग्निक्रिया, बाह्याभ्यन्तरपरमाण्वोर्गगनादिनोत्तरदेशेन संयोगश्च ३, ततोऽग्न्याभ्यन्तरपरमाणुसंयोगविनाशको विभागः, बाह्याभ्यन्तरपरमाण्वोः क्रियानाशश्च ४, तत आभ्यन्तरपरमाणौ क्रियान्तरम्, अग्नेराभ्यन्तरपरमाणुसंयोगनाशः ५, ततः परमाणुद्वयस्य पूर्वदेशविभागः, अग्नेरुत्तरदेशसंयोगश्च ६, ततः पूर्वदेशसंयोगनाशः ७, ततः परस्परं संयोगः ८, ततो द्व्यणुकोत्पत्तिः ९, ततो रूपोत्पत्तिः १०, तत्र दशक्षणा प्रक्रियेत्यर्थः। नन्वत्र बाह्यपरमाणावग्निसंयोगक्षण एव कुतो नाऽऽभ्यन्तरपरमाणौ क्रिया जायत इति चेन्न। बाह्यपरमाणावग्निसंयोगो ह्युभयक्रियाजन्य एव स्वीकृतः, अन्यथा केवलाग्निक्रियाजन्यत्वे नवक्षणोक्तदोषप्रसङ्गात्, तथा च बाह्यपरमाणुकर्मणोऽवयविकर्मकालसमुत्पन्नस्य स्वीकारावश्यकतया तस्य चाऽऽभ्यन्तरसंयोगाविरोधिन एव सिद्धये आभ्यन्तरेऽपि तत्काले क्रियायाः स्वीकर्तव्यत्वात्(१) तस्याश्च बाह्ये वह्निसंयोगकालेऽपि सत्त्वात् तदुत्तरं तत्र क्रियानाश एव क्रियान्तरोदयसम्भवात्। अग्नेरन्तराले प्रवेशावश्यकतया तदानीमुत्पन्नयाऽपि तया चतुर्थक्षणे बाह्येन परमाणुना संयोगजननासम्भवादारम्भानुगुणत्वस्यैवाऽङ्गीकारानौचित्यात्, अङ्गीकारेऽपि वाऽग्निसंयोगस्य तादृशस्थले आरम्भकसंयोगविरोधित्वं स्वीकृत्य तस्या अनारम्भकसंयोगोत्पादनेनैव चरितार्थताया वक्तव्याच न दोष इत्यपि वदन्ति। अथाग्निक्रियाजन्याग्निसंयोगाभ्युपगमे पूर्वोक्तो दोषोऽत्र न दोषाय, तथा हि निश्चले बाह्ये परमाणावग्निक्रिययाऽग्निसंयोगः, ततो बाह्यपरमाणौ कर्म, अग्निक्रियानाशश्च, ततो बाह्याभ्यन्तरपरमाण्वोर्विभागः, अग्नौ क्रियान्तरं च, ततो बाह्याभ्यन्तरपरमाणुसंयोगनाशः, अग्निबाह्य

(१) क्रियाया निष्क्रियसंयुक्तद्रव्यमात्रेण सह विभागजनकत्वात्, विभागमात्रं प्रति जनकत्वे सक्रियेण शरसंयुक्तजलादिनाऽपि सह विभागप्रसङ्गादिति भावः। विवेचयिष्यते चैतदुपरिष्टात्।

भागो १, ततः श्यामनाश-पूर्वसंयोगनाशौ २, ततो रक्तोत्पत्त्युत्तरसंयोगौ ३, ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः ४, ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणा क्रिया ५, ततो विभागः ६, ततश्च पूर्वसंयोगनाशः ७, तत आरम्भकसंयोगः ८, ततो द्व्यणुकोत्पत्तिः ९, ततो रक्तोत्पत्तिः १० । -इति दशक्षणा ।

अथैकादशक्षणा—

वह्निसंयोगात् परमाणौ कर्म, ततो विभागः, ततो द्रव्यारम्भकसंयोग-

दिनकरी ।

र्थक्षणे परमाण्वाकाशविभागः सम्भवतीति भावः । ततः श्यामनाशपूर्वसंयोगनाशाविति । परमाणुश्यामनाशपरमाण्वाकाशसंयोगनाशावित्यर्थः । परमाणुश्यामनाशं प्रति द्व्यणुकनाशस्य हेतुत्वात् पूर्वं परमाणुश्यामनाशासम्भवादिति भावः । रक्तोत्पत्त्युत्तरसंयोगाविति । उत्तरसंयोगं विना पूर्वकर्मणो नाशासम्भवेन द्रव्यारम्भानुगुणक्रियानुत्पत्तिरिति भावः । एवमग्रेऽपि ।

रामरुद्री ।

परमाणुविभागश्च, ततो द्व्यणुकनाशः, बाह्याभ्यन्तरयोर्विभागजविभागः, अग्निबाह्यपरमाणुसंयोगनाशश्च, तदुत्तरं श्यामनाशो न स्यात्, आभ्यन्तरपरमाणौ तत्रैतावदवध्यग्निसंयोगविरहादित्येव हि दूषणमुक्तं प्राक्, तच्च प्रकृते न सम्भवति, एवमपीह दशक्षणाया अक्षतत्वात्, तदुत्तरकालोत्पन्नाग्निसंयोगेन श्यामनाशसम्भवादिति । न चेष्टापत्तिः, तथा सति मूलोक्तप्रक्रियाविरोधप्रसङ्गादिति चेन्न । तथा सति विभागजविभागाङ्गीकाराद्दशक्षणात्वस्य तत्र निर्देष्टुमशक्यत्वात्, विभागजविभागानङ्गीकारेऽपि पूर्वोक्तरीत्या दशक्षणप्रक्रियासम्भवादिति यादृशस्थलविशेषे विभागजविभागमङ्गीकृत्यैव सोपपाद्यते तस्यैव ग्रन्थकृताऽभिहितत्वात् ।

अथैकादशक्षणेति । यत्राऽग्निक्रिया, बाह्यपरमाणोरारम्भकसंयोगाविरोधिनी क्रिया, ततस्तयोः पूर्वदेशविभागः, ततः पूर्वं संयोगनाशः, ततो बाह्यपरमाण्वग्निसंयोगः, ततोऽग्निबाह्यपरमाण्वोः क्रियानाशः, ततो बाह्यपरमाणावाभ्यन्तरपरमाणौ चाऽऽरम्भकसंयोगप्रतिद्वन्द्विविभागानुगुणक्रिया, अग्नौ च क्रियान्तरं, ततो बाह्याभ्यन्तरपरमाण्वोर्विभागः, अग्निबाह्यपरमाण्वोर्विभागश्च, ततो बाह्याभ्यन्तरपरमाण्वोरारम्भकसंयोगनाशः, अग्नौ च बाह्यपरमाण्वादिसंयोगनाशः, ततो द्व्यणुकनाशः, आभ्यन्तरपरमाण्वग्निसंयोगश्च १, ततोऽऽग्निक्रियानाशः, आभ्यन्तरपरमाणौ श्यामरूपनाशः, बाह्याभ्यन्तरपरमाण्वोर्विभागजविभागश्च २, ततोऽग्नौ क्रियान्तरम्, आभ्यन्तरपरमाणौ रक्तोत्पत्तिः, बाह्याभ्यन्तरपरमाण्वोः पूर्वदेशसंयोगनाशौ ३, ततोऽग्न्याभ्यन्तरपरमाणुविभागः, बाह्याभ्यन्तरपरमाण्वोरुत्तरदेशसंयोगौ च ४, ततोऽग्न्याभ्यन्तरपरमाणुसंयोगविनाशः, बाह्याभ्यन्तरपरमाण्वोः क्रियानाशश्च ५, ततोऽग्निबहिर्देशसंयोगः, बाह्याभ्यन्तरपरमाण्वोर्द्रव्यारम्भानुगुणा क्रिया च ६, ततः पूर्वदेशविभागः ७, ततः पूर्वदेशसंयोगविनाशः ८, ततः परस्परं संयोगः ९, ततो द्व्यणुकोत्पत्तिः १०, ततो रूपोत्पत्तिः ११, तत्रैकादशक्षणा प्रक्रिया बोध्येति भावः । नन्वत्र बाह्यपरमाणावुभयक्रियाजन्यवह्निसयोगाभ्युपगमो निर्युक्तिकः, अत्र दशक्षणप्रक्रियोक्तदूषणानवतारात्, तथा हि तत्र विभागजविभागस्य क्षणत्रिलम्बकत्वानुपपत्तिरेव दूषणं दत्तम् । अत्र तु न तत् । अत्र विभागजविभागमनङ्गीकृत्यैकादशक्षणप्रक्रियोपपादनासम्भवात्, तदनङ्गीकारे दशक्षणायामेव विश्रामादिति चेन्न । अत्र तथाविधस्थलानभ्युपगमे एकादशक्षणप्रक्रियाया एवोच्छेदापत्तेः । तथा हि अग्निसंयोगाद्बाह्यपरमाणौ कर्म, अग्निकर्मनाशश्चेत्येकः कालः, अथ बाह्याभ्यन्तरपरमाण्वोर्विभागः, अग्नौ कर्मान्तरं च, अथ बाह्याभ्यन्तरपरमाणुसंयोगविनाशः, अग्नेर्विभागश्च, अथ द्व्यणुकनाशः, अग्नेः पूर्वसंयोगनाशश्च, अथाऽऽभ्यन्तरपरमाण्वग्निसंयोगः, बाह्यपरमाणौ विभागजविभागश्च, अथाऽऽभ्यन्तरपरमाणौ श्यामनाशः, बाह्यपरमाणौ पूर्वदेशसंयोगविनाशः, अथाऽऽभ्यन्तरपरमाणौ रक्तोत्पत्तिः, बाह्यपरमाणावु-

**नाशः, ततो द्व्यणुकनाशः १, ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभाग-श्यामनाशौ २, ततः पूर्वसंयोगनाश-रक्तोत्पत्ती ३, तत उत्तरदेशसंयोगः ४, ततो वह्निनोदनजन्यपरमाणुकर्मनाशः ५, ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणा क्रिया ६, ततो विभागः ७, ततः पूर्वसंयोगनाशः ८, ततो द्रव्यारम्भकोत्तरसंयोगः ९, ततो द्व्यणुकोत्पत्तिः १०, ततो रक्ताद्युत्पत्तिः ११ ।** इत्येकादशक्षणा ।

**मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशोत्पादौ, तावत्कालमेकस्याऽ-**

दिनकरी ।

अत्र य एवाग्निसंयोगो द्व्यणुकनाशकः स एव श्यामनाशे रक्तोत्पादे च हेतुरिति केषाञ्चिन्मतं 'पुनरग्न्यन्तरसंयोगात्*–'इति भाष्यविरुद्धं नाऽऽदरणीयमित्यभिप्रेत्याह । **मध्यमशब्दवदिति । एकस्मादिति ।** द्व्यणुकनाशकादेकस्मादित्यर्थः । यथा मध्यमशब्दात् पूर्वशब्दनाशोत्तरशब्दोत्पादौ भवतस्तथैकस्मात् द्व्यणुकनाशकादग्नि संयोगाच्छ्यामनाशरक्तोत्पादौ न भवत इति व्यतिरेके दृष्टान्तः । **तावत्कालमिति ।** श्यामनाशोत्पत्त्यव्यवहितपूर्वक्षणपर्यन्तमित्यर्थः । **अग्नेः**—द्व्यणुकनाशकाग्निसंयोगस्य । **एवमग्रेऽपि ।**

रामरुद्री ।

त्तरदेशसंयोगश्च, अथाऽऽभ्यन्तरपरमाणौ द्रव्यारम्भानुगुणं कर्म स्यात्, बाधकाभावात्, एवं तत्क्षण एव बाह्यपरमाणौ क्रियानाशश्च, अथाऽऽभ्यन्तरपरमाणौ पूर्वदेशविभागः, बाह्यपरमाणौ कर्मान्तरं च, अथाऽऽभ्यन्तरपरमाणौ पूर्वदेशसंयोगविनाशः, बाह्यपरमाणौ पूर्वदेशविभागश्च, अथ बाह्यपरमाणुनाऽऽभ्यन्तरपरमाणोः संयोगः, बाह्यपरमाणोश्च पूर्वदेशसंयोगनाशः, अथ द्व्यणुकोत्पत्तिः, आभ्यन्तरपरमाणौ क्रियानाशः, बाह्यपरमाणोरुत्तरदेशसंयोगश्च, अथ रक्तोत्पत्तिः, बाह्यपरमाणुक्रियानाशश्चेति दशक्षणायामेव पर्यवसानात्, अस्मन्मते तु बाह्याभ्यन्तरयोरुभयोरपि परमाण्वोः, सक्रियतया वह्निसंयोगाव्यवहितोत्तरक्षणे बाह्यपरमाणौ न कर्मसम्भवः, पूर्वं प्रतिबन्धकस्य कर्मणः सत्त्वात्, तन्नाशे तु स्यादित्यस्मन्मते न काचिद्धानिः ।

ननु अग्निबाह्यपरमाण्वोः पूर्वोक्तरीत्या संयोगानन्तरं क्रियानाशश्यामविनाशौ, ततोऽग्निबाह्यपरमाण्वोः क्रियान्तरम्, बाह्यपरमाणौ रक्तोत्पादश्च, ततो बाह्यपरमाणोराभ्यन्तरपरमाणुनाऽग्निना च विभागः, ततो बाह्याभ्यन्तरपरमाणुसंयोगनाशः, अग्नेश्च पूर्वसंयोगनाशः, ततो द्व्यणुकनाशः, अग्न्याभ्यन्तरपरमाणुसंयोगः, बाह्यपरमाणूत्तरदेशसंयोगः, तत आभ्यन्तरपरमाणौ श्यामादिविनाशः, बाह्यपरमाणावग्नौ च क्रियानाश इति नः समानमेवाऽऽस्ताम्, तथा च 'तदुत्तरक्षणे बाह्यपरमाणौ द्व्यणुकारम्भिका क्रिया किमिति त्वया नोपेयते ? तत्कारणस्य पाकजरूपादेस्तत्र सत्त्वात्, इष्टापत्तौ च तदनन्तरं क्रियाविभागादिक्रमेण द्व्यणुकतद्रूपयोरुत्पादादष्टक्षणैव प्रक्रिया स्यादित्यत आह । **मध्यमेत्यादि ।** इत्थञ्च यादृशस्थले आन्तरपरमाणौ रूपान्तरोत्पत्तिसमकालमेव बाह्यपरमाणावपि रूपान्तरोत्पत्तिः, तादृशस्थल एव नवक्षणा प्रक्रिया । न चाऽग्निसंयोगात्मकहेतोः सत्त्वात्तादृशस्थले तत्तृतीयक्षणे रूपान्तरोत्पादोऽवर्जित इति वाच्यम् । बाह्यपरमाणुसंयोगसमकालमुत्तरकालमेव वा(१)ऽग्नेर्नाशाभ्युपगमे तदुत्तरं रक्तोत्पादकहेतुविघटनादेव तद्वारणसम्भवादिति । नन्वेवमाभ्यन्तरपरमाणौ बाह्यस्याऽग्नेः संयोगो द्व्यणुकनाशसमये न स्यात्, बाह्यस्या-

---

* प्रशस्तपादभाष्यम् । गुणग्रन्थे पाकजविधिनिरूपणम् ।

(१) श्यामनाशक्षणेऽग्नेर्नाशाभ्युपगमे तत्काले सहकार्यन्तरात्मकस्योष्णस्पर्शस्य स्वाश्रयसंयुक्तस्वरूपपरम्परया कार्याधिकरणेऽवस्थानायोगादेव रक्तोत्पादापत्तेः परिहर्तुं शक्यत्वादिति भावः ।

**ग्नेरस्थिरत्वात् । किं च नाशक एव यद्युत्पादकस्तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात्,**

## दिनकरी ।

**अस्थिरत्वादिति ।** यदा परमाणावग्निसंयोगात् द्व्यणुकासमवायिकारणसंयोगविनाशकं परमाणौ कर्म तदैव नोदनाभिघातान्यतरात्मकस्याऽग्निपरमाणुसंयोगस्य जनकं यदग्निकर्म तस्य विनाशः, कर्मणः स्वजन्यसंयोगविनाश्यत्वात्, तदुत्तरक्षणे पुनरग्नौ कर्म, कारणीभूतवेगाभिघातादेः स्वसमानाधिकरणकर्मध्वंसरूपसहकारिणश्च सत्त्वात्, ततो विभागः, ततो द्व्यणुकनाशसमकालमग्निपरमाणुसंयोगस्य नाशेन श्यामरूपोत्पत्त्यव्यवहितपूर्वक्षणपर्यन्तं तस्याऽस्थिरत्वादिति भावः । ननु मास्तु द्व्यणुकनाशसमकालमग्निसंयोगस्य परमाणुश्यामनाशकत्वं रक्तोत्पादकत्वं च, परं तु द्व्यणुकनाशसमकालोत्पन्नाग्न्यन्तरसंयोगस्य परमाणौ श्यामनाशकत्वं रक्तोत्पादकत्वं चाऽस्तु । न च श्यामनाशकतावच्छेदकरक्तोत्पादकतावच्छेदकजात्योः साङ्कर्यापत्तिरिति वाच्यम् । उत्पादकतावच्छेदकजातेर्नाशकतावच्छेदकजातिव्याप्यत्वोपगमादत आह । **किं चेति । नाशक एव यद्युत्पादक इति ।** एवकारेण नाशकतावच्छेदकवद्भिन्नावृत्तित्वरूपा व्याप्तिरुत्पादकतावच्छेदके लभ्यते, तथा च यद्युत्पादकतावच्छेदकं नाशकतावच्छेदकव्याप्यं तदेत्यर्थः । **नष्टे रूपादौ**—रूपपरम्परायां नष्टायाम् । **अग्निनाशे**—चरमाग्निसंयोगनाशे । परमाणौ पाकेन रूपोत्पत्तिस्थले प्रथमाग्नि-

## रामरुद्री ।

ऽग्नेर्विनष्टत्वात्, बाह्यपरमाणौ तत्कालानन्तरोत्पन्नाग्न्यन्तरसंयोगमभ्युपगम्य तदग्नेः क्रियाविभागादिक्रमेण संयोगाभ्युपगमे क्षणविलम्बादिति वाच्यम् । अग्न्यन्तरक्रियाधीनस्यैव तत्स्थलीयद्व्यणुकनाशसमकालीनाभ्यन्तरपरमाण्वग्निसंयोगस्य स्वीकारात् । नन्वेतादृशस्थलेऽग्निसंयोगनाशो नाऽभ्युपगन्तुं शक्यः, अन्यथा बाह्यपरमाणौ पुना रक्तोत्पादानुपपत्तेः, श्यामनाशकस्यैवाऽग्निसंयोगस्य रक्तोत्पादकत्वावधारणादित्यत आह । **किं चेति ।** क्वचित् श्यामनाशकस्य तेजःसंयोगस्य पाकहेतुत्वावधारणेऽपि न तस्य श्यामनाशकतेजःसंयोगत्वेन रक्तादिकं प्रति हेतुत्वं, येनोक्तापत्तिः स्यात्, अपि तु विलक्षणोष्णस्पर्शवदग्निसंयोगत्वेन, निरुक्तस्थले च तत्सम्भवान्न रक्तरूपोत्पादानिर्वाहः। अन्यथा विलक्षणोष्णस्पर्शवदग्निसंयोगस्य विलक्षणोष्णस्पर्शस्य च पाकहेतुत्वावश्यकतया यत्र श्यामनाशक्षण एवाऽग्निविनाशस्तादृशस्थले रक्तरूपोत्पादानुपपत्तिः, तत्पूर्वक्षणेऽग्निविनाशेन तद्धटितेन सामानाधिकरण्यसम्बन्धेनोष्णस्पर्शवत्त्वस्याऽग्निसंयोगेऽसम्भवेन हेतुभूतस्य विलक्षणोष्णस्पर्शवदग्निसंयोगस्य तथाविधेनैव परम्परासम्बन्धेनोष्णस्पर्शस्याऽपि च कार्याधिकरणेऽसम्भवात् । यद्यपि विजातीयतेजःसंयोगत्वेनैव पाके हेतुत्वं, विजातीयसंयोगं प्रत्येव चोष्णस्पर्शादेः कार्यकालीनतयाऽग्निसंयोगस्य च हेतुत्वमभ्युपगम्यते इत्युपगमे न प्रकृतदोषसम्भावना, तथाऽपि 'प्रक्षालनाद्धि—' इति न्यायेन विजातीयतेजःसंयोगत्वेन हेतुत्वस्वीकार एवाऽनुचितः, प्रकृतस्थले नाशोपहितस्योत्पादहेतुत्वाकल्पनमात्रेणैव सर्वसामञ्जस्यादिति न कोऽपि दोष इति भावः । एतेन नष्टे रूपादावग्निनाशे नीरूपतापादनमयुक्तम्, असमवायिकारणीभूतस्याऽग्निसंयोगस्य कार्यसमकालं रूपान्तरोत्पत्तिहेतुत्वं स्वीकृत्यैव प्रकृते तदसम्भवस्य वक्तव्यतया तदनङ्गीकारमात्रेणैव निरुक्तदोषवारणादिति प्रत्युक्तम् । **नाशक एवेति ।** नाशोत्पत्त्युपलक्षित इत्यर्थः । **चिरमिति ।** श्यामनाशकालादारभ्य क्षणत्रयमित्यर्थः । तृतीयक्षणभाव्यग्न्यन्तरसंयोगादेव चतुर्थे रूपान्तरोत्पत्तिमुत्तरकालं तन्नाशे रूपान्तरोत्पत्तिं च स्वीकृत्य परमाणौ रूपसम्पत्तेरिति भावः । ननु रूपोत्पादकस्यैव तेजःसंयोगस्य रूपनाशकत्वमित्येव ।नियम आस्ताम्, इत्थं च निरुक्तस्थले रूपानुत्पादे श्यामनाशोऽपि न सम्भवतीति तादृशरूपारम्भककारणबलादेव बाह्यपरमाणावारम्भकसंयोगानुगुणक्रियोत्पत्त्या नवक्षणप्रक्रि-

**उत्पादकश्चेन्नाशकः, तदा रक्तोत्पत्तौ तदग्नेर्नाशे रक्ततरता न स्यात् ।**

**दिनकरी ।**

संयोगादिना रूपोत्पत्तिस्तेनैव रूपनाशः पुनरग्निसंयोगानन्तरं पुना रूपोत्पत्तिसम्भवेऽपि चरमाग्निसंयोगोत्तरं तेन रूपोत्पादेन तद्रूपस्य तेनैवाग्निसंयोगेन नाशसम्भवात् तदग्निसंयोगस्यापि नाशे रूपान्तरोत्पादासम्भवेन नीरूपश्चिरं परमाणुः स्यादित्यर्थः । न च चरमाग्निसंयोगेन विनश्यदवस्थेनैव रूपोत्पत्तिस्तदुत्तरक्षणे च न तद्रूपनाशः, पूर्वक्षणेऽग्निसंयोगाभावादिति वाच्यम् । असमवायिकारणस्य कार्यसहभावेनैव हेतुताया न्यायवैशेषिकसिद्धतया विनश्यदवस्थेन रूपोत्पादासम्भवादिति । परमाणुरिति वैशेषिकमताभिप्रायेण, न्यायनये पूर्वोक्तरीत्या घटादेरपि नीरूपत्वप्रसङ्गो बोध्यः । ननु रक्तोत्पादकतावच्छेदकवैजात्यं श्यामनाशकतावच्छेदकवैजात्यव्याप्यमिति न ब्रूमः, परं तु वैजात्ययोरभेदं, तेन न साङ्कर्यमत आह । **उत्पादकश्चेदिति ।** चेन्नाशक उत्पादक इति योजना । नाशकतावच्छेदकमेव यद्युत्पादकतावच्छेदकं, तदेत्यर्थः । **रक्ततरता न स्यादिति ।**

**रामरुद्री ।**

याहानिरित्थमपि दुर्वारैव । यद्यपि तादृशस्थलेऽपि द्व्यणुकनाशसमकालमेव बाह्यपरमाणावपि दहनसंयोगान्तरं स्वीकृत्य तदुत्तरमेव श्यामनाशरक्तोत्पत्योः क्रमेण स्वीकारे पूर्वोक्तापत्तिर्न सम्भवति, तथाऽपि बाह्याभ्यन्तरयोरारम्भकसंयोगविरोधिविभागारम्भानुगुणकर्मजनके दहनसंयोगे श्यामनाशरक्तोत्पादस्वरूपयोग्यतायास्तादृशविलक्षणोष्णस्पर्शवद्वह्निप्रतियोगिकसंयोगत्वेनाऽनपेततया तादृशकर्मारम्भार्थं तत्स्वीकारे तदुत्तरक्षणे श्यामनाश एवाऽनुभवसिद्धः,क्षणिकस्य चाग्निसंयोगस्य न कल्पनसम्भवः,कार्योत्पत्तिसमकालं समवायिकारणविनाशाङ्गीकारेण क्षणिकत्वोपपादने प्रागुक्तयुक्त्या कार्योत्पत्तेस्तद्विनाशस्य चाऽसम्भवात्, विरोधिगुणान्तरस्य च कल्पयितुमशक्यतया न ततोऽपि तस्य क्षणिकत्वं सम्भावयितुं शक्यम् । न चैवमग्निसंयोगस्याक्षणिकत्वे तद्बलात्तृतीयक्षणे रक्तोत्पादोऽप्यवर्जित इति नवक्षणप्रक्रियाव्याहतिर्दुरुद्धरैवेति वाच्यम् । तत्तृतीयक्षणेऽग्निनाशेनाऽसमवायिकारणस्य कार्यकाले विरहेण तदसम्भवात् । नचैवं द्वितीयक्षणे तदभ्युपगमे श्यामनाशोऽपि मा भवत्विति वाच्यम् । तथा सति श्यामरूपबलादेव द्व्यणुकनाशतृतीयक्षणे क्रियोत्पादप्रसङ्गात् । न च द्व्यणुकनाशसमये श्यामनाशकाग्निसंयोगान्तरस्याऽपि तत्र कल्पनीयतया न पूर्वोक्तापत्तिसम्भव इति वाच्यम् । तथा सति बाह्यपरमाणावग्निसंयोगद्वयस्वीकारे महागौरवप्रसङ्गात् । न च सिद्धान्तेऽपि बाह्यपरमाणौ रक्तोत्पादायाऽग्निसंयोगान्तरं स्वीकर्तव्यमेवेत्येतादृशं गौरवमुभयोरपि समानमेवेति वाच्यम् । उक्तफक्किकायं कस्मादग्निसंयोगात् परमाणुकर्मश्यामनाशरक्तोत्पादरूपकार्यत्रितयोत्पत्तेरेव मुख्यतया प्रतिषेद्धव्यत्वेन परमाणुकर्मजनकश्यामनाशकयोरग्निसंयोगयोर्भेदोपगमेऽप्यस्मन्मतप्रवेशसम्भवात् । अत एव प्राचीनग्रन्थेषु एकस्मादग्निसंयोगान्न परमाणुकर्मश्यामनाशरक्तोत्पादाः, किन्तु भिन्नभिन्नेनैवेति लिखितम् । इत्थमपि उत्पादकस्यैव नाशकत्वमिति मते निरुक्तरीत्या श्यामनाशवारणं न सम्भवति, तन्मते श्यामादिनाशं प्रति रूपोत्पत्त्युपलक्षिताग्निसंयोगत्वेनाऽऽरम्भकसंयोगविरोधिविभागजनककर्मारम्भेऽपि तथाविधस्यैवाऽग्निसंयोगस्य हेतुत्वमभ्युपगम्यते, लाघवात्, युक्तेस्तौल्याच्च, न तु विलक्षणोष्णस्पर्शवदग्निसंयोगत्वादिना तथा, कार्यकारणभावत्रयकल्पने गौरवप्रसङ्गात्, इत्थं च तन्मते वह्निसंयोगात् परमाणौ कर्मैव नोत्पत्तुमर्हतीत्यभिप्रायो बोध्यः । न च विनिगमनाविरहात् रूपनाशं प्रत्येव विलक्षणोष्णस्पर्शवदग्निसंयोगत्वादिना हेतुत्वस्वीकारावश्यकत्वे तादृशकार्यकारणभावत्रयस्याऽवश्यमङ्गीकार्यत्वे रूपोत्पादकत्वादिना हेतुत्वमेवाऽऽधिक्येन कल्पनीयतया गौरवावहमिति खण्डितं भविष्यतीति वाच्यम् । तादृशहेतुत्वस्याऽऽपाततः शङ्काविषयतां स्वीकृत्यैवोक्तग्रन्थस्याऽवतारणीयत्वादित्यत आह । **उत्पादकश्चेदिति । रक्ततरता न स्यादिति ।** यादृशस्थलविशेषे क्षणिकेनाऽग्निसंयोगेन रक्तरूपं विनाश्य तदनन्तरोत्पन्नेनाऽग्निसंयोगान्तरेण रक्ततररूपमुत्पादितम्,

रामरुद्री ।

तत्र रक्तरूपविनाशानुपपत्तिः, रक्तोत्पादकस्याऽग्निसंयोगस्य विरहादित्येव परमार्थः । चणिकेनाऽग्निसंयोगेन श्यामनाशोत्तरमग्निसंयोगान्तरेण रक्तरूपोत्पादमुपजीव्य तादृशस्थले प्रथमस्याऽग्निसंयोगस्य रक्तोत्पत्त्यनुपलक्षिततया ततः श्यामनाशानुपपत्तौ रक्तिमानुपपत्तेरेव प्रदर्शनीयत्वावश्यकत्वेऽपि तादृशापत्तिर्द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागानुगुणकर्मवति परमाणौ पूर्वोक्तरीत्या प्रदर्शयितुं न शक्यते, प्रागुक्तरीत्या तादृशविभागानुगुणक्रियां प्रत्यपि रूपोत्पत्त्युपलक्षिताग्निसंयोगस्य हेतुत्वावधारणात् तत्स्थले प्रथमाग्निसंयोगतो रक्तिमानुत्पादे तदुपलक्षिताग्निसंयोगात्मककारणविरहात्तत्र द्रव्यारम्भकसंयोगविरोधिविभागानुगुणं कर्माऽपि न स्यात्, कारणाभावादिति तत्राऽग्निसंयोगस्यैकस्यैव स्वीकारावश्यकत्वे श्यामनाशस्योक्तस्थलेऽवाधितत्वात्, तादृक्कर्मरहितेऽपि च परमाणौ रक्तानुपपत्तिर्न प्रदर्शयितुं शक्या, उक्तस्थलस्य केवलपरमाणुपाकस्थलात्मकत्वे तत्र प्रथमक्षणे श्यामनाशोत्पादानुत्पादयोः प्रत्यक्षागोचरतया तदनुत्पत्त्यापत्तेः कर्तुं शक्यत्वात्, अवयविपाकस्थलात्मकत्वेऽपि न प्रथमरूपात्मकश्यामनाशोत्तरं रक्तरूपानुपपत्तेरिष्टत्वोक्तदोषासम्भवात्, रक्तोत्पादकाग्निसंयोगत्वादिना श्यामनाशस्थानापन्नप्रथमरूपनाशं प्रति हेतुत्वाभ्युपगन्तृनये तुल्ययुक्त्या परमाणुक्रियाविशेषोत्पादकाग्निसंयोगत्वादिना तद्रूपनाशकताया अपि विनिगमकाभावेन प्रतिक्षेप्तुमशक्यत्वादित्यतो 'रक्तता न स्यात्—'इत्यनुक्त्वा **'रक्ततरता न स्यात्'** इत्युक्तम् । श्यामादिविनाशस्थानापन्नप्रथमरूपनाशं प्रति तादृशक्रियोत्पादकाग्निसंयोगस्यैव हेतुत्वस्वीकारसम्भवेऽपि रक्तविनाशस्योदीच्यतया तत्र तादृशाग्निसंयोगत्वेन हेतुत्वं न स्वीक्रियते, अस्वतन्त्रेष्वेव परमाणुषु पाकोत्पादस्य पीलुपाकवादिनामननुमततया तद्भञ्जनाय प्रथमरूपनाशादर्वाक् तत्संयोगविरोधिकर्मोत्पादस्याऽऽवश्यकत्वेऽपि सकृत् स्वतन्त्रतामापन्नेषु तेषु रूपान्तरविनाशारम्भे क्रियान्तरारम्भकत्वेनाऽग्निसंयोगस्य हेतुताकल्पनाया युक्तिविरुद्धत्वात्, प्रथमाग्निसंयोगजन्यक्रियावति परमाणौ अग्निसंयोगपरिवृत्तावपि श्यामनाश–रक्तोत्पाद–रक्तनाश–रक्ततरोत्पत्तीनामनुभवसिद्धानां तादृशकर्मारम्भकाग्निसंयोगत्वादिना हेतुत्वस्वीकारेऽपलापप्रसङ्गाच्चेति द्वितीयरूपस्थानापन्नरक्ततररूपानुपपत्त्याशङ्कनं न सन्दर्भं विरुणद्धीति । तत्राऽपि पूर्वोक्तरीत्या रक्तविनाशानुपपत्तेरेव प्रदर्शनीयत्वेऽपि तामतिक्रम्य रक्ततररूपानुपपत्तिप्रदर्शनमिष्टापत्तिशङ्काव्युदासार्थम्, रक्तरूपनाशानुपपत्तेरिष्टापत्त्या स्वीकारेऽनुभवसिद्धरक्ततररूपानुपपत्तेरेव प्रदर्शनीयत्वादिति विभावनीयम् । इदमुपलक्षणम् । विलक्षणोष्णस्पर्शवदग्निसंयोगत्वेन रक्तरूपं प्रति हेतुत्वस्य त्वयाऽपि वाच्यतया प्रागुक्तयुक्त्या विनिगमनाविरहेण कार्यकारणभावत्रयस्य परमाणुकर्मश्यामनाशरक्तादिनिरूपितस्याऽप्यवश्यकल्पनीयत्वे रक्तोत्पत्त्युपलक्षिताग्निसंयोगत्वादिना परमाणुकर्मश्यामनाशादिकं प्रति हेतुत्वे मानाभाव एवेति न त्वदुक्तो दोषः सम्भवति, अन्यथा तुल्ययुक्त्या परमाणुकर्मारम्भकत्वश्यामादिनाशकत्वादिधर्मपुरस्कारेण कार्यकारणभावान्तरकल्पनाप्रसङ्गादिति दूषणान्तराण्यप्युन्नेयानि ।

एतेन 'एकस्यैवाऽग्निसंयोगस्य द्व्यणुकनाशानुगुणक्रियायाः श्यामादिविनाशस्य रक्तादेस्तद्विनाशस्य रक्तान्तरस्य च हेतुत्वमस्तु, विरोधविरहात् । तथा हि—अग्निसंयोगाद्यदा परमाणौ क्रिया तदैवाग्निक्रियानाशश्यामनाशौ, अथाऽग्निक्रियान्तरपरमाणुद्वयविभागरक्तोत्पादाः, अथाऽग्निपरमाणुविभागपरमाणुद्वयसंयोगनाशरक्तनाशाः, अथाऽग्निपरमाणुसंयोगनाशद्व्यणुकनाशौ रक्तान्तरं च । पूर्वस्त्वग्निसंयोगो न तन्नाशकः, नष्टत्वात्, अस्तु चान्त्यशब्दानामिव रूपादीनामपि केषाञ्चित् क्षणिकत्वम्, कार्याव्यवहितपूर्ववर्तितामात्रेण सम्भवत्कारणभावस्याऽसमवायिकारणस्य नियमेन कार्यकालसत्त्वं नोपेयते, उपेयते तु समवायित्वान्यथानुपपत्त्या समवायिकारणस्य । न चैवमविनश्यदवस्थावयविरूपादीनामवयवरूपादिकालमात्रवृत्तितानियमभङ्गप्रसङ्गः, तादृशनियमे मानाभावात्, एकपरमाणुपाके पुनरजागलस्तनायमानो दैवतशसम्पन्नः कार्यद्रव्यावष्टम्भविरहो न रूपविनाशोत्पादप्रयोजकः, मानाभावात् । न च सर्वदिगवच्छेदेनाऽग्निसंयोग एव पाकनिमित्तम्, परमाण्वन्तरावष्टम्भे च परमाणौ न तत्सम्भवः, मूर्तयोः समानदेशताविरोधादिति वाच्यम् । मानाभावात्, निबिडयोरेव तथा विरोधात्, हस्तसंयुक्ते शिलातलादौ शीतत्वोष्णत्वयोरुपलम्भेन तोयतेजसोः सत्त्वोपगमात् । अस्तु वा एकस्मादग्निसंयोगात्

दिनकरी।

अयं भावः, रूपनाशकतावच्छेदकं विलक्षणाग्निसंयोगत्वं, तदेव यद्युत्पादकतावच्छेदकं, तदा कार्यतावच्छेदकमपि सामान्यतः पृथिवीपरमाणुरूपत्वं त्वया वाच्यं, तथा सति क्वचिद्रक्ततरता क्वचिच्च रक्ततमता परमाणौ न स्यात्, कार्यवैचित्र्यस्य कारणतावच्छेदकभेदाधीनत्वादिति भावः। इदं च पूर्वरूपनाशकाग्निसंयोगमात्रस्योत्तररूपहेतुत्वमित्यभिप्रायेण 'पुनरन्यस्मादग्निसंयोगात्'इतिभाष्यानुरोधेन चोक्तम्। वस्तुतो रक्ततारतम्यस्य पूर्वरूपविशेषध्वंसकृतत्वाद्भाष्यस्य द्व्यणुकनाशकाग्निसंयोगापेक्षयाऽन्यपरत्वादुत्पादकविनाशकयोरग्निसंयोगयोरेकत्वानेकत्वेऽनियम एवेति ध्येयम्।

रामरुद्री।

परम्परया द्व्यणुकविनाशः, अन्यस्माच्च श्यामादिविनाशादिकम्, अस्तु वा वह्निसंयोगस्य पूर्ववर्तिनां स्वाजन्यानां रूपादीनां नाशकत्वम्, द्वितीयादेरिव शब्दस्य शब्दान्तराणाम्, अन्यथा तृतीयादिशब्दानां क्षणिकत्वप्रसङ्गात्, अन्त्यस्तु शब्दो नोपान्त्यस्य नाश्यः, अपि तु तन्नाश्यस्य। अधिकमभिहितं प्राक्। एवं च न कस्याऽपि क्षणिकत्वमिति। यस्य चाऽसमवायिकारणस्य नाशात् कार्यस्य नाशः, प्रतिबन्धकाभावविशेषस्यैव तस्यापि कार्यकालसत्त्व एव कार्योत्पादकत्वम्, तेन नैकस्याऽपि द्रव्यस्य परत्वस्य वा क्षणिकत्वमिति(१)–'इति दीधितिकृदुक्तिः परास्ता। तथा हि–प्रथमं तावत् तत्र एकस्यैवाऽग्निसंयोगस्य तत्त्रितयहेतुत्वाशङ्काऽभ्युपगमवादेनैव 'पुनरन्यस्मादग्निसंयोगात्(२)–'इत्यादिभाष्यफक्किकोपरि कर्तव्या, एकस्मादप्यग्निसंयोगात् प्रक्रियोपपादनसम्भवे किमिति अनपेक्षितं 'पुनरन्यस्मात्–'इत्यादिकं व्यलिखद्भाष्यकार इत्येव तदभिप्रायोऽपि वर्णनीयः, न त्वेकस्मादग्निसंयोगाच्छ्यामनाशरक्ताद्युत्पादादिकं वस्तुतः सिद्धान्तिनामनुमतमिति वक्तुं शक्यम्, तथा सति रूपोत्पादकाग्निसंयोगत्वेन रूपनाशे रूपनाशकत्वेन च रूपोत्पादे हेतुत्वस्य वक्तव्यतया रक्तरूपोत्पत्तौ सत्यामुत्तरक्षणेऽग्निनाशाधीनतत्संयोगनाशस्थले तस्य परमाणोश्चिरकालं नीरूपतापत्तेः तदनन्तररूपान्तरोत्पादानुपपत्तेश्च ग्रन्थकृदभिहितदोषस्य दुरुद्धरत्वात्, किं तु अग्निसंयोगवैलक्षण्यं तत्र तत्र स्वीकरणीयमेव, द्व्यणुकनाशश्यामनाशानुगुणतेजःसंयोगयोर्भेदस्त्वत्यावश्यक इत्यस्माभिरपि नानुमन्यते, भाष्यकारेणाऽपि श्यामनाशकथनानन्तरमग्निसंयोगान्तरं ब्रुवता स्वीकृत इवाऽयमर्थ इत्यपि स्फुटमेव। तथा च अस्मदुक्तदिशाऽऽभ्यन्तरपरमाणौ रक्तोत्पत्तिसमये बाह्यपरमाणावारम्भकक्रियोत्पत्तिमाशङ्क्यैव 'अध्यम–'इत्यादिग्रन्थोत्थितिसम्भवात्तदसङ्गतिप्रदर्शनं युक्तिविरुद्धमेव। 'सर्वदिगवच्छेदेन–'इत्याद्याशङ्काऽपि न सङ्गच्छते, अस्माभिरग्निसंयोगमात्रस्यैव पाकहेतुत्वस्योक्तत्वात्, परमाण्वन्तरावष्टम्भात्मकप्रतिबन्धकवशादेवाऽऽन्तरे तदसम्भवस्याऽभिहितत्वात्। 'निबिडयोः–'इत्यादिसमाधानमपि न सङ्गच्छते, मूर्तान्तरोपष्टम्भे सति तेजसोऽपि प्रतिबन्धस्य 'अन्तरालेन प्रविशति पावके कथ्यमानाः क्षीरनीरादयो नोर्ध्वं ध्मापयेरन्, मृदुसंयोगात् तथेति चेन्न, तण्डुलादीनामपि तथा दर्शनात्, अतिदृढानामुपलमणिवज्रादीनामग्निदग्धानां स्फुटनात् (३)–'इत्यादिनाऽवयविनां सान्तरालत्वं निराकुर्वद्भिराचार्यैर्व्यवस्थापितप्रायत्वात्, पाषाणादिषु अग्न्यादिप्रवेशे तेषामपि प्रचयविशेषस्याऽऽधुनिकवैज्ञानिकसमयसिद्धत्वाच्चेति। यत्तु निबिडयोरेव समानदेशताविरोधः, तेजसश्च विसरालुत्वान्न तथा, कथमन्यथा बाह्यालोकादिसंयुक्ते तदवच्छेदेन चक्षुरादिसंयोग उपपद्यतामिति सिद्धान्तरहस्यग्रन्थे मथुरानाथेनोक्तम्, तदपि न, पूर्वोक्तक्षीराध्मानाद्युपपादनाय तेजोविशेषे प्रतिबन्धस्याऽपि कल्पनीयत्वात्, बाह्यालोकसहकृतेनैव चक्षुरवयवेन महाचक्षुरारम्भस्य स्वीकर्तव्यतयाऽऽलोकसंयोगावच्छेदेन चक्षुःसंयोगसम्भवाच्च, अन्यथा चन्द्रमण्डलादिपर्यन्तयायिचक्षुरारम्भकावयवानामतिरिक्तानां सर्वेषां नयनगोलकाभ्यन्तरवर्तित्वाङ्गीकारे युक्तिविरोधापत्तेः, बहिस्तत्सत्त्वाङ्गीकारे

---

(१) गुणप्रकाशदीधितिः। (२) प्रशस्तपादभाष्यम् गुणग्रन्थः। (३) किरणावली। गुणनिरूपणम्।

अथ परमाण्वन्तरे कर्मचिन्तनात् पञ्चमादिक्षणेऽपि गुणोत्पत्तिः । तथाहि-एकत्र परमाणौ कर्म, ततो विभागः, तत आरम्भकसंयोगनाश—परमाण्वन्तरकर्मणी, ततो द्व्यणुकनाशः, परमाण्वन्तरकर्मजन्यविभाग इत्येकः कालः १, ततः श्यामादिनाशो विभागाच्च पूर्वसंयोगनाशश्चेत्येकः कालः २, ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोग इत्येकः कालः ३, अथ द्व्यणुकोत्पत्तिः ४, ततो रक्तोत्पत्तिः ५ । –इति पञ्चक्षणा ।

द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात् षष्ठे गुणोत्पत्तिः । तथाहि–

दिनकरी ।

परमाण्वन्तरेति । द्व्यणुकनाशकक्रियावत्परमाणुभिन्नद्व्यणुकान्तरारम्भकपरमाणावित्यर्थः । कर्मचिन्तनादिति । द्व्यणुकारम्भकसंयोगनाशाद्युत्पत्त्यादिक्षणे द्व्यणुकान्तरारम्भककर्मचिन्तनादित्यर्थः । पञ्चमादीत्यत्रादिना षष्ठसप्तमाष्टमक्षणानां परिग्रहः ।

रामरुद्री ।

च कदाचिन्निमीलितनयनस्याऽपि चाक्षुषापत्तेः, काचाद्यन्तःप्रवेशस्तु तेजसस्तस्य स्वच्छतयोपपादनीयः, स्वच्छान्यस्पर्शवत्संयोगस्यैव तेजःसंयोगे प्रतिबन्धकत्वात्, बाह्यालोकसहकृतेन चक्षुरवयवेन चक्षुरारम्भे पृष्ठभागस्थितपदार्थग्रहणप्रसङ्गोऽपि न सम्भवति, चक्षुरारम्भकगोलकान्तःस्थावयवविशेषसंयुक्तेनैव बाह्यालोकेन चक्षुरारम्भस्य स्वीकरणीयतया तादृशस्य बाह्यालोकस्य पृष्ठभागेऽभावादेव तत्रस्थपदार्थग्रहणप्रसङ्गस्य वारणीयत्वात् । तेजसः प्रतिनियतदिग्गमनशीलत्वेन चक्षुःसंयुक्तस्य तादृशस्य तदभिमुखव्यापिताया एवाऽङ्गीकरणीयत्वात्, कथमन्यथा च्छायाचित्रादौ पृष्ठभागस्थपदार्थचित्रणं न भवति ? अत एव च शाखाचन्द्रमसोस्तुल्यकालग्रहणमप्यागोपालाविपालानुभवसिद्धं सङ्गच्छते, चन्द्रमण्डलशाखादिसंयुक्तस्य बाह्यतेजसश्चक्षुरुन्मेषसमकालमेव आन्तरतेजसा संयोगेन चक्षुरुत्पादकत्वौचित्यात्, बाह्येनैव तेजसाऽऽन्तरावयवनिरपेक्षेण चक्षुरारभ्यत इति शालिकामतमेव तु प्राग्दूषितम् । यन्त्रविशेषसहकारात् चक्षुःसंयुक्ततेजसः परीवृत्तौ सत्यां पृष्ठस्थपदार्थपर्यवेक्षणमप्यत्रैवोपोद्बलकमिति युक्तमुत्पश्यामः ।

प्रक्रियान्तराण्यप्युपपादयितुमाह–**एवं परमाण्वन्तर इत्यादि ।**

**इति पञ्चक्षणेति ।** यादृशस्थलविशेषे पूर्वोक्तरीत्या बाह्यपरमाणुदहनयोरुभयक्रियाजन्यः आभ्यन्तरपरमाणुमात्र एवाऽऽरम्भकसंयोगविरोधिक्रियानुगुणश्च संयोगः, ततस्तयोः क्रियानाशौ, बाह्यश्यामनाशश्च, ततो बाह्ये रक्तोत्पत्तिः, आभ्यन्तरपरमाणौ दहननोदनविशेषात् दहने च नैसर्गिकाद्वेगात् कर्मणी, ततो बाह्याभ्यन्तरपरमाण्वोर्विभागः, ततो बाह्याभ्यन्तरसंयोगविनाशः, बाह्यपरमाणावारम्भानुगुणक्रियोत्पत्तिश्च, ततोऽग्निबाह्यपरमाणुसंयोगविनाशः, बाह्यपरमाणुपूर्वदेशविभागः, द्व्यणुकनाशश्च, ततोऽग्न्यान्तरपरमाणुसंयोगः, बाह्यपरमाणुपूर्वदेशसंयोगनाशश्च २, तत आभ्यन्तरपरमाणौ श्यामरूपनाशः, अग्निक्रियाविनाशः, बाह्याभ्यन्तरपरमाणुसंयोगश्च ३, आभ्यन्तपरमाणौ रक्तोत्पत्तिः, अग्निक्रियान्तरं, द्व्यणुकोत्पत्तिश्च ४, ततोऽग्न्याभ्यन्तरविभागः, द्व्यणुके रूपोत्पत्तिश्च ५, तादृशस्थल इत्यर्थः । एतच्चाऽन्तरालेऽग्निसंयोगमनङ्गीकृत्योक्तम्, अतोऽग्निसंयोगसत्त्वसमये बाह्यपरमाणोराभ्यन्तरेण संयोगासम्भवेऽपि न क्षतिरिति ज्ञेयम् । अत्र च बाह्यपरमाणावग्निसंयोगाव्यवहितोत्तरक्षणद्वये श्यामनाशरक्तोत्पत्तिकथनं तत्र कर्मानुत्पादकथनं च तदुत्तरक्षणे आरम्भकक्रियोपपादनायाऽभिप्रेतम् ।

नन्वारम्भकसंयोगस्य द्रव्यारम्भानुगुणक्रियां प्रति प्रतिबन्धकत्वमावश्यकम्, अन्यथा द्रव्यारम्भानन्तरमपि तदवयवगतरूपविशेषाद्यात्मककारणबलात्पुनरप्यारम्भानुगुणक्रियोत्पादापत्तेरिति पूर्वकल्पे आरम्भकसंयोगनिवृत्तिकाले न द्रव्यारम्भानुगुणक्रियोत्पादसम्भव इति पञ्चक्षणा प्रक्रिया न सम्भवतीत्यस्वरसात् षट्क्षणप्रक्रियामुपपादयितुमाह—**द्रव्यनाशसमकालमित्यादि ।** अत्राऽपि पञ्चक्षणप्रक्रियोपदर्शितदिशा द्रव्यनाशकाल एवाऽऽरम्भानुगुणक्रियोत्पत्तिमुपजीव्य क्षणाः परिगणनीयाः ।

परमाणुकर्मणा परमाण्वन्तरविभागः, तत आरम्भकसंयोगनाशः। ततो द्व्यणुनाश-परमाण्वन्तरकर्मणी १, अथ श्यामादिनाशः, परमाण्वन्तरे कर्मजो विभागश्च २, ततो रक्तोत्पत्तिः, परमाण्वन्तरे पूर्वसंयोगनाशश्च ३, ततः परमाण्वन्तरसंयोगः ४, ततो द्व्यणुकोत्पत्तिः ५, अथ रक्तोत्पत्तिः ६-। इति।

एवं श्यामनाशक्षणे परमाण्वन्तरे कर्मचिन्तनात् सप्तक्षणा। तथाहि—

परमाणौ कर्म, ततः परमाण्वन्तरेण विभागः, ततः आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १, ततः श्यामादिनाश-परमाण्वन्तरकर्मणी २, ततो रक्तोत्पत्तिः, परमाण्वन्तरकर्मजविभागश्च ३, ततः परमाण्वन्तरेण पूर्वसंयोगनाशः ४, ततः परमाण्वन्तरेण संयोगः ५, ततो द्व्यणुकोत्पत्तिः ६, ततो रक्तोत्पत्तिः ७। इति।

एवं रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा। तथाहि—

रामरुद्री।

ननु आरम्भकसंयोगत्वं नाऽखण्डधर्म इति तत्पुरस्कारेण षट्क्षणप्रक्रियावादिसम्मतमारम्भानुगुणक्रियाविरोधित्वमनुपपन्नम्, द्रव्यस्यैव तत्प्रतिबन्धकत्वे लाघवादिति द्रव्यनाशसमये द्रव्यारम्भानुगुणक्रियानुपपत्त्या षट्क्षणाऽपि प्रक्रिया नोपपद्यत इत्यस्वरसाद्द्रव्यनाशोत्तरक्षण एव तदुत्पत्तिमुपजीव्य सप्तक्षणां प्रक्रियामाह। **एवं श्यामनाशक्षण इति।** व्याख्यानं पूर्ववत्।

ननु मतत्रयेऽपि बाह्यपरमाणौ निष्क्रिये सत्येवाऽऽभ्यन्तरपरमाणौ कर्मोत्पत्तिरनुमन्तव्येत्युपपादितम्। तच्च युक्तिविरुद्धम्, अग्निना साक्षात्संयुक्तं बाह्यपरमाणुमतिक्रम्याऽऽभ्यन्तरपरमाणौ परम्परया दहननोदनात्मककारणबलात्क्रियोत्पादस्याऽनुभवविरुद्धत्वादित्युभयत्र क्रियाभ्युपगमे पूर्वोक्तास्तिस्रोऽपि प्रक्रिया न सम्भवन्तीत्यस्वरसादष्टक्षणप्रक्रियामुपपादयति। **रक्तोत्पत्तिसमकालमिति।** व्युत्पादितमिदमितः प्रागेवेति ध्येयम्।

मथुरानाथतर्कवागीशास्तु 'यत्परमाणुक्रियया द्व्यणुकनाशस्तत्परमाणुक्रिययोत्तरद्व्यणुकोत्पत्तौ एकादशभिर्दशभिर्नवभिरष्टाभिर्वा'इत्यादि वदन्तः विभागजविभागं स्वीकृत्य 'इत्थं च यदि द्रव्यनाशापेक्षस्तदैकादशक्षणा। तथाहि द्व्यणुकनाशः, ततो गगनादिपरमाणुविभागः, श्यामादिनाशश्च, अनन्तरं रक्ताद्युत्पत्तिर्गगनादिसंयोगनाशः, अथ परमाणोस्तत्तद्देशसंयोगः, ततः परमाणुक्रियानिवृत्तिः, उत्तरकालं परमाणौ क्रियान्तरोत्पत्तिः, अथ विभागः, ततः पूर्वसंयोगनाशः, ततः परमाणुद्वयसंयोगः, ततो द्व्यणुकोत्पत्तिः, अथ द्व्यणुके रक्ताद्युत्पत्तिः। यदि च संयोगनाशापेक्षस्तदा द्व्यणुकनाशोत्पत्तिक्षणे विभागजविभागोत्पत्त्यैकक्षणह्रास इति दशक्षणा। यदि च निरपेक्षस्तदा क्षणद्वयह्रासेन नवक्षणा प्रक्रिया-' इत्याद्युक्त्वा विभागजविभागानभ्युपगमे 'तदाऽष्टक्षणा, द्व्यणुकनाशोत्पत्तिसमय एवोत्तरसंयोगोत्पत्तेः-' इत्यूचुः। तथा 'परमाण्वन्तरक्रियया द्व्यणुकोत्पत्तावन्यथाऽपि प्रक्रिया सम्भवति, तथाहि द्रव्यनाशमपेक्ष्य कारणमात्रविभागाभ्युपगमे द्व्यणुकनाशात् पञ्चमक्षणे परमाण्वन्तरे कर्मचिन्तनाद्दशक्षणा, चतुर्थक्षणे तच्चिन्तनान्नवक्षणा, तृतीयक्षणे तदुत्पत्तावष्टक्षणा, द्वितीयक्षणे तदुत्पत्त्या सप्तक्षणा, द्व्यणुकनाशोत्पत्तिक्षणे तच्चिन्तनात् षट्क्षणा, द्व्यणुकनाशकपरमाणुसंयोगध्वंसोत्पत्तिसमये तच्चिन्तनात् पञ्चक्षणा, संयोगनाशकविभागोत्पत्तिसमये तच्चिन्तनाच्चतुःक्षणा, परमाणुरक्ताद्युत्पत्तिसमय एव द्व्यणुकोत्पत्तेः। न च स्पर्शवत्त्वेन द्रव्यारम्भकत्वात् कथं रक्ताद्युत्पत्तिसमय एव द्व्यणुकोत्पत्तिरिति वाच्यम्। कारणतावच्छेदकं विना कार्योत्पत्तावविरोधात्, स्पर्शस्य यदा कदाचित्कारणे सत्त्वयैवाऽवच्छेदकत्वोपपत्तेः। वस्तुतस्तु द्रव्यारम्भकतावच्छेदकतया भूतचतुष्टयवृत्तिरेकैव जातिः सिद्ध्यति, लाघवात्, क्रियासमवायिकारणतावच्छेदकतया सिद्धेन मूर्तत्वेनैव वा द्रव्यारम्भकतावच्छेद इति वक्ष्यत इति नाऽनुपपत्तिसम्भावनाऽपि। न चैवं विनश्यदवस्थपाकेन श्यामादिविनाशे पाकान्तरस्याऽप्यभावात् रक्तानुत्पादो येषु परमाणुषु तेषां परस्पर-

परमाणौ कर्म, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १, ततः श्यामनाशः २, ततो रक्तोत्पत्ति–परमाण्वन्तरकर्मणी ३, ततः परमाण्वन्तरकर्मजविभागः ४, ततः पूर्वसंयोगनाशः ५, ततः परमाण्वन्तरसंयोगः ६, ततो द्व्यणुकोत्पत्तिः ७, अथ रक्तोत्पत्तिः ८।–इत्यष्टक्षणा॥ १०५॥ इति पीलुपाकवादनिरूपणम्

दिनकरी ।

इत्यष्टक्षणा इति । ननु यत्रैकस्मिन् परमाणावग्निसंयोगसमकालं परमाण्वन्तरे कर्मोत्पत्तिस्तदुत्तरक्षणेषु क्रमेणैकत्र क्रियाविभागपूर्वसंयोगनाशद्व्यणुकनाशाः, अपरत्र विभागपूर्वसंयोगनाशोत्तरसंयोगोत्पत्तिरूपोत्पत्तयस्तत्र द्विक्षणा । एवं यत्रैकस्मिन् परमाणौ कर्मोत्पत्तिसमकालं परमाण्वन्तरे कर्मोत्पत्तिस्तत्र त्रिक्षणा । एवं यत्रैकस्मिन् परमाणौ विभागसमकालं परमाण्वन्तरे कर्मोत्पत्तिस्तत्र चतुःक्षणाऽपि सम्भवति प्रक्रियेति चेन्न । द्व्यणुकनाशमन्तरेण परमाणौ श्यामादिनिवृत्तिस्तामन्तरेण च रक्तोत्पत्तिर्न सम्भवतीत्युक्तप्रायम् । इत्थं च द्व्यणुकनाशक्षणे परमाणुश्यामनाशक्षणे रक्तोत्पत्तिक्षणे वा द्व्यणुकान्तरोत्पत्तौ द्वित्रिचतुःक्षणाः प्रक्रिया वाच्याः, न चैतेषु क्षणेषु द्व्यणुकान्तरोत्पत्तिः सम्भवति, तथा सति तत्पूर्वक्षणेषु परमाणोररक्तत्वेन तदारब्धद्व्यणुकस्याऽप्यरक्तत्वप्रसङ्गादित्यन्यत्र विस्तरः ॥ १०५ ॥ इति पीलुपाकवादनिरूपणम् ॥

रामरुद्री ।

संयोगाद्रूपादिशून्यद्व्यणुकादिलक्षणकार्योत्पत्तिप्रसङ्ग इति साम्प्रतम्, इष्टत्वात्, प्राणादीनां पिशाचादीनां च तदवयवादीनां च तथात्वात् । द्रव्यत्वादेरिव पृथिवीत्वादेरपि स्पर्शाद्यननुमापकत्वात्, अनुद्भूतेषु स्पर्शादिषु मानाभावात् । कल्प्यतां वा रक्तादिसामग्रीप्राक्क्षण एव श्यामादिनाशकाग्निसंयोगसमवधानम्, कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात् । न हि विनश्यदवस्थतेजःसंयोगो रक्ताद्युत्पादकाग्निसंयोगाव्यवहितपूर्वक्षणेऽवर्तमानस्तेजःसंयोगो वा श्यामादि न नाशयतीत्यत्र प्रमाणमीक्षामहे । अभिधीयतां वा कार्यसहभावेन श्यामादिनाशकता, पूर्ववर्तितामात्रेण रक्ताद्युत्पादकत्वमेकस्यैवाऽग्निसंयोगस्येति न किञ्चिदेतत् । अस्तु वा द्रव्यारम्भाव्यवहितपूर्वक्षणे स्पर्शवत्त्वनियमः, न च तावताऽपि हीयते चतुःक्षणप्रक्रिया, तथाहि–द्व्यणुकनाशद्व्यणुकान्तरोत्पत्त्यनुगुणपरमाणुक्रिययोर्युगपदुत्पत्त्या युगपदेव द्व्यणुकनाशद्व्यणुकान्तरारम्भकसंयोगाद्युत्पत्तिः, अथाणुश्यामादिनाशद्व्यणुकान्तरोत्पत्ती, अनन्तरं रक्ताद्युत्पत्तिद्व्यणुकपरिमाणाद्युत्पत्तिः, अथ द्व्यणुके रक्ताद्युत्पत्तिः । क्षणद्वयं नीरूपादिकमेव तत् द्व्यणुकम् । यदा च द्व्यणुकनाशोत्पत्तिसमये रक्तादिमता परमाण्वन्तरेण समं श्यामादिमत्परमाणोरारम्भकसंयोगोत्पत्तिस्तदा द्वितीयक्षणे श्यामादिनाशद्व्यणुकोत्पत्ती, तृतीये चैकत्र परमाणौ रक्ताद्युत्पत्तिः, परमाण्वन्तररक्तादिना तदवच्छेदेन द्व्यणुके रक्ताद्युत्पत्तिश्चेति त्रिक्षणा प्रक्रिया । न चाऽवयवान्तररक्तादिसहकारेणैवाऽवयवरक्तादेरवयविरक्तादिजनकत्वम्, मानाभावात्, गौरवाच्च । वस्तुतो द्व्यणुकनाशानुगुणतेजःसंयोगादेव तदनुगुणक्रियाविभागोत्पत्तिक्षणयोः श्यामादिनाशरक्ताद्युत्पत्ती तेजःसंयोगान्तरकल्पनायां गौरवात् बाधकाभावाच्च न द्व्यणुकस्य श्यामादिनाशप्रतिबन्धकत्वम्, मानाभावात्, उक्तनियमस्याऽनुकूलतर्कविरहेणाऽसत्त्वात् । रक्तोत्पत्तिसमये तदुत्तरं चाऽऽश्रयनाशाधीनतेजःसंयोगनाशोत्पत्तेन ततो रक्तादिनाशः । असमवायिनः कार्यसहभावेन हेतुत्वमते रूपादिनाशकताया अपि तथैवाऽभ्युपगमात् । एवञ्च यदा द्व्यणुकनाशानुगुणक्रियाविभागोत्पत्तिक्षणयोः परमाण्वन्तरकर्मोत्पत्त्या द्व्यणुकनाशोत्पत्तिस्तदव्यवहितोत्तरक्षणे द्व्यणुकान्तरारम्भकसंयोगनिष्पत्तिस्तदा त्रिचतुःक्षणा प्रक्रिया भ्रमणेऽपि दुर्वारा । रूपानाशकतेजःसंयोगस्य रूपोत्पादकत्वपक्षेऽपि त्रिक्षणा प्रक्रिया सम्भवति, द्व्यणुकनाशानुगुणतेजःसंयोगेन परमाणुक्रियोत्पत्तिसमकालं श्यामादिनाशात् द्व्यणुकनाशसमये तत्पूर्वसमये वोत्पन्नेन तेजःसंयोगेन

**नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।**

**दिनकरी ।**

नैयायिकानामिति । **नैयायिकानां मते द्व्यणुकाद्यवयविन्यपि पाको भवति ।**

**रामरुद्री ।**

स्वोत्तरकाले रक्ताद्युत्पादात् द्व्यणुकनाशादनन्तरक्षण एव द्व्यणुकान्तरोत्पाद त् अनन्तरं रक्ताद्युत्पादाच्च । एतेन द्वित्रिचतुःक्षणा प्रक्रिया न सम्भवतीत्याचार्योक्तमनादेयम् । सम्भवति द्विक्षणाऽपि प्रक्रिया, तथा हि—द्व्यणुकनाशानुगुणतेजःसंयोगोत्पत्तिक्षणे परमाण्वन्तरकर्मोत्पत्त्या द्व्यणुकनाशकपरमाणुसंयोगनाशोत्पत्तिक्षणे द्व्यणुकान्तरारम्भकपरमाणुसंयोगोत्पत्तेर्युगपदेव द्व्यणुकनाशद्व्यणुकान्तरोत्पत्ती, अथ द्व्यणुकनाशपूर्वोत्पन्नपरमाणुरक्तादिना द्व्यणुके रक्ताद्युत्पत्तिरिति । न चैकपरमाणुसंयोगावष्टब्धे परमाणौ न परमाण्वन्तरसंयोग उत्पत्तुमर्हति, अवच्छेदकान्तरेणाऽपि तदुत्पत्तिसम्भवात् । न च द्रव्यं प्रति द्रव्यस्य प्रतिबन्धकत्वादेकत्र परमाणौ युगपद्द्व्यणुकनाशद्व्यणुकान्तरोत्पत्ती न सम्भवत इति साम्प्रतम्, तादृशप्रतिबन्धकतायां मानाभावात्, सत्यप्यवयवसंयोगे तद्द्रव्यद्वितीयादिक्षणेषु तद्द्रव्यानुत्पत्तेस्तद्द्रव्यप्रागभावविरहेणैवोपपत्तेः । तद्द्रव्यसमानाधिकरणभाविद्रव्यान्तरानुत्पत्तिश्च तत्तद्द्रव्यं प्रति विशिष्याऽसमवायिकारणस्य तत्तत्संयोगस्याऽभावात् । अन्यथा तद्द्रव्योत्पत्तिक्षणे तदुत्पत्त्यापत्तेः । महापटनाशोत्तरं महापटारम्भकावस्थितसंयोगाज्जायमानस्य खण्डपटस्य महापटद्वितीयादिक्षणेऽनुत्पादश्च तत्पटं प्रति महापटनाशस्य हेतुत्वात् । इतरथा महापटोत्पत्तिक्षणे तदुत्पत्तेर्दुर्वारतापत्तेः । एतेन रूपादौ रूपादेरप्रतिबन्धकत्वमिति वदन्ति । प्रागभाववद्धेतुतयोर्निराकर्तव्यतया द्रव्यत्वादिनैव द्रव्यं प्रति विरोधित्वमिति वस्तुगतिः । वस्तुतः सर्वत्र त्रिक्षणैव प्रक्रिया । तथा हि—द्व्यणुकनाशानुगुणतेजःसंयोगात् परमाणुक्रियोत्पत्तिसमय एव श्यामादिनाशः, रक्ताद्युत्पादस्तदनन्तरं परमाणुविभागसमये तस्मादेवाऽग्निसंयोगात् द्व्यणुकनाशोत्पत्त्यादिसमये चाऽग्निसंयोगान्तराद्धेत्येव तावत् प्रमाणसिद्धम्, द्व्यणुकनाशानुगुणपरमाणुक्रिया द्व्यणुकनाशोत्पत्तिसमयेऽवश्यं संयोगं जनयतीति तु सर्वसिद्धमेव, एवञ्च स संयोगः परमाण्वन्तरे द्व्यणुकारम्भक एव कल्प्यते, लाघवात्, दृष्टं च द्व्यणुकनाशद्वितीयक्षणे द्व्यणुकान्तरोत्पत्तिरिति । इदं तु कारणमात्रविभागजविभागानभ्युपगमे । तदभ्युपगमे तु यथायथं षट्क्षणा पञ्चक्षणा चतुःक्षणैव वा प्रक्रियेति दिक्—*'इत्यप्युक्तवन्तः, तत्सर्वं तर्ककर्कशविचारचातुरीधुरीणैरेव विभावनीयमित्यलम् ॥ १०५ ॥ ॥ इति पीलुपाकवादनिरूपणम् ॥

इत्थं पीलुपाकवादिमतं निरूप्य तत्प्रतिद्वन्द्विनां पिठरपाकवादिनां नैयायिकानां मतमाह । **नैयायिकानां मत इत्यादि ।** ननु स्पर्शवत्संयोगे समानावच्छेदकत्वप्रत्यासत्त्या स्पर्शवत्संयोगस्य प्रतिबन्धकत्वात् परितः परमाण्वन्तरावष्टब्धे आभ्यन्तरपरमाणौ पाको न सम्भवति, परमाणुसंयोगात्मकप्रतिबन्धकनिवृत्तिमन्तरेण तत्र दहनसंयोगानिष्पत्त्या कारणसमवधानविरहादित्यतो दहनेन सहाऽऽभ्यन्तरपरमाणोः संयोगो बाह्यपरमाणुसंयोगनिवृत्तिमङ्गीकृत्यैवोपपादनीयः, तथा च कार्यद्रव्यविनाशस्य परमावश्यकतया पिठरपाकसम्भावनैव कुत इत्याशङ्कां निराकरोति । **द्व्यणुकादाविति ।** द्व्यणुकमात्रपाकस्थले तदारम्भकपरमाणुद्वयस्य वह्निना सममारम्भकसंयोगनिवृत्तिमन्तरेणाऽपि संयोगसम्भवात् तदात्मककारणसम्पत्तेरुभयोः परमाण्वोर्द्व्यणुकमविनाश्यैव पूर्वरूपनाशतद्विजातीयरूपोत्पादौ सम्भवत इति प्रागुक्तवैशेषिकप्रक्रियया घटादिमहावयविस्थलेऽवयविनि पाकासम्भवेऽपि अवयविमात्र एव पाको न सम्भवतीति पीलुपाकवाद्युक्तेरयुक्ततया पिठरपाकोऽपि सम्भवत्येवेति भावः । 'घटादौ' इत्यनुक्त्वा **'द्व्यणुकादौ'** इत्युक्तिर्घटादिस्थले आन्तरपरमाणौ कार्यद्रव्यनिवृत्तिमन्तरेण पाकोत्पादस्योपपादयितुमशक्यतामालोच्यैव, द्व्यणुकस्थले तु पूर्वोक्तदिशा तत्र कार्यद्रव्यनिवृत्तिमन्तरेणाऽपि पाकः सम्भवतीत्यभिप्रायः । **आदि**पदोक्तिस्तु परितः परमाण्वन्तरानवष्टब्धत्रसरेण्वादिपरिग्रहार्था । तथा च यादृशस्थलविशेषे त्रसरेणोरारम्भकाः सर्व एवाऽवयवाः किञ्चिद्देशावच्छेदेन परमाण्वन्तरानवष्टब्धाः, यथा प्रचितावयवारब्धत्रसरेणुस्थले, द्विसरमाला-

* सिद्धान्तरहस्यग्रन्थे ।

**तेषामयमाशयः, अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्व-वष्टब्धेष्वपि पाको न विरुध्यते। अनन्तावयवितन्नाशकल्पने गौरवम्। इत्थं च सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि सङ्गच्छते। यत्र तु न प्रत्यभिज्ञा, तत्रा-ऽवयविनाशोऽपि स्वीक्रियत इति।** इति पिठरपाकवादनिरूपणम् ॥

दिनकरी

अवयविन्यपीत्यपिना परमाणुपरिग्रहः। **तेषाम्**–नैयायिकानाम्। **अयं**–वक्ष्य-माणः। **अवष्टब्धेष्वपीति।** अवयविनाऽवष्टब्धेष्वपीत्यर्थः। **पाकः**–रूपादिपरावृत्तिः। **न विरुध्यत इति।** साक्षात्परम्परासाधारणसकलावयवावच्छेदेन तेजःसंयोगस्य रूपादि-नाशहेतुत्वे मानाभावेनाऽऽरम्भकसंयोगावच्छेदेन विजातीयतेजःसंयोगादेव रूपादिनाश-सम्भवेऽप्यारम्भकसंयोगावच्छेदेन तेजःसंयोगस्याऽभिघातादेस्तदानीं तत्र सद्भावे माना-भावेन पूर्वोक्तरीत्याऽवयविनाशस्याऽप्रसक्तेः; सर्वावयवावच्छेदेन तेजःसंयोगस्य रूपादिना-शकत्वेऽपि नाशकतावच्छेदकवैजात्यस्य नोदनत्वाभिघातत्वादिविरुद्धस्यैवाऽङ्गीकरणीयतया नोदनाभिघातभिन्नतेजःसंयोगाद्रूपादिनाशेऽपि तेनावयविनाशस्यासम्भवात्; अस्तु वा रूपा-दिनाशकतावच्छेदकवैजात्यस्य नोदनाभिघातत्वव्याप्यत्वं, तथाऽप्यवयव्यभिघातादिकालेऽ-वयवाभिघाताद्युत्पादनियमे मानाभावः; आस्तां वा तथा नियमः, तथाप्यवयवाभिघातादे-र्नियमतो द्रव्यारम्भकसंयोगविरोधिविभागहेतुक्रियाजनकत्वे मानाभाव एव, विभागं प्रति क्रियायास्तत्तद्व्यक्तित्वेनैव हेतुतया तत्तत्क्रियाधीनविभागं प्रति तत्तत्पूर्वदेशस्य विशिष्य हेतुतया च तज्जन्यक्रियायास्तादृशविभागहेतुत्वासिद्धेरिति भावः। यदप्युक्तं वैशेषिकैः–अवयविरूपं प्रत्यवयवरूपहेतुताया व्यभिचारापत्त्या नावयविनि पाकेन रूपोत्पाद इति, तदपि न, अवयवरूपादेर्विजातीयरूपादिकं प्रत्येव हेतुतया व्यभिचाराप्रसक्तेः। एतेनाऽवयविरू-पनाश आश्रयनाशहेतुतायां व्यभिचारापत्त्या पाकेनावयविरूपनाशासम्भव इत्यप्यपास्तम्। आश्रयनाशजन्यतावच्छेदककोटौ वैजात्यस्य निवेशनीयत्वादिति। अवयविपाकानभ्युपगमे साधकाभावमुक्त्वा तत्र बाधकमप्याह। **अनन्तेति।** इत्थं च–अवयविनाशानङ्गीकारे च। **प्रत्यभिज्ञाऽपि सङ्गच्छत इति।** पूर्वावयविनाशे तूत्पन्नावयविपूर्वावयविनोरभेदाभावेना-ऽभेदावगाहिनी प्रत्यभिज्ञा न स्यादिति भावः। ॥ इति पिठरपाकवादनिरूपणम् ॥

रामरुद्री।

कारसंयुक्तद्व्यणुकत्र्यारब्धत्रसरेणुस्थले च, तत्राऽपि कार्यद्रव्यविनाशमन्तरेणाऽपि पूर्वरूपपरावृत्तिरूपा-न्तरोत्पत्ती सम्भवत इति पीलव एव पच्यन्त इति सिद्धान्तो न युक्तिसह इति भावः। एतदभिप्रायेणैव **'अवयविनां सच्छिद्रत्वात्'**–इत्यादि वक्ष्यति। यादृशस्थलविशेषेऽवयविषु पाको नैयायिकैरभ्युपगम्यते तादृशस्थल इति च तत्र पूरणीयम्। तथा च पिठरपाकस्थले **सच्छिद्रत्वात्**–किञ्चिद्देशावच्छेदेन द्रव्या-न्तरावष्टम्भशून्यत्वात् **अवयविनि पाको न विरुध्यते**–अवयविवृत्त्यव्यापकाभावप्रतियोगी न भवतीत्यर्थः, न तु अवयविमात्रस्यैव सच्छिद्रत्वादिति तदर्थो युक्तः, परितः परमाण्वन्तरावष्टब्धपरमाण्वारब्धद्व्यणु-कादिस्थले कार्यद्रव्यविनाशस्याऽवश्यमभ्युपगन्तव्यतया तद्विरोधापत्तेः, निरुक्तरीत्याऽवयविमात्र एव सच्छिद्रत्वमुपगम्य पाकोपपादने क्वचित् कार्यद्रव्यस्याऽच्छिद्रावयवस्य विनाशमन्तरेण पाकानुपपत्तिप्रद-र्शनैदम्पर्येण संलापनीयेन **'यत्र तु न प्रत्यभिज्ञा तत्राऽवयविनाशोऽपि स्वीक्रियते—'** इत्याद्यग्रि-मग्रन्थेन विरोधापत्तेश्चेति ध्येयम्। यद्यपि परितः परमाण्वन्तरावष्टब्धपरमाण्वारब्धघटादिस्थले प्रागुक्त-दिशाऽवयविनाशावश्यकतया तत्र श्यामनाशस्य पाकजन्यत्वाङ्गीकारे पुनरारम्भकान्तरावयवरूपबलात्पू-र्वरूपसजातीयरूपान्तरकल्पनमनुचितमिति परमाण्वग्निसंयोगस्यैव श्यामनाशकत्वाङ्गीकारे पिठरपाको न

रामरुद्री ।

सम्भवति, तथाऽपि गौरवात् श्यामादिनाशकतावच्छेदककुक्षौ परमाणुसमवेतत्वोपादानमनुचितम्, अग्निसंयोगादवयविश्यामादिनाशस्थलेऽग्निसंयोगरहिताभ्यन्तरावयवरूपवशादवयविनि रूपान्तरोत्पत्तिस्वीकारेऽनेकरूपकल्पनागौरवस्य फलमुखत्वेनाऽदोषत्वादिति पिठरपाकः सम्भवत्येवेति ग्रन्थकृतो निगर्वः ।

ननु पीलुकवादिभिर्यथा पीलव एव पच्यन्त इत्यङ्गीकृतम्, तथा पिठरपाकवादिभिरवयविन एव पच्यन्त इति स्वीकर्तव्यम्, तच्च परमाणुषु पाकविरोधिनो दुरुपपादतयाऽयुक्तम्, परमाणूनामपाके तद्गतपूर्वरूपवशात्तत्सजातीयरूपोत्पादस्याऽवयविन्यपरिहरणीयतया स्वव्याघातावहं चेति भ्रमं निरसितुमाह टीकायाम्—'**अवयविन्यपीत्यपिनेत्यादि**' । तथा च पिठरपाकवादिनां मते पाकस्य परमाणुनदितरवृत्तित्वमिष्टमिति न दोष इति भावः । अन्यत्सर्वं सुगमम् ।

वैशेषिकसिद्धान्तरहस्यवेदिनस्तु द्रव्यारम्भकसंयोगस्तावत् कीदृशः ? मध्ये सान्तरालः, उत निरन्तराल इति, यदि निरन्तरालः; तर्हि मृद्घटादौ जलादिपूरणे बहिः शैत्यानुपलब्धिप्रसङ्गः, अतः प्रथमपक्ष एव स्वीकर्तव्यः, सान्तरालत्वे तु तन्मार्गेण जलीयसूक्ष्मावयवानां बहिर्निःसरणसम्भवात् तेनेन्द्रियसंनिकर्षसम्भवे तदीयशैत्योपलब्धिरुपपद्यते । अत एव मार्तिकघटादौ पूरितस्य सलिलस्य पात्रान्तरे निःसारणे न्यूनीभावः प्रत्यक्षमुपलभ्यते, भूयसामेव तदीयसूक्ष्मावयवानां घटमध्यरन्ध्रप्रवेशात् । न च द्वयोरवयवयोः सान्तरालत्वे तयोः संयोग एव कथं सम्भवतीति वाच्यम् । सान्तरालयोरपि पदार्थयोर्द्वित्वादेरिव संयोगस्याऽपि स्वीकर्तुं शक्यत्वात् । तादृशस्थले द्रव्योत्पत्त्या च तदनुमानात्, एकदेशाकर्षणे सकलस्यैवाऽवयवसमूहस्याऽऽकर्षणनिर्वाहाय एकदेशोत्क्षेपणे सकलतदवयसमूहोत्क्षेपणादिनिर्वाहाय च सावकाशतया स्थितेष्वपि तेषु संयोगस्याऽवश्यस्वीकर्तव्यत्वात् । अत एव जलस्य द्रवावस्थायां तदवयवानां सावकाशावस्थितानां तेजोऽपकर्षणेऽन्तरालतत्तेजस्यपसृते निबिडसंयोगोत्पत्तिदशायां जलस्य घनीभावापत्तौ हिमकरकादिरुत्पद्यते । यथा यथा च तेजसो मध्ये प्रवेशस्तथा तथा तरलीभावे समुत्पन्ने क्रमेण सलिलबाष्पाद्यवस्थापन्नानि द्रव्याण्युत्पद्यन्ते । न चैवं 'दिव्येन तेजसा सयुक्तानामाप्यानां परमाणूनां परस्परं संयोगो द्रव्यारम्भकः सङ्घाताख्यः, तेन परमाणुद्रवत्वप्रतिबन्धात् कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः—' इति भाष्यं 'अपां सङ्घातो विलयनं च तेजःसंयोगात्(१)—' इति सूत्रं च विरुध्यते, तत्र सङ्घाताख्यस्य संयोगस्य तेजःसंयोगजन्यत्वोक्तेरिति वाच्यम् । भाष्ये 'तेजसाऽसंयुक्तानाम्—' इति रीत्याऽकारप्रश्लेषस्य स्वीकर्तव्यतया सूत्रे च विलयनहेतोरेव तेजःसंयोगस्य कथनस्वीकारेणाऽविरोधात् । अन्यथा तादृशदिव्यतेजःसंयोगस्यैव द्रवत्वप्रतिरोधकत्वे सम्भवति सङ्घाताख्यसंयोगविशेषस्य तत्प्रतिरोधकत्वकथनस्याऽसाङ्गत्यापत्तेः। विवेचनीयं चैतदग्रे ।तथा च अंशतोऽपि तेजःसंयोगस्थले परस्परसंयुक्तानां परमाणूनां पूर्वापेक्षया विप्रकृष्टतरान्तरालत्वमापद्यते सर्वत्रैव अत एव घनीभावदशायां न्यूनपरिमाणस्याऽपि जलादेर्द्रवीभावदशायामधिकपरिमाणताऽऽपद्यत इति युज्यते । तथा च प्रकृतेऽपि क्वचिदप्यन्तरालेन प्रविशति तेजसि पूर्वसंयोगनिवृत्तिरावश्यिकैवेति क्व पिठरपाकसम्भावना ? अत एव भाष्ये 'न तु कार्यद्रव्य एव रूपाद्युत्पत्तिर्विनाशो वा सम्भवति, सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याऽग्निना व्याप्त्यभावात, अणुप्रवेशादपि च व्याप्तिर्न सम्भवति, कार्यद्रव्यविनाशात्—' इत्युक्तम् । किं च केवलमग्निसंयोगादेव श्यामनाशो रक्तोत्पत्तिर्वा न सम्भवति, विगतद्रव्यान्तरसंपर्के निर्वाते काचभाण्डादावनस्थापिताया मृदो यावज्जीवमग्निसंयोजनेऽपि पूर्वरूपविनाशरूपान्तरोत्पादयोरनुपलब्धेः । अतः श्यामनाशाय मृद्गतस्य द्रव्यविशेषस्याऽपसरणं रक्तोत्पादाय च द्रव्यान्तरसम्मिश्रणं च हेतुरिति वैज्ञानिकदर्शनसिद्धमङ्गीकरणीयमेव । इत्थं च न क्वचिदपि द्रव्यविनाशं विना पाक इति सिद्धमिति प्राहुः ।

इति विमतमनल्पं सम्यगालोच्य यत्नाद्व्यरचि रुचिरमूर्तिः प्रक्रिया पाकजानाम् ।
तदिह निहितचित्ताः सन्मतद्वेषशून्या वितथमवितथं वा पण्डिताश्चिन्तयन्तु ॥ १ ॥

॥ इति पिठरपाकवादनिरूपणम् ॥

---

(१) वैशेषिकसूत्रम् । अ० ५ आ० २ सू० ८

**गणनाव्यवहारे तु हेतुः सङ्ख्याऽभिधीयते ॥ १०६ ॥**

सङ्ख्यां निरूपयितुमाह । गणनेति । गणनाव्यवहारासाधारणं कारणं सङ्ख्येत्यर्थः ॥ १०६ ॥

**नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।**

नित्येष्विति । नित्येषु–परमाण्वादिषु एकत्वं नित्यम् । अनित्ये–घटादावेकत्वमनित्यमित्यर्थः ।

### दिनकरी ।

कालादावतिव्याप्तिमाशङ्क्याऽऽह । असाधारणमिति । वस्तुतो गणनं सङ्ख्यात्वम्, तत्प्रकारको व्यवहारः–तत्प्रकारकं प्रमात्मकं ज्ञानम्, तद्धेतुः–तद्विषय इत्यर्थान्न कालादावतिव्याप्तिः । तत्रापि सङ्ख्यात्वजातिरेव लक्षणम्, इतरत्तु सङ्ख्यात्वजातौ प्रमाणतयोक्तम् । एवमग्रेऽपीति ध्येयम् ॥ १०६ ॥

### रामरुद्री ।

तत्प्रकारकं प्रमात्मकं ज्ञानमिति । व्यवह्रियते—ज्ञानोपादानादि क्रियतेऽनेनेति व्युत्पत्त्या व्यवहारपदस्य प्रवृत्तिजननसमर्थज्ञानवचनत्वादिति भावः । तद्धेतुः–तद्विषय इति । कालादावतिव्याप्तिवारणाय विषयविधया तद्धेतुत्वविवक्षणस्याऽवश्यापेक्षितत्वे वरं तदपेक्षया लघुभूतस्य विषयत्वस्यैव विवक्षणमिति भावः । प्रमाणतयेति । कति भवतः पुत्रा इत्यादि प्रश्ने एको द्वौ त्रयो वेत्याद्युत्तरादपि सङ्ख्यात्वसिद्धिः, सामान्यरूपं विना प्रश्नोत्तरयोरयोगादित्यपि मन्तव्यम् ॥ १०६ ॥

मूले—एकत्वमनित्यमित्यर्थं इति । नन्वेकत्वं सत्तावज्जातिरेवाऽस्तु, एकमेकमित्यनुगतमतेर्जातिविषयकत्वात्, गुणविषयकत्वे तु परम्परासम्बद्धैकत्ववृत्तिजातिस्तन्निमित्तं वाच्यम्, तद्वरं जातिविषयैव सा भवतु । न च सत्तया सहाऽन्यूनानतिरिक्तविषयकत्वं तत्र बाधकम्, एकत्वमेव जातिः सत्ता गुण इति वैपरीत्यस्याऽपि सम्भवात् । न च द्वित्वाद्यसमवायिकारणत्वेनैकत्वगुणसिद्धिः, एकपृथक्त्वेनाऽन्यथासिद्धेः । न चैवं द्वित्वद्विपृथक्त्वयोः सामग्र्यभेदादविशेषापत्तिरिति वाच्यम् । अवधिज्ञानस्याऽधिकस्य द्विपृथक्त्वकारणत्वादिति चेत्, अत्र प्रकाशानुयायिनः, एकत्वान्यगुणाविषयः शाब्द एकप्रत्ययो गुणविषयकः, एकप्रत्ययत्वात्, चाक्षुषैकप्रत्ययवत्, तस्य रूपादिगुणविषयकत्वात्, शाब्दस्य च तस्य तदविषयकत्वात् । यद्वा द्वित्वमेकवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्, अपेक्षाबुद्धिजत्वात्, द्विपृथक्त्ववत् । न चाऽप्रयोजकत्वम्, एकत्वस्य जातित्वे द्वयमेतत् सदितिवत् द्वयमेतदेकमिति प्रत्ययापत्तेरित्याहुः, तन्न, एकत्वस्य गुणत्वेऽपि द्वयमिदं नीलमित्यादिवत् तथा प्रतीतेर्दुर्वारत्वात्, एकशब्दस्याऽभिन्नार्थकत्वाभिप्रायोपगमेनैव तस्य वारणीयत्वात् ।

वस्तुतस्तु द्वित्वासमवायिकारणतयैवैकत्वगुणसिद्धिः, एकपृथक्त्वमादायाऽन्यथासिद्धिस्तु न सम्भवति, तथा सति द्वित्वद्विपृथक्त्वयोः सामग्र्यविशेषेणाऽविशेषापत्तेः । न चाऽवधिज्ञानस्याऽधिकस्य द्विपृथक्त्वे हेतुत्वान्नोक्तापत्तिरिति वाच्यम् । अधिकापेक्षित्वेन द्वित्वसामग्रीजन्यत्वेन च द्विपृथक्त्वस्य द्वित्वविशेषतापत्तेः, ज्ञानत्वाद्यवच्छिन्नसामग्रीजन्यस्य परामर्शाद्यधिकापेक्षस्याऽनुमित्यादेर्ज्ञानविशेषरूपताया दृष्टत्वात्, तत्तद्धर्मस्य तत्तद्धर्मावच्छिन्नसामग्रीप्रयोज्यतावच्छेदकतया तादृशद्वित्वत्वद्विपृथक्त्वत्वाद्यवच्छिन्नसामग्र्या द्वयोरपि धर्मयोः प्रयोज्यतावच्छेदकत्वावश्यकत्वे द्विपृथक्त्वत्वस्य द्वित्वत्वाव्यापकतया विशेषधर्मत्वाङ्गीकारावश्यकत्वात् । द्वित्वत्वावच्छिन्नजनकसामग्रीकुक्षौ अवधिज्ञानाभावस्य निवेशे तु सत्यवधिज्ञाने द्वित्वप्रत्ययानुपपत्तिरीश्वरापेक्षाबुद्धितो द्वित्वानुत्पत्तिप्रसङ्गश्चेति दूषणं द्रष्टव्यमिति दीधितिकृत्प्रभृतयः ।

नव्यास्तु समवाय—स्वसमवायिसमवेतत्वान्यतरसम्बन्धेनाऽऽत्मविशेषगुणान्यत् किंचित् कार्यमात्रं प्रति कारणमित्येतादृशकार्यकारणभावे मानाभावान्नैकत्वस्य द्वित्वाद्यसमवायिकारणत्वसम्भवः,

रामरुद्री ।

यद्धर्मवन्तमन्तरेण यद्धर्मवतो नोत्पत्तिस्तद्धर्मवानेव हि तद्धर्मवतः कारणं कल्प्यते, न च सत्यामपेक्षाबुद्धौ स्वाश्रयेषु द्वित्वादीनामेकत्वमन्तरेणाऽनुत्पत्तौ किञ्चित्प्रमाणमस्ति, अतो नैकत्वगुणसिद्धिसम्भव इत्याहुः ।

तन्न, एकत्वस्य जातिरूपत्वे एकत्वद्वयावगाहिज्ञानत्वादिनाऽपेक्षाबुद्धेर्द्वित्वहेतुत्वानुपपत्त्यैवैकत्वरूपगुणसिद्धेः । एकत्वावगाहिज्ञानत्वेन तस्या हेतुत्वाभ्युपगमे च द्वित्वादीनामविशेषापत्तेः, एकमात्रे तज्ज्ञानाद्द्वित्वाद्युत्पादापत्तेश्च, तद्व्यक्तिसमवेतानेकसङ्ख्यासामान्यं प्रति एकत्वप्रकारकतत्तद्व्यक्तिविशेष्यकज्ञानत्वादिना हेतुत्वमभ्युपगम्य निरुक्तदोषवारणसम्भवेऽपि घटो घटवृत्त्येकत्ववान् पटो घटवृत्त्येकत्ववानिति ज्ञानादपि घटपटयोर्द्वित्वोत्पादापत्तेर्दुर्वारत्वेनैकत्वस्य गुणत्वस्वीकार आवश्यकः ।

एकत्वस्य गुणत्वपक्षे द्वित्वासमवायिकारणत्वमपि तस्याऽऽवश्यकम्, तन्मते अपेक्षाबुद्धेर्हि द्वित्वहेतुत्वं केन रूपेण ? न तावदेकत्वद्वयावगाहिज्ञानत्वेन द्वित्वत्वावच्छिन्नं प्रति जनकत्वम्, तथा सति द्वित्वाधिकरणे घटादावपेक्षाबुद्धिविरहेण व्यभिचारप्रसङ्गात्, किन्तु स्वविषयैकत्ववत्त्वसम्बन्धेनैकत्वद्वयावगाहिज्ञानं समवायेन द्वित्वं प्रति हेतुरिति वक्तव्यम्, इत्थञ्च विनिगमनाविरहेण एकैकत्वावगाहिनो ज्ञानात्प्रागुक्तरीत्यैकत्वोत्पादवारणाय च ज्ञानविषयीभूतैकत्वद्वयस्याऽपि समवायसम्बन्धेन हेतुत्वस्याऽऽवश्यकत्वात् । अत एवैकत्वांशे ज्ञायमानत्वविशेषणमपि सङ्गच्छते । न च विशेष्यतासम्बन्धेनैवैकत्वद्वयावगाहिज्ञानात्मकापेक्षाबुद्धेर्हेतुत्वमस्त्विति वाच्यम् । तथा सत्येकत्रैकत्वद्वयावगाहिभ्रमादप्येकमात्रवृत्तिद्वित्वोत्पादापत्तेः; तादृशप्रमात्वेन द्वित्वादिजनकत्वाभ्युपगमे च महागौरवप्रसङ्गात्, एकत्र द्वयमिति रीत्या अयमेकत्वगगनवानित्येकैकत्वावगाहिनो द्वयोरेकमिति रीत्या च घटपटयोरेकत्वमित्येकत्वान्तरावगाहिनो ज्ञानस्य घटेतरपदार्थयोर्द्वित्वानुत्पादकत्वप्रसङ्गेन व्यभिचारभयेन च भ्रमत्वानिरूपकविशेष्यतासम्बन्धेन तदनिरूपकप्रकारतानिरूपितविशेष्यतासम्बन्धेन च हेतुत्वकल्पनस्याऽप्यसम्भवात्, गौरवाच्च । ज्ञानस्यैकत्वद्वयानवगाहित्वे द्वित्वोत्पादवत् एकत्वद्वयाभावेऽपि तदुत्पादस्याऽनिष्टत्वात् । अन्यथा एकमात्रवृत्तेरपि द्वित्वादेरभ्युपगमे आकाशाविति वाक्यस्य प्रमाणत्वापत्त्या सुवादीनामुद्देश्यतावच्छेदकव्याप्यपर्याप्तिसम्बन्धेन सङ्ख्याबोधकत्वव्युत्पत्तिस्वीकारविरोधप्रसङ्गात् । अथ तादृशस्थले एकमात्रवृत्तिद्वित्वादेः पर्याप्त्यभ्युपगम एव मानाभावः, तथा च तादृशपर्याप्तिसम्बन्धेन तादृशद्वित्वादेराकाशत्वावच्छिन्नेऽन्वयासम्भवादेव नोक्तवाक्यप्रामाण्यापत्तिः । न च सङ्ख्यामात्रस्यैव पर्याप्तिसम्बन्धः स्वीक्रियत इति वाच्यम् । मानाभावात्, प्रत्येकं द्वावित्यादिप्रतीतिवारणायैव पर्याप्तेः सिद्धान्ते स्वीकरणीयत्वात्, प्रकृते चैकमात्रवृत्तिद्वित्वावगाहितादृशप्रत्ययाभावेन तथा स्वीकारे मानाभावात् । अत एव 'धूमत्वमेकस्मिन्नेव धूमे पर्याप्तमित्यादिप्रतीतेः प्रत्येकवृत्तिधर्मावच्छिन्नाधिकरणत्वावगाहितयैवोपपत्तौ धूमत्वादेः पर्याप्तिसम्बन्धसत्त्वे मानाभावः*—' इति जगदीशभट्टाचार्यैरप्युक्तमिति चेन्न । यादृशस्थलविशेषे प्रथममेकत्वद्वयावगाही एकमात्रविशेष्यकोऽपेक्षाभ्रमः, द्वितीयक्षणे तृतीयक्षणे वा पूर्वज्ञानधर्मिकमप्रामाण्यज्ञानम्, तादृशस्थलविशेषे द्वित्वोत्पादाभ्युपगमे चतुर्थक्षणे द्वित्वप्रत्यक्षापत्तेरेव दोषत्वात् । तत्स्थले द्वित्वेन्द्रियसन्निकर्षादीनां तत्र सत्त्वेन तत्प्रत्यक्षानुत्पादकारणस्य वक्तुमशक्यत्वात् । तादृशाप्रामाण्यज्ञानानास्कन्दितैकत्वभ्रमवतश्च द्वित्वप्रत्यक्षं दोषवशाज्जायमानं भ्रमात्मकमेवाऽभ्युपेयत इति न क्षतिः । अत एव तादृशस्थले पुरुषस्य भ्रान्तत्वव्यवहारोऽपि सङ्गच्छते, अन्यथा तत्प्रत्यक्षस्य वास्तविकद्वित्वावगाहित्वेन भ्रमत्वानुपपत्तेरिति । एतेनाऽप्रामाण्यज्ञानाभावविशिष्टाया एवाऽपेक्षाबुद्धेर्द्वित्वादिहेतुत्वाभ्युपगमेनैवोक्तदोषवारणसम्भव इत्यपास्तम् । अथ कीदृशद्वित्वव्यक्तिस्तत्राऽऽपाद्यते ? न तावत् प्रसिद्धद्वित्वव्यक्तिः, तासामेकत्रैकत्वद्वयावगाहिज्ञानजन्यत्वस्य त्वया मया चाऽनभ्युपगमेन तादृशज्ञानकाले आपादनासम्भवात्, तत्तद्द्वित्वव्यक्तिं प्रति विशिष्य तत्तज्ज्ञानव्यक्तीनां कारणत्वात्, प्राक्तनापेक्षाबुद्धिनाशादिदानीन्तनद्वित्वनाशवारणाय विशेषतस्तत्तदपेक्षाबुद्धिजन्यद्वित्वनाशं प्रति तत्तदपेक्षाबुद्धिनाशस्य हेतुताया वक्-

---

* अवच्छेदकत्वनिरुक्तिजागदीशी ।

## रामरुद्री ।

व्यतया तस्या एतादृशविशेषकार्यकारणभावं विना वक्तुमशक्यत्वात्, नाश्यतावच्छेदककोटौ तत्तद्व्यक्तित्वावच्छिन्नजन्यताया एव प्रवेशनीयत्वात्, कालान्तरीणापेक्षाबुद्धेरपि अनेकैकत्वावगाहिज्ञानत्वेन स्वरूपयोग्यतया तज्जन्यताया वर्तमानद्वित्वेऽपि सत्त्वेन तन्नाशाधीनप्रकृतद्वित्वनाशापत्तेरपरिहरणीयत्वात्, यत्र तद्व्यक्तिद्वये पूर्वमेकस्या अपेक्षाबुद्धेरेकं द्वित्वमुत्पन्नं, परस्ताच्चाऽपेक्षाबुद्धेर्द्वित्वान्तरमपि, तादृशस्थलविशेषे भावितद्व्यक्तेः प्रथमद्वित्वोत्पादकाले उत्पत्तिवारणायाऽपि निरुक्तरीत्या विशिष्य कार्यकारणभावस्वीकारावश्यकत्वाच्च। तथा च विशेषकारणविरहादेव भ्रमात्मकापेक्षाबुद्धिस्थले न द्वित्वोत्पादसम्भव इत्येकत्वद्वयादेर्द्वित्वादिहेतुत्वे मानाभावः । न च यत्र प्रथमं भाविज्ञानधर्मिकमिदं ज्ञानं एकत्वशून्ये घट एकत्वावगाहीत्याकारकमप्रामाण्यज्ञानम्, ततो घट एकत्ववान्, पट एकत्ववान्, पटश्चैकत्वद्वयवानिति समूहालम्बनात्मिकाऽपेक्षाबुद्धिः, तदुत्तरक्षणे च तादृशाप्रामाण्यज्ञानविनाशः, ततो घटपटयोर्द्वित्वोत्पत्तिः, तत्र तादृशद्वित्वव्यक्तेस्तदव्यवहितप्राक्क्षणे पटे आपत्तिर्दुर्वारा, हेतुभूतज्ञानव्यक्तेः पूर्वं सत्त्वात्। तद्व्यक्तेः पूर्वक्षण एवोत्पत्त्यविशेषापत्तिस्तु न सम्भवति यदेकत्वांशे अप्रामाण्यज्ञानास्कन्दितमपेक्षाज्ञानम्, तदन्यैकत्वज्ञानस्यैव हेतुत्वस्य अप्रामाण्यज्ञानास्कन्दितैकत्वद्वयावगाहिज्ञानस्थले द्वित्वोत्पादापत्तिवारणाय घटपटैकत्वांशे अप्रामाण्यज्ञानास्कन्दिताया गवाश्वयोश्चैकत्वावगाहिन्या अपेक्षाबुद्धेर्गवाश्वद्वित्वोत्पत्त्युपपादनाय च स्वीकारावश्यकत्वात्, प्रकृते तादृशपटांशे भासमानैकत्वद्वयावगाहितामादायैव तस्योपपादनीयत्वेनैकमात्रवृत्तिद्वित्वोत्पादप्रसङ्गात् । अप्रामाण्यज्ञानाभावविशिष्टतद्व्यक्तेरेव तद्व्यक्तिं प्रति हेतुत्वमभ्युपगम्योक्तस्थले प्रथमक्षणे तादृशद्वित्वोत्पादवारणसम्भवेऽपि यादृशस्थलविशेषे घटैकत्वांशेऽप्रामाण्यज्ञानात्मिकैव पूर्वोक्तरीत्याऽपेक्षा धीः, ततस्तद्द्वितीयक्षणेऽप्रामाण्यज्ञानधर्मिकमप्रामाण्यज्ञानं, तत्र द्वित्वोत्पादापत्तिरपपद्यत एव, अप्रामाण्यज्ञानाभावविशिष्टतद्व्यक्तेस्तद्व्यक्तौ हेतुत्वस्य प्रकृतस्थले वक्तुमशक्यत्वात्, अप्रामाण्यज्ञानाभावविशिष्टाप्रामाण्यज्ञानाभावविशिष्टतद्व्यक्तेस्तत्र विशिष्य हेतुत्वाभ्युपगमे चोक्तरीत्या अप्रामाण्यज्ञानं, तद्धर्मिकमप्रामाण्यज्ञानं तद्धर्मिकाप्रामाण्यज्ञानात्मकं प्राथमिकमपेक्षाज्ञानं, तदुत्तरं च तद्धर्मिकमप्रामाण्यज्ञानं यत्र समवहितं तत्र तादृशाप्रामाण्यज्ञानचतुष्टयाभावघटनया तद्व्यक्तेः कारणत्वकल्पने गौरवादेकत्वस्यैव द्वित्वहेतुत्वकल्पनं युक्तम् । अप्रामाण्यज्ञानास्कन्दिताया अपि तद्व्यक्तेः यज्ज्ञानव्यक्तिसमवधानकाल एव द्वित्वहेतुत्वमुपपन्नं भवति, तद्व्यक्त्यभावविशिष्टाप्रामाण्यज्ञानाभावविशिष्टतद्व्यक्तित्वेन तद्द्वित्वव्यक्तिं प्रति हेतुत्वाभ्युपगमेऽभावचतुष्टयाघटितकार्यकारणभावसम्भवेऽपि गौरवस्य दुरुद्धरत्वात् । विनश्यदवस्थज्ञानाद्द्वित्वाद्युत्पत्तिरेव न सम्भवति, तथा सति द्वित्वस्य क्षणिकत्वप्रसङ्गेन प्रत्यक्षाविषयत्वापत्तेरिति तु नाऽऽशङ्कनीयम्, स्वरूपयोग्यकारणसत्त्वेन तादृशस्थले द्वित्वोत्पादस्यावर्जिततया प्रत्यक्षासम्भवेऽपि क्षत्यभावात्, तज्ज्ञानव्यक्तेर्विशिष्य कारणत्वमेव न कल्प्यत इति शेषकारणाभावकूट एव तत्र द्वित्वत्वाद्यवच्छिन्नानुत्पत्तिप्रयोजकोऽस्त्वित्यपि न साम्प्रतम्, कूटस्य तत्र प्रयोजकत्वकल्पने बलवत्तरप्रमाणाभावेन तत्कल्पनाया अन्याय्यत्वादिति वाच्यम् । तादृशद्वित्वक्षणिकत्वस्य त्वयैवोक्तत्वेन तदुत्पत्तिस्वीकारेऽपि क्षत्यभावात्, तादृशस्थले तस्य प्रथमक्षण उत्पत्त्यङ्गीकारेऽपि तस्य द्विक्षणावस्थायितया तृतीयक्षणे सविकल्पकप्रत्यक्षविषयत्वापादनासम्भवात्, सविकल्पकविषयत्वस्यैवाऽभावे तदधीनसिद्धिकस्य निर्विकल्पकविषयत्वस्याऽप्यापादनायोगाच्च । मैवम् । द्वित्वत्वस्मरणसत्त्वे तत्र द्वित्वद्वितीयक्षण एव तत्प्रत्यक्षापत्तेरापादयितुं शक्यत्वात् । न च त्वन्मतेऽपि एकत्वद्वयस्य कारणत्वं न सम्भवति, तस्यैकत्वद्वयत्वेन कार्योत्पत्तिप्रयोजकताया एकत्राऽसत्त्वेन कल्पनायोगादिति वाच्यम्। कालनिष्ठप्रत्यासत्त्यैवैकत्वद्वयस्य प्रयोजकतया समवायेन तस्य हेतुत्वस्वीकारेऽविरोधादिति ध्येयम् * ।

---

* अयं भावः । एकत्वद्वयस्य प्रत्येकं समवायेनैव हेतुत्वम्, सामग्र्याः कार्योत्पत्तिव्याप्यत्वं तु कालनिष्ठप्रत्यासत्त्या कल्प्यत इति ।

**द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥**

द्वित्वादय इति । द्वित्वादयो व्यासज्यवृत्तिसङ्ख्या अपेक्षाबुद्धिजन्याः ॥१०७॥

**दिनकरी ।**

**द्वित्वादय इति ।** एकत्वान्यसङ्ख्यामात्रमपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थः ।

**रामरुद्री ।**

मूले—**द्वित्वादय इति ।** नन्वादिशब्दस्तावत् प्राथम्यवाची । तच्च प्रकृते 'विषयो द्व्यणुकादिश्च-इत्यादिस्थल इव नोत्पत्तिनिरूप्यम्, त्रित्वाद्यपेक्षया द्वित्वस्य प्राथमिकोत्पत्तिमत्त्वस्य क्वचित्संभवेऽपि विनिगमनाविरहेण त्रित्वादेरपि द्वित्वाद्यपेक्षया काचित्कं प्राथम्यमादाय त्रित्वादीति प्रयोगे द्वित्वादेरपि संग्रहप्रसङ्गात् । न च तत्तदपेक्षाबुद्धिजन्यसङ्ख्यान्तरापेक्षयैव प्राथम्यमुक्तादिपदेन बोध्यते, इत्थञ्च त्रित्वादिसमकालमेव द्वित्वाद्युत्पत्तेरभ्युपगमात् न त्रित्वादेर्द्वित्वप्राथम्यप्रसङ्ग इति वाच्यम् । तथा सति द्वित्वस्याऽपि त्रित्वप्राथम्याभावेन 'द्वित्वादि'इत्युक्तेरप्यसङ्गतत्वापातात् । न चाऽऽदिपदाभिलप्यं प्राथम्यमिह 'बुद्ध्यादिषट्कं-'इत्यादिवत् पाठनिरूप्यमेवाऽस्त्विति वाच्यम् । बुद्ध्यादीनां पाठक्रमनिरूपितस्य पौर्वापर्यस्य सम्भवेऽपि प्रकृते द्वित्वत्रित्वादेः क्रमशः पठनस्याऽभावेन तन्निरूपितपौर्वापर्यस्य विवक्षितुमशक्यत्वात् । एकं द्वे इत्यादिलौकिकपाठमादाय तन्निरूप्यप्राथम्यस्य विवक्षणे च द्वे एकं चत्वारि त्रीणि पञ्चेत्यादि वाक्यमादाय तदीयपाठक्रमस्याऽपि ग्रहीतुं शक्यतया त्रित्वादय इत्यपि प्रयोगापत्तिस्तदवस्थैव स्यादित्यतो 'द्वित्वादयः—' इत्यस्य समुदितमर्थमाह टीकायाम्—**एकत्वान्यसङ्ख्यामात्रमिति ।** **'आदि'** शब्दस्य प्राथम्यवाचित्ववत् प्रकारवाचित्वस्याऽपि स्वीकृततया **'द्वित्वादयः'** इत्यनेनाऽनेकसङ्ख्यात्वप्रकारेण द्वित्वतदितरसङ्ख्यासामान्यबोधनान्न दोषः । आदिशब्दस्य प्रकारवाचित्वं च 'भूवादयो धातवः—'इत्यादिपाणिनीयसूत्रे स्पष्टम् । तत्र हि भूश्च वाश्च भूवौ, आदिश्चाऽऽदिश्चाऽऽदी, भूवौ आदी येषां ते भूवादय इति व्युत्पत्तिमाश्रित्य क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युरिति सूत्रार्थो वैयाकरणैर्वर्ण्यते, स चाऽऽदिशब्दस्य प्रकारवाचित्वं विनाऽनुपपन्नः' तत्र भूशब्दसङ्गतेनाऽऽदिपदेन प्राथम्यस्यैव वासङ्गतेन तेन क्रियावाचित्वबोधनस्य तैरङ्गीकारादिति ध्येयम् । यद्यप्येवं सति आदिपदादेवाऽनेकसङ्ख्यात्वाद्यवच्छिन्नबोधनसम्भवात् तदुपसंहितस्य द्वित्वपदस्य वैयर्थ्यम्, तथाऽपि टावदिमानयेत्यादावादिशब्दस्य द्रव्यत्वादिप्रकारवचनताया अपि स्वीकर्तव्यतया प्रकृतेऽनेकसङ्ख्यात्वरूपप्रकारे तात्पर्यग्रहायैव द्वित्वपदोपसन्दानमित्यवधेयम् । अनयैव च रीत्या कारिकायामपि **द्वित्वादयः'** इति शब्दार्थो व्याख्येयः । **'परार्धान्ताः—'** इत्यत्र परार्धस्याऽन्तत्वं तु स्वविजातीयसङ्ख्याव्याप्यत्वाभाव इति बोध्यम् । सम्प्रदायविदस्तु **'आदि'**शब्दोऽत्र प्राथम्यवाची, प्राथम्यं च स्वव्याप्यानेकवृत्तिसङ्ख्यासामान्यव्याप्यत्वम् । स्वसमानाधिकरणेत्युक्ते घटपटद्वित्वस्य तादृशपटमठद्वित्वाव्याप्यत्वादसंग्रहः स्यादतः स्वव्याप्येत्युक्तम् । सामान्यपदानुक्तौ त्रित्वादेरपि स्वव्याप्यस्वात्मकसङ्ख्याव्याप्यत्वादादिशब्दाभिलप्यप्राथम्यवत्त्वापत्तिरित्यतस्तदुपात्तम् । सामान्यपदमनुक्त्वा स्वभिन्नत्व-व्याप्यत्वोभयसम्बन्धेन स्वव्याप्यसङ्ख्याविशिष्टत्वस्य तथात्वविवक्षणेऽपि नैतद्दोषोद्धारः सम्भवति, घटपटमठत्रित्वस्य तादृशस्वव्याप्यत्रित्वान्तरव्याप्यत्वादित्यतस्तदुपेक्ष्य सामान्यपदमेवोपात्तम् । स्वव्याप्यसङ्ख्यासामान्यव्याप्यत्वस्थाने तत्सामानाधिकरण्यमात्रोपादाने त्रित्वादेः संग्रहो दुर्वारः, तस्यापि स्वव्याप्ययावत्सङ्ख्यासमानाधिकरणत्वादित्यतो व्याप्यत्वपर्यन्तमनुसृतम् । तथा च त्रित्वादेः स्वव्याप्यद्वित्वादिव्याप्यत्वाभावान्न प्राथम्यम् । परार्द्धस्याऽन्तत्वमपि स्वव्यापकयावत्सङ्ख्याव्यापकत्वम् । तत्राऽपि स्वसमानाधिकरणेत्युक्तौ प्रतिक्षणं किञ्चिद्द्रव्यस्य विनाशात् तत्क्षणवृत्तियावद्द्रव्यगतस्य परार्धत्वस्य तत्पूर्वक्षणवृत्तियावद्द्रव्यवृत्तिपरार्धत्वस्य च परस्पराभावसमानाधिकरणत्वेऽपि नित्यगगनाद्यन्तर्भावेन सामानाधिकरण्यात्तदादाय परस्पराव्यापकत्वादसंग्रहवारणाय स्वव्यापकेत्युक्तम् । स्वव्यापकत्वस्थाने स्वाधिकरणक्षणवृत्तीत्युक्तावपि न निस्तारः, तत्क्षणाव्यवहितप्राक्क्षणगतयावद्द्रव्यसमवेतपरार्धत्वस्य तदुत्तरक्षण एव तत्क्षणोत्पन्नतदव्यवहितप्राक्क्षणीययत्किञ्चिद्द्रव्यनाशाधीननाश-

## रामरुद्री ।

प्रतियोगित्वेन क्षणघटितस्वसामानाधिकरण्यस्याऽबाधतत्वेन पुनस्तद्दोषतादवस्थ्यात् । स्वोत्पत्तिक्षणोत्पत्तिकेत्युक्तौ च न किञ्चिल्लाघवमवशिष्यते । प्रतिक्षणं किञ्चिद्द्रव्यं विनश्यतीत्यनभ्युपगमेऽपि न क्षतिः, यत्र क्षणद्वये परस्परावृत्तिद्रव्याश्रयत्वं प्रसिद्धम्, तत्रैव तत्तत्क्षणोत्पन्नयावद्द्रव्यगतपरार्धत्वासंग्रहभियैव स्वव्यापकत्वस्य निवेशनीयत्वात् । स्वसमानकालीनयावत्सङ्ख्यासामानाधिकरण्यस्याऽपि च न तथात्वसम्भवः, द्रव्यनाशाधीनसङ्ख्यानाशस्थले एव द्रव्यनाशकालोत्पन्नपरार्धत्वे तादृशयावत्सङ्ख्यासामानाधिकरण्यस्य समवायघटितस्याऽसम्भवात्, कालिकघटितसामानाधिकरण्यविवक्षणे तु एकत्वद्वित्वादेरपि अन्तत्वप्रसक्तो दुर्वार इति । यावत्पदानुक्तौ स्वव्यापकीभूतस्वात्मकसङ्ख्याव्यापकत्वमादायैकत्वादावतिप्रसङ्गः प्रसज्यत इत्यतस्तथाऽनुक्तिः । स्वभिन्नत्व–स्वव्यापकत्वोभयसम्बन्धेन तादृशसङ्ख्यावैशिष्ट्योक्तावपि पूर्वोक्तरीत्या दोषो बोध्यः । स्वव्यापकयावत्सङ्ख्यासामानाधिकरण्यस्य न्यूनवृत्तिसङ्ख्यादावपि सत्त्वादतिप्रसङ्गवारणाय व्यापकत्वं द्वितीयमुपात्तमित्याहुः, तन्न, तथा सति द्वित्वादय इत्यनेन द्वित्वस्य **परार्धान्ता** इत्यनेन परार्धत्वस्य च बोधनेऽपि त्रित्वादेरलाभेन न्यूनतापत्तेः, द्वित्वमादिर्येषामित्यादिरीत्या समासमाश्रित्याऽऽदित्वाश्रयद्वित्वकालीनत्वादिप्रकारेण त्रित्वाद्युपग्रहे चैकत्वस्याऽपि संग्रहप्रसक्तो दुर्निवारः, एवं **परार्धान्ता** इत्यत्राऽपीत्यवधेयम् ।

वस्तुतस्तु '**आदि**'शब्दोऽत्र लक्षणया व्यापकत्ववाची परिगृह्यते, तथा च यत्किञ्चिद्द्वित्वव्यापिका इत्यर्थः, '**परार्धान्ताः**' इत्युक्तिश्च सङ्ख्यायाः परार्धपर्यन्तत्वरूपव्यवच्छेदबोधनाय, तदन्तत्वं च तद्व्यापकत्वम् । तथा च परार्धत्वव्याप्या इति पर्यवसितोऽर्थः ।

अत्र च परार्धपर्यन्तैव सङ्ख्येत्यागमप्रामाण्यादभ्युपगम्यत इत्याचार्याः ।

वस्तुतस्तु स्वोत्पत्तिकालोत्पत्तिकयावत्सङ्ख्यासमानाधिकरणसङ्ख्यात्वमेव परार्धत्वम् । विद्यमानयावद्द्रव्यगतत्वं च परार्धत्वस्य स्वीक्रियते, तद्व्यक्तिसमवेतैकत्वान्यसङ्ख्यासामान्यं प्रति तद्व्यक्तिगतैकत्वज्ञानत्वेनाऽपेक्षाबुद्धेर्द्वित्वादिजनकताया वक्ष्यमाणतया एककालीनद्रव्यगतयावदेकत्वविषयिण्या भगवदपेक्षाबुद्धेः सत्त्वेन कार्योत्पत्तेरावश्यकत्वे तादृशकार्यस्य युगपदुत्पन्नयावद्द्रव्यगतस्यैकस्य कल्पनीयत्वावश्यकतया परार्धत्वसङ्ख्योपपत्तेः । अत एव परार्धत्वसङ्ख्याऽतीन्द्रियैवेति प्राचीनसिद्धान्तः सङ्गच्छते । अन्यथाऽतीन्द्रियायास्तस्या मानाभावेन साधनानर्हतापत्तेः, परार्द्धत्वसङ्ख्याया लक्षत्वादेः शतसहस्रैकत्वादिज्ञानजन्यत्ववत् प्रतिनियतकतिपयैकत्वज्ञानजन्यत्वे योग्यपदार्थमात्रघटितैकत्वज्ञानवतः पुंसः परार्धत्वे चक्षुरादिसन्निकर्षात् तत्प्रत्यक्षवारणाय विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन परार्धत्वस्य प्रतिबन्धकत्वकल्पनप्रसक्तौ महागौरवापाताच्च । अस्मन्मते तु वक्ष्यमाणयुक्त्या न युगपदुत्पन्नयावद्द्रव्यैकत्वप्रत्यक्षविरहिणः पुंसस्तत्प्रत्यक्षापत्तिरिति निरूपयिष्यते । नन्वेवमपि सङ्ख्यायाः परार्धपर्यन्तत्वमनुपपन्नम्, भगवदपेक्षाबुद्धेरविद्यमानद्रव्यगतैकत्वविषयकताया अपि स्वीकरणीयतया यावद्द्रव्यगतस्य सङ्ख्यान्तरस्याऽपि स्वीकरणीयत्वात् । न च तर्हि तदेव परार्धत्वमस्तु, यावद्द्रव्यगतसङ्ख्यात्वस्यैव तल्लक्षणत्वसम्भवात्, तत्र परात्वमुपेक्ष्य परार्धत्वव्यवहारस्तु पदार्थमात्रवृत्त्यपेक्षाबुद्धिविशेषविषयत्वरूपसङ्ख्यापेक्षया न्यूनवृत्तितयैवोपपाद्यतामिति वाच्यम् । सिद्धान्ते सङ्ख्यासामान्यस्य सङ्ख्यासमानाधिकरणाभावप्रतियोगित्वनियमाङ्गीकारविरोधादिति चेन्न । समवायिकारणस्य द्रव्यस्य विशेषतस्तत्तद्व्यक्तिसमवेतसत्सामान्यं प्रति तद्व्यक्तित्वेन हेतुताया रूपरसादिभेदेनाऽनन्तकार्यकारणभावकल्पनागौरवभिया स्वीकर्तव्यत्वेन यावद्द्रव्यात्मकविशेषकारणकूटस्यैककालमसम्भवादेव सङ्ख्याया यावद्द्रव्येषूत्पादासम्भवात् । अथैवमीश्वरीयापेक्षाबुद्धितो द्व्यणुकपरिमाणारम्भकसङ्ख्याविशेषोत्पादोपगमविरोधप्रसङ्गः । न च तत्र परार्धत्वसङ्ख्ययैव परिमाणोत्पादोपगमान्न तद्विरोधः, द्वित्वाभ्यामेव तदुत्पद्यत इत्यत्र तु न किञ्चित्साधकमस्तीति वाच्यम् । तथा सति कपालद्वयारब्धे घटे घटान्तरारम्भककपालान्तर्भावेन त्रित्वसङ्ख्यामादाय कपालत्रयारब्धघटपरिमाणोत्पादवारणाय परिमाणग्रन्थे वक्ष्यमाणकार्यकारणभावविशेषस्य स्वीकर्तव्यतया परार्धत्वसङ्ख्याया अनारम्भकद्रव्यवर्तिन्याः परिमाणजनकत्वायोगात्, परमाणुसमानयोगक्षेमे द्व्यणुकेऽपि त्रसरेणुपरिमा-

दिनकरी ।

**असमवायिकारणं तु द्वित्वं प्रति समवायिकारणगतयावदेकत्वमिति बोध्यम् । ननु योग्यद्वित्वादावपेक्षाबुद्धेर्हेतुत्वेऽप्ययोग्यद्वित्वादौ तद्धेतुत्वे मानाभाव इति चेन्न, योग्यद्वित्वा-**

रामरुद्री ।

द्यारम्भिकायाः सङ्ख्याया भगवदपेक्षाधीजन्यत्वेन तस्या अपि परार्धत्वरूपत्वाङ्गीकारे द्व्यणुके महत्त्वस्य त्रसरेणौ चाऽणुत्वस्योत्पादापत्तेः । यद्यपि परमाणुभिर्द्व्यणुकारम्भोत्तरमेव त्रसरेणोरारब्धव्यतया द्व्यणुकोत्पादादर्वाक् नित्यमात्रसमवेतमेव परार्धत्वं स्वीकरणीयम्, द्व्यणुकारम्भे च सामग्रीसम्पत्त्या तद्घटितं परार्धत्वमन्यदेवेति त्रसरेणुपरिमाणद्व्यणुकपरिमाणारम्भकयोः परार्धत्वयोर्भेदान्न द्व्यणुकत्र्यणुकयोः परस्परपरिमाणोत्पादापत्तिरिति वक्तुं शक्यम्, तथाऽपि यावद्व्यणुकारम्भोत्तरमेव त्रसरेणुरुत्पद्यत इति नियमे मानाभावेन समकालीनपरमाणुसमूहद्वयारब्धद्व्यणुकत्र्यणुकयोस्तुल्यपरिमाणतापत्तिर्न वारयितुं शक्यते, तत्र तद्धेतुभूतायाः परार्धत्वसङ्ख्याया अविशेषादिति चेन्न, अधिकदेशवृत्तिसङ्ख्याया उत्पादकाले न्यूनदेशवृत्तिसङ्ख्याया अप्युत्पादाभ्युपगमेन भगवदपेक्षाबुद्ध्या परार्धत्वसङ्ख्योत्पादवेलायां न्यूनवृत्तिद्वित्वत्रित्वाद्युत्पादसम्भवेन द्व्यणुकत्र्यणुकपरिमाणयोः परमाणुद्व्यणुकगतद्वित्वत्रित्वसङ्ख्ययोः कारणत्वोपपत्तेः । न चैवं घटादावपि भगवदपेक्षाबुद्धिजन्यद्वित्वाद्युत्पादप्रसङ्ग इति वाच्यम् । इष्टत्वात्, कपाले स्वोत्पत्तितृतीयक्षणे कपालान्तरसंयोगबलाद्घटोत्पत्तौ स्वीयपरिमाणसहकृतयेश्वरीयत्रित्वसङ्ख्यया घटपरिमाणजननानुभवात् । अन्यथा कपालैकत्वोत्पत्त्युत्तरमेव तद्गतैकत्वज्ञानसम्भवेन तत्क्षणे तत्पूर्वक्षणोत्पन्नकपालान्तरसंयोगेन घटोत्पत्त्या तदुत्तरक्षणे एव पौरुषापेक्षाबुद्धिजन्यद्वित्वोत्पत्त्या तत्काले घटपरिमाणोत्पादासम्भवप्रसङ्गात् । अस्मन्मते तु भगवदपेक्षाबुद्धेर्नित्यतया घटगतैकत्वोत्पादसमकालमेव द्वित्वसामग्रीसम्पत्त्या घटगतपरिमाणविशेषोत्पत्तिः समर्थयितुं शक्यत एवेति न प्रागुक्तदोषशङ्काऽपि । न चैवं परार्धसङ्ख्यायाः प्रतिनियतैकत्वज्ञानजन्यत्वाभावेन परार्धत्वरूपजातौ मानाभावः, अन्यथा प्रतिक्षणं तुल्यसङ्ख्यद्रव्योत्पत्तौ मानाभावेन विजातीयसङ्ख्याद्वयस्य तत्रोत्पादाभ्युपगमावश्यकत्वेन तदन्तर्गतस्यैकस्य परार्धत्वाश्रयत्वेऽपरस्याऽऽधिक्यापत्तेरिति वाच्यम् । स्वसमानकालीनोत्पत्तिकयावत्सङ्ख्यासमानाधिकरणत्वस्यैव परार्धत्वरूपतया तयोः परस्परवैजात्येऽपि निरुक्तोपाधिपुरस्कारेण विभागविषयतयाऽऽधिक्यशङ्काऽनवकाशादिति युक्तमुत्पश्यामः ।

अन्ये तु परार्धत्वं जातिविशेष एव, तदुत्तरसङ्ख्यानामेकाधिकपरार्धत्वादिपद*प्रतिपाद्यतया मूलस्थ 'परार्ध'पदस्य चैकशेषकल्पनेन संग्रह इत्याहुः, तच्चिन्त्यम् ।

**अपेक्षाबुद्धिरूपनिमित्तकारणजन्यमित्यर्थ इति ।** तथा च **'अपेक्षाबुद्धिजाः'**—इत्यादिमूलेन अपेक्षाबुद्धेर्द्वित्वोत्पत्तिहेतुत्वमेव विवक्षितम्, न त्वभिव्यञ्जकत्वरूपं मीमांसकमतसिद्धं हेतुत्वमिति भावः । द्वित्वादौ अपेक्षाबुद्धिरेव कारणमिति भ्रमं निराकर्तुमाह टीकायाम्—**असमवायिकारणं त्विति ।** अत्रेदं चिन्त्यम् । द्वित्वं प्रति एकत्वं चेदसमवायिकारणं, तदा तुल्ययुक्त्याऽवयवगतद्वित्वादेरपि तत्राऽसमवायितया तस्य कारणगुणोत्पन्नत्वमेवाऽऽयातमिति प्राक्कारणगुणोत्पन्नगुणमध्ये द्वित्वं कथं न परिगणितम् ? न च स्वसमवायिसमवेतत्वसम्बन्धेनाऽवयवद्वित्वस्य द्वित्वहेतुत्वे मानाभाव इति तत्र परिष्कृतं कारणगुणोत्पन्नत्वं तत्र न सम्भवतीति वाच्यम् । तथा सत्येकत्वस्य समवायेनाऽपि कारणत्वे मानाभावेन तस्याऽसमवायिकारणत्वकथनानौचित्यादिति चेत्, अत्राऽऽचार्याः, कार्यद्वित्वे कारणगतैकत्वजनितद्वित्वस्य कारणत्वाङ्गीकारे समवायेन द्वित्वं प्रत्येकत्वद्वयजनितं द्वित्वं स्वसमवायिसमवेतत्वसम्बन्धेन कारणमिति वक्तव्यम्, इत्थं च कारणाधिकरण एव कार्योत्पत्तिसम्भवेन तादृशैकत्वद्वय-

---

* तदुक्तं लीलावत्याम्—

'एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।
अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ।
जलधिश्चाऽन्त्यं मध्यं परार्धमिति दशगुणोत्तराः सञ्ज्ञाः—' इति ।

दिनकरी।

देरपेक्षाबुद्धिजन्यत्वेऽतीन्द्रियद्वित्वादावप्यनेकसङ्ख्यात्वादिना तदनुमानात्।

रामरुद्री।

जन्यद्वित्ववति एकस्मिन्नेव द्व्यणुके रूपादिवद्द्वित्वमभ्युपपद्येत, एकत्वद्वयस्य तु न कार्यगतद्वित्वादिजनकत्वसम्भवः, विजातीयत्वात्, विजातीयस्य हेतुत्वेऽपि कार्याकार्यद्वित्वोत्पादानुपपत्तेश्च, तत्र कारणाकारणैकत्वद्वयस्यैव स्वसमवायिसमवेतत्वसम्बन्धेन हेतुतायास्त्वया वाच्यत्वेनाऽकारणगतैकत्वस्य प्रत्यासत्तिविरहेण कार्याधिकरणे विरहेणैकत्वद्वयात्मकहेतुविरहाद्व्यभिचारात्, कारणाकारणसंयोगात् कार्याकार्यसंयोगवत् कारणाकारणद्वित्वात् कार्याकार्यद्वित्वोत्पादसम्भवेऽपि कारणाकारणकार्यगतत्रित्वसङ्ख्योत्पत्तिर्नैव समर्थयितुं शक्यते, कारणाकारणगतद्वित्वेन तयोर्द्वित्वोत्पादनसम्भवेऽपि सजातीयस्यैव हेतुतया ततस्त्रित्वोत्पत्त्यसम्भवात्। कारणाकारणोदासीनपदार्थान्तरसाधारणत्रित्वमादाय च न कार्यकारणाकारणसाधारणत्रित्वोत्पत्तिरुपपादयितुं शक्यते, तथा सति तादृशोदासीनपदार्थान्तरद्वयसाधारणचतुष्ट्वादिकमादाय कार्यकारणाकारणसाधारणचतुष्ट्वाद्युत्पादप्रसङ्गात् तस्य तादृशद्वित्वत्रित्वादावहेतुत्वस्य कल्पनीयत्वात्। अन्यथा तद्द्व्यणुकारम्भकपरमाणुद्वयोदासीनपदार्थद्वयतद्द्व्यणुकात्मकपञ्चद्रव्यसाधारणस्यैकस्य चतुष्ट्वस्योत्पादापत्तेः। तस्मात्कारणाकारणसंयोगाज्जायमानस्य संयोगस्याऽकारण इव कारणेऽप्युत्पादवारणाय तद्व्यक्तिद्वयवृत्तिसंयोगं प्रति तत्तद्वृत्तिसंयोगत्वेन प्रतिबन्धकताया(१) इवाऽत्राऽपि द्वित्वत्रित्वादिप्रतिबन्धकतायाः कल्पनीयतया कारणाकारणकार्यसाधारणचतुष्ट्वाद्यनुत्पादापत्तेः, कारणकार्यमात्रसमवेतत्रित्वानुपपत्तेश्च, कारणयोस्त्रित्वविरहात्, अकारणसाधारणत्रित्वस्य कार्यादिसाधारणत्रित्वजनकत्वे उक्तयुक्त्या तस्य चतुष्टयवृत्तित्वापत्तेः। यदि च कारणमात्रसमवेतं द्वित्वं कार्यकारणसाधारणत्रित्व एव कारणम्, कार्यकारणभावस्याऽन्वयव्यतिरेकैकमूलकत्वेन कारणद्वित्वाभ्यां कार्यमात्रद्वित्वोत्पादस्य क्वचिदप्यदृष्टतया तथा हेतुत्वे मानाभावादिति नोक्तानुपपत्तिरित्युच्यते, तथाऽपि कारणकार्यद्वित्वस्याऽनुत्पादप्रसङ्गो दुर्वारः, कारणद्वित्वस्य त्रित्वजनकताया एव भवताऽभ्युपगमात्, कार्यकारणद्वित्वस्य चैतावदवध्यनिष्पन्नतया जनकत्वायोगात्। यदि च कारणद्वित्वं कार्यसाधारणद्वित्वे त्रित्वे च हेतुरित्यभ्युपगम्यते, तथाऽपि नाऽस्ति निर्मोचः, एवं सति तादृशद्वित्वस्य कार्यकारणात्मकत्रितयसाधारणत्वापत्तेर्दुर्वारत्वात्। यदि च निरुक्तदोषभिया एकत्वस्यैव कार्यकारणनिष्ठस्य त्रित्वादिजनकत्वं स्वीक्रियते, एकत्वद्वयस्य द्वित्वं प्रति त्रयस्य च त्रित्वादिकं प्रति हेतुत्वमित्यभ्युपगम्यते, तदाऽस्मन्मतप्रवेशः सम्पन्न इति कुतः कारणगुणपूर्वकत्वं द्वित्वादेरित्याहुः।

वस्तुतस्तु परमाणुमात्रसमवेतद्वित्वोत्पत्तिसमर्थनायैकत्वस्य समवायसम्बन्धेन हेतुत्वावश्यकतया तेनैव निर्वाहे स्वसमवायिसमवेतत्वसम्बन्धेन तस्य वा द्वित्वादेर्वा हेतुत्वान्तरे मानाभाव एव। एकत्वस्य समवायेन द्वित्वादिहेतुत्वे मानाभावशङ्का तु न कर्तव्या, पुरस्तादेव दत्तोत्तरत्वादित्यवधेयम्।(२)

तदनुमानादिति। वस्तुतस्तु योग्यद्वित्वादिस्थलेऽपि द्वित्वत्वावच्छिन्नं प्रत्यपेक्षाबुद्धित्वेनैव हेतुत्वस्य कल्पनीयत्वात्तादृशकार्यतावच्छेदकद्वित्वत्वस्वरूपधर्मावच्छिन्नस्याऽतीन्द्रियद्वित्वादेरप्यपेक्षाबुद्धिजन्यत्वमावश्यकम्, अन्यथा तत्रैव व्यभिचारप्रसङ्गात्, अनन्ततादृशस्थलेषु तादृशानन्तापेक्षाबुद्धिकल्पनागौरवस्य च फलमुखत्वेनाऽदोषत्वादिति ध्येयम्।

---

(१) इत्थं च तादृशस्थले कारणकारणसंयोगव्यक्तिर्नाऽऽपादयितुं शक्या, प्रतिबन्धकस्य विद्यमानत्वात्, कार्याकार्यसंयोगव्यक्तिरपि नाऽऽपादयितुं शक्या, समवायिकारणविरहात्, त्रितयसाधारणसंयोगव्यक्तिरप्यापादयितुं न शक्या, अप्रसिद्धत्वादिति ध्येयम्।

(२) इदमुपलक्षणम्। द्वित्वादेर्द्वित्वादिकं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन हेतुत्वमेव दुर्घटम्, परमाणुद्वित्वे व्यभिचारात्, कार्यतावच्छेदककोटावव्यवहितोत्तरत्वादिनिवेशे च महागौरवादिति।

दिनकरी ।

अथाऽपेक्षाबुद्धेर्द्वित्वहेतुत्वे कथमविरलक्रमेण यावदपेक्षाबुद्धिसत्त्वं न द्वित्वाद्युत्पत्तिः ?

अत्र केचित्, अपेक्षाबुद्धेरुत्पत्तिसम्बन्धेन हेतुत्वान्न यावदपेक्षाबुद्धिसत्त्वं द्वित्वाद्युत्पत्तिरिति,

तन्न, धारावाहिकापेक्षाबुद्धिभिः सर्वत्र धारावाहिकाद्वित्वाद्युत्पत्तेर्दुर्वारत्वात्, भगवदपेक्षाबुद्ध्या धारावाहिकद्वित्वाद्युत्पत्तेर्दुर्वारत्वाच्च, तद्बुद्धेर्नित्यत्वेनोत्पत्तिसम्बन्धेन तद्धेतुत्वस्य दुर्वचत्वात् ।

वस्तुतस्तु तत्तत्पुरुषीयापेक्षाबुद्धिजन्यानेकसङ्ख्यात्वाद्यवच्छिन्नं प्रति तत्तत्पुरुषीयापेक्षाबुद्धिजन्यानेकसङ्ख्यादेः प्रतिबन्धकत्वाभ्युपगमान्न यावदपेक्षाबुद्धिसत्त्वं द्वित्वोत्पत्तिरिति ॥१०७॥

रामरुद्री ।

**अथाऽपेक्षाबुद्धेरित्यादि** । यद्यपीयमाशङ्का रूपादिष्वपि समाना, तत्राऽपि कारणीभूतस्याऽवयवगतरूपादेः स्वसमवायिसमवेतत्वसम्बन्धेन घटरूपोत्पत्तिक्षणेऽपि कार्याधिकरणसमवहिततया तदुत्तरं रूपोत्पादस्याऽऽपादयितुं शक्यत्वात् । न च तत्तद्रूपव्यक्तिं प्रति तत्तद्रूपविशेषप्रागभावस्य तत्तदसमवायिकारणव्यक्तीनां समवायिकारणव्यक्तीनां चाविशिष्य हेतुत्वकल्पनादेव नोक्तापत्तिसम्भवः, तत्रोत्पन्नस्य प्रागभावविरहेण पिठरपाकोपगमे एककपालपाके भाविचित्ररूपस्य तदसमवायिकारणव्यक्तिविशेषविरहेण प्राक्तनकपालमात्रारब्धघटान्तरीयरूपस्य च प्राक्तने तत्समवायिकारणीभूतव्यक्तिविशेषविरहेण नाऽऽपत्तिसम्भावनेति वाच्यम् । इत्थं सति प्रकृतेऽपि प्रागभावादीनां तत्तद्द्वित्वादौ तत्तद्व्यक्तित्वादिना विशिष्य हेतुत्वं स्वीकृत्यैव द्वित्वधारावारणसम्भवे तादृशरीत्या प्रयासवैफल्यादिति चेन्न । एकरूपोत्पत्त्यनन्तरं रूपत्वावच्छिन्नानुत्पादप्रयोजकत्वं भवता तत्तत्प्रागभावाद्यभावकूटे वक्तव्यमिति महागौरवभिया तत्परिहाराय सामान्यतो रूपत्वावच्छिन्नं प्रति रूपत्वेनाऽपि प्रतिबन्धकत्वं स्वीकर्तव्यम् । द्वित्वादिस्थले च न द्वित्वादेः प्रतिबन्धकत्वसम्भवः, एकपुरुषीयापेक्षाबुद्धिजन्यद्वित्वसत्त्वेऽपि पुरुषान्तरीयापेक्षाबुद्धितो द्वित्वोत्पत्तेरिति तदाशङ्कनस्य युक्तत्वात् । अत एव 'वस्तुतस्तु'—इत्यादिना वक्ष्यमाणे द्वित्वादिकं प्रति द्वित्वादेः प्रतिबध्यप्रतिबन्धकभावे प्रतिबध्यप्रतिबन्धकतावच्छेदककुक्ष्योस्तत्तत्पुरुषीयापेक्षाबुद्धिजन्यत्वप्रवेशोऽपि सार्थक इति ध्येयम् ।

**धारावाहिकेति** । यत्र प्रथममपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, अपेक्षाबुद्ध्यन्तरं च, ततो द्वित्वान्तरोत्पादापत्तेरिति भावः । ननु अपेक्षाबुद्धेर्धारावाहिकत्वे धारावाहिकद्वित्वाद्युत्पत्तिरपीष्यत एव, तत्स्थले द्वित्वप्रत्यक्षधाराया, अपीष्टत्वादित्यतो दूषणान्तरमाह । **भगवदपेक्षेति** । नन्वपेक्षाबुद्धेरुत्पत्तिसम्बन्धेन हेतुत्वे भगवदपेक्षाबुद्धितो धारावाहिकद्वित्वोत्पादापत्तिर्न सम्भवति, तस्या उत्पत्तिसम्बन्धेन क्वाऽप्यवर्तमानतयाऽऽपादकत्वायोगादित्यतः स्वाभिप्रायं स्फोरयितुमाह । **तद्बुद्धेरित्यादि** । अयं भावः, ईश्वरीयापेक्षाबुद्धेर्हि द्वित्वादिहेतुत्वं द्व्यणुकादिपरिमाणान्यथानुपपत्त्याऽऽवश्यकम्, तच्च नोत्पत्तिसम्बन्धावच्छिन्नमिति कल्पयितुं शक्यते, तथा सति तद्बुद्धेः क्वाऽप्यवर्तमानत्वेन हेतुत्वस्यैवाऽनुपपत्तेः, किं तु सम्बन्धान्तरेणैव तद्वाच्यम्, तथा च तेन सम्बन्धेन तद्बुद्धेः सर्वदैव कार्याधिकरणसमवहिततया धारावाहिकद्वित्वोत्पादप्रसङ्गो युज्यत इति । यद्यपीश्वरबुद्ध्यादेर्द्वित्वादेर्जनने सहकारितया क्षणविशेषस्याऽग्रे स्वयमेव स्वीकर्तव्यतया नेयमापत्तिः सम्भवति, तत्सहकारिक्षणविशेषविरहादेव तदापत्तिवारणसम्भवात् । न च उपाधिमात्रस्यैव क्षणद्वयावस्थायित्वावश्यकतया सहकारिविशेषसत्त्वेनाऽविरलजन्यद्वित्वद्वयापत्तिरेवाऽस्तु दोषः, क्षणिकोपाधिमभ्युपगम्य तत एव द्वित्वोत्पादाभ्युपगमे च तन्नाशादेव द्वित्वनाशस्याऽप्यग्रे स्वयमङ्गीकरणीयतया द्वित्वस्य क्षणिकत्वप्रसङ्ग इति वाच्यम् । प्रकृते द्व्यणुकादौ परिमाणोत्पादमात्रनिर्वाहायैव द्वित्वस्येश्वरीयापेक्षाबुद्धिजन्यस्य स्वीकरणीयतया जन्ममात्रेण तन्निर्वाहे तादृशद्वित्वस्य सद्योविनाशित्वाङ्गीकारे क्षत्यभावात्, तथाऽपि तत्तत्क्षणविशेषाभावकूटस्य द्वित्वानुत्पादप्रयोजकत्वाभ्युपगमे तत्तत्प्रागभावाद्यभावकूटस्य तत्प्रयोजकत्वकल्पनसमानयोगक्षेमतया सामान्याभावस्यैकस्य प्रयोजकत्वासम्भवप्रयुक्तं गौरवमेव शङ्काविषयतया दुष्परिहरमिति ध्येयम् ॥ १०७ ॥

**अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः ।**

अनेकेति । यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते, तथाऽपि एको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चित् सम्बन्धोऽनेकाश्रयोऽभ्युपेयते ।

दिनकरी ।

**प्रत्येकं घटादाविति ।** तथा च 'अनेकाश्रयपर्याप्ताः—'इति मूलमसङ्गतमिति भावः । नन्वेकत्वस्य न्यूनवृत्तितया द्वित्वाधारतानवच्छेदकत्वान्न तथा प्रत्यय इत्यत आह । **एको न द्वावितीति ।** एकत्वावच्छेदेन द्वित्ववद्भेदाभावादेकत्वादेर्न्यूनवृत्तितया द्वित्ववद्भेदानवच्छेदकत्वादिति भावः । **अनेकाश्रय इति ।** उभयाद्याश्रय इत्यर्थः । तथा च तादृशप्रतीतेर्न द्वित्ववद्भेदाधारतावच्छेदकत्वमेकत्वे विषयः, किं तु पर्याप्तिसम्बन्धेन द्वित्वं तद्भेदो वा एकत्वावच्छिन्ने प्रकारः, इत्थं च पर्याप्तिसम्बन्धेन द्वित्वस्य प्रत्येकमभावादेको द्वावित्यप्रत्ययस्यैको न द्वाविति प्रत्ययस्य चोपपत्तिरिति भावः ।

अत्र वहवः, उभयादेः प्रत्येकानतिरिक्ततया प्रत्येकमपि पर्याप्तिसम्बन्धेन द्वित्वमस्त्येवेति पर्याप्त्यङ्गीकारेऽप्येको द्वावित्यप्रत्ययस्यैको न द्वाविति प्रत्ययस्य च कथमुपपत्तिः ? यदि चैको न द्वावितिप्रतीतिवलात् द्वित्ववद्भेदावच्छेदकत्वं स्वरूपसम्बन्धविशेषरूपमेकत्वे स्वीक्रियते, न तु द्वित्वावच्छेदकत्वम्, एको द्वावित्यप्रत्ययादिति विभाव्यते, तदा समवायपक्षेऽपि तुल्यमिति पर्याप्त्यङ्गीकारो निरर्थक इति चेत्, अत्राऽऽहुः, आकाशाविति वाक्यस्य प्रामाण्यापत्त्या पर्याप्त्यङ्गीकार आवश्यकः । न च समवायेनेव पर्याप्तिसम्बन्धेनापि द्वित्वस्याऽऽकाशे सत्वात् पर्याप्त्यङ्गीकारेऽपि तद्वाक्यप्रामाण्यं दुर्वारमिति वाच्यम् । उद्देश्यतावच्छेद-

रामरुद्री ।

**द्वित्वमिति ।** इदं चैको द्वाविति प्रतीत्यभिप्रायेणोक्तम् । एको न द्वाविति प्रतीतौ त्वाह—**तद्भेदो वेति ।** पर्याप्तिसम्बन्धेन यो द्वित्ववांस्तद्भेद इत्यर्थः । **प्रत्येकमभावादिति ।** तादृशसम्बन्धेन द्वित्ववद्भेदस्य प्रत्येकं सत्त्वाच्चेति शेषः । **उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरिति ।** द्वित्वादिशाब्दबोधे पर्याप्तिनिष्ठायाः संसर्गताया उद्देश्यतावच्छेदकव्याप्तिविषयतानिरूपितत्वोपगमादित्यर्थः । तेन भ्रमात्मके आकाशाविति वाक्यजन्यबोधे आकाशत्वव्याप्यत्वविशिष्टपर्याप्तेरलीकतया संसर्गमुद्रया भानासम्भवेऽपि न क्षतिः, संसर्गप्रकारसाधारणविशेषणविशेष्यभावस्यैव भ्रमत्वघटकतया विवक्षितत्वात् । अथ कीदृशं संसर्गप्रकारसाधारणं भ्रमत्वं परिष्क्रियते ? न तावत् विशेषणताविशिष्टविशेष्यताकत्वमेव तत् । वैशिष्ट्यं च स्वनिरूपितत्व—स्वविशिष्टनिरूपकताकाधिकरणत्वाभाववद्वृत्तित्वोभयसम्बन्धेन । स्ववैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व—स्वानवच्छेदकानवच्छिन्नत्वोभयसम्बन्धेनेति केश्चिदुक्तं युक्तम्, संसर्गतावच्छेदककोटौ संसर्गाभानेनोक्तभ्रमत्वस्य संसर्गांशे भ्रमात्मकज्ञानाव्यापकत्वात्, द्रव्यत्वेन पर्वतजलोभयावगाहि—द्रव्यं वह्निमदित्यादिज्ञानेऽतिप्रसङ्गाच्च, तादृशज्ञानस्य भ्रमत्वे वह्नित्वेन पर्वतीयवह्निमहानसीयवह्न्युभयप्रकारकपर्वतीयवह्निमानिति ज्ञानस्याऽपि भ्रमत्वं दुर्वारम्, तत्रेष्टापत्तिस्तु न सम्भवति, त्वदुक्तभ्रमलक्षणस्य तत्रैवाऽव्याप्त्यापत्तेरिति । नाऽपि विशेष्यताविशिष्टविशेष्यताकत्वरूपं तत् । वैशिष्ट्यं च स्वतादात्म्य—स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यविशेषणतानिरूपकत्वोभयसम्बन्धेन । निरूपकतावत्त्वं च स्वानवच्छेदकसम्बन्धानवच्छिन्नत्व—स्वानवच्छेदकानवच्छिन्नत्व—स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नत्ववृत्तित्व—स्वसामानाधिकरण्यैतच्चतुष्टयसम्बन्धेनेति* युक्तम्,

---

* शुक्ताविदं रजतमितिज्ञानीयरजतत्वनिष्ठप्रकारतायाः स्वाश्रयशुक्तिनिष्ठाधिकरणतानि-

दिनकरी।

कव्याप्यत्वविशिष्टपर्याप्तेरेव द्वित्वसम्बन्धत्वोपगमात्, आकाशत्वव्याप्यद्वित्वपर्याप्तेरप्रसिद्ध-

रामरुद्री।

संसर्गांशे भ्रममात्रस्यैवाऽसङ्ग्रहापत्तेः, सांसर्गिकविषयतायाः किञ्चित्सम्बन्धानवच्छिन्नत्वेन तादृशस्थलीयविशेषणताया अपि स्वाश्रयनिष्ठाधिकरणतानिरूपितकालिकादिसम्बन्धावच्छिन्ननिरूपकतावदन्यत्वासम्भवादिति चेन्न, संसर्गांशे भ्रमत्वाङ्गीकर्तॄणां मते विशेष्यविशेष्यभावो न भ्रमत्वलक्षणघटकतया निवेश्यते, अपि तु तत्प्रयुक्तं भ्रमत्वं तैरङ्गीक्रियत इत्येव तन्मतानुसारिणां सिद्धान्तः। तथा च तन्मतेऽपि विशेष्यताविशिष्टविशेष्यताकत्वमेव भ्रमत्वम्। वैशिष्ट्यं तु स्वतादात्म्य---स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यप्रकारताकत्वोभयसम्बन्धेन। प्रकारतायां निरूपकतावदन्यत्वं स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्रूपावृत्तित्व-स्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धावच्छिन्नस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन। तादृशरूपावृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथा चाऽऽकाशौ द्वावित्यादिवाक्यजन्यभ्रमस्थले तादृशद्वित्वादिप्रकारतामादायैव भ्रमत्वमुपपादनीयम्। तत्स्थले स्वाश्रयनिष्ठाधिकरणतानिरूपितायाः कस्या अपि निरूपकताया आकाशत्वव्याप्यपर्याप्तिरूपसम्बन्धघटकसकलपदार्थवृत्तिविलक्षणसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वाभावेन तत्र प्रकारतायास्तादृशरूपावृत्तित्वोपपत्तेः। एकसंसर्गतावच्छेदकप्रकारेण तादृशसंसर्गतावच्छेदकाश्रयतदनाश्रयोभयनिष्ठैकसंसर्गताकबुद्धिस्थले तादृशसंसर्गतानिरूपितप्रकारताया विशेष्यताश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वविरहेऽपि न क्षतिः, द्रव्यत्वेन पर्वतजलोभयावगाहि-द्रव्यं वह्निमदित्यादिज्ञानस्यैव तादृशज्ञानस्याऽपि यथार्थताया इष्टत्वात्।

वस्तुतस्तु संसर्गकोटौ संसर्गस्य संसर्गान्तराभानेऽपि संसर्गतावच्छेदके तद्भाने बाधकाभाव इति यथाश्रुतेऽपि भ्रमत्वमुपपद्यत एव। न चैवं संसर्गतावच्छेदककोटौ संसर्गभानाभ्युपगमे तद्विषयतायाः संसर्गावच्छिन्नत्वेन प्रकारतात्वापत्तिरिति वाच्यम्। अवच्छेदकत्वनिष्ठसंसर्गतानिरूपितत्वशून्यसंसर्गावच्छिन्नविषयताया एव प्रकारतात्वेन तस्याः प्रकारतात्वासम्भवात्। इत्थं च संसर्गप्रकारसाधारणभ्रमत्वनिर्वचने विषयत्वांशे तादृशसंसर्गत्वानिरूपितत्वात्मकप्रकारतात्वप्रयोजकरूपप्रवेशाल्लाघवमपि स्फुटम्। संसर्गतावच्छेदकस्य संसर्गभानं च प्रामाणिकमेव, संसर्गतावच्छेदकघटकतया वैशिष्ट्यादिनिवेशस्य सर्वसम्मतत्वात्। इत्थं सति सर्वत्र संसर्गतावच्छेदकांशे संसर्गान्तरभानाभ्युपगमप्रयुक्तानवस्थायाश्चरमसंसर्गतावच्छेदकतावच्छेदकसंसर्गनिष्ठसंसर्गताया निरवच्छिन्नत्वोपगमेन वारणात्। ज्ञानानां संसर्गांशे भ्रमत्वस्वीकारोऽप्यावश्यक एव, प्रमेयं नाऽस्तीत्यादिवाक्यजन्यशाब्दबोधस्य प्रतियोगितासम्बन्धेनाऽभावांशे प्रमेयाद्यवगाहित्वे भ्रमत्वानुपपत्तेः प्रमेयत्वावच्छिन्नप्रतियोगित्वस्य चाऽखण्डस्याऽलीकतया संसर्गत्वानुपपत्तेः प्रमेयत्वावच्छिन्नत्वप्रतियोगित्वानां त्रयाणामेव परस्परं विशेषणविशेष्यभावापन्नानां संसर्गतामुपगम्य तादृशबोधस्य भ्रमरूपताया व्याप्तिपञ्चकजागदीश्यादिषु स्फुटतया प्रतिपादितत्वादित्यलमप्रकृतचिन्तया। आकाशत्वव्याप्यद्वित्वपर्याप्तेरप्रसिद्धत्वादिति। अथैवमाकाशो न द्वावित्यादिवाक्यज्ञानवत् आकाशावित्यादिवाक्यश्रवणे शाब्दबोधापत्तिः, तत्र आकाशत्वव्याप्यपर्याप्तिसम्बन्धेन द्वित्वादिमद्भेदस्य तादृशसम्बन्धेन द्वित्वविशिष्टाप्रसिद्ध्या केवलपर्याप्तिसम्बन्धेन च तद्वद्भे

---

रूपितकालिकसम्बन्धावच्छिन्नरजतत्वनिष्ठनिरूपकतावत्त्वेन भ्रमत्वानुपपत्तिरतः स्वानवच्छेदकसम्बन्धानवच्छिन्नत्वनिवेशः। गुणो विशिष्टसत्तावानिति ज्ञानस्य तादृशगुणनिष्ठाधिकरणतानिरूपितसत्तात्वावच्छिन्ननिरूपकताविशिष्टत्वाद् द्वितीयसम्बन्धनिवेशः। महानसीयवह्निविषयकं ज्ञानं विषयितासम्बन्धेन वह्निमदितिज्ञानसंग्रहाय तृतीयसम्बन्धनिवेशः। शुक्ताविदं रजतमितिज्ञानीयरजतत्वनिष्ठनिरवच्छिन्नविशेषणतायास्तादृशशुक्तित्वनिष्ठनिरवच्छिन्ननिरूपकताविशिष्टत्वात्तत्सङ्ग्रहाय चतुर्थसम्बन्धनिवेश इति बोध्यम्।

अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥

प्रथममपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकं, ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च, ततो द्वित्वनाश इति।

यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वम्, योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वात्, तथाऽप्यपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते । अन्यथा निर्विकल्पककालेऽपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव नाशः स्यात्, न तु द्वित्वप्रत्यक्षं, तदानीं विषयाभावात्, विद्यमानस्यैव चक्षुरादिना ज्ञानजननो-

दिनकरी ।

त्वात्, द्वित्वपर्याप्तेर्द्वित्वस्वरूपतया तस्य घटादावपि सत्वात् । न चोद्देश्यतावच्छेदकव्याप्यत्वविशिष्टसमवायस्य द्वित्वसंसर्गतां स्वीकृत्याऽऽकाशावितिप्रयोगवारणसम्भवादलं पर्याप्त्येति वाच्यम् । तथा सति घटाविति प्रयोगस्य प्रामाण्यानुपपत्तेः, समवायस्यैकत्वेन घटत्वव्याप्यसमवायस्याऽप्रसिद्धेरित्यन्यत्र विस्तरः ।

अपेक्षाबुद्धिनाशाच्च तेषां नाश इति मूलस्य तृतीयक्षणे अपेक्षाबुद्धिनाशाच्चतुर्थक्षणे द्वित्वादीनां नाश इति नाऽर्थः, परं तु चतुर्थक्षणेऽपेक्षाबुद्धिनाशात् पञ्चमक्षणे इत्यर्थ इति ज्ञापनाय वैशेषिकप्रक्रियां प्रदर्शयति—**प्रथममित्यादिना** । द्वित्वत्वविशिष्टप्रत्यक्षं—द्वित्वत्वविशिष्टलौकिकप्रत्यक्षम् ।

**अन्यथा**—अपेक्षाबुद्धेर्द्विक्षणमात्रावस्थायित्वे । **द्वित्वस्यैव नाश इति**। द्वित्वस्य नाश एवेत्यर्थः । ननु तदानीं द्वित्वाभावेऽपि तत्पूर्वक्षणे द्वित्वसत्वान्न द्वित्वप्रत्यक्षानुपपत्तिरत आह । **विद्यमानस्यैवेति** । 'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना—' इत्यनुरोधाल्लौ-

रामरुद्री ।

दत्याऽऽकाशे द्वित्वसत्त्वेन प्रत्याययितुमशक्यत्वादिति चेन्न । केवलपर्याप्तिसम्बन्धेनाऽऽकाशे द्वित्वस्य सत्त्वेऽपि आकाशत्वावच्छेदेनाऽवर्तमानतया तदवच्छेदेन तद्वद्भेदबोधने बाधकाभावात् । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्योद्देश्यतावच्छेदकावच्छेदेनैव नञो बोधकतया घटौ न द्वावित्यादिप्रयोगवारणाय स्वीकरणीयत्वादिति । **द्वित्वस्वरूपतयेति** । एतच्च प्रत्येकमधिकरणे पर्याप्तिभेदसत्त्वमाश्रित्योक्तम् । **घटत्वव्याप्यसमवायस्याऽप्रसिद्धेरिति** । न चोद्देश्यतावच्छेदकव्याप्यद्वित्वादिसमवायादिना द्वित्वादेरेव प्रकारत्वमस्तु, तथा च समवायस्य समवायत्वेनोद्देश्यतावच्छेदकाव्याप्यत्वेऽपि तादृशसमवायत्वेन व्याप्यत्वमुपपद्यत इति वाच्यम् । तथा सत्युद्देश्यतावच्छेदकव्याप्यद्वित्वादेरेव लाघवेन तत्सम्बन्धतौचित्यात् । न चेष्टापत्तिः, एवमपि पर्याप्तेः संसर्गताविलयसम्भवादिति वाच्यम् । तादृशद्वित्वादेरेव द्वित्वादिपर्याप्त्यात्मकत्वस्य पूर्वमेवोक्ततया तन्निरासासम्भवात् । न चैवमपसिद्धान्तः, 'पर्याप्तिश्चाऽयमेको घट इमौ द्वावितिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः—'इत्यवच्छेदकत्वनिरुक्तिदीधितौ तस्या द्वित्वादिस्वरूपत्वकथनादिति । नन्वेवं धवखदिरौ छिन्धीत्यादौ उद्देश्यतावच्छेदकव्याप्यपर्याप्तिसम्बन्धेन तादृशधवखदिरवृत्तिद्वित्वस्याऽन्वयासम्भवात्तादृशवाक्याच्छाब्दबोधानुपपत्तिः, तादृशस्थले धवखदिरवृत्तिसाहित्यस्योद्देश्यतावच्छेदकत्वाभ्युपगमे च द्वन्द्वे लक्षणावश्यकतया मीमांसकमतप्रवेशप्रसङ्ग इत्यत आह । **अन्यत्र विस्तर इति** । तथा च तादृशस्थले विभक्त्यर्थद्वित्वप्रकारेणैव धवखदिरबोधस्य पूर्वं स्वीकृततया तत्रोक्तदूषणानवकाश इति भावः । अधिकमेतत्तत्त्वं व्युत्पत्तिवादे द्रष्टव्यमित्यास्तां विस्तरः ।

दिनकरी

किकप्रत्यक्षं प्रति द्वित्वादेर्विषयस्य कार्यसहभावेन हेतुत्वादिति भावः। ननु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवर्तिविशेषगुणत्वेन हेतुतयाऽपेक्षाबुद्ध्युत्तरक्षणोत्पन्नस्मृत्या संस्कारेण वाऽपेक्षाबुद्धिनाशः केन वारणीय इत्याशङ्कामुपसंहारव्याजेन परिहरति। **तस्मादिति।**

रामरुद्री।

**कार्यसहभावेन हेतुत्वादिति।** लौकिकविषयतासम्बन्धेनैव प्रत्यक्षं प्रति इन्द्रियसन्निकर्षस्य हेतुतया कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपकारणत्वनिर्वाहाय विषयस्य कार्यकालावस्थायितया आवश्यकत्वात्। अन्यथा तादृशकार्यतावच्छेदकसम्बन्धेन कार्याधिकरणाप्रसिद्ध्या तद्घटितकार्यकारणभावस्यैवोच्छेदापत्तेरिति भावः। अथाऽत्र तादृशसम्बन्धेन [कार्यासमानकालीनप्रत्यक्षव्यक्तिविशेषाधिकरणाप्रसिद्धावपि कार्यतावच्छेदकावच्छिन्नतादृशप्रत्यक्षव्यक्त्यन्तराधिकरणप्रसिद्ध्या न कार्यकारणभावासम्भव इत्यलं विषयस्य कार्यसमानकालीनत्वनियमाङ्गीकारेण। न चैवं समवायिकारणस्यापि कार्यकालीनतया कारणत्वमुच्छिन्नं भविष्यति, तत्राऽपि तुल्ययुक्त्या प्रकृतकार्याधिकरणाप्रसिद्धावपि तादृशकार्यतावच्छेदकावच्छिन्नव्यक्त्यन्तराधिकरणस्य प्रसिद्धतया कार्यकारणभावस्योपपादयितुं शक्यत्वादिति वाच्यम्। तत्र समवायिकारणनाशस्य प्रतियोगितासम्बन्धेन कार्यनाशं प्रति स्वप्रतियोगिसमवेतत्व-कालिकोभयसम्बन्धेन नाशत्वेन हेतुत्वस्योपपादनाय तथात्वस्वीकारावश्यकत्वात्, प्रकृते च विषयनाशस्य प्रत्यक्षनाशकत्वविरहेण तथात्वाङ्गीकारे मानाभावादिति चेन्न। असमानकालीनवस्तुनि लौकिकप्रत्यक्षविषयताया असम्भवेन निरधिकरणकार्योत्पत्तिप्रसङ्गवारणायैव विषयस्य कार्यकालीनतया प्रत्यक्षहेतुत्वावश्यकत्वात्, तदभिप्रायेणैव 'सम्बद्धं वर्तमानं च—' इत्याद्यभियुक्तोक्तेः सङ्गमनीयत्वादिति।

**उत्तरक्षणोत्पन्नस्मृत्येति।** यादृशस्थलविशेषे नियतोद्बोधकसम्बन्धिग्रहात्मिकैवाऽपेक्षाबुद्धिस्तत्र तदुत्तरोत्पन्नयाऽपरसम्बन्धिस्मृत्येत्यर्थः। तेन सर्वत्र अपेक्षाबुद्ध्युत्तरं नियमेन स्मृत्युत्पादे मानाभावेऽपि न क्षतिः। ननु न कल्प्यत एव तादृशस्थलेऽपेक्षाबुद्धेः क्षणत्रयावस्थायित्वं, तृतीयक्षणे तन्नाशाच्चतुर्थक्षणे द्वित्वादिविनाशोऽपि आश्रयनाशमात्राधीनद्वित्वनाशवदगत्या कश्चिदिष्यत एवेति न दोष इत्यत आह। **संस्कारेण वेति।** अपेक्षाबुद्धेः प्रायश उपेक्षात्मकत्वे मानाभावेन सर्वत्रैव तादृशस्थले संस्कारोत्पादावश्यकत्वादिति भावः। इदमुपलक्षणम्। अपेक्षाबुद्ध्यनुव्यवसायेनाऽपि तन्नाशसम्भवादिति। अत्रेदमवधेयम्। अपेक्षाबुद्धेर्निर्विकल्पकात्मिकायाः स्वीकारे ततः संस्कारस्याऽनुव्यवसायस्य चाऽसम्भवान्न द्वितीयक्षणे तन्नाशः समर्थयितुं शक्यते। तद्विशेष्यकतत्प्रकारकसंस्कारं प्रति तद्विशेष्यकतत्प्रकारकानुभवस्यैव हेतुतया निर्विकल्पकस्य प्रकारतादिरहितत्वेन ततः संस्कारस्योत्पादासम्भवात्। न च यादृशस्थलविशेषे घटांशे विशेषणज्ञानादिसम्पत्त्या सविकल्पात्मिका तत्तदेकत्वांशे च निर्विकल्पकात्मिकैवाऽपेक्षाधीस्तत्र संस्कारानुव्यवसायादेरुत्पादावश्यकतया तादृशस्थले तस्याक्षिक्षणावस्थायित्वानुपपत्तिर्दुर्वारेति वाच्यम्। इष्टापत्तेः, तादृशयत्किञ्चित्स्थलविशेषे तथा स्वीकारे बाधकाभावात्। न च निर्विकल्पकात्मकापेक्षाबुद्धीनां द्वित्वादिहेतुत्वेऽपसिद्धान्तः, अपेक्षाबुद्धेरेकत्वादिप्रकारकद्रव्यविशेष्यकज्ञानत्वेनैव हेतुत्वादिति वाच्यम्। 'ननु वध्यघातकपक्षेऽपि तथा ज्ञानानुत्पत्तिप्रसङ्गः। कथम्? द्वित्वसामान्यबुद्धिसमकालं संस्कारादपेक्षाबुद्धिनाशादिति। न। समूहज्ञानस्य संस्कारहेतुत्वात्, समूहज्ञानमेव संस्कारकारणम्, नाऽऽलोचनज्ञानमित्यदोषः—'इत्यादिभाष्ये एव निर्विकल्पकात्मकापेक्षाबुद्धेर्हेतुत्वोक्त्या नानैकत्वविषयकज्ञानत्वेन निर्विकल्पकसाधारणेनैव रूपेणाऽपेक्षाबुद्धेर्द्वित्वादिहेतुत्वाङ्गीकारावश्यकत्वात्। यत्तु तत्तदेकत्वविशिष्टद्रव्यज्ञानात्मिकाया एवाऽपेक्षाबुद्धेः संस्कारहेतुत्वादुक्तस्थले च तत्तदेकत्वविशेष्यकज्ञानमात्रादेव द्वित्वोत्पादाभ्युपगमान्न तत्क्षणे संस्कारादपेक्षाबुद्धिनाशसम्भव इत्युक्तभाष्याभिप्राय इति कैश्चिदुक्तम्, तत्तुच्छम्, आलोचनज्ञानत्वस्य निर्विकल्पकत्वरूपतया अविप्रतिपन्नतयोक्तार्थकल्पनानुपपत्तेः, निरुक्तरीत्या सर्वत्रैकत्वविशेष्यकस्मरणानभ्युपगमे बुद्धादिभ्यो

रामरुद्री ।

जायमानस्य तत्तदेकत्वस्मरणस्योच्छेदापत्तेरिति । न च निर्विकल्पात्मकापेक्षाधीतोऽपि द्वित्वोत्पत्तिः सर्वत्र न समर्थयितुं शक्यते, निर्विकल्पकस्यैकत्वसविकल्पकहेतुतया सर्वत्र सविकल्पकोत्पादावश्यकत्वे तत एव तद्विनाशस्य तत्तृतीयक्षणे आवश्यकत्वादिति वाच्यम् । एवमपि प्रथमं निर्विकल्पकात्मिकाऽपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, एकत्वसविकल्पात्मकापेक्षाबुद्ध्यन्तरं च, ततो निर्विकल्पकात्मकापेक्षाबुद्धिविनाशः, द्वित्वत्वसामान्यज्ञानम्, द्वित्वान्तरोत्पत्तिश्च, ततः प्रथमद्वित्वविनाशः, द्वितीयद्वित्वसविकल्पकं च, ततो द्वितीयद्वित्वजनकापेक्षाबुद्धिनाशः, द्वे द्रव्ये इति ज्ञानं च, ततो द्वितीयद्वित्वविनाश इत्यभ्युपगमादेवाऽपेक्षाबुद्धेः क्षणत्रयानवस्थायित्वेऽपि क्षत्यभावात् । प्रत्यक्षात्मिकाया एव चाऽपेक्षाबुद्धेः सर्वत्र द्वित्वादिजनकत्वोपगमेन सर्वत्रैकत्वनिर्विकल्पकस्याऽवश्यकल्पनीयत्वात्, स्मृत्यात्मकापेक्षाबुद्धेरपि द्वित्वादिजनकत्वस्वीकारेऽपि तदुत्तरमेकत्वविशिष्टवैशिष्ट्यावगाहितदनुव्यवसायात्मकापेक्षाबुद्ध्यन्तरात् द्वित्वान्तरोत्पादसम्भवाच्च । न च प्रथमद्वित्वस्य कस्यचित्प्रत्यक्षाविषयस्योत्पादस्वीकारोऽयुक्त इति वाच्यम् । परमाणुद्वित्वादिवदीश्वरादिप्रत्यक्षविषयतायास्तत्र सत्त्वेनोक्तदोषायोगात्, द्वित्वत्वसामान्यज्ञानात्मकनिर्विकल्पकविषयताया अपि तत्र सत्त्वाच्च, आश्रयनाशजन्यनाशस्थले व्यभिचारेण तदीयापेक्षाबुद्धिजन्यं द्वित्वं तेन गृह्यत एवेति नियमे मानाभावाच्च । न चैवमपि निरुक्तप्रक्रिययाऽपेक्षाबुद्धेः क्षणत्रयानवस्थायित्वेऽपि द्वित्वप्रत्यक्षोपपादनं न सम्भवति, तत्स्थले प्रथमापेक्षाबुद्धिनाशात् प्रथमद्वित्वस्येव द्वितीयद्वित्वस्याऽपि नाशावश्यकत्वादिति वाच्यम् । अतीतापेक्षाबुद्धिनाशाद्वर्तमानापेक्षाबुद्धिजन्यद्वित्वनाशापत्तिव्युदासाय तत्तदपेक्षाबुद्धेर्नाशकतायास्तत्तदपेक्षाबुद्धिजन्यद्वित्वनिरूपितत्वस्वीकारावश्यकत्वेन विशिष्यैव विश्रामात्, अत एवैकस्या एवाऽपेक्षाबुद्धिव्यक्तेर्द्वित्वद्वयं तत्र न स्वीकृतम्, अन्यथा प्रथमापेक्षाबुद्धिनाशादेव द्वितीयद्वित्वविनाशापत्तेः । न च तथाऽप्युक्तनिर्विकल्पकात्मकापेक्षाबुद्धिस्थले सविकल्पकात्मकापेक्षाबुद्धिजन्यद्वितीयद्वित्वस्याऽपि विनाश आस्ताम्, नैतावता द्वित्वप्रत्यक्षमनुपपन्नं, प्रथममपेक्षाबुद्धेस्ततो द्वित्वस्य सविकल्पकस्य च ततोऽपेक्षाबुद्धिनाशद्वित्वनिर्विकल्पकद्वित्वान्तरायामुत्तरक्षणे तादृशसविकल्पकवशाद् द्वित्वान्तरद्वित्वप्रत्यक्षप्रथमद्वित्वद्वयनाशयोरनन्तरमेव तृतीयद्वित्वनाशस्वीकारात् । द्वित्वप्रत्यक्षस्य च तृतीयद्वित्वविषयकत्वस्वीकारात्, नाशं प्रति प्रतियोगिनः कारणत्वेन द्वितीयद्वित्वद्वितीयक्षणे तन्नाशासम्भवात्, द्वे द्रव्ये इति प्रत्यक्षस्य च द्वित्वविनाशकालभाविन उपनीतभानात्मकत्वमपेक्षाबुद्धेस्त्रिक्षणावस्थायित्ववादिभिरप्यभ्युपगम्यत एवेति तदभ्युपगमे नाऽस्माकमपसिद्धान्तदोषप्रसङ्गोऽपि । अन्यथा तन्मते चतुर्थक्षणेऽपेक्षाबुद्धिनाशात् पञ्चमक्षणे निरुक्तप्रत्यक्षोत्पादकाले तन्नाशावश्यकतया तस्य लौकिकविषयताश्रयत्वायोगादिति वाच्यम् । तृतीयद्वित्वस्य तत्प्रत्यक्षात्पूर्वमभावेन प्रत्यक्षविषयत्वायोगात्, तैर्द्वित्वनिर्विकल्पकस्याऽवश्यापेक्षिततया ततोऽपेक्षाबुद्धिविनाशस्याऽनायत्याऽङ्गीकरणीयत्वेन गत्यन्तराभावात्तादृशप्रत्यक्षस्य द्वित्वांशेऽलौकिकत्वस्वीकारावश्यकत्वेऽपि निरुक्तरीत्योपपत्तौ लौकिकत्वस्वीकारे क्षत्यभावाच्च । अथ वा मतद्वयेऽपि द्वित्वगुणज्ञानकाले द्वे द्रव्ये इति ज्ञानस्याऽसम्भवात् पञ्चमक्षणे तत्स्वीकृतं लौकिकमेव । तस्य द्वित्वत्वविशिष्टवैशिष्ट्यावगाहितया द्वित्वत्वप्रकारकज्ञानस्य तद्धेतुभूतस्य पूर्वं विरहेणाऽसम्भवात् । न चैवं 'यदा बोद्धुश्चक्षुषा समानासमानजातीययोर्द्रव्ययोः सन्निकर्षे सति तत्संयुक्तसमवेतसमवेतैकत्वसामान्यज्ञानोत्पत्तावेकत्वसामान्यतत्सम्बन्धज्ञानेभ्य एकगुणयोरनेकविषयिण्येका बुद्धिरुत्पद्यते, तदा तामपेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते, ततः पुनस्तस्मिन् द्वित्वसामान्यज्ञानमुत्पद्यते, तस्माद् द्वित्वसामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता, द्वित्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः, तत इदानीमपेक्षाबुद्धिविनाशाद् द्वित्वगुणस्य विनश्यत्ता, द्वित्वगुणज्ञानं द्वित्वसामान्यज्ञानस्य विनाशकारणम्, द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्यो द्वे द्रव्ये इति द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः, तदनन्तरं द्वे द्रव्ये इति द्रव्यज्ञानस्योत्पादः, द्वित्वस्य विनाशः, द्वित्वगुणबुद्धेर्विनश्यत्ता, द्रव्यज्ञानात् संस्कारस्योत्पद्यमानतेत्येकः कालः, तदनन्तरं द्रव्यज्ञानात् द्वित्वगुणबुद्धेर्विनाशो द्रव्यबुद्धेरपि संस्कारात्—'इतिभाष्यग्रन्थविरोधः, तत्र द्वित्वनाशकाल एव तद्विशिष्टद्रव्यज्ञानोत्पादोपगमेन द्वित्वांशेऽ-

रामरुद्री ।

लौकिकत्वस्यैव तज्ज्ञानेऽवश्यमङ्गीकार्यत्वादिति वाच्यम् । त्वदुक्तरीत्योक्तभाष्यस्य द्रव्यज्ञाने द्वित्वांशेऽलौकिकत्वमभिप्रेतमित्यभ्युपगमे 'शोभनमेतद्विधानं वध्यघातकपक्षे, सहानवस्थानलक्षणे तु विरोधे द्रव्यज्ञानस्याऽनुत्पत्तिप्रसङ्गः । कथम् ? गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशाद्द्वित्वविनाशे तदपेक्षस्य द्वे द्रव्ये इति द्रव्यज्ञानस्याऽनुत्पत्तिप्रसङ्ग इति । लैङ्गिकवज्ज्ञानमात्रादिति चेत्,–स्यान्मतम्, यथाऽभूतं भूतस्येत्यत्र लिङ्गाभावेऽपि ज्ञानमात्रादनुमानं, तथा गुणविनाशेऽपि गुणबुद्धिमात्राद्द्रव्यप्रत्ययः स्यादिति । न । विशेष्यज्ञानत्वात्, न हि विशेष्यज्ञानं सारूप्याद्विशेषणसम्बन्धमन्तरेण भवितुमर्हति । तथा चाऽऽह सूत्रकारः–'समवायिनः श्वैत्याच्छ्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते–'इति । न तु लैङ्गिकं ज्ञानमभेदेनोत्पद्यते, तस्माद्विषमोऽयमुपन्यासः । न । आशूत्पत्तेः, यथा शब्दवदाकाशमित्यत्र त्रीणि ज्ञानान्याशूत्पद्यन्ते, तथा द्वित्वादिज्ञानोत्पत्तावित्यदोषः–' इत्याद्यग्रिमभाष्यग्रन्थविरोधापत्तेः, तत्र लैङ्गिकवज्ज्ञानमात्राधीनत्वस्य द्रव्यप्रत्यये निराकृतत्वात् । अतो 'विशेष्यज्ञानत्वात्' इत्यनेन द्वे द्रव्ये इति ज्ञानस्य द्रव्यविशिष्टद्वित्वलौकिकसाक्षात्कारत्वस्य प्रतिपादनाद् उपनीतस्य विशेषणतया भानस्यैव सर्वसम्मतत्वेन द्वित्वविशेष्यकं द्रव्यप्रकारकं प्रत्यक्षं न स्यादित्येव तदर्थो बोध्यः । अविद्यमानेऽपि लौकिकविषयत्वं भाष्यकृद्भिरभ्युपेयत एवेति(१) न पूर्वापरसन्दर्भविरोधप्रसङ्गोऽपि । न चैवं द्रव्ययोर्द्वित्वमित्याकारकमेव ज्ञानमुदाहर्तव्यम्, न तु द्वे द्रव्ये इत्याकारकमिति वाच्यम् । द्वे द्रव्ये इत्याकारस्य तुल्यवित्तितया चतुर्थक्षणे तदसम्भवद्योतनैकपरतयोपपत्तेः, अन्यथा द्वित्वं द्रव्ययोरिति ज्ञानस्याऽपेक्षाबुद्ध्यात्मकविशेषणतावच्छेदकप्रकारकज्ञानस्य द्वित्वत्वज्ञानस्य च पूर्वं सत्त्वेन चतुर्थक्षण एव तत्किमिति नाऽङ्गीक्रियत इति शङ्काया अनिवृत्तिप्रसङ्गात् । 'सम्बद्धं वर्तमानं च–'इत्यादिप्रवादस्तु प्राक्क्षणे वर्तमानतापरः । अत एवाऽऽशुविनाशिसुखादिप्रकारकलौकिकप्रत्यक्षस्य सुखाद्युत्पादतृतीयक्षणे निर्वाहः, विशेषणज्ञानस्य हेतुतयोत्पत्तिक्षणे तांदरहेण द्वितीयक्षणे तद्विशिष्टबुद्ध्यसम्भवात् ।

यद्वेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिरित्यभ्युपगमे द्वित्वसामान्यलक्षणया तद्द्वित्वाश्रयसकलविषयकमेकं सामान्यलक्षणाजन्यज्ञानं पञ्चमक्षण एवोपगन्तव्यम् , तस्य च विशेष्यज्ञानत्वात् ज्ञानलक्षणाजन्यत्वं न सम्भवति, द्वित्वस्य चतुर्थक्षणे नाशाभ्युपगमे च प्रत्यासत्तिविरहेण तस्य पञ्चमक्षणेऽसम्भवप्रसङ्ग इत्येवं भाष्यकृतां निगर्वोऽवसेयः ।

वस्तुतस्तु भाष्यकृन्मते विशेषणत्वं विशेष्यत्वं वा न विषयतारूपं, किं तु भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वरूपमेव तत् । इत्थं च तन्मतेऽविषयस्याऽपि विशेषणत्वमिष्यत एव । अत एव सञ्ज्ञाविशिष्टसञ्ज्ञ्यादिप्रत्यक्षे सञ्ज्ञाया अविषयत्वेऽपि तटस्थज्ञानविषयतयैव विशेषणत्वमिति जरन्नैयायिकानां प्राभाकराणां च मतमपि सङ्गच्छते । तदुक्तम्—

'सञ्ज्ञा हि स्मर्यमाणाऽपि प्रत्यक्षत्वं न बाधते । सञ्ज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा—'

इति । स्पष्टं चैतदुरसन्नप्रच्छन्नवादमाथुर्यादिषु । विशिष्टबुद्धौ च सम्बन्धसम्बन्धस्याऽपि प्रतियोगित्वानुयोगित्वादेर्भानमिष्यत एव । इत्थं च सम्बन्धसम्बन्धावगाहिज्ञानस्य विशिष्टबुद्धित्वे तथाविधसमूहालम्बनस्याऽपि तथात्वापत्तिवारणाय विशेषणज्ञानस्य तज्ज्ञाने कारणत्वं स्वीक्रियते । विशेषणविरहदशायां तद्विशिष्टत्वावगाहिबुद्धेस्तन्मतेऽसम्भवेन तदर्थं विशिष्टबुद्धौ विशेषणस्य विशेषणसम्बन्धस्य च द्वयोरपि हेतुत्वं स्वीक्रियते । यद्यपि इन्द्रियसन्निकर्षस्य प्रत्यक्षहेतुतयाऽविद्यमानस्य तदभावादेव न विशिष्टबुद्धिस-

---

(१) नन्वेवं घटादेर्यदाकदाचिदपि लौकिकविषयत्वापत्तिरिति चेन्न, लौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति इन्द्रियसन्निकर्षस्य हेतुतया तदसत्त्वदशायां तदसम्भवात् । कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदेन वृत्तिर्योऽभावस्तत्प्रतियोगितानवच्छेदकधर्मवत्त्वरूपायाः कारणताया लौकिकप्रत्यक्षप्राक्क्षणे तदधिकरणे इन्द्रियसन्निकर्षसत्त्वेनैवोपपत्तेः । कार्याधिकरणत्वमात्रनिर्वाहायैव चाऽसमानकालीनेऽपि लौकिकविषयतास्वीकारादिति ॥

रामरुद्री ।

म्भवः, तथाऽपि शब्दविशिष्टप्रत्यक्षे शब्दादेर्भावितत्पुरुषीयप्रत्यक्षे च तद्योत्तरस्य भाविघटादेरहेतुत्वेऽनागतादिशब्दानां घटादीनामपि विशिष्टबुद्धिप्रसङ्गो दुर्वारः, तत्रेन्द्रियसन्निकर्षस्य सत्त्वात् । विशेषणस्याऽपि हेतुत्वे तु तस्येदानीमभावादेव न तद्विशिष्टबुद्धिप्रसङ्गः । अत एव भाष्यकृता 'यथा शब्दवदाकाशमित्यत्र–'इत्यादिना शब्दविशिष्टबुद्धिरेवोदाहृता । इन्द्रियसन्निकर्षस्य च न कार्याव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन कार्योत्पत्तिप्रयोजकत्वं, सामान्यलक्षणातोऽतीतादिविषयकप्रत्यक्षोदयादित्येव भाष्यकृतामभिप्रायः । विवेच्यमेतदग्रे एतन्मतस्य च विषयतास्वरूपविशेषणतादिवादिनन्यानभिप्रेततया तद्विरोधो न दोषायेति ध्येयम् ।

प्राचीनास्तु द्वित्वनाशकाले द्वित्वविशिष्टबुद्धिर्ज्ञानलक्षणासन्निकर्षजन्यैव भाष्यकृतोऽभिप्रेता, अपेक्षाबुद्धेस्त्रिक्षणानवस्थायित्वेन तदनुपपत्तिरेव च तैरुद्भाव्यते । न च ज्ञानलक्षणासन्निकर्षतस्तादृशज्ञानोत्पत्तिसम्भवान्न वस्तुसत्ता तत्राऽऽवश्यकी, अन्यथा घटध्वंसादिप्रत्यक्षानुपपत्तिरिति वाच्यम् । न हि ज्ञानलक्षणासन्निकर्षजन्यत्वेनाऽस्य विशेषणमात्रजन्यत्वं भाष्यकृताऽभिधीयते, येनोक्तापत्तिः, अपि तु विशेष्यज्ञानत्वेन हेतुना तत्र भाष्यकृता विशेषणजन्यत्वं व्यवस्थाप्यत इति त्वदुक्तदोषस्याऽसम्भवात् । अथ विशेष्यज्ञानत्वेनाऽपि हेतुना तत्र विशेषणजन्यत्वं न साधयितुं शक्यम्, तत्प्रकारकविशेष्यज्ञाने तद्धेतुत्वस्यैव त्वया वाच्यतया घटध्वंसादिप्रत्यक्षस्थले एवमपि व्यभिचारानुद्धारात्, तत्राऽपि घटनिष्ठप्रकारतानिरूपितविशेष्यताशालित्वस्य तादृशप्रत्यक्षे सर्वसम्प्रतिपन्नत्वात् । न चाऽतद्व्यावृत्तिबोधकं विशेषणं(१), यत्र च सा बुध्यते तद्विशेष्यमिति प्राचीनैरभ्युपगम्यते, प्रकारत्वविशेष्यत्वयोरेव विशेषणत्वविशेष्यत्वात्मकत्वे उपलक्षणविशेषणव्यवस्थाया एवाऽसम्भवेन जटाभिस्तापस इत्यादिप्रयोगवन्नीलेन घट इत्यादि प्रयोगस्याऽपि प्रसङ्गात् । अतद्व्यावृत्त्यादिबोधकत्वं विशेषणत्वमित्युक्तौ च न तथा प्रसङ्गः, अतद्व्यावृत्तिबोधहेतोरेव विशेषणत्वेन जटादेरसतस्तद्धेतुत्वासम्भवेन विशेषणत्वायोगात्, नीलो घट इत्यादौ च घटे नीलान्यव्यावृत्तेरपि बोध इष्यते, तद्धेतुश्च नीलादिरेव, जटाभिस्तापस इत्यादौ तु न सा प्रतीयते, कारणाभावादित्यतद्व्यावृत्तिबोधकत्वमेव विशेषणत्वमिति स्थितम् । इत्थञ्च 'विशेष्यज्ञानत्वात्' इति भाष्यग्रन्थस्याऽपि अतद्व्यावृत्तज्ञानत्वादित्येवाऽर्थः, तथा च द्वे द्रव्ये इति ज्ञानस्य पञ्चमक्षणोत्पन्नस्याऽतद्व्यावृत्त्यवगाहितया तद्धेतोर्द्वित्वरूपविशेषणस्य तत्पूर्वसत्त्वमावश्यकमित्येव भाष्यकृतोक्तमिति नाऽसङ्गतिरिति वाच्यम् । द्वे द्रव्ये इति ज्ञाने द्वित्वविशिष्टस्य द्रव्यस्यैव बोधानुभवेनाऽतद्व्यावृत्तिबोधस्याऽनुभवविरुद्धतया तत्प्रतीतेरतद्व्यावृत्तिविषयकत्वहेतुना द्वित्वस्य पूर्वमावश्यकत्वकथनस्याऽन्याय्यत्वात् । न चाऽतद्व्यावृत्तिरभेद एव, तथा च नीलो घट इत्यादौ नीलादेरभेदसम्बन्धेन घटादावन्वयबोधः सर्वानुभवसिद्ध एव, भाष्यकारेणाऽपि द्रव्ये द्वित्वावच्छिन्नस्याऽभेदसम्बन्धावगाहिज्ञानमेव द्वे द्रव्ये इत्याकारकतयाऽभिप्रेतम्, न तु द्वित्वप्रकारकं, तस्य द्वित्वप्रत्यक्षकाल एव सम्भवेन तस्य चतुर्थक्षणं विहाय पञ्चमक्षणे उक्तयनौचित्यात्, तज्जनकविशेषणज्ञानस्य च निर्विकल्पकात्मकस्य तत्पूर्वं सत्त्वेन चतुर्थक्षणे तदुत्पादाभ्युपगमे बाधकाभावात् । द्वित्वत्वविशिष्टवैशिष्ट्यावगाहिनो द्वे द्रव्ये इति ज्ञानस्य तत्पूर्वं विशेषणतावच्छेदकप्रकारकज्ञानविरहेणाऽसम्भवेऽपि विशेष्ये विशेषणमिति रीत्या तज्ज्ञानस्य दुरपह्नवत्वात् । इत्थं च अभेदसम्बन्धेन द्वित्वविशिष्टप्रकारकज्ञाने द्वित्वस्य हेतुत्वं वाच्यम्, द्वित्वविशिष्टस्य तादात्म्येन हेतुत्वे तस्य यावदाश्रयमवस्थानेन उपलक्षणस्थलेऽपि द्वे द्रव्ये इत्यादिवाक्याच्छाब्दबोधापत्तेः, द्वित्वस्य हेतुत्वे तु तत्सत्त्वदशायामेव द्वे द्रव्ये इत्यादितो बोधसम्भव इत्युपपद्यते । तथा च जटावांस्तापस इत्यादिवाक्यजन्यबोधेऽपि जटावतोऽभेदसम्बन्धेन प्रकारतया तच्छालिशाब्दबोधे जटाया अपि हेतुत्वेन तदभावादेव तत्काले तादृशशाब्दबोधासम्भवान्न तथा प्रयोगः, जटासत्त्वे तु जटावांस्तापस इति प्रयोग इष्यत एव । प्रकारत्वमात्रस्य विशेषणत्वरूपत्वे तु नैतादृशव्यवस्थासम्भवः, जटाभि-

(१) तदभाववद्भेदबोधकं विशेषणमित्यर्थः । तेन न रक्ततादशायां घटादौ श्यामादेर्विशेषणत्वम् ।

रामरुद्री।

स्तापस इत्यत्राऽपि जटायाः प्रकारत्वेन विशेषणत्वप्रसङ्गात्, इष्टापत्तौ च तत्र जटावानित्यपि प्रयोगप्रसङ्गात्। तथा चोक्तयुक्त्या विशेष्यज्ञाने विशेषणस्य हेतुत्वावश्यकतया द्वित्वविशिष्टबुद्धौ द्वित्वस्य पूर्वकालसत्त्वमावश्यकमिति भाष्यसन्दर्भः सङ्गच्छत एव। अत एव 'इत्थञ्चेन्द्रियविषयसामर्थ्याद्विशेषणं विशिष्टप्रतीतौ क्वचिदात्मानमावेशयत्यपि, न तु विशेषणतायां तदुपयोगः-'इत्याचार्यैरप्युक्तम्, प्रकारस्यैव विशेषणरूपत्वे तदसङ्गतेरिति वाच्यम्। घट इत्यादिप्रतीतेर्विशिष्टबुद्धित्वोच्छेदप्रसङ्गात्, तत्राऽभेदसम्बन्धेन घटान्वयबोधस्य दुर्वचतया घटत्वादेर्विशेषणत्वासम्भवात्, प्रकारस्यैव विशेषणत्वे च पूर्वोक्तसकलदोषवारणासम्भवादिति। यत्तु व्यावृत्त्यधिकरणतावच्छेदकत्वं विशेषणत्वम्, तदनवच्छेदकं चोपलक्षणम्। घटो नील इति बुद्ध्यनन्तरं नीलत्वावच्छेदेनाऽनीलव्यावृत्तिर्बुद्ध्यत इति तद्विशेषणम्, जटाभिस्तापस इत्यादौ तु न तथा, जटाया अधिकरणतानवच्छेदकत्वादिति मणिकृतोक्तम्। तन्न, एवं सति प्रकृते द्वे द्रव्ये इति ज्ञानस्य विशेष्यज्ञानत्वकथनानौचित्यात्। तत्कालेऽसतोऽधिकरणतावच्छेदकत्वस्वीकारस्याऽनुभवविरुद्धत्वप्रसङ्गाच्चेति चेत्, अत्र वदन्ति, विशेषणविशेष्यपदे हि अवयवशक्त्याऽभेदसम्बन्धावच्छिन्नप्रकारताकबोधजनकतन्निरूपितविषयताश्रयौ बोधयतः, समुदायशक्त्या च प्रकारत्वविशेष्यत्वाख्यविषयताविशिष्टम्, तथा च घट इति ज्ञाने घटत्वादेर्विशेषणत्वव्यवहारः प्रकारताख्यविशेषणत्वमादायैव। अभेदान्वयबोधहेतोरपि विशेषणपदेन लब्धुं शक्यतयोक्तकार्यकारणभावमवलम्ब्यैव भाष्यकृता द्वित्वस्य पूर्ववर्तित्वमात्रेण विशेषणत्वसम्भवोऽभिहित इति वक्तुं शक्यतया दोषाभावात्। तथा च द्वित्वाभावेऽपि द्वित्वस्य तदानीं विशेषणत्वमुपपन्नमेवेति।

तन्न, इत्थं सति जटाऽभावकाले भ्रान्तपुरुषस्य जटावांस्तापसः, लोहितः स्फटिक इत्यादिवाक्यजन्यबोधानुपपत्तेः। तत्र तदानीं जटादिरूपविशेषणविरहेण प्राचीनाभिप्रेतविशिष्टबुद्ध्युत्पादकसामग्र्यसम्पत्तेः। तस्मान्मणिकारोक्तदिशैव विशेषणोपलक्षणयोर्निर्वक्तव्यतया तन्मतानुसारेण विशेषणज्ञानस्य विशिष्टबुद्धिहेतुत्वसम्भवेऽपि विशेषणहेतुत्वस्याऽसिद्धेर्भवदुक्तदिशा भाष्यासाङ्गत्यस्य दुरुद्धरत्वात्।

प्राचीनैकदेशिनस्तु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वं हि तत्प्रकारकज्ञानं प्रति तद्विषयकज्ञानत्वेनैव वक्तव्यम्, इत्थं च दोषराहित्यदशायामपि रजतत्वादेररजतेऽपि प्रकारतया भानप्रसङ्गः, विशेषणज्ञानसत्त्वादित्यतो रजतनिष्ठविशेष्यतासम्बन्धेन रजतत्वादिप्रकारकज्ञानं प्रति रजतत्वादेरपि स्वातन्त्र्येण हेतुत्वमावश्यकम्, इत्थञ्च रजतनिष्ठविशेष्यतासम्बन्धेन रजतत्वप्रकारकज्ञानस्य नाऽरजते आपत्तिः सम्भवति, कारणीभूतरजतत्वविरहात्। अरजतनिष्ठविशेष्यतासम्बन्धेनाऽपि रजतत्वप्रकारकं ज्ञानं नाऽऽपादयितुं शक्यम्, अरजतनिष्ठविशेष्यतासम्बन्धेन रजतत्वप्रकारकज्ञानजनकस्य दोषविशेषस्याऽभावादितिरीत्या पूर्वोक्तो दोषो वारयितुं शक्यते। इत्थं च विशेषणमात्रस्यैव पूर्वोक्तरीत्या विशिष्टबुद्धिहेतुत्वमावश्यकमिति द्वित्वादेः पूर्ववर्तितामात्रेणैव द्वे द्रव्ये इत्याकारकद्वित्वविशिष्टबुद्ध्युपपादनपरभाष्यसङ्गतिः। उपलक्षणत्वविरोधिविशेषणत्वं चेह पूर्वोक्तरीत्या नाऽभिप्रेतमिति न प्रागुक्तप्राचीनमतोद्भावितदोषलेशप्रसङ्गोऽपि। न चैवं रक्तदण्डनिष्ठविशेष्यतासम्बन्धेन रक्तत्वप्रकारकप्रत्यक्षं प्रति रक्तत्वादेरपि हेतुत्वस्य तुल्ययुक्त्या वाच्यतया उपलक्षणविधया रक्तत्वावगाहिरक्तदण्डवानिति प्रत्ययस्थले व्यभिचारो दुर्वार एव, तत्र तदानीं रक्तत्वाभावात्, रक्तत्वविशिष्टदण्डो नाऽस्ति, रक्तत्वोपलक्षितदण्डो नाऽस्ति, दण्डो नाऽस्तीत्यादिप्रतीतिसिद्धानामभावानां परस्परवैलक्षण्यस्य सर्वानुभवसिद्धतया उपलक्षणं रक्तत्वादिकं प्रकारतया भासत एव नेत्यपि वक्तुमशक्यत्वादिति वाच्यम्। तद्वन्निष्ठविशेष्यतासम्बन्धेन उपलक्षणीभूततत्प्रकारकज्ञानं प्रति हि तद्वन्निष्ठोभयावृत्तिधर्मवत्त्वसम्बन्धेन तद्धर्मस्य हेतुत्वमिष्यते, तथा चोपलक्षणस्थले ईदृशसम्बन्धेनोपलक्षणस्य कार्याधिकरणे सत्त्वानपायान्न दोष इति। अथैवं सामान्यलक्षणादिजन्यं निखिलघटविषयकमपि ज्ञानं न स्यात्, विनष्टघटेषु कार्याव्यवहितप्राक्क्षणावच्छेदेनोक्तसम्बन्धेन सामान्यस्य विरहेण तस्य कार्याधिकरणवृत्तित्वघटितकारणत्वव्याघातात्। न च कार्याव्यवहितप्राक्क्षणावच्छिन्नसत्त्वस्य कार्याधिकरणनिरूपितवृत्तितायामभावनिष्ठायां विवक्षणीयतया तदवच्छेदेन

रामरुद्री।

विनष्टघटादिनिरूपितवृत्तित्वस्यैवाऽसिद्ध्या तन्निरूपितवृत्तितावदभावानां ग्रहीतुमशक्यतया वर्त्तमानघटादिनिरूपितवृत्तितानामेव धर्तव्यतया तस्या घटत्वाभावेऽसत्त्वान्न कार्याधिकरणवृत्त्यभावाप्रतियोगित्वरूपकारणत्वभङ्गसम्भव इति वाच्यम्। तथाऽपि यद्घटाश्रयव्यक्तीनां सर्वासां नाशानन्तरमेव तद्घटप्रकारकमनुमित्याद्यात्मकं ज्ञानमुत्पन्नं, तत्रोक्तकारणत्वभङ्गस्य दुरुद्धरत्वात्, तत्स्थले कार्याव्यवहितप्राक्क्षणावच्छिन्नकार्याधिकरणनिरूपितवृत्तितावदभावस्यैवाऽप्रसिद्धेः। न चोक्तरीत्या कारणत्वभङ्गवारणाय कार्यतावच्छेदकोटौ प्रत्यक्षत्वं निवेश्यत इति नाऽयं दोषः, सामान्यलक्षणाजन्यस्य प्रत्यक्षस्य यत्किञ्चिद्द्रव्यत्वांशे लौकिकत्वनियमेन व्यापकधर्मावच्छिन्नसामग्रीघटकलौकिकसामग्रीविरहादेव यत्किञ्चिद्घटव्यक्त्याश्रयसकलपदार्थनाशोत्तरं प्रत्यक्षस्याऽसम्भवेन तत्र कार्यकारणभावस्यैवाऽकल्पनीयतयोक्तदोषोद्धारादिति वाच्यम्। एवं सत्यनुमित्यादिस्थले विशेष्यभाननियामकालाभादिति चेन्न। प्रत्यक्षस्थले विशेषणस्येवाऽनुमित्यादिस्थले परामर्शादेरेव नियामकतयोक्तदोषासम्भवात्। अत एव पर्वतीयवन्हेः परामर्शे पूर्वमभातत्वे पर्वतीयवन्ह्यनुमितिर्न स्यादित्यतस्तत्र तद्भाननिर्वाहाय सामान्यलक्षणाप्रत्यासत्तिव्यवस्थापनमपि ग्रन्थकृतां युज्यते। न चैवं सामान्यलक्षणाप्रत्यासत्त्या सकलवन्हीनामेव परामर्शे भाततया सकलवन्हिविषयिण्येवाऽनुमितिः सर्वत्र भवेदिति वाच्यम्। यादृशस्थले दोषवशात्परामर्शकाले सकलवन्हिभानं न जातं तज्जन्यानुमितेरेव न्यूनविषयकत्वसम्भवात्। इत्थञ्च द्वित्वस्य द्वे द्रव्ये इति प्रत्यक्षार्थमव्यवहितपूर्ववर्तित्वमावश्यकमेवेति भाष्यग्रन्थसङ्गतिरित्याहुः,

तदपि तुच्छम्, यत्र पर्वतत्वेन पर्वतघटोभयावगाहि—पर्वतो वह्निमानिति ज्ञानं जातम्, तत्र पर्वतत्वावच्छिन्नविशेष्यतया एकत्या एव पर्वतघटोभयसाधारणतया वन्हिप्रकारकज्ञानस्य वन्हिमन्निष्ठविशेष्यतासम्बन्धेन घटेऽपि जायमानतया तत्र वन्हिविरहेण व्यभिचारप्रसङ्गात्, दोषविशेषबलेन निरवच्छिन्नविशेष्यकभ्रमस्याऽपि सम्भवेन तदनङ्गीकारासम्भवात्, तदनभ्युपगमेऽपि द्रव्यं वन्हिमदित्याकारकद्रव्यत्वावच्छेदेन वन्हिमत्त्वावगाहिज्ञानस्थले व्यभिचारो दुर्वार एव, तत्र वन्हिमन्निष्ठविशेष्यताया अवन्हिमत्साधारण्यात्। विशेष्यतादीनां विशेष्यभेदेन भेदमुपगम्य पर्वतनिष्ठविशेष्यताया जलादावसत्त्वेन तादृशव्यभिचारवारणेऽपि प्रागुक्तभाष्यग्रन्थासङ्गतिर्दुष्परिहरैव, भवदुक्तरीत्योपलक्षणस्य कार्यपूर्वकालमसतोऽपि हेतुत्वसम्भवेन द्वे द्रव्ये इति विशेष्यज्ञाननिर्वाहाय द्वित्वस्याऽव्यवहितपूर्ववर्त्तित्वावश्यकताकथनस्याऽनौचित्यादिति निपुणतरमालोकनीयम्।

उच्छृङ्खलास्तु विशिष्टस्य शुद्धादतिरिक्ततया विशिष्टविषयकज्ञाने विशेषणस्य हेतुत्वमावश्यकमिति द्वे द्रव्ये इति ज्ञानस्य विशिष्टज्ञानतया तत्पूर्वं द्वित्वसत्त्वमावश्यकमित्यभिप्रायकतयोक्तभाष्यग्रन्थं सङ्गमयन्ति, तत्तु विशिष्टस्य शुद्धातिरिक्तत्वे प्रमाणविरहेण दूरमपोदितमिति।

इत्थञ्चोक्तभाष्यस्य दर्शितसकलप्राचीनमतानुसारेणाऽसंलग्नकतापत्त्याऽस्मदुक्तार्थ एवाऽऽदर्तव्यः। तथा च प्रागुक्तरीत्याऽपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वेऽपि सकलकार्योपपादनसम्भवात् तस्यास्त्रिक्षणावस्थायित्वोपपादनाय नानाविधः प्रयासो ग्रन्थकृतां विफल एवेति।

अत्र ब्रूमः। यादृशस्थलविशेषे प्रथममपेक्षाबुद्धिः, लौकिकसामग्र्यपगमश्च, ततो द्वित्वोत्पत्तिः, कारणान्तरसम्पत्त्या पुनर्लौकिकप्रत्यक्षसामग्रीसम्पत्तिश्च, ततो द्वित्वत्वज्ञानं, ततो द्वित्वाश्रययत्किञ्चिद्व्यक्तिविनाशः, तत्क्षणे द्वित्वप्रत्यक्षमनुभवसिद्धमपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वे नोपपद्यते, अपेक्षाबुद्ध्युत्तरजातेन बुद्ध्यन्तरेण द्वित्वत्वज्ञानकालेऽपेक्षाबुद्धिविनाशेन द्वित्वगुणज्ञानकाले द्वित्वविनाशप्रसक्त्या द्वित्वप्रत्यक्षस्य तत्कालेऽसम्भवात्। अपेक्षाबुद्ध्यन्तरेण सामान्यज्ञानकाले द्वित्वान्तरोत्पत्तिसमर्थनमपि न सम्भवति, तत्पूर्वपूर्वक्षणे लौकिकसन्निकर्षविरहेण द्वित्वजननसमर्थापेक्षाबुद्धेस्तत्पूर्वक्षणेऽसम्भवात्, अपेक्षाबुद्धेश्च प्रत्यक्षात्मिकाया एव द्वित्वोत्पादकत्वस्योक्तत्वात्। तत्र चतुर्थक्षणे द्वित्वप्रत्यक्षं तु भवत्येव, अपेक्षाबुद्ध्यात्मकस्य यावदाश्रयप्रत्यक्षस्याऽस्मन्मते अपेक्षाबुद्ध्यधीनविशिष्टवैशिष्ट्यावगाहिबुद्ध्यन्तरात्मकस्य तस्य युष्मन्मते च सिद्धतया यावदाश्रयप्रत्यक्षरूपकारणाभावस्य तत्राऽऽशङ्कितुमशक्यत्वादित्यपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वमगत्या स्वीकरणीयमेवेत्यास्तां विस्तरेण।

पगमात्। तस्मात् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते।

दिनकरी।

**द्वित्वप्रत्यक्षादिकमिति।** द्वित्वद्वित्वत्वनिर्विकल्पकमित्यर्थः। आदिना त्रित्वद्विपृथक्त्वादिप्रत्यक्षपरिग्रहः। योग्यविभुविशेषगुणत्वस्य स्वत्वस्य चानुगतस्याऽभावेन स्वोत्तरोत्पन्नगुणत्वस्याऽनुगतस्याऽभावात्तत्तद्व्यक्तित्वेनैव नाश्यनाशकभावस्य वाच्यतया द्वित्वत्वविशिष्टप्रत्यक्षरूपकार्यानुरोधेन द्वित्वद्वित्वत्वनिर्विकल्पकस्यैव तद्व्यक्तित्वेनापेक्षाबुद्धिनाशकत्वं कल्प्यते, न तु द्वितीयक्षणोत्पन्नस्मरणादेरिति भावः।

रामरुद्री।

नन्तु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरोत्पन्नगुणस्य कारणत्वात् तादृशसामान्यधर्मावच्छिन्नसामग्रीसत्त्वेऽपेक्षाबुद्धिविनाशः केन वारणीयः? न च सामान्यतस्तादृशनाश्यनाशकभाववत् अपेक्षाबुद्धिव्यक्तिविशेषनाशं प्रति तत्तृतीयक्षणोत्पन्नज्ञानविशेषस्याऽपि हेतुत्वोपगमेनैव तादृशापत्तिर्वारयितुं शक्यते, सामान्यसामग्र्या विशेषसामग्रीसहकारेण फलोत्पत्तिव्याप्यतायाः सकलतान्त्रिकसम्प्रतिपन्नत्वादिति वाच्यम्। उक्तरीत्या पूर्वोक्तदोषवारणसम्भवेऽपि तादृशानन्तस्थलेऽनन्तहेतुहेतुमद्भावकल्पनप्रयुक्तगौरवस्य दुष्परिहरत्वात्। न चोक्तरीत्या विशेषतो नाश्यनाशकभावानुपगमे द्वित्वविशिष्टप्रत्यक्षकालेऽपेक्षाबुद्धिनाशाद् द्वित्वनाशप्रयुक्तस्य तत्प्रत्यक्षासम्भवस्य दुष्परिहरणीयत्वापत्तिप्रसङ्ग इत्यत एव तादृशनाश्यनाशकभावोऽपि स्वीकरणीय एवेति वाच्यम्। चतुर्थक्षणे द्वित्वविशिष्टप्रत्यक्षोपपादनाय द्वित्वनाशं प्रति द्वित्वविशिष्टप्रत्यक्षस्य हेतुताया अपि विनिगमनाविरहेण स्वीकारप्रसङ्गात्, अपेक्षाबुद्धिनाशस्य द्वित्वादिनाशकतायाः क्वाऽप्यक्लृप्ततया द्वित्वविशिष्टप्रत्यक्षस्याऽपि तन्नाशकत्वकल्पने क्षतिविरहात्। न चैवं विनिगमनाविरहेण चतुर्थक्षणव्यक्तीनामपि नाशकत्वापत्तिरिति वाच्यम्। इष्टत्वात्, अपेक्षाबुद्धौ द्वित्वनिर्विकल्पकादेर्नाशकत्वाभ्युपगन्तृनयेऽपि तत्तत्क्षणविशेषस्य नाशकत्वप्रसङ्गस्य तुल्यत्वादित्याशङ्कां परिजिहीर्षुराह। **योग्येविशेषगुणत्वस्यविभुत्यादि।** **अनुगतस्येति।** नाशकतावच्छेदककोटौ विशेषणतापन्नस्येति शेषः। **अनुगतस्याऽभावादिति।** सकलनाशकसाधारणस्याऽसम्भवादित्यर्थः। अयं भावः, योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरोत्पन्नगुणानां कारणत्वमित्यत्र स्वपदं योग्यविभुविशेषगुणत्वावच्छिन्नपरं, सकलयोग्यविशेषगुणसाधारणैकधर्मविशेषावच्छिन्नपरम्, तत्तद्व्यक्तित्वावच्छिन्नपरं वा? तत्र नाऽऽद्यः, योग्यविभुविशेषगुणमात्रस्यैवयत्किञ्चिद्योग्यविभुविशेषगुणोत्तरगुणत्वे न क्षणिकत्वापत्तेः, नाऽपि द्वितीयः, तादृशैकधर्मविशेषालाभात्, लाभेऽपि वा पूर्वोक्तदोषानुद्धारात्। अतस्तृतीयकल्पस्यैवाऽऽदरणीयत्वे योग्यविभुविशेषगुणनाशत्वावच्छिन्नं प्रति सामान्यतः स्वोत्तरोत्पन्नगुणत्वेन नाशकत्वं नोपपद्यत इति। तथा च विशेषत एव कार्यकारणभावस्य कल्पनीयत्वे अपेक्षाबुद्धिनाशं प्रति द्वित्वनिर्विकल्पकव्यक्तीनामेव तत्त्वं कल्प्यत इति न पूर्वोक्तरीत्या विनिगमकाभावेन द्वित्वादिनाशं प्रति तादृशबहुतरकार्यकारणभावप्रसङ्गः। विनिगमनाविरहेणाऽपेक्षाबुद्धिं प्रति तत्तत्कालोत्पन्नपवनसंयोगत्वादिना च नाशकत्वमिष्यते, गत्यन्तरविरहादिति।

अथैवं स्वोत्तरोत्पन्नानां स्वसमानाधिकरणानामनन्तानां व्यक्तीनां तत्तद्व्यक्तित्वेन हेतुता प्रसज्येतेति तेषां तद्व्यक्तौ तद्व्यक्त्युत्तरक्षणोत्पन्नत्वेनैव नाशकत्वं युक्तम्। न चैवमपि तत्तद्व्यक्तिप्रतियोगिकनाशे तत्तद्व्यक्त्युत्तरोत्पन्नव्यक्तीनां तद्व्यक्त्युत्तरोत्पन्नत्वेन हेतुत्वं तत्तद्व्यक्तित्वेनैव वेत्यत्र विनिगमनालोचने तत्तद्व्यक्तित्वेनैव लाघवाद्धेतुत्वमङ्गीकरणीयम्, न तु स्वोत्तरोत्पन्नत्वेन, स्वोत्तरोत्पन्नव्यक्तिमध्ये केषाञ्चिदन्यथासिद्धकुक्षिनिक्षेपावश्यकत्वे च तद्व्यक्तित्वेन हेतुहेतुमद्भावे आनन्त्यमपि नाऽस्त्येव। उत्पन्नत्वस्य स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपतया प्रतिव्यक्ति भिन्नत्वेन स्वोत्तरोत्पन्नव्यक्तीनां तादृशधर्मपुरस्कारेणाऽनुगमासम्भवाच्च। किं चैवं वस्तुतः स्वोत्तरोत्पन्नो यः क्षणस्तदुत्पन्नत्वेन जनकत्वमस्तु, लाघवात्, किं स्वोत्तरत्वस्य कारणतावच्छेदककुक्षिप्रवेशेन? इत्थं च द्वित्वत्वादिनिर्विकल्पकस्य तद्विशिष्टज्ञानस्य द्वे द्रव्ये इत्यादि साक्षात्कारस्य वा तत्त्वेन तत्क्षणोत्पन्नत्वेन वाऽपेक्षाधीनाशकत्वादपेक्षा-

रामरुद्री ।

बुद्धेस्त्रिचतुःपञ्चक्षणावस्थायित्वमुपपद्यत एव । अत एवाऽनुमितिद्वयादौ चक्षातः क्रमेणाऽनुमितिद्वयादिकमपि सहजत एवोत्पद्यते, तादृशसिषाधयिषायास्तत्परामर्शस्य च त्रिचतुःक्षणावस्थायित्वात् । अत एव सिषाधयिषानन्तरं त्रिचतुःपञ्चक्षणविलम्बेन विनाऽपि सिषाधयिषान्तरं सिद्धौ सत्यामनुमितिरप्युपपद्यते । अत एव लक्षवर्षावच्छिन्नस्वर्गादिकं बोधयन्नागमोऽपि यथाश्रुत एवोपपद्यते, उपपद्यते चैकस्यैव सुखदुःखादेः शब्दस्य च धारावाहिकोऽनुभवो घटादिपदानुभवश्चेति वाच्यम् । न हि वयं स्वोत्तरोत्पन्नत्वेन ज्ञानादिनाशकत्वं ब्रूमः, येनोक्तदोषाः प्रसज्येरन्, किन्त्वेतत्क्षणोत्पन्नज्ञानादिनाशत्वावच्छिन्नं प्रति वस्तुतो य एतत्क्षणोत्तरक्षणस्तदुत्पन्नत्वेन तत्त्वेन वा कालघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वम् । एतत्क्षणोत्पन्नत्वं चैतत्क्षणप्रागभावाधिकरणक्षणावृत्तित्वे सति एतत्क्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वे सति वा एतत्क्षणवृत्तित्वरूपं विवक्षितमिति नाऽननुगमः । विशेष्यदलं विहाय एतत्क्षणप्रागभावाधिकरणक्षणावृत्तित्वमात्रं एतत्क्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वमात्रमेव वा तन्निरुक्तनाश्यतावच्छेदककोटिघटकमुत्पन्नत्वमास्ताम् । वस्तुतस्त्वेतत्क्षणाव्यवहितपूर्ववर्तितया निश्चितो यः क्षणस्तद्वृत्तित्वमात्रमेव विवक्षणीयम्, इतरांशस्याऽनतिप्रयोजनकत्वात् । इत्थं चाऽपेक्षाबुद्धेः क्षणत्रयावस्थायित्वं न सम्भवत्येवेति टीकोक्तस्य साङ्गत्यस्य दुरुद्धरत्वम् । न च विनश्यदवस्थत्वोपलक्षितानन्तक्रियादिरूपाणां क्षणानां विनिगमकाभावेनैकैकघटितधर्मावच्छिन्नं प्रति सर्वेषां कारणतावच्छेदकतया वक्तव्यत्वेन गुरुतरानन्तहेतुहेतुमद्भावापत्तेस्तत्तद्व्यक्तित्वेनैव नाश्यनाशकभावाङ्गीकारो युक्त इति वाच्यम् । तत्तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकानां सर्वेषां भेदानां समानयतत्वैक्येनाऽनन्तकार्यकारणभावानुपपत्तेः । न च तथाऽपि अवच्छेदकतावच्छेदककोटौ तत्क्षणवृत्तित्वावच्छिन्नत्वप्रवेशस्य विनिगमनाविरहेणाऽऽवश्यकतया गौरवं दुष्परिहरमेवेति वाच्यम् । तादृशभेदस्य स्वरूपतस्तद्व्यक्तित्वेनैव वाऽवच्छेदकत्वोपगमेनोक्तदोषविरहात् । तथा च तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदावच्छिन्ननाशं प्रति वस्तुतो यस्तद्द्वितीयक्षणस्तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवत्त्वेनैव कारणत्वम् । इत्थं च तज्ज्ञानव्यक्त्यव्यवहितपूर्वक्षणस्य तत्क्षणपदेनोपादाने तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवन्नाशरूपतज्ज्ञानव्यक्तिनाशे तज्ज्ञानव्यक्त्याद्यक्षणात्मकतद्द्वितीयक्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवतस्तज्ज्ञानद्वितीयक्षणोत्पन्नगुणान्तरस्य हेतुत्वाज्ज्ञानादेर्द्वित्वादेश्च क्षणिकत्वोपपत्तिः । न चैवं तत्क्षणतृतीयक्षणोत्पन्नस्य ज्ञानादेः क्षणिकत्वापत्तिः, तस्याऽपि त्वदुक्तनाश्यतावच्छेदकनाशकतावच्छेदकोभयाक्रान्तत्वादिति वाच्यम् । तत्तत्क्षणभेदेनेदृशकार्यकारणभावभेदस्याऽऽवश्यकतया तृतीयक्षणोत्पन्नव्यक्तेः प्रथमक्षणघटितनाश्यतावच्छेदकाक्रान्तत्ववत् द्वितीयक्षणघटितनाश्यतावच्छेदकाक्रान्ततया अप्यावश्यकत्वेन तद्द्वितीयक्षणात्मकप्राथमिकक्षणतृतीयक्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवतस्तत्तृतीयक्षणात्मकप्राथमिकक्षणचतुर्थक्षणोत्पन्नव्यक्त्यन्तरस्य तत्पूर्वं विरहादेव तन्नाशासम्भवेन क्षणिकत्वायोगात् । तथा चाऽपेक्षाबुद्धेरपि निरुक्तनाश्यतावच्छेदकाक्रान्ततया तृतीयक्षणे नाशस्याऽऽवश्यकतया कथं त्रिक्षणावस्थायित्वसम्भवः ? न चेतरज्ञानादिक्षणोत्पन्नव्यक्तिनाश्यनाशकभावस्त्वदुक्तरीत्यैवाऽस्ताम्, अपेक्षाबुद्ध्यधिकरणक्षणोत्पन्नव्यक्तिनाश्यनाशकभावस्तु तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवत्प्रतियोगिकनाशं प्रति वस्तुगत्या यस्तस्य तृतीयश्चतुर्थः पञ्चमो वा क्षणस्तद्वृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवत्त्वेन कारणत्वमिति रीत्यैव यथानुभवं स्वीकरणीयः, तथा चाऽपेक्षाबुद्धेस्त्रिचतुःपञ्चक्षणावस्थायित्वमुपपद्यत एवेति वाच्यम् । एवं सत्यपेक्षाबुद्धिसमकालोत्पन्नशब्दबुद्ध्यन्तरादीनामपि त्वदुक्तनाश्यतावच्छेदकाक्रान्तत्वेन त्रिचतुःपञ्चक्षणावस्थायित्वापत्तेः । न चैवमपि तत्तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकभेदस्य तादृशभेदवन्निष्ठतत्तद्व्यक्तित्वानां वा नाश्यनाशकतयोरवच्छेदकत्वमित्यत्र विनिगमनाविरहेण तत्तद्व्यक्तित्वेनैव हेतुत्वमास्तामिति वाच्यम् । एवमपि तादृशभेदस्याऽपि तथात्वस्याऽऽवश्यकत्वेनोक्तनाश्यनाशकभावस्याऽक्षतत्वात् । त्वन्मते द्वित्वादिनाशार्थमपेक्षाबुद्ध्यादिनाशस्याऽधिकः कार्यकारणभावोऽपि स्वीकरणीयः, स च नाऽस्मन्मत इत्यपि विनिगमकस्य सम्भवाच्च । न चैवमपि तत्क्षणद्वितीयक्षणे यत्क्रियादिकं विनश्यति, समनियतकाला-

रामरुद्री ।

त्मकतत्तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकभेदस्यैकत्वेऽपि ये तथा न नश्यन्ति, असमनियतकालात्मकतत्तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकभेदानां विभिन्नतयाऽवच्छेदकानन्त्यं दुष्परिहरमेवेति वाच्यम् । तत्तत्क्षणनिष्ठतत्क्षणत्वावच्छिन्नाधिकरणतानिरूपिताधेयतावच्छिन्नप्रतियोगिताकभेदस्याऽखण्डस्यैक्येन तस्यैवाऽवच्छेदकत्वौचित्यात् । न च विनिगमनाविरहेण तत्तत्क्षणनिष्ठाधिकरणतानिरूपिताधेयत्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदानामपि तथात्वमावश्यकमित्यानन्त्यं दुर्वारमेवेति वाच्यम् । तत्तत्क्षणत्वावच्छिन्नाधिकरणतानिरूपिताधेयत्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदस्यैवाऽवच्छेदकत्वमावश्यकम् । अन्यथा यत्क्रियाव्यक्तेस्तत्तृतीयक्षणे नाशः, तत्क्रियाव्यक्त्यात्मकप्राथमिकतत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवत्प्रतियोगिकनाशं प्रति तत्क्रियाव्यक्तिद्वितीयक्षणात्मकतत्तृतीयक्षणानवस्थायिव्यक्त्यन्तरवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवतो हेतुत्वे प्राथमिकक्षणोत्पन्नज्ञानादिव्यक्तितृतीयक्षणे हेतोः सत्त्वेऽपि तत्क्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवत्प्रतियोगिकनाशानुत्पत्त्याऽन्वयव्यभिचारापत्तेः । तथा चाऽपेक्षाबुद्धेः क्षणत्रयावस्थायित्वोक्तिर्विरुद्धैवेति चेत्,—

अत्र ब्रूमः । एवं सति निरुक्तान्वयव्यभिचारभयेन तादृशस्थले तत्क्रियाव्यक्तिद्वितीयक्षणात्मकतत्तृतीयक्षणानवस्थायिव्यक्त्यन्तरवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवतो हेतुत्वासम्भवेऽपि तत्क्रियाव्यक्तितृतीयक्षणपर्यन्तस्थायिव्यक्त्यन्तरात्मकक्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवतो हेतुत्वसम्भवेनाऽनन्तहेतुहेतुमद्भावापत्तेर्ब्रह्मणोऽपि दुष्परिहरतया निरुक्तरीत्या कारणत्वानामन्यथासिद्धत्वकल्पनयैव वारणीयत्वात् । अन्यथा तत्तद्दिनादिवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवत्प्रतियोगिकनाशं प्रति तत्तद्दिनाव्यवहितोत्तरक्षणवृत्तित्वावच्छिन्नप्रतियोगिताकत्वोपलक्षितभेदवत्त्वादिना जनकत्वापत्तेः, तुल्ययुक्त्या तत्क्षणावृत्तिनाशं प्रति तत्क्षणद्वितीयक्षणावृत्ते र्हेतुत्वप्रयुक्त्या नाशमात्रं प्रत्येवैककारणपरिशेषापत्तेश्च, समवायिकारणादिनाशस्याऽप्यनयैव रीत्या कारणत्वस्य वक्तुं शक्यत्वादित्यलं प्रसक्तानुप्रसक्त्या ।

सम्प्रदायानुसारिणस्तु प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति कालिक-स्वाव्यवहितपूर्वत्वोभयसम्बन्धेन गुणः कारणमिति रीत्या योग्यविभुविशेषगुणनाशे स्वोत्तरोत्पन्नगुणस्याऽनुगतहेतुत्वं सम्भवत्येव, तथा च कथमपेक्षाबुद्धौ द्वित्वनिर्विकल्पकादेः स्वोत्तरोत्पन्नगुणविधया विनाशकत्वं सम्भवेत् ? तस्मात्सामान्यतो योग्यविभुविशेषगुणनाशत्वावच्छिन्नं प्रति स्वोत्तरोत्पन्नगुणस्य हेतुत्वेऽपि अपेक्षाबुद्धिविनाशत्वरूपविशेषधर्मावच्छिन्नं प्रति द्वित्वनिर्विकल्पकादेरेव हेतुत्वमावश्यकमिति तदभावे नाऽपेक्षाबुद्धिविनाशप्रसङ्ग इत्यपेक्षाबुद्धेः क्षणत्रयावस्थायित्वमुपपन्नमित्येव मूलतात्पर्यमवगन्तव्यम् । अपेक्षाबुद्धिविनाशत्वावच्छिन्नं प्रति द्वित्वनिर्विकल्पकत्वादिना पृथग्घेतुत्वं चाऽगत्या द्वित्वविशिष्टप्रत्यक्षान्यथानुपपत्त्या कल्प्यते । अत एव यागादिविनाशं प्रति चरमसुखव्यक्तेरेव कारणत्वमस्तु, किमपूर्वेणेति केषाञ्चिच्छङ्काऽपि परास्ता । योग्यविभुविशेषगुणात्मकस्य यागस्य तृतीयक्षणे नाशावश्यकत्वेन तस्य फलपर्यन्तावस्थानानुपपत्तेः । टीकाकारमते तु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरगुणत्वेव सामान्यकार्यकारणभावस्य विरहेण तत्तद्व्यक्तिविनाशं प्रति तत्तद्व्यक्तित्वेनैव कारणतायाः स्वीकृततया चरमफलात्मकव्यक्तिविशेषणामेव यागध्वंसकत्वकल्पनसम्भवेनाऽदृष्टमात्रोच्छेदापत्तेरिति वदन्ति ।

वस्तुतस्तु द्वित्वाद्युत्पत्तिस्थलेऽपेक्षाबुद्धेः क्षणत्रयावस्थायित्वं न निर्विकल्पकसामग्र्याः प्रतिबन्धकत्वमुपगम्योपपादनीयम् । तथा सति अपेक्षाबुद्धिनाशे द्वित्वनिर्विकल्पकसामग्र्याः प्रतिबन्धकत्वम्, उत द्वित्वनिर्विकल्पकस्य हेतुत्वम्, द्वित्वविनाश एव वा द्वित्वविशिष्टप्रत्यक्षस्य हेतुत्वं कल्पनीयमित्यत्र विनिगमनाविरहेण बहुतरकार्यकारणभावप्रतिबध्यप्रतिबन्धकभावकल्पनप्रसङ्गेन विपरीतगौरवापत्तेः, किन्तु सर्वत्र द्वित्वप्रत्यक्षनिर्वाहाय विनश्यदवस्थमनःसंयोगकाल एवाऽपेक्षाबुद्धेरुत्पत्तिरुपगन्तव्या, तथा च तदुत्तरक्षणे विशेषगुणस्योत्पत्त्यसम्भवेन नाऽपेक्षाबुद्धेस्तृतीयक्षणे विनाशप्रसङ्गः । योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरोत्पन्नयोग्यविशेषगुणानामेव हेतुत्वस्यैवोपगन्तव्यत्वात् । अन्यथा योग्याविभुविशेषगुणनाशं प्रति स्वोत्तरोत्पन्नगुणमात्रस्य हेतुत्वे पवनसंयोगादितोऽपि ज्ञानादिविनाशव्यवहारप्रसङ्गात् ।

दिनकरी ।

ननु द्वित्वत्वविशिष्टद्वित्वप्रत्यक्षमुपनीतभानात्मकमेवास्तु, अलं तदुपपत्तये त्रिक्षणावस्थायित्वकल्पनेनाऽपेक्षाबुद्धेः । न च द्वित्वत्वांशे उपनीतभानसम्भवेऽपि द्वित्वांशे नोपनीतभानत्वम्, उपनीतं च विशेषणतयेति नियमादिति वाच्यम् । यतो द्वित्वत्वविशिष्टद्वित्वप्रत्यक्षं हि जायमानं द्रव्यांशे द्वित्वप्रकारकमेव भवति द्वे द्रव्ये इत्याकारकम् । निर्विकल्पकोत्तरक्षणे द्वे द्रव्ये इत्याकारकं द्वित्वत्वविशिष्टद्वित्वप्रकारकं प्रत्यक्षं न सम्भवति, तत्पूर्वं विशेषणताव-

रामरुद्री ।

इत्थं चाऽपेक्षाबुद्धेस्तृतीयक्षणोत्पन्नद्वित्वनिर्विकल्पकादेव विनाशस्याऽगत्याऽभ्युपगन्तव्यतया तस्याः क्षणत्रयावस्थायित्वमुपपद्यत एव । न च चरमज्ञानादिव्यक्तीनां स्वोत्तरवर्तिना स्वेनैव नाशाभ्युपगमवत् अपेक्षाबुद्धेरपि तृतीयक्षणे नाश आवश्यक इति वाच्यम् । स्वोत्तरवर्तिनः स्वस्य प्रथममपि सत्त्वेन ज्ञानमात्रस्यैव क्षणिकत्वप्रसङ्गभिया स्वप्रागभावाधिकरणत्व–कालिकोभयसम्बन्धेनैव योग्यविशेषगुणस्य कारणतया वक्तव्यतयोक्तदोषानवकाशात् । न चैवं चरमज्ञाननाशस्थले व्यभिचारप्रसङ्गः, तत्रोक्तोभयसम्बन्धेन योग्यविशेषगुणाभावादिति वाच्यम् । अगत्या चरमज्ञानादिभिन्नत्वस्य नाश्यतावच्छेदककोटौ निवेशेन व्यभिचाराभावात् । युक्तं चैतत् । कथमन्यथाऽपेक्षाबुद्धेरिव सुखदुःखादीनामपि विशिष्टबुद्ध्यर्थं क्षणत्रयावस्थायित्वं न स्वीकृतमिति । शेषमशेषं विस्तरेणाऽन्यत्राऽऽलोकनीयम् ।

उत्तानास्तु विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टबुद्धौ विशेषणज्ञानस्य च हेतुत्वे मानाभावेन द्वित्वादेः क्षणद्वयमात्रावस्थायित्वेऽपि न द्वित्वविशिष्टप्रत्यक्षानुपपत्तिरित्याहुः । तच्चिन्त्यम् ।

इति नियमादिति । तत्प्रकारकानुभवं प्रति तद्विषयकज्ञानत्वेन रूपेणैव ज्ञानलक्षणासन्निकर्षस्य हेतुतया तदुपनीतस्य विशेष्यतया भानासम्भवादिति शेषः । यद्यप्येवमपि तद्धर्माश्रयनिष्ठविशेष्यतासम्बन्धेन तद्धर्मप्रकारकप्रत्यक्षं प्रति तद्धर्मज्ञानत्वेन रूपेण सामान्यलक्षणाया हेतुतया द्वित्वत्वरूपधर्मज्ञानात्मकद्वित्वनिर्विकल्पकात्मकसामान्यलक्षणासत्त्वेन तदुत्तरं द्वित्वविशिष्टप्रत्यक्षे द्वित्वस्य विशेष्यतयाऽपि भानं सम्भवति । न चैवं सौरभत्वादिज्ञानात्मकज्ञानलक्षणासन्निकर्षजन्यस्य सुरभि चन्दनमित्यादिज्ञानस्याऽपि पूर्वोक्तरीत्या सौरभत्वादिज्ञानात्मकसामान्यलक्षणाबलाद्यावत्सौरभमुख्यविशेष्यकत्वापत्तिर्दुर्वारा, बहिरिन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमेन तादृशचाक्षुषस्य सौरभादिमुख्यविशेष्यकत्वे इष्टापत्त्ययोगादिति वाच्यम् । सौरभादिमुख्यविशेष्यकप्रत्यक्षत्वस्य सौरभादिलौकिकविषयकत्वव्याप्यतया व्यापकधर्मात्मकसौरभादिलौकिकविषयकत्वावच्छिन्ननियामकसामग्रीविरहादेव तादृशज्ञानस्य सौरभादिमुख्यविशेष्यकत्वस्य वारणीयत्वात् । द्वित्वमुख्यविशेष्यकप्रत्यक्षत्वस्य द्वित्वलौकिकप्रत्यक्षत्वव्याप्यत्वेऽपि प्रकृते तदवच्छिन्नजनकसामग्र्याश्चक्षुःसन्निकर्षादेः सत्त्वेन तत्प्रत्यक्षस्य द्वित्वमुख्यविशेष्यकत्वं न विरुद्धम् । न च प्रत्यक्षे विषयस्य कार्यकालीनतया हेतुत्वमावश्यकम्, सम्बद्धं वर्तमानं चेत्याद्यनुरोधात्, इत्थं च द्वित्वलौकिकसामग्र्यन्तर्गतस्य विषयस्य कार्यकालमसत्त्वादेव नोक्तरीत्या द्वित्वमुख्यविशेष्यकप्रत्यक्षोत्पत्तिसम्भव इति वाच्यम् । सामान्यलक्षणया स्वाश्रयमुख्यविशेष्यकज्ञानजनने यत्किञ्चित्स्वाश्रयलौकिकप्रत्यक्षजनकसामग्र्या एवाऽपेक्षणीयत्वेन निर्विकल्पकापेक्षाबुद्ध्युत्तरोत्पन्नसविकल्पकापेक्षाबुद्धिजन्यद्वित्वान्तरलौकिकप्रत्यक्षसामग्रीसहकारमात्रेणैव प्राथमिकद्वित्वमुख्यविशेष्यकप्रत्यक्षोत्पत्तिसम्भवात्, तत्स्थले तादृशद्वित्वान्तरप्रत्यक्षस्य प्राथमिकद्वित्वनिर्विकल्पकसहकारेण सविकल्पकात्मकस्यैवोपगन्तव्यतया द्वित्वत्वप्रकारकतल्लौकिकप्रत्यक्षसामग्र्या अपि सुवचत्वात्सामान्यलक्षणया तद्धर्माश्रयविशेष्यकप्रत्यक्षजनने तद्धर्मकारकलौकिकप्रत्यक्षसामग्रीहेतुत्वोक्तावप्यदोषात् । न चोपनीतं विशेषणतयैवेत्याद्यनुरोधात् मुख्यविशेष्यतया चाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुरादिलौकिकसन्निकर्षाभावविशिष्टज्ञानत्वेन विषयतया प्रतिबध्यप्रतिबन्धकभावः स्वीक्रियते, तत्र च चक्षुरादिसंयोगसत्त्वेऽपि

* स्पष्टश्चाऽयमर्थः सामान्यलक्षणाजागदीश्याम् ।

दिनकरी ।

च्छेदकद्वित्वत्वप्रकारकद्वित्वज्ञानासम्भवादिति तु न, विशेष्ये विशेषणमिति रीत्यैव द्वे द्रव्ये

रामरुद्री ।

सहकार्यन्तराभावे जायमानस्य तद्धर्मोपनीतभानात्मकचाक्षुषादेस्तद्धर्ममुख्यविशेष्यकत्वापत्तिवारणार्थं लौकिकसन्निकर्षस्थाने लौकिकसामग्र्या एव प्रतिबन्धकतावच्छेदककोटौ निवेशनीयत्वात् उक्तस्थले तादृशप्रतिबन्धकसद्भावादेव न द्वित्वमुख्यविशेष्यकप्रत्यक्षोपपत्तिः सम्भवतीति वाच्यम् । लौकिकसामग्र्यभावो हि समानाधिकरणविषयत्वानिरूपितप्रकारत्वानिरूपितविषयत्वसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन सामान्यलक्षणजन्यप्रत्यक्षस्थलेऽसन्निकृष्टधर्मिण्यपि लौकिकसामग्र्यभावविशिष्टज्ञानस्य सत्त्वेऽपि यत्किञ्चिद्धर्मिणि लौकिकसामग्रीदशायां न तद्विशेष्यकप्रत्यक्षधारानुपपत्तिः । इत्थं च प्रकृते द्वित्वान्तरनिष्ठलौकिकसामग्रीवैशिष्ट्यस्यैव ज्ञाने सत्त्वेन तस्य प्रतिबन्धकत्वं नोपपद्यत इति वक्तुं शक्यम्, तथाऽप्युपनीतं विशेषणतयैवेत्यादिनियमस्याऽत्रैव भङ्गप्रसङ्गभियोक्तरीत्येन्द्रियसन्निकर्षाभावविशिष्टस्य ज्ञानस्य प्रतिबन्धकत्वं न वक्तव्यम्, किन्तु लौकिकसन्निकर्षादिः कारणतावच्छेदको यः सम्बन्धस्तत्सम्बन्धेन तदधिकरणे विषयतासम्बन्धेन वृत्तित्वरूपसामानाधिकरण्यसम्बन्धेन लौकिकसन्निकर्षादिशून्यत्वरूपमेव तदभावविशिष्टत्वं ज्ञानविशेषणतया प्रतिबन्धकतावच्छेदकघटकम्, तथा च न पूर्वोक्तदोषः । इत्थं च द्वित्वनिर्विकल्पकोत्तरं विनश्यदवस्थस्य द्वित्वस्योपनीतभाने न विशेष्यतया भानसम्भवः, निर्विकल्पकात्मकस्यैवोक्तप्रतिबन्धकतावच्छेदकाक्रान्तस्य ज्ञानस्य सत्त्वादिति नाऽसङ्गतिः । न चैवं लौकिकसामग्रीसत्त्वे मुख्यविशेष्यतयोपनीतस्याऽपि भानप्रसङ्ग इति वाच्यम् । इष्टत्वात्, उपनीतं विशेषणतयैव भासत इत्यत्र विशेषणतयैवेत्यस्याऽलौकिकमुख्यविशेष्यत्वासमानाधिकरणविषतयेत्यर्थस्य वक्तव्यत्वात् । लौकिकसंनिकर्षसत्त्वे चोपनीतस्याऽपि मुख्यविशेष्यतया भानस्य 'तत्राऽप्यसति बाधके घटांशे घटत्वादेः प्रकारत्ववन्मुख्यविशेष्यत्वस्याऽपीष्टत्वात्—'इत्यादिना मथुरानाथेन स्वीकृतत्वात् । न चैवमुक्तरीत्या प्रतिबध्यप्रतिबन्धकभावोपगमे सामान्यलक्षणया सकलघटादिविषयकप्रत्यक्षोत्तरं यत्किञ्चिद्घटव्यक्तौ लौकिकसन्निकर्षसत्त्वे सन्निकृष्टघटवदसन्निकृष्टघटादेरपि मुख्यविशेष्यत्वापत्तिः, तत्र तज्ज्ञानस्य लौकिकसामग्रीविशिष्टत्वेनोक्तप्रतिबन्धकतावच्छेदकानाक्रान्तत्वेन तद्वशात् तदसम्भवस्य वक्तुमशक्यत्वादिति वाच्यम् । लौकिकसामग्रीविशिष्टान्यविषयतासम्बन्धेन ज्ञानस्यैव प्रतिबन्धकताया उपगन्तव्यत्वादिति दिक् । **ज्ञानासम्भवादिति** । विशिष्टवैशिष्ट्यावगाहिबुद्धौ च विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वेन तदभावे तदुत्पादस्योपगन्तुमशक्यत्वादिति पूरणीयम् । **विशेष्ये विशेषणमिति रीत्यैवेति** । यादृशविशेषणविशिष्टस्य विशेष्यस्य विशेषणस्य वा शब्दादुपस्थितिस्तादृशेनैव विशिष्टेन विशेष्यस्य विशेषणान्तरस्य वाऽन्वयबोधोऽनुभवसिद्धः । यत्र च युगपदेवैकस्मिन् धर्मिणि समूहालम्बनोपस्थितानां विशेषणानां तुल्यतया भानं, नाऽसावेकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यबोधः, अतो न तत्र विशेषणविशिष्टविशेष्योपस्थितेरपेक्षा । एकविशेषणविशिष्टे विशिष्टान्तरवैशिष्ट्यं विशेष्ये वा यत्र विशेषणान्तरविशिष्टस्य वैशिष्ट्यं भासते स बोधो विशिष्टविषयकबोधादेवोपपद्यते, न तु विशृङ्खलसमूहालम्बनात् । इत्थं च विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वेऽपि विशेष्ये विशेषणमित्यादिरीत्या ज्ञाने न तद्धेतुत्वमित्युक्तस्थले द्वे द्रव्ये इत्याकारकं प्रत्यक्षमुपपन्नमेवेति भावः । अथ किमिदं विशिष्टवैशिष्ट्यावगाहित्वं नाम ? न तावद्विशिष्टप्रतियोगिकं यद्वैशिष्ट्यं तदवगाहित्वम्, व्यधिकरणसम्बन्धावगाहिविशिष्टभ्रमे व्यभिचारात् । नाऽपि विशिष्टप्रकारकत्वम्, काञ्चनमयवह्निमानित्यादिभ्रमप्रकारीभूतविशिष्टाप्रसिद्धेः । नाऽपि विशेषणान्तरप्रकारेण भासमानप्रकारकत्वं, रक्तो दण्डो दण्डवान् पुरुष इति समूहालम्बनस्याऽपि तथात्वप्रसङ्गात् । नाऽपि विशेषणान्तरप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारताकत्वम्, विशेष्ये विशेषणमिति रीत्योत्पद्यमानज्ञानस्यैवमपि तथात्वप्रसङ्गात् । न चेष्टापत्तिः तथा सति एकत्वविशिष्टकर्तुः पूर्वमज्ञानेऽपि क्षितिरकर्तृकेत्यनुमितेरिष्टतया तत्र विशेषणतावच्छेदकप्रकारकज्ञानविरहेण व्यभिचारप्रसङ्गादिति चेत्, अत्र वदन्ति, रक्तत्वादिविशेष्यतापन्नदण्डादिप्रकारकं ज्ञानं द्विविधम्, रक्तत्वाद्यवच्छिन्नप्रतियोगिताकत्वेन दण्डादिवैशिष्ट्यावगाहि,

## दिनकरी ।

इत्याकारकप्रत्यक्षसम्भवादिति चेन्न । निर्विकल्पकस्याऽप्रत्यासत्तितया द्वे द्रव्ये इत्युपनीतभा-

## रामरुद्री ।

तद्रूपानवच्छिन्नतद्वैशिष्ट्यावगाहि च । तादृशविशिष्टप्रतियोगिकत्वं च दण्डादिप्रकारतानिरूपकसंसर्गतायामवच्छेदकविधया भासते, तद्विशिष्टसंयोगादेरेव दण्डादिसंसर्गतया भानात् । दण्डादिविशेषणतापन्नरक्तत्वादेरेव वा स्वावच्छिन्नप्रतियोगिताकसंयोगात्मकपरम्परासम्बन्धेन पुरुषादौ प्रकारता । तादृशे विशिष्टवैशिष्ट्यबोध एव विशेषणतावच्छेदकप्रकारकधीः कारणम्, न तु विशिष्टविशेषणावगाहिन्यपि रक्तत्वादिकं वैशिष्ट्यप्रतियोगिन्युपलक्षणतयाऽवगाहमाने द्वितीयबोधे। दण्डो नाऽस्ति रक्तोनाऽस्तीत्यादिज्ञानदशायां नियमतो रक्तदण्डो नाऽस्तीत्यादिज्ञानोत्पादविरह एवोक्तविशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकविशेषणधीहेतुत्वकल्पक इत्याद्यनुमितिगादाधर्यां स्पष्टम् । तद्धर्मप्रकारेण तद्धर्मविशिष्टवैशिष्ट्यावगाहिबुद्धिसामान्ये तद्धर्मप्रकारेण तद्धर्मज्ञानस्य शब्दाज्जायमान—विशेष्ये विशेषणमित्यादिरीत्या बोधाद्यनुरोधेन कारणत्वानङ्गीकारेऽपि तथाविधप्रत्यक्षं प्रति तद्धेतुत्वाभ्युपगन्तुर्मतमनुसृत्य समाधत्ते । **निर्विकल्पकस्याऽप्रत्यासत्तितयेति** । सखण्डवस्तुनो द्वित्वादेः प्रकारविधया भान इत्यादिः । द्रव्यत्वादिप्रकारेण घटादेरुपनयसत्त्वेऽपि घटत्वादिप्रकारेण तस्योपनीतप्रत्यक्षानुदयेन घटत्वादिना तत्तद्घटादिप्रकारकप्रत्यक्षं प्रति घटत्वादिप्रकारेणैव तत्तद्घटाद्युपनयस्य हेतुत्वम् । अतो घटघटत्वयोर्निर्विकल्पकोत्तरं घटे घटत्वस्येव घटत्वेऽपि घटस्य वैशिष्ट्यावगाहि प्रत्यक्षं यथा न भवति तद्वदेव द्वित्वनिर्विकल्पकोत्तरमपि न द्वित्वविशिष्टप्रत्यक्षं सम्भवति । सखण्डवस्तुमात्रस्य किञ्चिद्धर्मप्रकारेणैव विशिष्टबुद्धेः पारमार्थिकतया तद्धेतुभूतस्य तत्तद्धर्मप्रकारेण तत्तद्वस्तुज्ञानस्य तदानीमसत्त्वात् । न चैवं निर्विकल्पकोत्तरं विशेष्ये विशेषणमित्यादिक्रमेणाऽपि घटवदित्याकारकप्रत्यक्षं न स्यात्, इष्टत्वादिति भावः । निर्विकल्पकस्य प्रत्यासत्तित्वमेव नाऽस्तीति तु भ्रमो न कर्तव्यः, स्वरूपतो घटत्वादिप्रकारकज्ञाने घटत्वादिनिष्ठनिरवच्छिन्नविषयताशालिज्ञानत्वेन निर्विकल्पकसाधारणेनैव रूपेण ज्ञानलक्षणायाः कारणत्वात् । अत एव प्राथमिकस्य घटत्वचैत्रत्वादिप्रकारकप्रत्यक्षस्य घटत्वचैत्रत्वादिनिर्विकल्पकं विनाऽनुपपत्तेस्तत्सिद्धिरप्यावश्यकी । न चैवं जन्यसविकल्पकस्यैव प्रत्यासत्तित्वमिति प्राचीनगाथाविरोधः, तस्याऽकिञ्चित्करत्वेन सखण्डघटादेरुपनीतभानस्थल एव तादृशनियमस्योपगन्तव्यत्वात् । न च निर्विकल्पकस्य प्रत्यासत्तित्वे स्वविषयीभूतघटत्वाद्युपधानेन तस्य प्रत्यक्षापत्तिः, विषयानुपधानेन ज्ञानादिप्रत्यक्षस्याऽलीकतया विषयोपनायकविरहादेव मनःसन्निकृष्टस्याऽपि तस्याऽतीन्द्रियत्वोपगमादिति वाच्यम् । सत्यपि सन्निकर्षे विषयतया घटत्वादिप्रकारकप्रत्यक्षं प्रति तादात्म्यसम्बन्धेन घटत्वादिनिर्विकल्पकस्य प्रतिबन्धकत्वात् । अन्यथा सुखत्वादिनिर्विकल्पकस्य स्वविषयीभूतसुखत्वाद्युपधानेन प्रत्यक्षस्य दुर्वारतापत्तेः । सुखत्वस्य निर्विकल्पक इव सुखत्वेऽपि लौकिकस्यैव मनःसन्निकर्षस्य सत्त्वात् तदुपधानेन तन्निर्विकल्पकस्य प्रत्यक्षे बाधकाभावादिति सामान्यलक्षणाजागदीश्यां स्पष्टम्। ननूक्तस्थले द्वित्वनिर्विकल्पकाव्यवहितोत्तरकाले द्वित्वविशिष्टद्रव्यप्रत्यक्षासम्भवेऽपि तृतीयक्षणे तत्सम्भवः, द्वितीयक्षणे द्वित्वविशेष्यकद्वित्वत्वप्रकारकप्रत्यक्षस्योक्तनिर्विकल्पकबलादभ्युपगमे बाधकाभावात् । न च तत्र द्वित्वभासकमेव किञ्चिन्नाऽस्ति, उपनयस्य विशेषणतया भासकत्वेन पूर्वमेव निरासात्, सामान्यलक्षणायाः सम्भवेऽपि तस्या यत्किञ्चित्स्वाश्रयलौकिकसामग्रीसहकृताया एव फलोपधायकतया प्रकृते तदसम्भवात्, द्वित्वस्य तत्काले विनाशेन लौकिकसामग्र्यसम्भवादिति वाच्यम् । तत्काले द्वित्वान्तरे लौकिकसामग्रीस्वीकारसम्भवेन तत्सहकृतया द्वित्वत्वनिर्विकल्पकात्मकसामान्यलक्षणाप्रत्यासत्त्यैव सकलद्वित्वविशेष्यकप्रत्यक्षसम्भवात्, तदुत्तरमुपनयमर्यादया विनष्टद्वित्वावगाहिद्रव्यप्रत्यक्षस्य सम्भवात् । न च निर्विकल्पकस्य न प्रत्यासत्तित्वमिति वाच्यम् । स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन प्रत्यक्षं प्रत्येव स्वविषयीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन सामान्यविषयकज्ञानत्वादिना निर्विकल्पकसाधारणरूपेण सामान्यलक्षणाया हेतुत्वेन तदनङ्गीकारासम्भवात् । न च स्वप्रकारीभूतसामान्यवत्त्वसम्बन्धेनैव सामान्यज्ञानस्य

दिनकरी ।

नासम्भवात्, तस्योपनीतभानरूपत्वे तदुत्तरं द्वित्वं साक्षात्करोमीत्यनुव्यवसायानुपपत्तेश्च, तस्मात् त्रिक्षणावस्थायित्वमपेक्षाबुद्धेरिति वैशेषिकाणामाशयः ।

नव्यास्तु—उत्पत्स्यमानद्वित्वस्य द्वित्वत्वसामान्यलक्षणया पूर्वमनुभवात् द्वित्वोत्पत्तिसमय एव द्वित्वत्वप्रकारकमुत्पद्यमानद्वित्वस्मरणम्, तेन तदुत्तरक्षणे इदानीं द्वे द्रव्ये इतिविशिष्टवैशिष्ट्यावगाहिलौकिकप्रत्यक्षसम्भवादलमपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वेन । अन्यथा सुखाद्युत्पादद्वितीयक्षणे सुखत्वनिर्विकल्पकम्, अनन्तरक्षणे च सुखनाशादहं सुखीति लौकिकप्रत्यक्षं न सम्भवतीति सुखशब्दादेरपि त्रिक्षणावस्थानप्रसङ्गादिति प्राहुः ।

रामरुद्री ।

हेतुत्वमस्त्विति वाच्यम् । प्राथमिकसविकल्पकप्रत्यक्षे व्यभिचारप्रसङ्गात् । न च स्वप्रकारीभूतसामान्याश्रयनिष्ठालौकिकमुख्यविशेष्यतासम्बन्ध एव कार्यतावच्छेदकोऽस्त्विति वाच्यम् । गौरवभयादेवोक्तरीत्या कार्यकारणभावस्य परित्यक्तव्यत्वात् । न चैवं तृतीयक्षणे जायमानं द्वित्वविशिष्टप्रत्यक्षं विनष्टद्वित्वमुख्यविशेष्यकमपि स्यात्, सामान्यलक्षणायाः सत्त्वादिति वाच्यम् । प्रागुक्तप्रतिबन्धकसद्भावादेव तदसम्भवात् । तथा चैकक्षणविलम्बेन द्वित्वविशिष्टद्रव्यप्रत्यक्षसम्भवादपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वाभ्युपगमोऽनर्थक इत्याशङ्कां निरसितुं दूषणान्तरमाह । तस्येत्यादि । अनुपपत्तेश्चेति । तादृशद्वित्वान्तरस्य द्विविधविषयताश्रयत्वेन तस्य लौकिकविषयत्वमादाय तथाऽनुव्यवसायोपपत्तावपि विनष्टत्वेन प्रतिपन्नस्य प्रथमापेक्षाबुद्धिजनितस्य द्वित्वस्य लौकिकविषयतानाश्रयत्वेन तथाविधानुव्यवसायविषयत्वायोगादिति भावः ।

पूर्वमनुभवादिति । यादृशस्थलविशेषेऽविरलक्रमेण द्वित्वद्वयं प्रागुक्तरीत्योत्पन्नं, तादृशस्थले प्रथमद्वित्वनिर्विकल्पकात्मकसामान्यलक्षणया द्वितीयद्वित्वलौकिकप्रत्यक्षसामग्रीसहकृतया समुत्पन्नादित्यादिः । तेन क्वचिदपि तादृशानुभवो न सम्भवति, द्वित्वादेः क्षणद्वयावस्थायित्वादिति शङ्का परास्ता । अन्यथेत्यादि । सुखशब्दादेरपीति । ज्ञानेच्छाकृतिद्वेषाणां तु सविषयकतया तदुत्तरक्षणे ज्ञानस्य स्वात्मकविशेषणतावच्छेदकप्रकारकज्ञानसहकारात्प्रत्यक्षम्, इतरेषामपि विषयोपरागेणैव मानसप्रत्यक्षविषयतया तथाविधविषयोपनायकसत्त्वे विशेषणतावच्छेदकप्रकारकज्ञानसम्पत्त्या प्रत्यक्षमिष्यते, अन्यत्र तु नेष्यत एव तत्प्रत्यक्षमिति स्वीकारात् ज्ञानादिषु तादृशापत्तिर्न प्रदर्शिता । यद्यप्येवमपि ज्ञानत्वादिप्रकारेण ज्ञानादिप्रत्यक्षं नोपपादयितुं शक्यम् । न च ज्ञानजनके प्राथमिकनिर्विकल्पकादावेव मनःसन्निकर्षस्याऽबाधिततया तत एव द्वितीयज्ञानाद्युत्पादकाले नरसिंहाकारकं ज्ञानत्वादिनिर्विकल्पकं सम्भवतीति नैष दोष इति वाच्यम् । एवमप्यनुमिनोमीच्छामीत्याद्यनुमितित्वेच्छात्वादिप्रकारेणाऽनुमितीच्छादिप्रत्यक्षासम्भवस्य दुरुद्धरत्वात् । तत्राऽनुमितेः पूर्वं अनुमितित्वादिना सह मनःसन्निकर्षासम्पत्त्या तदुत्पत्तिकाले तन्निर्विकल्पकस्याऽभ्युपगन्तुमशक्यत्वात् । न चाऽनुमितित्वादिप्रकारकप्रत्यक्षं प्रति अनुमितित्वादिरूपविशेषणज्ञानस्य हेतुत्वं न स्वीक्रियते सिद्धान्तेऽपीति नैषाऽनुपपत्तिरिति वाच्यम् । तथा सति सुखशब्दादिस्थलेऽपि विशेषणज्ञानस्य हेतुताया अनङ्गीकारमात्रेणैव प्रागुक्तसकलदोषवारणसम्भवेन तदर्थं सुखादेः क्षणत्रयावस्थायितापादनस्य सन्दर्भविरुद्धापत्तेः, तथाऽपि उक्तरीत्या ज्ञानत्वाद्यनुपधानेन केवलविषयोपरागेणाऽपि ज्ञानादिप्रत्यक्षं सम्भवति, सुखादेस्तु कथञ्चिदपि नेति विशेषमादृत्यैव ज्ञानाद्युपेक्ष्य सुखानुधावनम् । सुखत्वादिप्रकारकप्रत्यक्षे विशेषणीभवतोऽपि सुखत्वादेर्ज्ञानं न कारणम्, अनुमितित्वादिप्रकारकप्रत्यक्षतुल्ययोगक्षेमत्वादित्यङ्गीकारे च सुखस्य त्रिक्षणावस्थायितापादनं न सम्भवतीत्यत एव च शब्दानुधावनमपि कृतम् । शब्दस्थले शब्दत्वादिप्रकारकप्रत्यक्षोत्तरं शब्दं साक्षात्करोमीति मानसानुव्यवसाये शब्दत्वाद्युपनायकस्य ज्ञानाद्यतिरिक्तस्य सन्निकर्षस्य दुर्वचत्वात्, शब्दत्वाद्यवगाहितादृशमानसानुव्यवसायस्यैवाऽन्यथानुपपत्तेः । ज्ञानत्वादिप्रकारकप्रत्यक्षे ज्ञानत्वादिज्ञानस्य हेतुत्वानङ्गीकारेऽपि न तादृशप्रत्यक्षानुपपत्तिः, तत्र मनसा समं लौकिकसन्निकर्षस्यैवाऽबाधितत्वात् ।

**न चाऽपेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यम्। कालान्तरे द्वित्वप्रत्यक्षाभावात् अपेक्षाबुद्धिस्तदुत्पादिका, तन्नाशात्तन्नाश इति कल्पनात्। अत**

**दिनकरी।**

नन्वपेक्षाबुद्धेर्द्वित्वोत्पादकत्वे चैत्रीयापेक्षाबुद्धिजन्यद्वित्वस्याऽपेक्षाबुद्धिशून्येन मैत्रेण ग्रहणापत्तिः, सन्निकर्षादिघटितसामग्र्याः सत्त्वात्, तद्वारणाय विषयतासम्बन्धेन तत्पुरुषीयप्रत्यक्षे तद्भिन्नपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेस्तादात्म्येन प्रतिबन्धकत्वकल्पने च गौरवमत आह। अत एवेति। पूर्वोक्तयुक्त्याऽपेक्षाबुद्धेर्द्वित्वोत्पादकत्वस्याऽऽवश्यकत्वादेव।

**रामरुद्री।**

अथैवं सुखत्वादेरुपनयमर्यादयाऽपि भानं न स्यात्, सन्निकर्षासम्भवात्। न च ज्ञानलक्षणाप्रत्यासत्त्यैव तत्सम्भवः, ज्ञानलक्षणायाश्च न तत्प्रकारकप्रत्यक्षत्वं कार्यतावच्छेदकम्, मानस उपनीतस्याऽपि विशेष्यतया भानेन तत्प्रयोजकालाभात्। किं तु सुखत्वादिनिष्ठालौकिकविषयताशालिज्ञानत्वमेव। तथा सति निर्विकल्पकानन्तरं घटत्वादेरपि विशेष्यतया भानप्रसङ्गस्तु न, विशेष्यतया प्रत्यक्षं प्रति प्रागुक्तरीत्या लौकिकसन्निकर्षाभावविशिष्टज्ञानस्य प्रतिबन्धकत्वादेव तदभावोपपत्तेरिति वाच्यम्। एवमपि प्रमेयत्वादिसामान्यलक्षणया जायमानसुखत्वादिप्रत्यक्षे व्यभिचारस्य दुर्वारत्वादिति चेन्न। निरवच्छिन्नत्वस्य त्वयेव मयाऽपि कार्यतावच्छेदककोटौ निवेशनीयत्वादिति परमरहस्यमनुसन्धेयम्। सुखादिविशिष्टप्रत्यक्षोत्पत्त्यर्थं सर्वत्र तदव्यवहितपूर्वक्षणे सामान्यलक्षणाजन्यानुभवाधीनस्मरणकल्पनसम्भवेऽपि प्राथमिकतदनुभवस्थले तदनुपपत्तिः, तत्पूर्वं सुखादेरेतज्जन्मन्यननुभवात्। प्रागुक्तरीत्या द्वित्वस्थल इवाऽविरलक्षणसुखादिद्वयोत्पत्तिमुपजीव्य सुखत्वादिविशिष्टप्रत्यक्षोपपादने च तत्स्थले प्राथमिकसुखव्यक्तेः सविकल्पकागोचरत्वं दुष्परिहरम्। तत्रेष्टापत्तौ च सर्वत्रैव सुखादिस्थले प्रथमोत्पन्नव्यक्तिपरिहारेणैव सुखादीनां सविकल्पकादिविषयत्वं किं न कल्प्यते? न कल्प्यते चाऽविद्यमानस्याऽपि लौकिकविषयत्वम्। न च निर्विकल्पकात्मकसामान्यलक्षणया मानस एव विनाऽपि व्यक्तिद्वयं सकलसुखव्यक्तिभानसम्भवः, मानसे जननीये सामान्यलक्षणया लौकिकसामग्र्यनपेक्षणा(१)दिति वाच्यम्। एवमपि सुखादिप्रत्यक्षानुव्यवसाययोः नियमतः सुखं स्मरामीत्याकारकतापत्तेः, अन्यथोक्तरीत्या घटादिप्रत्यक्षस्थलेऽपि सामान्यप्रत्यासत्त्यधीनस्मरणकल्पनयैव सर्वत्र विशिष्टप्रत्यक्षसम्भवेन निर्विकल्पकमात्रोच्छेदापत्तेः, सामान्यलक्षणाजन्यप्राथमिकानुभवस्य तथाविधस्मरणान्तरत एवोपपत्तेः, तस्य च तथाविधसामान्यप्रत्यासत्त्यधीनानुभवान्तरजन्यत्वसम्भवात्। तत्प्रयुक्तानवस्थायाश्च बीजाङ्कुरन्यायेनाऽदोषत्वादित्यनुपपत्तिरुक्तनव्यमते चिन्त्या।

अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं हि तन्नाशस्य द्वित्वादिनाशकत्वे चतुर्थक्षणे द्वित्वसविकल्पकानुपपत्त्या कल्पनीयम्, तदेव तु न सम्भवति, द्वित्वादीनां नित्यतया तद्विनाशहेतुविचारस्याऽसङ्गतत्वात्। न च द्वित्वादीनां नित्यत्वं न स्वीकर्तुं शक्यम्, आश्रयनाशस्य स्वप्रतियोगिसमवेतत्वकालिकोभयसम्बन्धेनैव प्रतियोगितया नाशं प्रति हेतुत्वेन यत्किञ्चिदाश्रयनाशेऽपि तन्नाशस्याऽवश्यकल्प्यत्वादिति वाच्यम्। घटत्वादेरिव तस्याऽपि नित्यत्वेन कालिकसम्बन्धेन निरुक्तहेतुरहिततया विनाशायोगादित्याशयेन शङ्कते मूले—न चेति। कथं द्वित्वनाश इति। द्वित्वादेर्नित्यत्वे तन्नाशहेतुविचारस्याऽयुक्तत्वादिति भावः। द्वित्वादेर्नित्यत्वे कालिकसम्बन्धेनोक्तविनाशहेतुरहितत्वेन तद्विनाशापादनासम्भवेऽपि तस्योत्पत्तिमत्त्वे तत्सम्भवत्येव, ततश्च तद्विनाशहेतुचिन्तनं युक्तमित्याशयेन समाधित्सुरादौ द्वित्वादेरपेक्षाबुद्धिजन्यतां साधयति—कालान्तर इत्यादिना। कालान्तरे—अपेक्षाबुद्धिशून्यकाले। तदु-

(१) न चैवं प्रकृतेऽपि द्वितीयक्षणे सामान्यलक्षणयैव भानमस्त्विति वाच्यम्। तथा सति लौकिकविषयत्वानुपपत्तेः।

एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते। न चाऽपेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यम्। लाघवेन द्वित्वं प्रत्येव कारणत्वस्योचितत्वात्।

दिनकरी।

**तेनैव गृह्यत इति कल्प्यत इति।** तद्भिन्नेन न गृह्यत इति कल्प्यत इत्यर्थः। तथ चाऽन्यथानुपपत्त्या पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावकल्पनागौरवं न दोषायेति भावः। ननु कालान्तरे द्वित्वप्रत्यक्षवारणाय द्वित्वप्रत्यक्षं प्रत्येवाऽपेक्षाबुद्धेर्हेतुत्वमस्तु, न तु द्वित्वं प्रती· त्याशङ्कते। **न चेति।** लाघवेनेति द्वित्वत्वस्य कार्यतावच्छेदकस्य लघुत्वादिति भावः।

ननु द्वित्वप्रत्यक्षनिष्ठं लौकिकविषयितया द्वित्वत्वमेव कार्यतावच्छेदकमिति न गौरवम्, न चाऽन्तरेणाऽप्यपेक्षाबुद्धिं द्वित्वप्रत्यक्षापत्तिरेतावताऽप्यवारितैवेति वाच्यम्। द्वित्वत्वा-विषयकद्वित्वप्रत्यक्षस्याऽलीकतया व्यापकीभूतद्वित्वत्वावच्छिन्नजनकसामग्रीविरहादेव तद्वा-

रामरुद्री।

**रणादिकेति।** अत्रैव हेत्वन्तरमाह- **अत एवेति।** यत एव अपेक्षाबुद्धेर्द्वित्वादिकं प्रति हेतुत्वं स्वीकृतं तत एवेत्यर्थः। **कल्प्यत इति।** कल्पयितुं शक्यत इत्यर्थः। अन्यथा तूक्तरीत्या तत्पुरुषीयापेक्षाबुद्धि-जन्यं द्वित्वं तेन गृह्यत इति नियमः कल्पयितुमेव न शक्यः, अपेक्षाबुद्धिजन्यत्वस्यैव द्वित्वादावसिद्धेः। प्रतिपुरुषमेकैकं द्वित्वादिकमुपगम्य तदेव तेन पुरुषेण गृह्यत इत्युपगमेऽपि अपेक्षाबुद्धिशून्यकाले तत्प्र-त्यक्षप्रसङ्गो दुर्वारः। ननु अपेक्षाबुद्धेरेव द्वित्वादिप्रत्यक्षे हेतुत्वाभ्युपगमादेवोक्तसकलदोषवारणसम्भवा-दलमपेक्षाबुद्धेर्द्वित्वादिहेतुत्वेनेत्याशङ्कते। **न चेति।** **उचितत्वादिति।** यद्यप्येवमप्यपेक्षाबुद्धिविरहिणः पुरुषस्याऽपेक्षाबुद्धिमत्पुरुषान्तरीयप्रत्यक्षविषयद्वित्वप्रत्यक्षापत्तिर्दुरुद्धरैव। न च तत्पुरुषीयापेक्षाबुद्धि-जन्यद्वित्वप्रत्यक्षे तत्पुरुषीयद्वित्वघटितचक्षुःसंयुक्तसमवायस्यैव तत्तदात्ममनःसंयुक्तसमवायादेरिव तत्तदात्मसमवेतप्रत्यक्षे योग्यत्वं कल्प्यत इति नोक्तापत्तिसम्भव इति वाच्यम्। तत्तदात्ममनःसंयोग-घटितसमवायादेर्विजातीयमनःसंयुक्तसमवायत्वादिना हेतुत्वोपगमात्, प्रकृते तद्वदेव तत्तत्पुरुषीयापेक्षा-बुद्धिजन्यद्वित्वादिप्रत्यक्षं प्रति तत्तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिघटितचक्षुःसंयुक्तसमवायादेर्हेतुत्वोपगमे चाऽनन्तकार्यकारणभावप्रसक्त्या महागौरवप्रसङ्गादिति चेन्न। स्वविषयकप्रत्यक्षोपलक्षितत्वसम्बन्धेन द्वित्वादिकं प्रत्येवाऽपेक्षाबुद्धेर्हेतुत्वं लाघवात्स्वीकर्तव्यमित्युपरितनमूलग्रन्थस्याऽऽशयः। अन्यथा द्वित्वादे-र्यथाश्रुते विषयनिष्ठस्याऽपेक्षाबुद्धिव्यधिकरणतया द्वित्वत्वादेरपेक्षाबुद्धिकार्यतावच्छेदकत्वोत्कीर्तनासङ्गतेः। इत्थं चैतादृशकार्यकारणभावविरहेऽपेक्षाबुद्धिशून्यस्य स्वविषयकप्रत्यक्षोपलक्षितत्वसम्बन्धेन द्वित्वाद्या-पत्तिर्दुर्वारेत्येतादृशकार्यकारणभावः स्वीकरणीय एव। न चैतादृशकार्यकारणभावे न किमपि विनिगमकं द्वित्वप्रत्यक्षं प्रत्येवाऽपेक्षाबुद्धेः कारणत्वमास्थामिति स्वीकारसम्भवादिति वाच्यम्। स्वविषयकत्वप्रत्यक्ष-त्वादीनां संसर्गघटकत्वे लाघवानपायात्, द्वित्वप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे तस्य नित्यप्रत्यक्षसा-धारणतया तदनवच्छेदकत्वप्रसङ्ग इत्यतो जन्यत्वस्याऽपि कार्यतावच्छेदककोटिनिवेशावश्यकतया महागौरवाच्च। इत्थं चेश्वरीयापेक्षाबुद्धितो द्व्यणुकादिष्वपि द्वित्वाद्युत्पत्तिः सम्भवति, ईश्वरप्रत्यक्षस्य नित्यत्वेऽपि तस्य समवायादेरिव द्वित्वादिसंसर्गतासम्भवेन तादृशप्रत्यक्षसम्बन्धेन ईश्वरीयापेक्षाबुद्धि-वशादीश्वर एव तादृशद्वित्वोत्पत्तिसम्भवात्। न चैवमेकत्वादेर्द्वित्वासमवायिकारणत्वं व्याहन्येत, तस्या-ऽपेक्षाबुद्धेः स्वविषयैकत्ववत्त्वसम्बन्धेन हेतुतया विनिगमनाविरहेणैव व्यवस्थापितत्वात्, तथाविध-युक्तेश्चेदानीमपेक्षाबुद्धेरात्मनिष्ठप्रत्यासत्त्यैव हेतुत्वाभ्युपगमेनाऽसम्भवादिति वाच्यम्। अपेक्षाबुद्धे-र्द्वित्वादिकं प्रत्यात्मनिष्ठप्रत्यासत्त्या हेतुत्वेऽपि तस्य यत्किञ्चिद्विषयनियमाय विषयनिष्ठप्रत्यासत्त्याऽपि हेतुत्वावश्यकतया तत्सिद्धेः, एतादृशकारणत्वान्तरकल्पनाधीनगौरवस्य च फलमुखत्वेनाऽदोषत्वादिति सुधियो विदाङ्कुर्वन्तु।

टीकायाम्—**अलीकत्वयेत्यादि।** नन्वेवमपि चैत्रीयापेक्षाबुद्धिव्यञ्जकद्वित्वस्याऽपेक्षाबुद्धिमता मैत्रेण

दिनकरी ।

रणादिति चेन्न । उत्पादकसामग्र्या व्यञ्जकत्वाङ्गीकारे घटाद्युत्पादकसामग्र्या अपि घटादिव्यञ्जकत्वापत्त्या सत्कार्यवादापत्तेरिति ।

रामरुद्री ।

ग्रहणापत्तिरित्थमपि दुर्वारैवेति वाच्यम् । द्वित्वादीनामपेक्षाबुद्धयभिव्यङ्ग्यतामते द्वित्वादेरेकैकव्यक्तितया तत्तत्पुरुषभेदेन भेदाद्यित्रेण चैत्रश्चैत्रेयं द्वित्वं मैत्रेण न ज्ञायत इत्यस्याऽनभ्युपगमेनोक्तापत्त्याविद्यापत्तेः कर्तुं शक्यत्वात्, तत्तद्द्वित्वादिप्रत्यक्षं प्रत्येव वा तत्तदपेक्षाबुद्धीनां हेतुत्वादेव चोक्तापत्तिवारणसम्भवाच्च । न चैवमपेक्षाबुद्धिरहितस्य द्वित्वत्वादिप्रत्यक्षप्रसङ्गः, सामग्रीसत्त्वादिति वाच्यम् । द्वित्वाविषयकस्य द्वित्वत्वप्रत्यक्षस्याऽङ्गीकृतया व्यापकीभूतद्वित्वविषयकप्रत्यक्षत्वावच्छिन्नजनकसामग्रीविरहादेव तदापत्तिवारणसम्भवात् । **उत्पादकसामग्र्या व्यञ्जकत्वाङ्गीकार इति** । प्रत्यक्षविषयत्वाभावविशिष्टद्वित्वादिरूपजन्यत्वनियतजन्यसमवेतत्ववद्गुणनिष्ठकालिकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतामात्रस्य कालनिष्ठस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्ध्वंसत्वभावान्यमात्रप्रयुक्तत्वे । लाघवात्तत्तदुत्पादकसामग्र्याद्यभावस्यैव तत्प्रयोजकत्व इति तात्पर्यम् । **घटाद्युत्पादकसामग्र्या अपि घटादिव्यञ्जकत्वापत्त्येति** । प्रत्यक्षविषयत्वाभावविशिष्टतत्तज्जन्यमात्राधिकरणताया अपि कालनिष्ठायाः कालिकसम्बन्धावच्छिन्नतदभावान्यमात्रप्रयुक्तत्वापत्त्येत्यर्थः । तादृशमात्रप्रयुक्तत्वस्याऽवश्यं स्वीकरणीयत्वे इति तु निर्गलितम् । तुल्ययुक्त्येत्यादिः । **सत्कार्यवादापत्तेरिति** । कालनिरूपितनिरवच्छिन्नवृत्तिमदभावप्रतियोगितासामान्यस्य कालिकसम्बन्धानवच्छिन्नत्वापत्तेरित्यर्थः । तथा चैतत्क्षणवृत्तिरेतद्घटप्रत्यक्षजनकतावच्छेदककोटिप्रविष्टधर्मावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताक एतद्घटाभावो यदि निरवच्छिन्नवृत्तित्वैतद्घटविषयकप्रत्यक्षजनकतावच्छेदकावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकत्वैतदुभयवान् स्यात् प्रत्यक्षविषयत्वाभावविशिष्टैतद्घटाधिकरणताप्रयोजकः स्यादित्यापत्तिः । न्यायसाङ्ख्यमतसाधारणचक्षुरादिसन्निकर्षघटितलौकिकसामग्र्याः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावो दृष्टान्तः । तस्योभयमतेऽपि निरवच्छिन्नवृत्तित्वघटिततादृशोभयवत्त्वस्य प्रत्यक्षविषयत्वाभावविशिष्टैतद्घटाधिकरणताप्रयोजकत्वस्य च सम्प्रतिपन्नत्वात् । सत्कार्यवादिमते च घटादेः सर्वकालवृत्तित्वाङ्गीकारेण निरवच्छिन्नवृत्तेः कालिकसम्बन्धावच्छिन्नाभावस्याऽसत्त्वेऽपि घटानधिकरणदेशावच्छेदेन वर्तमानः स प्रसिद्धः । न च सत्कार्यवादिमते सर्वस्यैव वस्तुनः सर्वकालवृत्तित्वाङ्गीकारेण सामग्र्या अपि तथात्वादुक्ताऽऽपाद्यापादकयोर्व्याप्तिनिश्चय एव दुर्घटः, सामग्र्यभावस्याऽपि सामग्र्यनधिकरणदेशावच्छेदेनैव प्रसाधनीयतया तत्र निरवच्छिन्नवृत्तित्वघटितोक्तापादकाभावेन दृष्टान्तासिद्धेरिति वाच्यम् । सामग्री हि तत्तत्कारणतावच्छेदकसम्बन्धेन कारणाधिकरणे तत्तत्कारणतावच्छेदकसम्बन्धेनैकक्षणावच्छिन्नवृत्तित्वरूपसामानाधिकरण्यसम्बन्धेनैककारणविशिष्टापरकारणविशिष्टापरकारणादिरूपा, तद्घटकस्य प्रत्येककारणस्य सत्कार्यवादिभिः सर्वकालवृत्तित्वस्वीकारेऽपि तादृशविशिष्टधर्मावच्छिन्नाधिकरणत्वस्य तत्तत्कारणेषु तत्तत्कारणवैशिष्ट्यदशायामेव स्वीकरणीयत्वेन तदन्यकाले तादृशविशिष्टाभावस्य निरवच्छिन्नवृत्तेरपि प्रसिद्धिः सम्भवत्येव । न च सत्कार्यवादिमते घटादेः सर्वस्यैव वस्तुनः सार्वदिकत्वस्वीकारेण घटाद्यधिकरणत्वमपि सार्वदिकमेवेति निरुक्तसामग्रीकुक्षिप्रविष्टसकलकारणसत्त्वमपि सार्वदिकमेवाऽभ्युपगन्तव्यम्, तथा च तादृशविशिष्टाधिकरणताया अपि सार्वकालिकत्वेन निरवच्छिन्नवृत्तिविशिष्टाभावाप्रसिद्धिर्दुरुद्धरैवेति । वाच्यम् । सत्कार्यमते सर्वस्यैव वस्तुजातस्य सार्वदिकत्वेऽपि तार्किकमते घटाभावतत्सम्बन्धभूतलानां भूतले घटानयनदशायां सत्त्वेऽपि भूतलस्य घटाभावाधिकरणत्वाभाववत् घटकपालतत्सम्बन्धादीनां नित्यत्वेऽपि मुद्गरादिपातोत्तरं कपालादौ घटाधिकरणताविरहस्य स्वीकारेणाऽविरोधात् । तद्वधिकरणतायाः सार्वदिकत्वं व्याहतमित्यापत्तिस्तु अधिकरणताया अधिकरणरूपत्ववादितार्किकमते भूतलसत्त्वदशायां घटाभावाधिकरणतासत्त्वासत्त्वविकल्पप्रयुक्तदूषणगणनिरासाय तदङ्गीकृतयुक्तिभिरेव निरसनीया* ।

---

* अधिकरणत्वादीनामधिकरणरूपत्वेऽपि घटानयनदशायां घटाभावाद्यधिकरणताया अधिकरणतात्वेनाऽसत्त्वेऽपि भूतलादिरूपेण सत्त्वमिष्यत इत्यादियुक्तिभिर्निरसनीयेति भावः ।

**अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनां, सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिः, ब्रह्माण्डान्तरवर्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०८ ॥**

दिनकरी ।

नन्वपेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वं न सम्भवति, द्व्यणुकस्याऽस्मदीयप्रत्यक्षागोचरतया तत्राऽपेक्षाबुद्ध्यसम्भवेन तत्र त्रित्वाद्यनुत्पत्त्यापत्तेः । न चेष्टापत्तिः, भावकार्यस्याऽसमवायिकारणजन्यत्वनियमेन द्व्यणुकगतत्रित्वं विना त्र्यणुकपरिमाणानुत्पत्तेः, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमेन द्व्यणुकपरिमाणस्य तत्राऽसमवायिकारणत्वासम्भवादत आह । **अतीन्द्रिये द्व्यणुकादाविति ।** आदिना परमाणुपरिग्रहः । सर्गादौ योगिनामभावादाह । **ईश्वरीयेति ।** न चेश्वरीयापेक्षाबुद्धेर्द्वित्वोत्पादकत्वे तद्द्वित्वस्य नित्यत्वप्रसङ्गः, ईश्वरीयापेक्षाबुद्धेर्नित्यत्वेन तन्नाशनाश्यत्वस्य तादृशद्वित्वे वक्तुमशक्यत्वादिति वाच्यम् । तद्द्वित्वस्येश्वरीयापेक्षाबुद्धिसहकारिविशेषस्य क्षणविशेषस्य नाशादेव नाशोपपत्तेः, क्षणविशेषस्येश्वरीयापेक्षाबुद्धिसहकारित्वानङ्गीकारे सर्गाद्यकालीनपरमाणुद्वित्वो-

रामरुद्री ।

एतादृशरीत्या मुद्गराभिघातोत्तरं कपालादौ घटादिवैशिष्ट्याभावश्चाऽयं कालो न घटविशिष्टकपालवानिति प्रतीत्युपपत्तय एव स्वीक्रियत इत्यदोषात् । इत्थं च **सत्कार्यवादापत्ते**रित्यस्य कालनिरूपितनिरवच्छिन्नवृत्तिमदभावनिरूपितवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगितामात्रस्य कालिकसम्बन्धानवच्छिन्नत्वापत्तेरित्यर्थो वक्तव्यः । अन्यथोक्तसामग्र्यभावप्रतियोगितायामेवोक्तरीत्या कालिकसम्बन्धावच्छिन्नत्वस्वीकारेण तदन्तर्भावेणैव निरुक्तापाद्यापादकयोर्व्याप्तिभङ्गापत्तेः । तद्घटप्रत्यक्षजनकतावच्छेदकत्वं च तद्घटप्रत्यक्षाभावप्रयोजकाभावप्रतियोगितावच्छेदकत्वम् । तेन सामग्रीत्वस्य जनकतानवच्छेदकत्वेऽपि न क्षतिः । तद्घटान्यस्मिन् विषयतासम्बन्धेन तद्घटप्रत्यक्षाभावस्य तादात्म्यसम्बन्धावच्छिन्नतद्घटाभावप्रयुक्तत्वमस्त्येवेति तद्घटत्वादेरुक्तरीत्या प्रत्यक्षाभावप्रयोजकाभावप्रतियोगितावच्छेदकत्वोपपत्तिः । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वमित्यत्र व्यासज्यवृत्तिधर्मावच्छिन्नत्वं पर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकत्वम् । वैशिष्ट्यानवच्छिन्नत्वं तु न सम्बन्धानवच्छिन्नत्वम्, अप्रसिद्धेः । नाऽपि वैशिष्ट्यनिष्ठसांसर्गिकावच्छेदकताभिन्नावच्छेदकताकत्वम्, रक्तदण्डो नाऽस्तीत्याद्यभावानां रक्तत्वदण्डत्वरूपधर्मद्वयावच्छिन्नत्वे वैशिष्ट्यरूपधर्मेणाऽपि अवच्छिन्नत्वात् । विशिष्टाभावान्तरानुपपत्तेः । नाऽपि धर्मद्वयावच्छिन्नत्वं स्वनिरूपकत्व—स्वभिन्नावच्छेदकतानिरूपकत्वोभयसम्बन्धेनाऽवच्छेदकताविशिष्टान्यत्वरूपं वा तत्, रक्तत्वोपलक्षितदण्डाभावरक्तदण्डाभावयोर्वैलक्षण्यापत्तेः । अत्राऽस्मद्गुरुचरणाः । संसर्गताख्यावच्छेदकत्वावच्छिन्नधर्मविधयाऽवच्छेदकताकत्वमेव तत् । विशिष्टाभावस्थले हि रक्तत्वादाविव प्रतियोगितावच्छेदकीभूतसंसर्गस्य धर्मविधयाऽप्यवच्छेदकत्वान्तरं प्रतियोगितानिरूपितं स्वीक्रियत एव, अन्यथा रक्तत्वविशिष्टदण्डाभावरक्तत्वोपलक्षितदण्डाभावयोर्वैलक्षण्यापत्तेरिति प्राहुः ।

उच्छृङ्खलास्तु अपेक्षाबुद्धेर्द्वित्वादिव्यञ्जकत्वमेव नाऽस्ति, मानाभावात् । यावदाश्रयसन्निकर्षे सत्येकत्वद्वयादिग्रहोत्पत्तिसमय एव द्वित्वादिग्रहोत्पत्तेः, व्यञ्जकत्ववादिनाऽपि तदव्यवहितोत्तरक्षणे तदुपगमात्, क्षणविलम्बे प्रमाणस्य भवदीयशपथमन्तरेणाऽन्यस्याऽभावात् । अन्यथाऽपेक्षाबुद्धेस्तृतीयक्षण एव तदनुभवस्य नैयायिकादिशपथसिद्धस्योपपत्तये द्वित्वादेरपेक्षाबुद्धिजन्यत्वस्याऽप्यङ्गीकारापत्तेः, तस्मात्तुल्यसामग्रीकत्वादपेक्षाबुद्धेर्द्वित्वादिविषयकत्वनियमकृत एव द्वित्वादेरपेक्षाधीनव्यङ्ग्यत्वव्यवहार इत्याहुः, तच्चिन्त्यम् ।

**नित्यत्वप्रसङ्ग इति ।** विनाशाप्रतियोगित्वप्रसङ्ग इत्यर्थः । **सहकारिविशेषस्येति ।** अथैवंरीत्या क्षणविशेषाणामीश्वरबुद्धिसहकारित्वोपगमेऽनन्तक्षणव्यक्तीनां सहकारित्वावश्यकतया महद्गौरवम् ।

## दिनकरी ।

त्पत्तेः पूर्वं तद्द्वित्वोत्पादापत्तेः । 'अपेक्षाबुद्धिनाशाच्च—'इति मूलस्याऽऽश्रयनाशोपलक्षकत्ववदीश्वरीयापेक्षाबुद्धिसहकारिक्षणविशेषनाशोपलक्षकत्वस्वीकाराच्च न तद्विरोधः । एतेन घटाद्युत्पत्तिद्वितीयक्षणे भगवदपेक्षाबुद्ध्या तत्र द्वित्वादिकं जन्यत इति परास्तम् । इदानीं सहकारिक्षणविशेषस्याऽभावेन भगवदपेक्षाबुद्ध्या द्वित्वादेरजननात्, तदानीं तत्र द्वित्वो-

## रामरुद्री ।

ननु सर्वविषयकत्वेनेश्वरीयापेक्षाबुद्धेः यत्काले तया परमाण्वोर्द्वित्वमारभ्यते, तत्काल एव यावत्तत्कालीनद्रव्यवृत्तिः परार्धत्वरूपा सङ्ख्याऽपीत्यविवादम्, कारणसत्त्वे कार्योत्पत्त्यभावस्योपपादयितुमशक्यत्वात् । इत्थं च यथा व्यापकधर्मावच्छिन्नसामग्र्या व्याप्यधर्मावच्छिन्नाजनकत्वेऽपि तदवच्छिन्नजनकसामग्रीव्याप्यतावच्छेदककोटौ निवेशः सकलतान्त्रिकैरभ्युपगम्यते, तथैव व्यापकधर्मजनकसामग्र्या अपि व्याप्यधर्मजनकसामग्रीव्याप्यतावच्छेदककोटौ निवेशोऽसति बाधके उपगन्तव्य एव, व्यभिचारप्रदर्शनं विना व्याप्यव्यापकभावस्य तद्घटकविशेषणावैयर्थ्ये खण्डयितुमशक्यत्वात्, इत्थं च परमाणुद्वित्वादेस्तत्समकालीनयावद्द्रव्यगतपरार्धत्वसङ्ख्याव्याप्यतया व्यापकधर्मात्मकपरार्धत्वजनकसामग्र्याः परमाणुद्वित्वाद्युत्पादकसामग्रीव्याप्यतावच्छेदककोटावनिवेशे तस्यास्तादृशभगवदिच्छादिरूपायास्तत्पूर्वमपि सत्त्वेन तद्द्वित्वस्य ततः प्रागप्युत्पादापत्तेस्तस्यास्तद्घटकत्वमावश्यकम् । तथा च परार्धत्वस्य विद्यमानयावद्द्रव्यगतत्वस्वीकारात् प्रतिक्षणं कस्यचिद्द्रव्यस्योत्पत्तेर्विनाशस्य चेष्टतया यद्द्रव्यस्यैतत्प्रथमक्षणे उत्पादः प्रामाणिकस्तद्द्रव्यस्याऽपि तादृशैतत्कालीनपरार्धत्वे समवायिकारणविधया कारणत्वेन तज्जनकसामग्रीघटकतया तस्य तत्पूर्वमभावादेव न परमाणौ द्वित्वोत्पादप्रसङ्गः । इत्थं च यद्द्रव्यव्यक्तेरग्रिमक्षण एव नाशो भविष्यति तस्या अपि तादृशसामग्रीघटकतया तन्नाशस्य तादृशपरार्धत्वनाशवत् तद्द्वित्वनाशेऽपि सामग्रीघटकत्वमावश्यकम्, व्यापकधर्मजनकसामग्र्या व्याप्यधर्मजनकत्वस्येष्टत्वात् । न च तादृशद्रव्यव्यक्तीनां कार्यानुत्पादप्रयोजकत्वे मानाभावात् कार्यानुत्पादप्रयोजकस्यैव कारणव्यवहारविषयत्वसम्भवात्तस्य कारणत्वासम्भव इति वाच्यम् । व्यापकाभावस्य व्याप्याभावप्रयोजकतया अपलपितुमशक्यत्वात् । यद्यपि तत्तद्द्रव्यनाशः स्वप्रतियोगिसमवेतत्व—कालिकोभयसम्बन्धेन प्रतियोगितासम्बन्धेन तत्तत्परार्धत्वप्रतियोगिकनाश एव जनक इति प्रतियोगितासम्बन्धेन तादृशनाशे तस्य व्यापकत्वेन तत्सम्बन्धावच्छिन्नतदभावे तदभावस्य प्रयोजकत्वसम्भवेऽपि स्वरूपसम्बन्धावच्छिन्नतदभावप्रयोजकत्वमनुपपन्नमेव, स्वरूपसम्बन्धावच्छिन्नतदभावप्रयोजकत्व एव च द्वित्वादिनाशाभावप्रयोजकत्वं तदभावस्योपपद्यते, तथाऽपि तत्तत्परार्धत्वनाशादेर्यावत्प्रतियोगिसमवायिनिष्ठत्वोपपादनाय स्वरूपेण तत्तद्व्यक्तिप्रतियोगिकनाशं प्रति तत्तद्व्यक्तेरपि समवायेन हेतुत्वमङ्गीकरणीयमेवेति उक्तकारणतावच्छेदकसम्बन्धेन आश्रयनाशविशिष्टस्य प्रतियोगिन एव तादृशविशिष्टरूपेण क्षणव्यवहारनियामकस्य व्यापकधर्मसामग्रीत्वेन व्याप्यधर्माभावप्रयोजकाभावप्रतियोगित्वेन तत्तद्द्वित्वनाशं प्रति जनकत्वमुपपन्नमेवेति चेन्न । एवं हि परमाणुद्वित्ववद् घटादिद्वित्वमपि तृतीयक्षणे नश्येत, तस्याऽपि तादृशव्याप्यतया तादृशव्यापकधर्मविनाशकसामग्र्यास्तद्द्वितीयक्षणे सत्त्वेन तद्विनाशावश्यकत्वात्, न चेष्टापत्तिः, तृतीयक्षणे द्वित्वविशिष्टप्रत्यक्षासम्भवात्, कारणाभावस्यैव कार्याभावप्रयोजकत्वेन तत्तद्द्रव्यनाशस्य द्वित्वनाशासमानाधिकरणतया तदभावे तदभावप्रयुक्तत्वासम्भवादिति चेत्, मैवम्, युगपदुत्पन्नविनष्टयोर्नाशस्यैक्येन तादृशपरार्धत्वादिप्रतियोगिकस्यैव नाशस्य द्वित्वादिप्रतियोगिकतया तत एव तत्सम्भवात् । इत्थं चाऽऽश्रयनाशमात्रोपलक्षकत्वेऽपि **'अपेक्षाबुद्धिनाशाच्च—'** इत्यादिमूलस्य न क्षतिः । यद्यप्येवमपि द्वित्वादावीश्वरीयापेक्षाबुद्धेर्हेतुत्वे तस्याः सार्वदिकतया सर्गात् प्राक् परमाण्वादिषु द्वित्वोत्पादापत्तिर्दुरुद्धरैव, तथाऽपि तद्वारणायाऽनन्तक्षणविशेषाणां हेतुत्वं कल्प्यत एवेति नोक्तदोषः । एतावता प्रबन्धेन परार्धत्वारम्भकयत्किञ्चिद्द्रव्यनाशस्य क्षणविशेषनाशरूपस्यापि भिन्नक्रमेण द्वित्वादिनाशकत्वप्रकीर्तनं तु तस्याऽऽश्रयनाशविधयैव तत्कारणत्वस्फोरणायेति ध्येयम् ।

दिनकरी।

त्पादे मानाभावाच्च। एतदस्वरसादाऽऽह। ब्रह्माण्डान्तरेति॥ १०८॥

रामरुद्री।

वस्तुतस्तु अपेक्षाबुद्धेः प्रागुक्तदिशा स्वविषयकप्रत्यक्षोपलक्षितत्वसम्बन्धेन समवायेन वा द्वित्वादिकं प्रति समवायेन स्वविषयैकत्ववत्त्वसम्बन्धेन च हेतुतया एकापेक्षाबुद्धित एकद्वित्वोत्पादानन्तरं द्वित्वान्तरोत्पादापत्तिर्दुर्वारेत्यतो द्वित्वादिजननेऽपेक्षाबुद्धेः क्षणविशेषसहकार्यत्वं द्वित्वादेरीश्वरीयापेक्षाबुद्ध्यजन्यत्ववादिभिरपि स्वीकरणीयमिति न भगवदपेक्षाबुद्धितो द्वित्वधारापत्तिः। द्वित्वविनाशव्यवस्था तु प्रागुक्तदिशैवेति रमणीयम्।

नन्वेवं खण्डप्रलयस्य जन्यद्रव्यानधिकरणकालत्वेन प्राक्तनसृष्टिकालोत्पन्नपरमाणुद्वित्वस्य तद्व्यापकपरार्धत्वनाशकतदधिकरणजन्यद्रव्यनाशेनैव नाशात् इदानीन्तनद्व्यणुकाद्युत्पत्तौ तत्रैकत्वोत्पत्त्यनन्तरं तत्साधारणपरार्धत्वोत्पादकाल एव परमाणौ द्वित्वोत्पादसम्भवाद्व्यणुकानां क्षणद्वयं निष्परिमाणत्वमेवाऽस्मिन् मते प्रसज्यते, तच्चाऽयुक्तम्, परिमाणस्याऽपि तत्र द्वितीयक्षण एवोत्पादस्य सर्वत्र स्वीकर्तव्यत्वादित्याशङ्क्य कल्पान्तरमारचयति मूले—ब्रह्माण्डान्तरेत्यादि। यद्वा ननु युगपदुत्पन्नविनष्टानामपि नाशस्य नानाविधत्वे नैतादृशयुक्तिसम्भव इत्यत आह—ब्रह्माण्डेतीत्यपि कश्चित्। तथा चैतन्मते तादृशपरार्धत्वादिनाशकस्योक्तरीत्या द्वित्वनाशं प्रति हेतुत्वानभ्युपगमेऽपि न क्षतिः, तादृशयोगिबुद्धिनाशादेव तन्नाशावश्यकत्वात्। न चेश्वरीयापेक्षाबुद्धेरपि स्वरूपयोग्यतया तज्जन्यद्वित्वस्याऽविनाशापत्तिस्तदवस्थैवेति वाच्यम्। ईश्वरीयापेक्षाबुद्धियोग्यपेक्षाबुद्धिजनितद्वित्वयोर्भेदे मानाभावेन तत्रैव योग्यपेक्षाबुद्धेरपि हेतुत्वेन तन्नाशेन तन्नाशसम्भवात्। न च व्यभिचारादेव न तत्सम्भव इति वाच्यम्। स्वविषयकप्रत्यक्षोपलक्षितत्वसम्बन्धेन द्वित्वं प्रत्येवाऽपेक्षाबुद्धेर्हेतुत्वस्योक्तत्वेन व्यभिचारायोगात्। न चैवं चैत्रमैत्रयोरेककालीनापेक्षाबुद्धिजन्ययोः समनियतयोर्द्वित्वयोर्भेदो न स्यादिति वाच्यम्। इष्टत्वात्। अत एव लाघवादपेक्षाबुद्धिजनितस्य द्वित्वस्याऽऽत्ममात्रनिष्ठत्वमास्ताम्, विषयतया च विषयनिष्ठत्वम्। तथा च समवायसम्बन्धेन द्वित्वं प्रत्येवाऽपेक्षाबुद्धेः कारणत्वादेव न पुरुषान्तरीयद्वित्वस्य पुरुषान्तरेण ग्रहणप्रसङ्ग इत्यपि निरस्तम्। उक्तस्थले तैर्द्वित्वद्वयस्य कल्पनीयतयाऽस्माकं च व्यक्त्यैक्येन लाघवादिति पुनरभिनववैशेषिकराद्धान्तसरणिः॥१०८॥

ननु द्वित्वं प्रत्यपेक्षाबुद्धेर्वैजात्यपुरस्कारेणैव हेतुत्वं, अनेकैकत्वावगाहिज्ञानत्वादिना तत्कल्पने प्रमाणाभावात्, तादृशवैजात्यस्य द्वित्वादिजनकतावच्छेदकतयैव सिद्धिसम्भवात्। न च साङ्कर्यभयेन चाक्षुषत्वादिव्याप्यस्य तस्य नानात्वाभ्युपगमावश्यकत्वात् परस्परव्यभिचारेण कथं जनकतावच्छेदकत्वमिति वाच्यम्। द्वित्वादिष्वपि नानावैजात्यस्य कार्यतावच्छेदकतायाः सुवचत्वात्। अस्तु वाऽपेक्षाबुद्धित्वं मानसत्वव्याप्यमेव द्वित्वत्वाद्यवच्छिन्नजनकतावच्छेदकम्, सर्वत्र मानसापेक्षाबुद्धित एव द्वित्वाद्युत्पत्तेरिष्टत्वात्, क्षणविलम्बस्याऽदोषत्वात्। न च चाक्षुषत्वादिव्याप्यत्वमादाय विनिगमनाविरह इति वाच्यम्। अन्धकुष्ठ्यादेरपेक्षाबुद्धितोऽपि द्वित्वोत्पत्त्या चाक्षुषत्वादिव्याप्यत्वासम्भवात्। अथ तथाऽपि स्मृतित्वव्याप्यत्वमादाय विनिगमनाविरहः। न च कल्पनीयतत्तत्स्मृतिव्यक्तिं प्रति तत्तदुद्बोधकव्यक्तेः कारणत्वकल्पने गौरवमेव बाधकमिति वाच्यम्। तवाऽपि कल्पनीयतत्तन्मानसव्यक्तिं प्रति तत्तद्विशेषणज्ञानादेर्विशिष्य हेतुत्वावश्यकत्वेन तुल्यत्वात्। न च यत्र मानसापेक्षाबुद्धिरेव प्रथममुभयवादिसिद्धा, तत्र तव क्षणद्वयापलापापत्तिः, संस्कारस्याऽपेक्षितत्वेन तृतीयक्षणे एव स्मृतिसम्भवादिति वाच्यम्। तवाऽपि यत्र परामर्शात्मिका चाक्षुषापेक्षाबुद्धिस्तत्र क्षणद्वयापलापात्, अनुमित्याद्युत्पत्त्यनन्तरमेव मानसज्ञानसम्भवादिति चेन्न। यत्रोपेक्षात्मकापेक्षाबुद्धितो द्वित्वाद्युत्पत्तिस्तत्र संस्कारव्यक्तिकल्पनागौरवस्यैव विनिगमकत्वात्। चाक्षुषाद्यपेक्षाबुद्धिस्थले मानसव्यक्तितज्जन्यसंस्कारादिव्यक्तिकल्पनायाश्च स्मृतितज्जन्यसंस्कारादिव्यक्तिकल्पनासमानत्वात्। न चैवमपि द्वित्वादिजनकतावच्छेदकापेक्षाबुद्धित्वानां त्रित्वादिजनकतावच्छेदकापेक्षाबुद्धित्वैः साङ्कर्यप्रसङ्गः, द्वित्वाद्युत्पादकाले नियमतस्त्रित्वाद्युत्पादवारणाय तेषां भेदस्याऽऽवश्यकत्वादिति वाच्यम्। त्रित्वाद्यधिकसङ्ख्याजनकतावच्छेदका-

**अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते ।**

अपेक्षाबुद्धिः केत्यत आह अनेकैकत्वेति । अयमेकोऽयमेक इत्याकारिकेत्यर्थः । इदं तु बोध्यम् । यत्राऽनियतैकत्वज्ञानं, तत्र त्रित्वादिभिन्ना बहुत्व-

**दिनकरी ।**

इत्यतः—इत्याकाङ्क्षातः ।

नन्वेकत्वांशे निर्धर्मितावच्छेदकैकत्वज्ञानात् द्वित्वाद्युत्पत्त्यापत्तिरतो व्याचष्टे । अयमेक इति । तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिरपेक्षाबुद्धिपदार्थ इति भावः । क्वचित्पुस्तके 'इदं तु बोध्यम्—' इत्यादिः 'अवधेयम्—' इत्यन्तः पाठः, स चैवं व्याख्येयः-यत्राऽनियतैकत्वेति । एकत्वविशेष्यकसङ्ख्यात्वनियत-

**रामरुद्री ।**

पेक्षाबुद्धित्वानां द्वित्वादिन्यूनसङ्ख्याजनकतावच्छेदकवैजात्यव्याप्यत्वाभ्युपगमेनाऽदोषात् । तथा चेश्वरीयापेक्षाबुद्धितो न द्वित्वाद्युत्पादसम्भवः, तत्र मानसत्वाद्यभावेन तद्व्याप्यजातीनामप्यभावादिति केषाञ्चिन्मतं प्रतिक्षेप्तुमादौ द्वित्वादिजनिकाया अपेक्षाबुद्धेः कीदृशं स्वरूपमिति प्रश्नमुखेनापेक्षाबुद्धेर्द्वित्वादिजनने कारणतावच्छेदकं रूपं निर्वक्तुमुपक्रमते मूले-**अपेक्षाबुद्धिरित्यादिना** । तथा च परत्वापरत्वद्वित्वद्विपृथक्त्वादीनां जनकताया विनिगमनाविरहेण वैजात्यविशेषावच्छिन्नत्वस्वीकारावश्यकत्वे तेषां परस्परं साङ्कर्यप्रसङ्गभयेनैवाऽपेक्षाबुद्धेर्वैजात्यपुरस्कारेण कारणत्वकल्पनमशक्यम्, अयमेकोऽयमेको द्रव्याणि चैकत्ववन्तीति समूहालम्बनात्मकापेक्षाबुद्धितो द्रव्यमात्रवर्तिसङ्ख्योत्पादवारणाय तत्तद्वृत्त्येकत्वज्ञानत्वादिना तत्तद्वृत्तिसङ्ख्याजनकत्वस्याऽवर्जितत्वे वैजात्यपुरस्कारेण तद्धेतुत्वकल्पनमनावश्यकं चेति नेश्वरीयापेक्षाबुद्धितो द्वित्वोत्पादे.किञ्चिद् बाधकम् । अत एव त्रित्वाद्यवच्छिन्नसत्त्वे नियमतो द्वित्वाद्यवच्छिन्नमपि तत्र तिष्ठतीति गाणितिकानां समयोऽपि सङ्गच्छते, त्रित्वस्य नियमतो द्वित्वोत्पादकसामग्रीजन्यत्वादिति मूलकृतामाशयः ।

अथाऽपेक्षाबुद्धेः केन रूपेण द्वित्वादिजनकत्वमिति चेत्, तत्तद्व्यक्तिवृत्त्येकत्वान्यसङ्ख्यासामान्यं प्रति तत्तद्वृत्त्येकत्वज्ञानत्वेनेति गृहाण । न चैवमेकमात्रधर्मिकैकत्वज्ञानदशायां द्वित्वाद्युत्पादप्रसङ्ग इति वाच्यम् । तस्याऽपरव्यक्तिवृत्तित्वावश्यकत्वेन तद्वृत्त्येकत्वज्ञानविरहादेव तदुत्पादासम्भवात् । न चैवमपि चैत्रस्यैकैकत्वज्ञानकाले मैत्रस्य च तथाविधापरैकत्वज्ञानसत्त्वे द्वित्वोत्पादापत्तिरिति वाच्यम् । स्वविषयकप्रत्यक्षोपलक्षितत्वसम्बन्धं कार्यतावच्छेदकीकृत्य तथाविधकार्यकारणभावान्तरस्याऽपि कल्पनीयत्वात् । न चैकत्वादेर्गुणत्वादिप्रकारेण ज्ञानदशायां द्वित्वाद्युत्पादापत्तिरिति वाच्यम् । एकत्वत्वानवच्छिन्नसावच्छिन्नविषयतान्यत्वस्याऽपि एकत्वनिष्ठविषयतायां निवेशनीयत्वात् । इत्थं च निर्विकल्पकात्मकापेक्षाबुद्धितोऽपि द्वित्वाद्युत्पादः सम्भवति । शेषं पूर्वोक्तदिशाऽवसेयम् ।

केचित्तु अयमेक इमौ द्वावित्यादिज्ञानोत्तरं त्रित्वाद्युत्पत्तेरानुभविकतया तत्तद्व्यक्तिवृत्त्येकत्वान्यसङ्ख्यासामान्यं प्रति तत्तद्व्यक्तिवृत्तिसङ्ख्याज्ञानत्वेनैव हेतुत्वम् । न चैवमयमेक इमौ द्वावित्याकारकज्ञानदशायां द्वित्वाद्युत्पादप्रसङ्गः, पूर्वमत इवैतन्मतेऽपि तस्येष्टत्वात्, अधिकसङ्ख्यासामग्र्याः प्रतिबन्धकत्वमुपगम्याऽपि तद्वारणसम्भवाच्च । न चैवमपि गुणत्वादिनैकत्वद्वयावगाहिज्ञानादपि द्वित्वाद्युत्पादप्रसङ्गो दुर्वारः, सङ्ख्यानिष्ठविषयतायामेकत्वत्वानवच्छिन्नसावच्छिन्नविषयत्वान्यत्वस्य पूर्वमत इवैतन्मते द्वित्वत्वादिप्रकारकज्ञानादपि सङ्ख्योत्पत्त्यभ्युपगमेन निवेशयितुमशक्यत्वादिति वाच्यम् । एकत्वत्वानवच्छिन्नैकत्वनिष्ठसावच्छिन्नविषयत्वद्वित्वत्वानवच्छिन्नद्वित्वनिष्ठसावच्छिन्नविषयत्वादिभेदस्यैव कारणतावच्छेदकघटकत्वेनाऽदोषादित्यप्याहुरित्यन्यत्र विस्तरः ।

**अनियतैकत्वज्ञानमिति ।** एकत्वे अनियतत्वस्य-असङ्ख्यत्वस्य भानं तत्रेत्यर्थः । तथा च त्रित्वादिव्यापिका बहुत्वस्वरूपाऽपि काचिज्जातिः स्वीक्रियते, तदवच्छिन्नस्य त्रित्वाद्यवच्छिन्नोत्पत्तिवेला-

सङ्ख्योत्पद्यते, यथा सेनावनादाविति कन्दलीकारः।

आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते, तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नाऽतिरिच्यते। सेनावनादावुत्पन्नेऽपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्। इत्थं चेतरे बहुतरेयं सेनेति प्रतीतिरुपपद्यते, बहुत्वस्य सङ्ख्यान्तरत्वे तु तत्तारतम्याभावान्नोपपद्येतेत्यवधेयम्। इति सङ्ख्यानिरूपणम्।

दिनकरी।

त्रित्वादिप्रकारकज्ञानशून्यकालीनमनेकैकत्वज्ञानमित्यर्थः। यद्वा एकत्वांशे निर्धर्मितावच्छेदककमेकत्वसङ्ख्यायोगिन इत्याकारकज्ञानमित्यर्थः। **सेनावनादाविति**। तत्र नियतैकत्वज्ञानाभावात्, तस्यैव सहस्रत्वादिसङ्ख्योत्पादकत्वादिति भावः। **उत्पन्नेऽपीति**। अनियतैकत्वज्ञानस्याऽपि त्रित्वाद्युत्पादकत्वादिति भावः। दोषात्–नियतानेकैकत्वज्ञानाभावात्। अनियतानेकैकत्वज्ञानस्य त्रित्वोत्पत्तिकारणत्वेऽपि त्रित्वांशे त्रित्वत्वप्रकारकप्रत्यक्षे नियतानेकैकत्वज्ञानस्यैव हेतुतया तं विना न त्रित्वत्वादिप्रकारकं प्रत्यक्षमिति भावः। **उपपद्यत इति**। इतो बहुतरेत्यत्र बहुत्वे स्वसजातीयनिरूपितोत्कर्षः प्रतीयते। तथा च चतुष्ट्वादिरूपे बहुत्वे त्रित्वादिरूपस्वसजातीयनिरूपितोत्कर्षस्य सत्त्वात्तादृशप्रतीतिरुपपद्यत इति भावः। सङ्ख्यान्तरत्वे–त्रित्वाद्यतिरिक्तसंख्यात्वे। **तत्तारतम्याभावादिति**। बहुत्वे स्वसजातीयोत्कर्षाभावात्, तव मते तस्यैकरूपत्वादिति भावः। न च बहुत्वस्य त्रित्वादिरूपत्वे बहुत्वनिश्चये कथं त्रित्वादिसंशय इति वाच्यम्। समानप्रकारकनिश्चयस्यैव संशयविरोधितया बहुत्वत्वप्रकारकनिश्चयस्य त्रित्वत्वादिप्रकारकसंशयाविरोधित्वात्॥ इति सङ्ख्यानिरूपणम्॥

रामरुद्री।

याम्प्युत्पत्तिः स्वीक्रियत एव, परं तु यत्रैकत्वांशेऽनियतत्वज्ञानं तत्र केवलबहुत्वत्वावच्छिन्नस्यैवोत्पत्तिः स्वीक्रियते, त्रित्वत्वाद्यवच्छिन्नस्य चाऽनियतैकत्वज्ञानस्य प्रतिबन्धकस्य विद्यमानत्वान्नोत्पत्तिसम्भावनेत्यर्थः। बहुत्वत्वान्यसङ्ख्यात्वव्याप्यधर्मावच्छिन्नं प्रति अनियतैकत्वज्ञानस्य विरोधित्वं कल्प्यते। बहुत्वत्वं चोक्तप्रतिबध्यतावच्छेदकतावच्छेदकतावच्छेदकतयैव सिद्ध्यति। न च द्वित्वान्यानेकवृत्तिसङ्ख्यात्वं तत्, गौरवात्। यत्तु अनियतैकत्वज्ञानमित्यस्य नियतत्वज्ञानाभावकालीनैकत्वज्ञानमित्यर्थं कृत्वा तादृशस्थल एव बहुत्वाख्याऽतिरिक्तसङ्ख्योत्पद्यते, न तु त्रित्वादिकं, न वा त्रित्वादिस्थले बहुत्वमेवोत्पद्यत इति व्याख्यानम्, तदसत्, 'त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नाऽतिरिच्यते–'इत्यग्रिमग्रन्थविरोधापत्तेः। **नाऽतिरिच्यत इति**। तथा चोक्तप्रतिबध्यतावच्छेदकतया तादृशजातिसिद्धिर्न सम्भवति, तादृशप्रतिबध्यप्रतिबन्धकभाव एव मानाभावादित्यर्थः। नन्वेतादृशप्रतिबध्यप्रतिबन्धकभावानुपगमेऽनियतैकत्वज्ञानस्थलेऽपि त्रित्वाद्युत्पत्तौ बाधकाभावात्तत्र त्रित्वत्वादिप्रत्ययोऽपि स्यादित्यत आह। **सेनावनादावित्यादि**। तथा च तादृशस्थले त्रित्वत्वादिग्रहं प्रत्येव दोषविधयाऽनियतैकत्वज्ञानस्य प्रतिबन्धकत्वात्तादृशजातौ त्रित्वादिभिन्ने तादृशजातिमति च मानाभाव एवेत्यर्थः। नन्वेवमपि त्रित्वादिप्रकारकप्रत्यक्षं प्रति तादृशज्ञानस्य दोषविधयाऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनामपेक्ष्य तादृशबहुत्वत्वातिरिक्तसङ्ख्यात्वावच्छिन्नं प्रत्येवाऽनियतैकत्वज्ञानस्य प्रतिबन्धकत्वं युक्तम्। तदनभ्युपगमेऽपि बहुत्वत्वजात्यतिरिक्तसङ्ख्यात्वव्याप्यधर्मप्रकारकग्रहत्वावच्छिन्नं प्रत्येव दोषविधया तज्ज्ञानस्य प्रतिबन्धकत्वे लाघवाद्बहुत्वत्वजातिसिद्धिर्निष्प्रत्यूहैवेत्यत आह। **इत्थं चेत्यादि**। तथा च बहुतरत्वत्वादिना चतुष्ट्वाद्यनुभवस्य तत्राऽनुभवसिद्धतया बहुत्वत्वातिरिक्तजात्यवच्छिन्ने तद्ग्रहे वा तादृशज्ञानस्य प्रतिबन्धकत्वं कल्पयितुमशक्यमेव, किं तु स्वरूपतस्त्रित्वादिप्रकारकत्रित्वत्वादिना त्रित्वादिप्रकारकग्रहत्वादिनाऽनन्तप्रतिबध्यप्रतिबन्धकभावस्याऽऽवश्यकत्वाद्बहुत्वत्रित्वाद्यतिरिक्ते बहुत्वे बहुत्वत्वजातौ वा मानाभावोऽसिद्ध इत्याचार्याणामाशयोऽवसेयः।॥ इति सङ्ख्याग्रन्थः॥

**परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥**
**अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।**

**परिमाणं निरूपयति । परिमाणमिति । परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः । तच्चतुर्विधम् अणु, महत् , दीर्घं, ह्रस्वं चेति ।**

**दिनकरी ।**

**अणु महदित्यादि ।** यद्यप्यणुत्वमेव ह्रस्वत्वमस्तु, महत्त्वमेव दीर्घत्वमस्त्विति कुतश्चातुर्विध्यं ? तथापि तदवधिकाणुतया प्रतीयमानेऽपि तदवधिकह्रस्वत्वाव्यवहारात्तदवधिकमहत्त्ववत्तया प्रतीयमानेऽपि तदवधिकदीर्घत्वाव्यवहाराच्च ह्रस्वत्वदीर्घत्वयोरतिरिक्तपरिमाणतया तच्चातुर्विध्यं बोध्यम् ।

**रामरुद्री ।**

इत्थमङ्कगणितव्यवहारोपयोगिनीं सङ्ख्यामभिधाय रेखागणितव्यवहारोपयोगिनं परिमाणात्मकं गुणं निर्वक्तुमुपक्रमते मूले—**परिमाणमित्यादि । परिमितीति ।** अयमेतावत्परिमित इत्यादिव्यवहारस्तत्राऽसाधारणं कारणं परिमाणमित्यर्थः । न हि स व्यवहारः पदार्थस्वरूपमात्रनिबन्धन इति वक्तुं शक्यम्, स्वरूपस्याऽननुगतत्वात्, द्रव्यत्वादिनिबन्धनत्वे तत्प्रकर्षभावाभावव्यवस्थानुपपत्तेः । नाऽप्यसावत्रयवसंयोगविशेषमात्रनिबन्धनः, परिमाणाङ्गीकर्तृभिरपि परिमाणविशेषोत्पादनिर्वाहाय तद्वैजात्यस्याऽवश्यमङ्गीकार्यत्वादिति वक्तुं युक्तम्, परमाणावपि परिमाणदर्शनात् । नाऽस्त्येव तत्र परिमाणं, मानाभावात्, एवं गगनदिक्कालात्ममनःस्वपीत्येकदेशिनः, तत्तुच्छम् । परिमितत्वं हि देशवृत्तितायामवच्छेदकसापेक्षत्वम्, तदतिरिक्तस्य तस्य दुर्वचत्वात्, तथा च प्रादेशपरिमिते देशे घटोऽस्तीत्यादौ प्रादेशपरिमाणावच्छिन्नस्य देशस्य घटादिनिष्ठदिग्वृत्तितायामवच्छेदकत्वं भासते, स्पर्शादिमत्वेन तदवच्छेदकत्वं तु न सम्भवति, अननुगमात् । तादृशस्य च परमाणुपरिमिते देशे परमाणुरस्तीत्यादिव्यवहारस्य परमाणोर्देशवृत्तिताया उपपादनाय च परमाण्वादिपरिमाणादीनामवच्छेदकत्वमङ्गीकर्तव्यमेव, अन्यथा परमाण्वादिनिष्ठदिग्वृत्तिताया निरवच्छिन्नत्वे मूर्तयोः समानदेशताविरोधस्य दुरुपपादत्वात्, परमाणुस्वरूपस्य तद्गतसंयोगादेश्च तदवच्छेदकत्वं निरस्तप्रायमेवेति परमाणावपि तत्सिद्धेरावश्यकत्वात् । गगनादीनां तु सर्वमूर्तद्रव्यसंयोगितया तत्सिद्धिः । तत्तद्द्रव्यसंयोगे तदनुगुणदेशतायाः प्रयोजकत्वेन गगनादौ सर्वसंयोगिसमानदेशतायाः स्वीकारावश्यकतया तत्तद्देशतायास्तत्तद्देशावच्छिन्नपरिमाणान्यूनपरिमाणरूपत्वेन तेषामपरिच्छिन्नपरिमाणसिद्धेः । तेषां सर्वसंयोगित्वं तु सर्वत्र तत्कार्योपलब्धेरेवाऽनुमातव्यम् । परिमाणविशेषाणां तत्तद्देशविशेषवृत्तितायामवच्छेदकत्वादेव च दशहस्तदीर्घस्य पटादेरारम्भकसंयोगाविरोधेन मूलप्रदेशैः सह सङ्कोचनाख्ये संयोगे कृते तस्य पटस्य पूर्वापेक्षयाऽल्पाकारताप्रतीतावपि तत्र पटपरिमाणभेदो नाऽङ्गीक्रियते, सङ्कोचदशायामपि तत्र तादृशपटावच्छिन्नदिशस्तुल्यत्वात्, न हि तत्र तत्पटतुल्यपरिमाणं वस्तु तादृशपटाकारेण सङ्कोचितं सन्नाऽवतिष्ठेत । इयांस्तु विशेषः, पूर्वं यद्देशावच्छिन्नः स पट आसीत् सङ्कोचावस्थायां तदन्यदेशेन संयोगाद्देशान्तरितः स भवेत् । नैतावता तत्र परिमाणभेदः कल्पयितुं शक्यः । प्रचितावयवारब्धतूलपिण्डपरिमाणतोऽप्रचितावयवारब्धतूलपिण्डपरिमाणस्य भेदस्तु स्वीकर्तुमुचितः । तद्दशायां द्रव्यभेदस्याऽऽवश्यकतया तदवच्छिन्नदिशो न्यूनाधिकभावसम्भवात् ।

**चातुर्विध्यं बोध्यमिति ।** वस्तुतस्तु नियतहस्तपरिमाणादीर्घनलिकादावेकतः प्रतिरुद्धमुखेऽपनीतमरुति मुखान्तरावच्छेदेन अधःस्थजलसंयोगे सति तावन्नलिकाव्यापि जलं समुत्तोल्यते, तावन्नलिकाव्यापिसमपरिमाणस्यैव पुनरदीर्घाकारस्य बृहद्भाण्डादावस्थापितस्य जलस्य न बाह्यजलान्तरप्रवेशप्रतिबन्धकतेति विलक्षणदीर्घपरिमाणावच्छिन्नस्यैव जलस्य तत्त्वमावश्यकमिति तत्सिद्धिः । न चैवं दीर्घत्व-

अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥
सङ्ख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं, द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥

तत्-परिमाणम् । 'नित्यं' इत्यत्र परिमाणमित्यनुषज्यते ।

'जायते' इत्यत्राऽपि परिमाणमित्यनुवर्तते । अनित्यमिति पूर्णेणान्वितम् । तथा चाऽनित्यपरिमाणं सङ्ख्याजन्यं, परिमाणजन्यं, प्रचयजन्यं चेत्यर्थः ।

तत्र सङ्ख्याजन्यमुदाहरति । द्व्यणुकादाविति । द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणम्, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात्, द्व्यणुकस्याऽणुपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम्, त्रसरेणुपरिमाणं तु न सजातीयं, अतः पर-

दिनकरी ।

सङ्ख्याजन्यमुदाहरतीति । सङ्ख्यामात्रजन्यमुदाहरतीत्यर्थः । न सजातीयमित्य-

रामरुद्री ।

ह्रस्वत्वयोरेकजातीयत्वमेव कुतो न स्वीकृतम् ? इष्टापत्तौ च परिमाणचातुर्विध्यभङ्गप्रसङ्गो दुर्वार इति वाच्यम् । प्रत्यक्षजनकतावच्छेदकतया सिद्धस्य जातिविशेषस्य महत्त्व इव दीर्घत्वेऽपि विनिगमनाविरहेण स्वीकारावश्यकतयोक्तजातिविशेषस्य तादृशजातिशून्याणुपरिमाणसाधारण्याभ्युपगमे साङ्कर्यप्रसङ्गभयादेव तथा स्वीकारस्य कर्तुमशक्यत्वेन ह्रस्वत्वदीर्घत्वरूपद्वैविध्यस्याऽऽवश्यकत्वात् । न चैवं दीर्घत्वमपि महत्त्व एवाऽन्तर्भूतम्, प्रत्यक्षजनकत्वात्, तथा च परिमाणचातुर्विध्यमित्थमप्यनुपपन्नमेवेति वाच्यम् । न ह्यत्रत्यं महत्त्वं प्रत्यक्षजनकतावच्छेदकवैजात्यावच्छिन्नपरिमाणरूपं ग्रन्थकर्तुर्विवक्षितम्, अपि तु द्रव्यगतवृत्तितावच्छेदकरूपमिति तच्चातुर्विध्यस्य युक्तत्वात् । वर्तुलत्वचतुरस्रत्वादयश्चोक्तपरिमाणभेदा एव, नाऽतिरिक्ता इति न तेषां पृथग्गणनापत्तिरपि । एतेन तदवधिकमहत्परिमाणवत्यपि तदवधिकदीर्घत्वाव्यवहारोपपादनाय परिमाणद्वयाभ्युपगमोऽनुचितः, एकस्मिन्नेव परिमाणे वैजात्यद्वयमभ्युपगम्याऽपि तदुपपादनसम्भवादिति पूर्वपक्षः परास्तः ।

दीधितिकृतस्तु महन्महत्तरमितिवद्दीर्घंदीर्घतरादिव्यवहारस्य दूरात्संयोगविशेषाग्रहणे जायमानतया तदवधिकमहत्त्ववति तदवधिकदीर्घत्वाव्यवहारेण तदवधिकदीर्घत्ववत्यपि तदवधिकमहत्त्वाव्यवहारेण च परिमाणचातुर्विध्यमुपपन्नम् । चतुरस्रादयस्तु संयोगविशेषा एव, संयोगानुपलम्भे तदव्यवहारादित्याहुः ।

भाट्टास्तु त्रुटावेव विश्रामाद्द्व्यणुकादिकमेव नाऽस्ति, दूरे तद्गताणुत्वह्रस्वत्वे, निराकृतं चाऽनेकद्रव्यवत्त्वस्य प्रत्यक्षत्वप्रयोजकत्वम्, नित्यस्य गगनादिमहत्त्वस्य महत्त्वाजनकत्वं स्पर्शासमानाधिकरणत्वात्, समवायिकारणविरहाच्च, अस्तु वा त्रसरेणुगता बहुत्वसङ्ख्यैव परिमाणजनिकेति वदन्ति, तन्न, द्व्यणुके दधित्वदुग्धत्वादेः । प्रत्यक्षसिद्धत्वेन तत्रैव विश्रामस्वीकारे दुग्धारम्भकावयवैर्दध्यारम्भायोगादेव त्रसरेणोर्जन्यत्वावश्यकत्वात् । मष्यादेः कासीसामलकीसारादिजन्यतया त्रसरेणोर्मष्यारम्भकस्याऽपि तज्जन्यत्वेन कासीसत्वामलकीसारत्वादेस्तदवयवे कल्पनीयत्वावश्यकतया कासीसामलक्यादेरपि रूपविशेषादिमज्जन्यतया परमाणुसिद्धिरूहनीयेत्यलं पल्लवितेन ।

**स्वसमानजातीयेत्यादि ।** कपालादिपरिमाणापेक्षया घटादिपरिमाणस्योत्कृष्टतया तदन्यथानुपपत्त्योत्कृष्टपरिमाणानामेव परिमाणैर्जननस्य क्लृप्ततयाऽणुत्वस्य हेतुत्वान्तरे मानाभावात् परमाणुद्व्यणुकादिगतेनाऽणुपरिमाणेन कार्यद्रव्ये परिमाणोत्पादायोगादिति भावः । अत्र तत्तज्जातीयपरिमाणानां तत्तज्जातीयपरिमाणावधिकोत्कर्षविशिष्टपरिमाणत्वावच्छिन्नं प्रति हेतुता न सम्भवति, तत्तज्जातीयोत्कृष्टपरि-

माणौ द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाणस्याऽसमवायिकारणमित्यर्थः ॥ १०९ ॥ ११० ॥ १११ ॥

दिनकरी।

नन्तरं विजातीयसंयोगरूपः प्रचयस्तु न द्व्यणुकादौ, तत्सत्त्वेऽपि वा तस्याकिञ्चित्करत्वादिति पूरणीयम्। द्वित्वसंख्या—द्वित्वसङ्ख्यामात्रम्। एवमग्रेऽपि ॥ १०९ ॥ ११० ॥ १११॥

रामरुद्री।

माणवद्वयवारब्धावयविद्रव्यपरिमाणे व्यभिचारात्। नाऽपि तत्तज्जातीयपरिमाणं प्रति तत्तज्जातीयापकृष्टपरिमाणत्वेन, तज्जातीयपरिमाणवद्वयवसंयुक्ततदपकृष्टपरिमाणवद्वयवारब्धावयविद्रव्ये तज्जातीयपरिमाणोत्पादापत्तेरेवमप्यवारणात्। तज्जातीयपरिमाणं प्रति तज्जातीयतदुत्कृष्टजातीयपरिमाणत्वादिना प्रतिबन्धकत्वेन कथञ्चित्तद्वारणसम्भवेऽपि क्षुद्रावयवद्वयारब्धद्रव्यपरिमाणस्य क्षुद्रैस्त्रिभिरारब्धे उत्पादापत्तेरेवमपि दुरुद्धरत्वादित्याकलय्य परिमाणस्य स्वसमानजातीयस्वोत्कृष्टपरिमाणहेतुतामुपेक्ष्य **जननियम** एवोपदर्शितः। परिमाणजनकपरिमाणत्वं तथाविधजनकत्वव्याप्यमित्यत्र च तात्पर्यमवसेयम्। अथैवमपि परमाणुगतपरिमाणस्य कार्यद्रव्यपरिमाणारम्भकत्वं कल्प्यमुत सङ्ख्याया इत्यत्र विनिगमनाविरहेण द्वयोरेव तत्र हेतुत्वप्रसक्तिर्न वारयितुं शक्या। ननु तथाऽपि कार्यद्रव्ये उत्पद्यमानस्य परिमाणस्य महत्त्वदीर्घत्वरूपभेदभिन्नस्य कारणगतमहत्त्वदीर्घत्वादिवैचित्र्यात् परिमाणत्वेन सामान्यतः कार्यकारणभावो नाऽभ्युपगन्तुं शक्यते, सङ्ख्यायास्तु द्वित्वत्रित्वादिरूपाया उभयत्रैव कारणगतायास्तुल्यतया परिमाणत्वावच्छिन्ने प्रत्येकहेतुहेतुमद्भावस्वीकारेणैवोपपत्तेस्तथैव हेतुत्वस्य कल्पनीयतया तद्बलादेव कार्ये द्व्यणुकत्रसरेण्वादावपि परिमाणोत्पत्तिसम्भवः। न चैवं द्व्यणुकेऽणुपरिमाणस्य त्रसरेणौ च महत्त्वस्योत्पत्तिनियमो नोपपद्यते, परिमाणत्वस्यैव द्वित्वत्रित्वयोः कार्यतावच्छेदकतया द्व्यणुकेऽपि महत्त्वोत्पत्तौ बाधकाभावादिति वाच्यम्। द्वित्वसङ्ख्यायाः परिमाणत्वावच्छिन्नं प्रति जनकत्वेऽपि त्रित्वसङ्ख्याया महत्त्वत्वावच्छिन्नं प्रत्येव हेतुत्वेन द्व्यणुके महत्त्वोत्पादासम्भवात्। न च विनिगमनाविरहः, परिमाणत्वावच्छिन्नं प्रति त्रित्वस्य हेतुत्वे द्व्यणुक एव व्यभिचारप्रसङ्गेन तथा हेतुत्वकल्पनासम्भवात्। न च तथाऽपि परमाणुत्रयारब्धे महत्त्वापत्तिर्दुरुद्धरैवेति वाच्यम्। अत एव परमाणुत्रयस्याऽनारम्भकत्वात्। द्व्यणुकत्रयारब्धत्रसरेणुपरिमाणापेक्षया न्यूनदेशव्यापिकस्य महत्त्वदीर्घत्वादेः प्रत्यक्षाविषयतया परमाणुत्रयारब्धकार्यस्वीकारे तत्र तादृशमहत्त्वस्यैवोत्पादप्रसङ्गे नाऽनुभवविरोधप्रसङ्गात्। इत्थं च त्रित्वबलादुत्पद्यमानस्य त्रसरेणुपरिमाणस्याऽप्युत्कृष्टमहत्त्वरूपतापत्तिर्न सम्भवति, तादृशमहत्त्वं प्रति त्रसरेण्वादिपरिमाणस्यैव कारणतया तद्विरहादेव तदापत्त्यसम्भवात्। न च तथाऽपि समानपरिमाणकपालद्वयारब्धात्तादृशकपालत्रयारब्धघटस्य परिमाणोत्कर्षनिर्वाहाय त्रित्वसङ्ख्यायाः कारणत्वावश्यकत्वेऽपि द्वित्वसङ्ख्यायास्तथात्वे मानाभाव एव, एकतन्तुकपटाद्यभ्युपगमे तु ततो द्वितन्तुकपरिमाणस्योत्कर्षनिर्वाहाय द्वित्वस्याऽपि हेतुत्वावश्यकत्वेऽपि उक्तग्रन्थविरोधो दुर्वार एव, तथा सति द्वित्वस्य परिमाणत्वावच्छिन्नं प्रति जनकत्वस्यैकतन्तुके व्यभिचारप्रसङ्गेन स्वीकर्तुमशक्यत्वापत्तेरिति वाच्यम्। न हि द्वित्वादेरुत्कृष्टपरिमाणादिनिर्वाहकतया कल्प्तं हेतुत्वमादाय द्व्यणुकादौ परिमाणोत्पत्तिः समर्थ्यते, अपि तु सामान्यतः परिमाणत्वावच्छिन्नं प्रति द्वित्वस्य महत्त्वं प्रति त्रित्वस्य च हेतुत्वमादायैवेत्युक्तदोषासम्भवात्, एकतन्तुकपटादिकं तु न स्वीक्रियते। उक्तरीत्या सामान्यकार्यकारणभावस्तु स्वीकरणीय एव। अन्यथा महत्त्वत्वावच्छिन्नस्य द्व्यणुकादावनुत्पत्तिप्रयोजकस्य दुर्वचत्वापत्तेः, कारणमहत्त्वाभावस्य प्रयोजकत्वे तु त्रसरेणावपि तदनुत्पादप्रसङ्गात्, परिमाणत्वावच्छिन्नं प्रति द्वित्वस्य हेतुत्वमप्यावश्यकम्, परिमाणस्यैव तस्याऽपि विनिगमनाविरहेण हेतुत्वावश्यकत्वादिति चेन्न, कपालद्वयारब्धावयविमहत्त्वे व्यभिचारेण महत्त्वं प्रति त्रित्वहेतुताया एवमप्यसम्भवादिति।

मैवम्। स्वसमवायिसमवेतत्वसम्बन्धेन परिमाणत्वावच्छिन्नं प्रति द्वित्वस्य तथाविधसम्बन्धेनैव त्रित्वादिविशिष्टपरिमाणत्वावच्छिन्नं प्रति त्रित्वादीनां च सामान्यत एव कार्यकारणभावस्याऽवश्यकल्प-

**परिमाणं घटादौ तु परिमाणजमुच्यते ।**

**परिमाणजन्यं परिमाणमुदाहरति । परिमाणं घटादाविति । घटादिपरिमाणं कपालादिपरिमाणजन्यम् ।**

दिनकरी ।

परिमाणजन्यं—परिमाणमात्रजन्यम् । कपालादिपरिमाणजन्यम्—कपालादिपरिमाणमात्रजन्यमित्यर्थः । अप्रचितमहत्कपालद्वयारब्धे घटे यन्महत्परिमाणं तत्र कपालगतद्वित्वसङ्ख्या न कारणम्, द्वित्वसङ्ख्याया महत्त्वाजनकत्वात् । अन्यथा द्व्यणुकेऽपि महत्त्वोत्पादापत्तेः । न चोक्तापत्त्या द्वित्वत्वेन परिमाणाजनकत्वेऽपि घटगतमहत्त्वं प्रति कपालगतमहत्त्वस्य कपालगतद्वित्वस्य वा हेतुत्वमित्यत्र विनिगमाविरह इति वाच्यम् । कपालगतमहत्त्वोत्कर्षेण घटगतमहत्त्वोत्कर्षस्याऽऽनुभविकतया कपालमहत्त्वस्य तत्राऽवश्यं हेतुताया वाच्यत्वात् । यत्र कपाले न प्रचयस्तत्र प्रचयस्याऽपि हेतुत्वासम्भवात्, तत्र घटपरिमाणं कपालपरिमाणमात्रजन्यमिति भावः ।

रामरुद्री ।

नीयतया तत एव त्रसरेणुद्व्यणुकयोः परिमाणोत्पादनिर्वाहेणाऽणुपरिमाणस्य पृथग्धेतुत्वान्तराकल्पनात् । न चैवं त्रसरेणुचतुरणुकादावपि त्रित्वादेरविशेषान्न्यूनपरिमाणोत्पादप्रसङ्ग इति वाच्यम् । चतुरणुकादिपरिमाणान्यपरिमाणत्वाद्यवच्छिन्नं प्रति तत्सामग्र्याः प्रतिबन्धकत्वस्याऽवश्यकतया तत एव चतुरणुकादौ तद्वारणात् । अत एव द्वयोरेव परमाण्वोस्त्रयाणां च द्व्यणुकानामारम्भकत्वनियमोऽपि स्वीक्रियते । अन्यथा कदाचित् परस्परमेव परस्परपरिमाणोत्पादापत्तेः । न च वैपरीत्यमेव कुतो नेति वाच्यम् । परमाणुत्रयस्याऽऽरम्भकत्वे संयोगत्रयस्याऽपि यावत्परमाणव्यापकतया कार्यद्रव्ये व्यभिचारेण समवायेनेव कालिकेनाऽपि हेतुत्वस्याऽसम्भवात्, परमाणूनां नित्यत्वात् । नित्येषु च कालिकायोगात् । स्वसमानाधिकरणत्रित्वादिरूपपरम्पराणां च संसर्गत्वमेव नास्तीति केषांचिदभिनवः पन्थाः । अधिकं व्यक्तमाकरे ।

**मूले—असमवायिकारणमित्यर्थ इति ।** ननु द्वित्वत्रित्वादेस्तादृशपरिमाणविशेषेऽसमवायिकारणत्वे कारणाकारणसाधारणत्रित्वस्याऽपि द्व्यणुकादौ स्वसमवायिसमवेतत्वसम्बन्धेन सत्वान्महत्त्वोत्पादापत्तिर्दुर्वारैव । न च त्रित्वादेः स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नवृत्तित्वसम्बन्धेन कारणत्वोपगमान्नैवमिति वाच्यम् । तथा सति त्रित्वादेरसमवायिकारणत्वानुपपत्तेः, समवाय—स्वसमवायिसमवेतत्वान्यतरसम्बन्धेन कारणस्यैवाऽसमवायिकारणपदवाच्यत्वात्, निरुक्तसम्बन्धेन द्वित्वस्य त्रसरेणावपि सत्त्वेन तत्राऽणुत्वोत्पादापत्तेर्दुर्वारत्वाच्च । न च स्वसामानाधिकरण्य—स्वाभावसामानाधिकरण्य—स्वसमानाधिकरणाभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन द्रव्यविशिष्टान्यस्यैव त्रित्व—द्वित्वादेः परिमाणासमवायिकारणत्वोपगमान्नैष दोष इति वाच्यम् । तथा सति चतुःपञ्चाद्यवयवारब्धे उक्तविशेषणविशिष्टत्रित्वादेरसत्त्वेन व्यभिचारप्रसङ्गेनोक्तकार्यकारणभावस्यैवोच्छेदापत्तेरिति चेन्न, स्वाश्रययावत्समवेतत्वसम्बन्धेनैव द्वित्वत्रित्वादेर्हेतुत्वात्, त्र्यणुकेऽणुत्वापत्तिस्तु महत्त्वसामग्र्या विरोधित्वादेव वारणीयेति ध्येयम् ।

**टीकायाम्-परिमाणमात्रजन्यमिति ।** अत्रेदं चिन्त्यम् । द्वित्वस्य महत्त्वाजनकत्वे द्व्यणुकपरिमाणं प्रत्यपि द्वित्वस्य हेतुत्वमप्रामाणिकमेव भवेत् । लाघवादेव तस्य पूर्वमुपगमादिति । किन्तु यादृशपरिमाणविशेषस्य द्वित्वाघटितसामग्रीव्यापकत्वं निर्वहति, तस्य परिमाणमात्रजन्यत्वव्यपदेशः, यथा द्विहस्तपरिमितस्य परिमाणस्यैकहस्तावच्छिन्नपरिमाणे विजातीयपरिमाणाभावविशिष्टे व्यापकत्वं सम्भवति । तत्तद्विजातीयपरिमाणविशेषाणां स्वाव्यवहितोत्तरत्वसम्बन्धेन तत्तत्परिमाणविशिष्टपरिमाणत्वावच्छिन्नं प्रत्येव हेतुतया क्षुद्राभ्यामारब्धस्य परिमाणस्य क्षुद्रेण महता चाऽऽरब्धे उत्पादप्रसङ्गवारणाय क्षुद्रसहकृतमहदारब्धपरिमाणसामग्र्यास्तदन्यपरिमाणत्वावच्छिन्नं प्रत्येव प्रतिबन्धकत्वमावश्यक-

**प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥**

प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति । प्रचय इति ।

दिनकरी ।

**प्रचय इतीति मूले-शिथिलाख्य इति ।** किञ्चिदवयवावच्छेदेनाऽवयवान्तरासंयोगिनि महत्यवयवे वर्तमानः संयोगः प्रचय इत्येके । अत्र महत्पदं न देयं, परमाणुसंयोगस्य प्रचयत्वे क्षतिविरहादित्यन्ये ।

भूयोवयवावच्छेदेनाऽवयवान्तरासंयोगिन्यवयवे वर्तमानः संयोगः प्रचयः, तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचय इत्यपरे । अत्र प्रचयरहितैस्त्रिभिर्महावयवैरारब्धस्य यन्महत्परिमाणं तत्सङ्ख्यापरिमाणोभयजन्यम्, महदवयवद्वयारब्धमहत्त्वादतिशयितत्वात्, अल्पावयवारब्धमहत्त्वादतिशयितत्वाच्च । प्रचिताभ्यां महावयवाभ्यामारब्धं यन्महत्परिमाणमतिशयितं तत्परिमाणप्रचयोभयजन्यम्, अप्रचितमहावयवारब्धात् त्र्यणुकमहत्त्वाच्च तादृशा-

रामरुद्री ।

मिति तदभावसहकृतक्षुद्रपरिमाणस्य क्षुद्रद्वयारब्धपरिमाणव्याप्यत्वमव्याहतमेव । न च क्षुद्रेण महता चाऽऽरब्धे न क्षुद्रद्वयारब्धपरिमाणापत्तिः, क्षुद्रपरिमाणद्वयस्य हेतुत्वादिति वाच्यम् । क्षुद्राभ्यां महता चारब्धे तदापत्तेरेवमपि दुर्वारत्वात् । तथा च सङ्ख्याऽघटिताया अपि सामग्र्यास्तादृशस्थले व्याप्यत्वं निर्वहतीति तत्परिमाणमात्रजन्यमुच्यते। न चैवं द्वित्वस्य हेतुत्व एव मानाभावापत्तिरिति वाच्यम् । जन्यपरिमाणं प्रत्यनेकावयवकत्वस्य प्रयोजकत्वस्वीकारस्यैव तत्र प्रमाणत्वादिति ।

**किञ्चिदवयवेत्यादि ।** किञ्चिदवयवावच्छिन्नो योऽवयवान्तरसंयोगसामान्याभावस्तद्वतीत्यर्थः । तेन संयोगमात्रस्यैव किञ्चिदवयवावच्छिन्नतया तच्छून्यत्वस्य तदुत्पत्तिपूर्वक्षणावच्छेदेन तदाश्रयेऽपि सत्त्वान्न निविडसंयोगस्याऽपि प्रचयत्वप्रसङ्गः । अत एवाऽवयवपदमपि । अन्यथा तथाविधकालवारणासम्भवात् । किञ्चिदिति स्वरूपकथनम्, तदवच्छेदेन संयोगिन्यपि तदतदुभयावच्छेदेन . संयोगाभावस्वीकारे निविडसंयोगवतोऽपि तादृशावयवद्वयावच्छेदेन तथात्वानपायादतिव्याप्तिवारणायाऽवयवनिष्ठावच्छेदकतायां व्याप्यवृत्तिधर्मानवच्छिन्नत्वलाभायैव वा तदुपादानम् । न चैवमप्युत्पत्तिकालीनत्वविशिष्टतत्तदवयवावच्छेदेन निविडसंयोगवतोऽपि तथाविधसंयोगरहितत्वस्याऽक्षततया तत्राऽतिव्याप्तिर्दुर्वारेति वाच्यम् । तादृशसंयोगाभावकालावच्छेदेनैव तद्वति वृत्तित्वस्याऽग्रे वाच्यतयाऽदोषात् । इत्थं च निविडकपालद्वयारब्धघटस्थले कपालस्य बहिर्देशावच्छेदेन तादृशसंयोगसामान्यराहित्याद-तिव्याप्तिवारणायैवाऽवयवपदोपादानम् । गगनादिसंयोगस्याऽपि तत्तदवयवावच्छेदेन सत्त्वात्किञ्चिद-वयवाच्छेदेनाऽपि संयोगसामान्याभावो न सम्भवतीत्यतो**ऽवयवान्तर**पदम् । **अन्तर**पदानुपादानेऽपि स्वस्मिन् स्वानुयोगिकगगनादिसंयोगानपायात्पुनरुक्तदोषतादवस्थ्यमतस्तदुपादानम् । तत्त्वं च स्ववृत्तित्व—स्ववृत्तिद्रव्यवत्त्वेतरवृत्तित्वोभयसम्बन्धेन वस्तुविशिष्टत्वम् । इत्थं चोक्तोभयसम्बन्धेन वस्तुविशिष्टस्य द्रव्यत्वादेः प्रचयाधिकरणे किञ्चिदवच्छेदेनाऽप्यभावासम्भवादसम्भववारणाय **'अवयवान्तरासंयोगिनि'** इत्यत्र **संयोग**पदम् । **अवयवावच्छिन्नत्वं** चाऽवयवावच्छिन्नप्रदेशावच्छिन्नत्वम् । तेनाऽतिदूरस्थावयवान्तरस्य प्रचयाधिकरणत्वनिष्ठसंयोगसामान्यानवच्छेदकत्वेऽपि न क्षतिः, न वा निविडसंयुक्तकपालद्वयस्य सौरालोकाद्यवच्छिन्नबाह्यप्रदेशावच्छेदेनाऽवयवान्तरासंयोगित्वे ऽप्यतिव्याप्तिः । इत्थञ्च परमाणावपि यत्किञ्चित्परमाण्वन्तरावच्छिन्नप्रदेशावच्छेदेन तादृशसंयोगाभावसत्त्वात्तादृशसंयोगस्याऽपि प्रचयत्वापत्तितो **महत्यवयव इति ।** घटाद्यन्त्यावयविवृत्तिसंयोगवारणाय चाऽ**वयवे वर्तमान** इति । अग्रिमपक्षद्वयमप्युक्तदिशैव व्याख्येयम् ।

अत्रेदमवधेयम् । प्रचयस्तावन्न यत्किञ्चिदवयवावच्छेदेनाऽवयवान्तरासंयोगिन्यवयवे वर्तमानः संयोगः, तथा सति प्रचयतारतम्यस्याऽनुपपत्तेः । किं तु संयोगविशेष एव, स चाऽवयवयोः सान्तरा-

**परिमाणं तूलकादौ, नाशस्त्वाश्रयनाशतः ।**

परिमाणं चाऽऽश्रयनाशादेव नश्यतीत्याह । नाश इति । अर्थात् परिमाणस्यैव । न चाऽवयविनाशः कथं परिमाणनाशकः ? सत्यप्यवयविनि त्रिचतुरादिपरमाणुविश्लेषे तदुपचये वाऽवयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम् । परमाणुविश्लेषे हि द्व्यणुकस्य नाशोऽवश्यमभ्युपेयः, तन्नाशे च त्र्यणुकनाशः । एवं क्रमेण महावयविनो नाशस्याऽऽवश्यकत्वात्, सति च नाशकेऽनभ्युपगममात्रेण नाशस्याऽपलपितुमशक्यत्वात्, शरीरादाववयवोपचयेऽसमवायिकारणनाशस्याऽऽवश्यकत्वादवयविनाश आवश्यकः । न च पटाद्यनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं न स्यादिति वाच्यम् । तत्राऽपि वेमाद्यभिघातेनाऽसमवायिकारणतन्तुसंयोगनाशात् पटनाशस्याऽऽवश्यकत्वात् । किं च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्, तन्त्वन्तररूपकारणाभावात्, तन्त्वन्तरस्याऽवयवत्वाभावे च न तेन परिमाणाधिक्यं, संयुक्तद्रव्यान्तरवत्, तस्मात्तत्र तन्त्व-

दिनकरी ।

तिशयदर्शनात् । प्रचितैर्महद्भिरारब्धस्य महत्परिमाणं सङ्ख्यापरिमाणप्रचयजन्यम्, प्रचितमहावयवद्वयारब्धमहत्वादपि तस्योत्कृष्टत्वादिति ध्येयम् । दिङ्मात्रस्य मूले प्रदर्शितत्वादित्यन्यत्र विस्तरः ।

केचित्तु दीर्घमिति प्रतीतेरवयवसंयोगविशेषेणैवोपपत्तेः दीर्घत्वं न परिमाणम्, अन्यथा वर्तुलत्वचतुरस्रत्वादीनां परिमाणान्तरत्वापत्तेरित्याहुः ॥

अर्थादिति । प्रकरणादित्यर्थः । यद्वाऽर्थात्-परिशेषादित्यर्थः । न च परिशेषोऽसिद्धः, रूपादेरप्याश्रयनाशनाश्यत्वादिति वाच्यम् । 'आश्रयनाशतः-'इति मूलस्याऽऽश्रयनाशमा-

रामरुद्री ।

लयोरभ्युपगम्यते, तादृशस्थले एकदेशाकर्षणे सर्वाकर्षणस्य संयोगव्यवहारस्य च सिद्धेः । तथा हि काष्ठारम्भकैरवयवैरेव धूम आरभ्यते, हिमारम्भकैश्च जलमित्यादि सिद्धम् । धूमादीनां किञ्चिदारभ्यत्वानुमितौ लाघवज्ञानसहकारेण काष्ठाद्यारम्भकावयवानामेव भानात् । यत्तु द्रव्यग्रन्थे यत् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेरेव पाषाणभस्मजलादौ पाषाणहिमाद्युपादानोपादेयत्वसिद्धिरिति मूलकृतोक्तम्, तत्तुच्छम्, पाषाणभस्मादिद्रव्यस्य पाषाणध्वंसजन्यत्वे मानाभावात्, यैरेव तन्तुसंयोगैः पूर्वं महापट आरभ्यते, तदन्तर्वर्तियत्किञ्चित्तन्तुविनाशे तैरेव संयोगैरुत्पद्यमानस्य खण्डपटस्य महापटोत्पत्तिदशायामुत्पत्त्यापत्तिवारणाय महापटध्वंसस्य खण्डपटहेतुतायाः सामान्यलक्षणादिग्रन्थेपूक्तत्वात्, तादृशयुक्तेश्चोक्तस्थलेऽसम्भवात् । इत्थं चोक्तस्थले सान्तरालानामवयवानां यः संयोगः समुत्पद्यते, स एव प्रचयपदेन व्यवह्रियते । ननु सान्तरालानामवयवानां दृष्टविरुद्धस्य संयोगस्य स्वीकारे प्रमाणाभाव इति चेन्न । जलाद्यवयवानां नियतविप्रकृष्टदेशता तावदेकदेशस्य स्वाभाविक्यां क्रियायां जायमानायां दृष्टा स्यन्दनकाले, तथा धूमाद्यवयवानामपि धूमोद्गमनकाले, तस्यास्तादृशावयवसंयोगमन्तरेणाऽसम्भवात् । न चाऽवयवयोः सान्तरालत्वं मध्ये द्रव्यान्तरसंयुक्तत्व एव सम्भवतीति तेनैवाऽवयवान्तराकर्षणं सम्भवतीति सान्तरालयोः संयोगाङ्गीकारे प्रमाणाभावः स्थिर एवेति वाच्यम् । तथाविधद्रव्यस्य तेजोजलादिरूपस्यैवाऽस्माभिरभ्युपगमेन तस्य च विजातीयद्रव्यतया तत्संयोगतस्तेषां द्रव्यारम्भकतानुपपत्तेरित्येतादृशविलक्षणसंयोग एव प्रचय इति सिद्धम् ।

**संख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम् ॥ ११३ ॥**
**अन्योन्याभावतो नाऽस्य चरितार्थत्वमिष्यते ।**

न्तरसंयोगे सति पूर्वं पटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम् । अवयविनः प्रत्यभिज्ञानं तु साजात्येन, दीपकलिकादिवत् । न च पूर्वतन्तव एव तन्त्वन्तरसहकारात् पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम् । मूर्तयोः समानदेशताविरोधात् तत्र पटद्वयासम्भवात्, एकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च । तस्मात् पूर्वस्य द्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यस्याऽवश्यमभ्युपेयत्वात् ॥ इति परिमाणनिरूपणम् ॥

पृथक्त्वं निरूपयति । सङ्ख्यावदिति । पृथक्प्रत्ययासाधारणकारणं पृथक्त्वम् । तन्नित्यतादिकं सङ्ख्यावत् । तथा हि नित्येष्वेकत्वं नित्यमनित्येष्वनित्यम् । अनित्यमेकत्वं तु आश्रयद्वितीयक्षणे चोत्पद्यते, आश्रयनाशान्नश्यति, तथैकपृथक्त्वमपि, द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः ।

नन्वयमस्मात् पृथगित्यादावन्योन्याभावो भासते, तत् कथं पृथक्त्वं गुणान्तरं स्वीक्रियते ? न चाऽस्तु पृथक्त्वं, न त्वन्योन्याभाव इति वाच्यम् ।

**दिनकरी ।**

त्रादित्यर्थकतया रूपादेराश्रयनाशमात्रनाश्यत्वाभावेन परिशेषसम्भवात् । न च मूलस्य तादृशार्थकत्वे प्रयोजनाभाव इति वाच्यम् । क्रियाविभागादिक्रमेण यत्किञ्चिदवयवनाशेऽपि शरीरादिनाशस्य मीमांसकैरनभ्युपगमात्, तत्र परिमाणनाशस्याऽऽनुभविकत्वाच्चाऽऽश्रयमात्रनाशनाश्यत्वस्य परिमाणे तैरनङ्गीकारात्, तन्मतनिराकरणाय मूलस्य तादृशार्थकत्वादिति ध्येयम् । ॥ इति परिमाणनिरूपणम् ॥

द्वितीयक्षणे चोत्पद्यत इत्यनन्तरं स्वाश्रयावयवगतैकत्वासमवायिकारणकं चेति पूरणीयम् । एकपृथक्त्वम्—एकसमवेतपृथक्त्वम् । द्वित्वादिवच्चेति । तथा च द्विपृथक्त्वादौ समानाधिकरणानेकपृथक्त्वान्यसमवायिकारणानि, इदमेकं पृथगिदमेकं पृथगिति नानैकपृथक्त्वविषयिण्यपेक्षाबुद्धिर्निमित्तकारणं, तादृशबुद्धिनाशात् क्वचिदाश्रयनाशात् क्वचिदुभाभ्यां द्विपृथक्त्वं नश्यतीति भावः । अत्रोभयसमवेतं पृथक्त्वं द्विपृथक्त्वं त्रितयसमवेतं पृथक्त्वं त्रिपृथक्त्वमिति रीत्या बोध्यम् । ननु घटौ पटात् पृथगित्यादिप्रतीतेः पटावधिकैकपृथक्त्वद्वयादिनाप्युपपत्तेरुभयसमवेतपृथक्त्वादौ मानाभाव इति चेन्न, घटौ पटात् पृथगिति

**रामरुद्री ।**

टीकायाम्—आहुरिति । अस्वरसबीजं तु पूर्वोपदर्शितदीधितिकृन्मतानुसारेणाऽविश्वतसंयोगस्याऽपि दीर्घव्यवहारो भवतीति दीर्घत्वमतिरिच्यते, वर्तुलत्वादीनां च न तथात्वसम्भवः, तेषां संयोगविशेषपरिचेयरूपत्वात्, तथा हि वर्तुलत्वं मध्यबिन्दवधिकसमविप्रकृष्टत्वाश्रयावयवकत्वं, चतुरस्रत्वं च सरलरेखाचतुष्टयारब्धत्वमित्यादिरीत्या तेषां संयोगनिरूप्यत्वमेवेति ॥ ॥ इति परिमाणग्रन्थः ॥

टीकायाम्—द्विपृथक्त्वादाविति । द्विपृथक्त्वादिकं तु न जातिः, द्वित्वादिसमानाधिकरणपृथक्त्वादिनैवोपपत्तेरित्यवधेयम् । उभयमङ्गीकार्यमिति । घटद्वयत्वस्य धर्मितावच्छेदकत्वे तदवच्छेदेनैकपृथक्त्वद्वयभानाङ्गीकार एवोचितः, अन्यथा घटौ पटात् परौ घटौ रूपवन्तावित्यादिप्रतीतिबलाद्द्विपरत्वद्विरूपादेरपि कल्पनापत्तेरिति तु तत्त्वम् । अन्ये तु एकद्वित्र्याद्यवधिकत्वमेवैकद्वित्रिपृथक्त्वादि-

**अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११४ ॥**

**रूपं न घट इति प्रतीत्यनापत्तेः। न हि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति, न वा घटे घटावधिकं पृथक्त्वमस्ति, येन परस्परासम्बन्धः कल्प्यत इत्यत आह। अस्मादिति। नतु शब्दवैलक्षण्यमेव, न त्वर्थवैलक्षण्यमिति चेन्न। विनाऽर्थभेदं घटात् पृथगितिवद्घटो न पट इत्यत्राऽपि पञ्चमीप्रसङ्गात्,**

दिनकरी।

प्रतीत्योभयसमवेतपृथक्त्वे सिद्धे तेनैव घटः पटात् पृथगिति प्रतीत्युपपत्तेरेकपृथक्त्वे प्रमाणाभाव इत्यपि वक्तुं शक्यत्वात्, तस्माद्विनिगमनाविरहादुभयमङ्गीकार्यम्।

**परस्परासम्बन्धः कल्प्यत इति।** सामानाधिकरण्यरूपपरम्परासम्बन्धविषयकत्वमुक्तप्रतीतेः कल्प्यमित्यर्थः। इदमुपलक्षणम्। सामानाधिकरण्यरूपपरम्परासम्बन्धविषयकत्वमङ्गीकृत्याऽन्योन्याभावानङ्गीकारे एतद्घटरूपमेतद्घटात् पृथगितिप्रतीत्यनुपपत्तेः, एतद्रूपमेतद्रूपात् पृथगितिप्रतीत्यापत्तेश्च। अन्योन्याभावस्याऽतिरिक्तस्याऽभ्युपगमे तु पृथक्त्वपदस्याऽन्योन्याभावलक्षणया सर्वमुपपादनीयमिति। **पञ्चमीप्रसङ्गादिति।** अन्योन्याभावार्थकपदयोगस्य पञ्चमीप्रयोजकस्य तत्र सत्त्वादिति भावः।

रामरुद्री।

त्वम्, घटः पटात् पटघटाभ्यां घटपटमठेभ्यश्च पृथगित्यत्राऽवधिभेदस्याऽऽवश्यकत्वात्, तत्राऽपि तत्तदवधिकपृथक्त्वसमुदायस्य विषयत्वे बाधापत्तेः। अन्योन्याभावेन तदुपपादने च पञ्चमीविरोध एव दोष इत्याहुः।

**प्रतीत्यापत्तेश्चेति।** स्वनिरूपितावधित्वसम्बन्धेन पृथक्त्वादेरन्वयोपगमे नैवाऽऽपत्तिरनुपपत्तिर्वेत्यवधातव्यम्। **मूले—पञ्चमीप्रसङ्गादिति।** 'अन्यारादितरर्ते—'इति सूत्रेणाऽन्यार्थकपदयोगे पञ्चमी अनुशिष्यते, अन्यथा घटात् पृथगित्यादौ पञ्चम्यनुपपत्तेः। तत्र चाऽन्यत्वं यदि भेदरूपमेव विवक्ष्यते, तदा तदर्थकनञादिपदयोगेऽपि पञ्चम्यापत्तिरिति तस्य पृथक्त्वरूपगुणवदर्थकत्वमावश्यकम्। न चैवमितरपदोपादानमफलम्, तदुपादानादेवाऽन्यादिपदस्याऽन्यार्थकादिपरत्वलाभसम्भवात्। गोवृषन्यायेन वा तदुपादानम्। यद्वाऽन्यपदमत्र पृथक्त्ववदर्थकपरमास्ताम्। तेन घटः पटात् पृथगित्यत्र पञ्चम्युपपत्तावपि घटे पटात् पृथक्त्वमित्यत्र कुतस्तत्सिद्धिरित्येतदर्थं पृथक्त्वार्थपरेतरपदोपादानं कृतम्। वस्तुतस्तु पृथक्त्वस्य विशेषणविधयाऽन्यार्थत्वसम्भवेनेतरपदोपादानं न तद्वाचकपदसङ्ग्रहाय। न वाऽन्यपदोपादानमपि पृथक्त्वरूपगुणवदर्थकपदोपादानाभिप्रायेण, पृथक्त्वादेः सावधिकत्वेनाऽवधिषु आदेव तद्योगे पञ्चमी सिद्धेः पृथक् तत्सूत्रणवैफल्यात्, किं तु अन्योन्याभाववदर्थकपदयोगे पञ्चम्यनुशासनायैव तदुपात्तम्। अन्यथाऽन्योन्याभावार्थके घटाद्भिन्न इत्यादौ पञ्चम्यनुपपत्तेः। न चाऽन्यादिपदस्य भेदवदाद्यर्थकत्वमसिद्धमिति वाच्यम्। घटाद्भिन्न इत्युक्ते घटो न वेति संशयानुत्पत्तेरेवाऽत्र प्रमाणत्वात्, साध्यवदन्यावृत्तित्वमित्यादिप्रामाणिकप्रयोगे तदर्थकताया दृष्टत्वाच्च। न चैवं नञादिपदयोगेऽपि पञ्चमी प्रसज्यते इति वाच्यम्। अन्योन्याभावार्थकपदयोगो हि स्वार्थान्योन्याभावान्वयिप्रतियोगित्वान्वयित्वम्। घटो नेत्यादौ तु प्रतियोगितासंसर्गेणैव तदन्वयोपगमान्न तद्योग इत्युक्तापत्तिवारणादिति सर्वमवदातम्।

इदं त्ववधातव्यम्। कपालक्रियया कपालघटयोः संयोगस्य कपालसंयोगेन कपालघटसंयोगस्य च वारणाय तत्तद्वृत्तिसंयोगे तयोः परस्परावधिकपृथक्त्वस्य कारणत्वस्योपेयतयाऽतिरिक्तगुणसिद्धिः। न ह्यत्राऽन्योन्याभावेनैव चरितार्थता, तस्य कपालघटयोरुभयोरपि सत्त्वेन तदभावेन संयोगानुत्पादस्य कथञ्चिदप्युपपादयितुमशक्यत्वादित्यस्मत्पितृचरणाः। न च संयोगे पृथक्त्वस्य हेतुत्वमप्रामाणिकमिति

अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥

तस्माद्यदर्थयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति ॥ ११२ ॥ ११३ ॥ ११४ ॥ इति पृथक्त्वनिरूपणम् ॥

संयोगं निरूपयति । अप्राप्तयोरिति ।

तं विभजते । कीर्तित इति । एषः—संयोगः ॥ ११५ ॥

दिनकरी ।

अत्र नव्याः अन्योन्याभाव एव पृथक्त्वम् न तु गुणान्तरम् । न च घटो नेत्यत्र पञ्चम्यापत्तिरन्योन्याभावविशिष्टार्थकपदयोग एव 'अन्याराद्रितरर्ते' इत्यादिसूत्रेण पञ्चमीविधानात् । नञस्तु नाऽन्योन्याभावविशिष्टार्थकत्वम्, परं त्वन्योन्याभावार्थकत्वमित्यस्यान्यत्र सिद्धान्तितत्वात् । यदि च घटाद्भेद इत्यादौ पञ्चम्यनुपपत्त्या भेदार्थकपदयोगः पञ्चमीप्रयोजकतया 'अन्यारात्–'इति सूत्रेण बोध्यत इति घटो न पट इत्यत्र पञ्चम्यापत्तिर्दुर्वारेति विभाव्यते, तथापि निपातातिरिक्तान्योन्याभावार्थकपदयोगस्यैव पञ्चमीप्रयोजकत्वं कल्प्यते, अनुशासनस्य प्रयोगानुरोधित्वादित्याहुः ॥ ११२ ॥ ११३ ॥ ११४ ॥ इति पृथक्त्वनिरूपणम् ॥

मूले—अप्राप्तयोरित्यादिना संयोगस्वरूपमुक्तं, तत्र प्राप्तिः सम्बन्धः, स च समवायोऽपीत्यत उक्तमप्राप्तयोरिति । लक्ष तु संयोगत्वं जातिरिति ।

मूले–आद्योऽन्यतरकर्मज इति । ननु संयोगत्वं नान्यतरकर्मणः कार्यतावच्छेदकमुभयकर्मजसंयोगे संयोगजसंयोगे च व्यभिचारादिति चेन्न । विजातीयकर्मत्वेन विजातीय योगत्वेन समवायेन हेतुहेतुमद्भावात् । उभयकर्मजसंयोगादौ च तादृशवैजात्याभावेन व्यभिचाराभावात् । एवमुभयकर्मणः संयोगस्यापि च संयोगं प्रति हेतुत्वं बोध्यम् ॥११५॥

रामरुद्री ।

वाच्यम् । युतसिद्धेः संयोगविभागप्रयोजकत्वमभ्युपगच्छतां भाष्यकृतामपि तस्य सम्मतत्वात् । तथा हि भाष्ये युतसिद्धिर्द्विधा निरुक्ता, एका नित्यानामन्या चाऽनित्यानाम् । तत्राऽऽद्या पृथग्गतिमत्त्वम्, अपरा तु पृथगाश्रयाश्रयित्वम् । तदेतद्भाष्यं व्याचक्षाणैर्दीधितिकृद्भिरपि पृथग्गतिमत्त्वस्य संयोगजनकक्रियारमकत्वं, पृथगाश्रयाश्रयित्वमित्यस्य च कारणाकारणसंयोगवत्त्वं कार्यस्येत्यर्थोऽपि प्रदर्शितः । अत एवैका नित्यानामपरा त्वनित्यानामपीति विभागः सङ्गच्छते । कर्मजन्यसंयोगे पृथक्त्वविशिष्टं कर्म, संयोगजन्ये च तादृशः संयोगः प्रयोजक इति प वसितार्थः । पृथक्त्वस्य स्वातन्त्र्येण हेतुत्व एव लाघवात् क्रियादिशरीरान्तर्भावित्वेन कारणत्वमप्रामाणिकमित्यालोच्यैवोक्तयुतसिद्ध्योः प्रयोजकत्वमुक्तं भाष्ये, न हेतुत्वमित्यवधेयम् ॥ ११२ ॥ ११३ ॥ ११४ ॥ ॥ इति पृथक्त्वनिरूपणम् ॥

मूले—अप्राप्तयोरिति । युतसिद्धयोरित्यर्थः । अयुतसिद्धिश्च द्वित्वविशिष्टद्वित्वम् । वैशिष्ट्यं च स्वतादात्म्य—स्वावच्छिन्नाधिकरणकालत्वव्यापकाधिकरणतावत्त्वोभयसम्बन्धेन । व्यापकत्वं चाऽवच्छेदकत्वसम्बन्धेन । अधिकरणतावत्त्वं तु स्वावच्छेदकीभू भयावृत्तिधर्मसामानाधिकरण्य—स्वनिरूपिताधेयतावच्छेदकोभयावृत्तिधर्मसामानाधिकरण्योभयसम्बन्धेन । कालिकादिसम्बन्धवारणाय च तादृशतादृशसम्बन्धानवच्छिन्नत्वमधिकरणताविशेषणं देयम् । इत्थं च तादृशकालत्वव्यापकाधिकरणतावदन्यत्वमेव युतसिद्धत्वमिति केचिदाहुः । तदसत् । एतादृश्या युतसिद्धेर्घटाभावभूतलादिष्वपि सम्भवेन तत्सम्बन्धस्याऽपि संयोगत्वापत्तेः ।

वस्तुतस्तु अप्राप्तयोरित्यस्य पृथग्भूतयोरित्यर्थः । इत्थं च द्रव्यगुणयोः परस्परं पृथग्भावविरहात्

**तथोभयस्पन्दजन्यो भवेत् संयोगजोऽपरः ।**
**आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥**
**मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।**
**कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥ ११७ ॥**

सन्निपातः—संयोगः । द्वितीयः-उभयकर्मजः ।

दिनकरी

**मूले—भवेत् संयोगजोऽपर इति ।** ननु संयोगजसंयोगे मानाभावः, यत्र कपालक्रियया कपालतरुसंयोगस्ततः कुम्भतरुसंयोगस्तत्र कपालक्रियाया एव कुम्भतरुसंयोगं प्रति कारणत्वं, न तु कपालतरुसंयोगस्येति चेन्न, समवायेन संयोगं प्रति समवायेन क्रियायाः कारणत्वात्, कुम्भे समवायेन क्रियाया अभावेन कुम्भे तरुसंयोगानुपपत्तेः क्रियायाः सामानाधिकरण्यसम्बन्धेन हेतुत्वान्तरकल्पनापेक्षया समवायेन संयोगस्यैव हेतुत्वकल्पनौचित्यात्। वस्तुतो यत्र कपालक्रियया कपालान्तरेण तरुणा चैकस्मिन् क्षणे संयोगस्तदुत्तरक्षणे घटोत्पत्तिः कपालक्रियानाशश्च, नाशकस्योत्तरसंयोगस्य पूर्वं सत्वात्, तदुत्तरक्षणे कुम्भतरुसंयोगानुपपत्तेः, पूर्वक्षणे कपालक्रियाया नाशात्तस्मात् कपालसंयोग एव तत्र कारणमिति संयोगजसंयोगसिद्धिर्निराबाधैवेति ।

अत्र केचित्, कथं संयोगस्य त्रैविध्यमन्यतरकर्मजन्यसंयोगस्याप्रसिद्धेः. यत्रेषुक्रिययेषुवृक्षयोः संयोगस्तत्र संयोगाधिकरणे वृक्षे क्रियाविरहेण व्यभिचारादन्यतरकर्मणः संयोगं प्रति कारणत्वस्य वक्तुमशक्यत्वादित्याहुः, तन्न, कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किञ्चिद्व्यक्त्यधिकरणाभूतयावद्व्यक्तिवृत्तिकाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव कारणताघटकम् । एवं च कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकाव-

रामरुद्री ।

तयोः सम्बन्धो न संयोगः । नचैवं घटपटयोः कालिकसम्बन्धोऽपि तथा स्यात् पार्थक्यस्याऽनपायादिति वाच्यम् । पृथक्त्वजन्यत्वस्य सम्बन्धे विवक्षितत्वेन तद्व्युदासात् । न च संयोगस्य पृथक्त्वजन्यत्वे मानाभाव इति वाच्यम् । घटादिक्रियया घटमात्रवृत्तिसंयोगस्योत्पत्तिवारणायैव तत्स्वीकारावश्यकत्वात् । विवेचितं चैतद्विस्तरेणाऽस्माभिः पृथक्त्वग्रन्थे ।

**टीकायाम्-हेतुत्वं बोध्यमिति ।** तादृशजातौ मानाभावादेकतरकर्मप्रयुक्तत्वोभयकर्मप्रयुक्तत्वरूपोपाधिद्वैविध्यादेव तद्वैविध्यमिति तु तत्त्वम् । भेदेनोपादानं तु कर्मणः समवायेनेव वक्ष्यमाणदिशा सम्बन्धान्तरेणाऽपि हेतुत्वं स्वीकर्तव्यमिति द्योतयितुमेवेति सर्वमनाकुलम् ।

**हेतुत्वकल्पनौचित्यादिति ।** नन्वेतादृशदोषवारणाय कर्मणः समवायेनैव संयोगत्वावच्छिन्नं प्रति हेतुत्वमास्ताम्, एकैव च संयोगव्यक्तिर्घटकपालतरुवर्तिनी सम्भवतीति न घटतरुसंयोगस्याऽकारणकत्वप्रसक्तिः, घटे क्रियाया अभावाद्व्यभिचारापत्तिश्चाऽन्यतरकर्मजन्यस्थलेऽपि तथाविधव्यभिचारापत्तेरपरिहार्यतया तद्वारणप्रकारानुसारेणैव वारणीयेत्यतो युक्त्यन्तरमवलम्बते । **वस्तुत इति ।** इदमुपलक्षणम् । संयोगजसंयोगानभ्युपगमे यत्र पाणिक्रियया पाणिशाखा हस्तशाखाशरीरशाखासंयोगास्तदुत्तरं हस्तनाशश्च, तादृशानन्तस्थलेऽनन्तकर्मजसंयोगकल्पनागौरवं च बोध्यम् ।

**कार्याव्यवहितप्राक्क्षणावच्छेदेनेत्यादि ।** अत्र कार्यतावच्छेदकावच्छिन्ने यत्किञ्चिद्व्यक्तित्वानुपादाने रासभेऽतिव्याप्तिः, तस्याऽपि तादृशकार्यतावच्छेदकावच्छिन्नाधिकरणयत्किञ्चिद्व्यक्तिवृत्तितया

**तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्तितः ।**
**अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥**

तृतीय इति । **संयोगजसंयोग इत्यर्थः** 'तृतीयः स्यात्'इति **पूर्वेणाऽन्वितम् ।**

**दिनकरी ।**

च्छिन्नयत्किञ्चिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कारणाभाववत्वमेव व्यभिचारः । नचैवंविधो व्यभिचारः प्रकृते, इषोरपि तादृशयावदन्तर्गततया तत्र क्रियाभावासत्वादिति दिक् ।

नन्वेवं यत्र हस्तक्रिया, ततो द्वितीयक्षणे शरीरक्रिया, तत्र चतुर्थक्षणे हस्ततरुसंयोगस्तस्मिन्नेव क्षणे शरीरक्रियाजन्यशरीरपूर्वदेशसंयोगनाशस्तदुत्तरक्षणे शरीरतरुसंयोगो जायते, तस्य च हस्ततरुसंयोगजन्यत्वं शरीरक्रियाजन्यत्वं वेत्यत्र विनिगमनाविरहः । न चोभयमेव तत्र हेतुः जातिसङ्करप्रसङ्गादिति चेन्न, तत्र संयोगद्वयस्यैवोपगमात्, द्वित्वाग्रहस्तु सादृश्यदोषादित्येके ।

तत्र चित्रसंयोग एवोत्पद्यते, कारणत्वं तु तत्र संयोगकर्मोभयत्वेनेति चित्रसंयोगो वि-

**रामरुद्री ।**

कार्यतावच्छेदकावच्छिन्नाधिकरणयावद्व्यक्तिनिष्ठगगनाभावप्रतियोगितानवच्छेदकत्वासम्भवात् । तदुपादाने तु तादृशव्यक्त्यन्तरवृत्त्यावद्व्यक्तिनिष्ठाभावप्रतियोगित्वात्तस्य नाऽतिव्याप्तिः । अन्यतरकर्मणः संयोगहेतुत्वनिर्वाहाय चाऽधिकरणे यावत्त्वविशेषणम् । अन्यथा तादृशयत्किञ्चिद्व्यक्त्यधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वस्यैव कर्मत्वे सत्त्वेनाऽतिव्याप्तेर्दुरुद्धरत्वापत्तेः । कार्यतावच्छेदकावच्छिन्नविशिष्टान्यधर्मवत्त्वमिति तु निष्कर्षः । वैशिष्ट्यञ्च स्वाधिकरणयावन्निष्ठाभावप्रतियोगितावच्छेदकत्वसम्बन्धेनेति । कार्यतावच्छेदकावच्छिन्ना यावत्यो व्यक्तयस्तत्प्रत्येकाधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव तत् । कार्यताच्छेदकावच्छिन्नसमुदायवत्त्वमिति तु निष्कर्षः, समुदायत्वं च स्वाधिकरणवत्त्वसम्बन्धेन । अधिकरणवत्ता च स्ववृत्त्यभावप्रतियोगितानवच्छेदकत्वसम्बन्धेनेति तु न सत्, व्यभिचारज्ञानाप्रतिबध्यनिश्चयविषयस्य कारणत्वरूपत्वेऽपसिद्धान्तात्, वक्ष्यमाणव्यभिचारनिश्चयस्य च भिन्नविषयत्वेनेदृशकारणत्वबुद्ध्यविरोधित्वादिति ध्येयम् ।

**इत्येक इति ।** उदयनाचार्यानुयायिन इत्यर्थः । एके इत्यनेन व्यक्तिद्वयकल्पनागौरवमेतन्मतेऽस्वरसः सूचितः । **अपर इति ।** एतन्मते तु चित्ररूपस्थले नीलत्वाद्यवच्छिन्नं प्रति नीलान्यरूपत्वादिनेव कर्मजादिसंयोगत्वावच्छिन्नं प्रति संयोगत्वादिना बहुविधप्रतिबन्धकत्वस्य चित्ररूपत्वावच्छिन्नं प्रति नीलान्यपीतान्यरूपत्वादिनेव चित्रसंयोगत्वावच्छिन्नं प्रति कर्मसंयोगादिभेदेन बहुविधकार्यकारणभावस्य कल्पनावश्यकताऽप्रामाणिकचित्रत्वरूपवैजात्यकल्पनाधीनगौरवपरम्पराग्रस्तत्वेनाऽत्यन्तहेयत्वं च सूचितम् । स्वमतं सूचयितुमाह । **अन्यत्र विस्तर इति ।** इत्थं च कर्मसंयोगयोः कार्यतावच्छेदककोटावव्यवहितोत्तरत्वस्यैव निवेशनीयत्वान्निरुक्तस्थले चोभयजन्यैकसंयोगव्यक्तेरेवाऽभ्युपगमान्न कश्चिद्दोष इति भावः ।

कारिकायाम्-**अभिघातो नोदनं चेति ।** केचित्तु अभिघातनोदनतदन्यसंयोगभेदात्त्रैविध्यमाहुस्तन्मतनिराकरणायैव पुनरित्थं विभजनम् । विवेचनीयं चैतदग्र इति ।

इदमिवह विचार्यते । कर्मणः संयोगस्य चोपदर्शितरीत्या पारिभाषिकं कारणत्वमुपपद्यतां नाम, अन्यतरकर्मजन्यस्य संयोगस्य प्रतिनियतापरवस्तुमात्रनिष्ठत्वं तु कुतः ? कर्मणस्तादृशवस्त्वन्तरेऽपि विरहेण तदभावात्तदनुपपादस्योपपादयितुमशक्यत्वात् । न चेतरयावत्कारणसामग्रीसहितस्य कर्मादेः कार्यव्याप्यत्वमात्रमेवाऽभ्युपगन्तव्यं, न तु तद्व्यापकत्वमपीति नोक्तदोष इति वाच्यम् । तथा सति तादृशापर-

आदिमः—अभिघातः। द्वितीयो नोदनाख्यः इति ॥इति संयोगनिरूपणम्।

दिनकरी।

जातीय एवेति न साङ्कर्यमित्यपरे, इत्यन्यत्र विस्तरः॥ इति संयोगनिरूपणम्॥

रामरुद्री।

वस्तुनि निष्क्रिये संयोगोत्पादस्याऽऽकस्मिकत्वापत्तेः। इष्टापत्तौ चोक्तरीत्या प्रत्यक्षत्वावच्छिन्नं प्रत्येव लाघवादुद्भूतरूपादेर्हेतुत्वसम्भवेन बहिरिन्द्रियजन्यत्वस्य कार्यतावच्छेदककोटावनन्तर्भावापत्तेः। तस्मात् 'कर्मणः संयोगं प्रत्याभिमुख्याख्येन सम्बन्धेनाऽपि हेतुत्वान्तरमभ्युपेयम्। तच्च दैशिकविशेषणताविशेष एवेति नोक्तदोषसम्भव इत्यन्यत्र विस्तरः॥

॥ इति संयोगग्रन्थः॥

अत्र विभागनिरूपणे आवश्यकत्वात्कर्म निरूप्यते। तत्र 'संयोगविभागयोरनपेक्षं कारणं कर्म—' इति वैशेषिकसूत्रम्। अत्राऽयं सम्प्रदायः। अनपेक्षत्वं स्वाधिकरणकालध्वंसाधिकरणक्षणोत्पत्तिकभावानपेक्षत्वम्। तेन कर्मणाऽपि विभागजनने पूर्वसंयोगद्रव्ययोः संयोगजनने च पूर्वसंयोगनाशद्रव्ययोश्चाऽपेक्षणेऽपि न क्षतिः, द्रव्यसंयोगयोः स्वोत्तरोत्पत्तिकत्वविरहात् संयोगनाशस्य भावत्वविरहात्तदपेक्षत्वस्याऽकिञ्चित्करत्वात्। अत्र स्वाधिकरणकालध्वंसाधिकरणक्षणवृत्तीत्युक्तावसम्भवः, कर्मणा तादृशस्य संयोगस्य विभागजननेऽपेक्षणादतस्तदुत्पत्तिकेति। तादृशकालध्वंसाधिकरणकालोत्पत्तिकेत्युक्तावपि स एव दोषः, द्रव्यादेरपि कर्माधिकरणकालध्वंसाधिकरणीभूतमहाकालस्थूलकालाद्युत्पत्तिकत्वादतः क्षणपदम्। स्वाधिकरणक्षणोत्पत्तिकभावानपेक्षत्वमित्युक्तावपि स्वाधिकरणक्षणोत्पत्तिकस्य स्वस्यैव कर्मणाऽपेक्षणात्पुनस्तद्दोषतादवस्थ्यमतः स्वाधिकरणकालध्वंसाधिकरणकालोत्पत्तिकेत्युक्तम्। ननु स्वाधिकरणक्षणोत्पत्तिकस्वभिन्नभावानपेक्षेत्येवोच्यताम्। न च यत्कर्मव्यक्त्या स्वाधिकरणोत्पन्नोत्तरदेशव्यक्त्या संयोगो जनितस्तत्कर्मण्यव्याप्तिः, तेन स्वाधिकरणक्षणोत्पत्तिकस्य स्वभिन्नस्य तथाविधद्रव्यस्यैव तादृशसंयोगजननेऽपेक्षणादिति वाच्यम्। स्वोत्तरोत्पन्नोत्तरदेशसंयोगजनिकायां क्रियायामुत्तरसंयोगविभागोभयाजनिकायां च क्रियायामव्याप्तिभिया लक्षणस्य जातिघटितत्वावश्यकत्वेन स्वदुक्तस्थलीयकर्मव्यक्तेरतथात्वेऽपि तादृशव्यक्त्यन्तरवृत्तिसत्ताभिन्नजातिमत्त्वरूपलक्षणस्य तत्राऽपि सम्भवेनाऽव्याप्तेरसम्भवादिति चेन्न। तस्याऽपि लक्षणान्तरत्वात्। अत एव स्ववृत्तिप्रागभावप्रतियोग्यनपेक्षेत्येवाऽस्तु, किमुत्पत्त्यादिनिवेशेन? प्रागभावश्च भावभिन्नो ग्राह्यः, तेन संयोगनाशापेक्षत्वेऽपि न क्षतिरिति कस्यचित्प्रलपितमप्यपास्तम्, तस्याऽपि लक्षणान्तरत्वेन प्रकृते दोषाभावादिति। तादृशक्षणोत्पत्तिकभावानपेक्षसंयोगजनकत्वमात्रोक्तौ तादृशविभागजनकत्वमात्रोक्तौ च संयोगजसंयोगविभागजविभागावादाय यथाक्रमं संयोगविभागयोरतिव्याप्तिरत उभयोपादानम्। कारणाकारणसंयोगस्य कार्याकार्यसंयोगं प्रति स्वोत्तरोत्पन्नकर्मसहकारेण विभागं प्रति च जनकतया तत्राऽतिव्याप्तिवारणाय विभागेऽपि स्वोत्तरोत्पन्नभावानपेक्षत्वमुपात्तम्। यत्राऽङ्गुलीशाखासंयोगः शाखायां च कर्मेत्येकः कालः, ततोऽङ्गुलीशाखाविभागो हस्तोत्पत्तिश्च, ततोऽङ्गुलीशाखासंयोगनाशो विनश्यदवस्थाङ्गुलीशाखासंयोगाद्धस्तशाखासंयोगश्च, तत्राङ्गुलीशाखासंयोगेऽतिव्याप्तिवारणाय संयोगेऽपि तदुपादानम्। यद्यप्येवमपि यत्राऽङ्गुलीशाखासंयोगः शाखायां च कर्मत्येकः कालः, ततोऽङ्गुलीशाखासंयोगाद्धस्तशाखासंयोगोऽङ्गुलीशाखाविभागश्च, तत्राङ्गुलीशाखासंयोगे संयोगविभागोभयजनकेऽतिव्याप्तिर्दुर्वारा, तथाऽपि स्वपश्चाद्भाव्यजन्यो यः स्वजन्यविभागस्तदधीनसंयोगजनकत्वं विवक्षितमिति नाऽतिप्रसङ्गः। अत्र द्रव्येऽतिव्याप्तिवारणायाऽजन्यान्तं विभागविशेषणम्। संयोगविशेषणत्वे स्वपश्चाद्भाविपूर्वसंयोगनाशाधीनस्यैव संयोगस्य जनकतया क्रियामात्रेऽसम्भवापत्तेः। स्वपश्चाद्भाव्यजन्यत्वं तु स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणसमयवृत्तित्वमेव, लाघवात्। यत्राऽऽदौ घटक्रिया, ततो घटपूर्वदेशविभागः, पटोत्पत्तिश्च, ततो घटपूर्वदेशसंयोगनाशः, ततो घटपटयोः संयोगस्तत्र पटेऽतिव्याप्तिः, तस्याऽपि स्वोत्तरोत्पन्नानपेक्षो यो घटपूर्वदेशविभागस्तदधीनघटसंयोगजनकत्वादतः स्वजन्येति विभागविशेषणम्। विभागजविभागेऽतिव्याप्तिवारणा-

रामरुद्री।

यैव च तादृशविभागजनकत्वं विहाय तदधीनसंयोगजनकत्वपर्यन्तमनुसृतम्। विभागाधीनत्वं च न विभागजन्यत्वम्। विभागस्य पूर्वसंयोगनाशेनाऽन्यथासिद्धतयोत्तरदेशसंयोगाहेतुत्वात्। अपि तु विभागोत्तरोत्पत्तिकत्वम्। न चैवं यत्राऽङ्गुलीकर्मजनितशाखाङ्गुलीसंयोगः शाखायां च कर्मत्येकः कालः, ततः शाखाकर्मणा शाखाङ्गुलीविभागो हस्तोत्पत्तिश्च, ततो हस्तशाखासंयोगे शाखाङ्गुलीसंयोगजन्येऽतिव्याप्तिरिति वाच्यम्। असमवायिकारणस्य कार्यसद्भावेन हेतुतयोक्तस्थले हस्तशाखासंयोगस्यैवोत्पाद्यासम्भवात्। उक्तनियमानङ्गीकारे तु विभागाधीनत्वं विभागप्रयोज्यत्वमेव जन्यतज्जन्यसाधारणं विवक्षणीयमिति न कश्चिद्दोषः। यत्र प्रथमं घटोत्पत्तिः, ततस्तत्र गुरुत्वोत्पत्तिः, गुरुत्वात्पतनम्, ततश्च घटभूतलसंयोगस्तत्र स्वपश्चाद्भाव्यजन्यस्वजन्यगुरुत्वाधीनं भूतलसंयोगमादाय घटे, यत्राऽङ्गुलीतन्तुसंयोगपटोत्पत्ती, ततः पटाङ्गुलीसंयोगः, ततः पटहस्तसंयोगः, ततः पटशरीरसंयोगश्च, तत्राऽङ्गुलीतन्तुसंयोगेऽपि स्वपश्चाद्भाव्यजन्यस्वजन्यपटहस्तसंयोगाधीनपटशरीरसंयोगजनकत्वमादायाऽतिव्याप्तिरतो विभागपदम्। यत्राऽङ्गुलीकर्मजनिताङ्गुलीशाखासंयोगः शाखायां च कर्म, ततोऽङ्गुलीशाखाविभागः, ततोऽङ्गुलीशाखासंयोगनाशस्तत्राऽङ्गुलीशाखासंयोगे स्वपश्चाद्भाव्यजन्यस्वजन्यविभागाधीनं स्वनाशं प्रति प्रतियोगिविधया जनकत्वमादायाऽतिव्याप्तिवारणाय च संयोगपदमिति ध्येयम्। यद्वा संयोगविभागोभयासमवायिकारणतावच्छेदकरूपवत्त्वं संयोगजनकविभागासमवायिकारणजातीयत्वं वा तत्, अनपेक्षकारणत्वस्याऽसमवाय्यन्तरनिरपेक्षकारणत्वरूपस्याऽसमवायिकारणत्वे पर्यवसानात्। संयोगस्तु विभागस्य निमित्तं, नाऽसमवायी। तेन कारणाकारणसंयोगे कार्याकार्यसंयोगासमवायिकारणत्वं कारणाकारणविभागजनकत्वं चाऽऽदाय नाऽतिव्याप्तिः। प्रतिबन्धकपूर्वसंयोगापगमेनाऽन्यथासिद्धो विभागो नोत्तरसंयोगे जनक इति मतेनेदम्। तेन कारणाकारणविभागे कार्याकार्यविभागं स्वजन्यपूर्वसंयोगनाशद्वारा कारणाकारणसंयोगं च प्रत्यसमवायिकारणत्वमादाय नाऽतिव्याप्तिः। संयोगस्य विभागासमवायिकारणत्वाभ्युपगमे तु प्रयोज्यप्रयोजकभावापन्नसंयोगविभागोभयासमवायिकारणत्वं वक्तव्यम्। उत्तरसंयोगस्य विभागप्रयोज्यत्वात्प्रयोज्यप्रयोजकभावः कर्मजन्यसंयोगविभागयोर्नानुपन्नः। अत्र द्रव्यवारणायाऽसमवायीत्यन्यत्र विस्तरः। केचित्तु संयोगविभागपदयोर्विशेषपरतया संयोगाजन्यसंयोगासमवायिकारणत्वविभागाजन्यविभागासमवायिकारणत्वयोरेकैकश्येन पृथगेव लक्षणत्वमभिमतमित्याहुः। वैशेषिकैकदेशिनस्तु कर्मत्वजातिमत्त्वमेव कर्मणो लक्षणम्। तत्र च प्रमाणप्रदर्शनपरतयोक्तसूत्राऽवतारः। सामान्यतः संयोगकारणत्वादेः संयोगादावपि गतत्वेन तदवच्छेदकतया कल्प्यमानाया जातेः संयोगादिसाधारण्यप्रसङ्गेन तद्व्यावृत्तकारणतावच्छेदकतयैव तस्याः प्रसाधनीयतया तदुपदर्शनस्याऽऽवश्यकत्वात्। इत्थं च संयोगविभागयोर्यत्सापेक्षं कारणं तद्वृत्तिकारणताया एव विवक्षितत्वान्नाऽतिप्रसङ्गः। स्वाधिकरणसमयध्वंसाधिकरणक्षणोत्पत्तिकभावजन्यसंयोगविभागोभयकारणवृत्तिर्या कारणता तदन्यत्वं समुदितार्थः। संयोगजसंयोगस्य विभागजविभागस्य च तथाविधं कारणत्वमादाय क्रमेण संयोगविभागयोरतिव्याप्तिवारणाय संयोगविभागयोर्लक्षणे प्रवेशः। अन्यत् सर्वं पूर्ववदूह्यमित्याहुः।

आदौ क्रिया, ततो विभागः, ततः पूर्वसंयोगनाशः, तत उत्तरसंयोगोत्पत्तिः, ततः क्रियानाश इति कर्मणश्चतुःक्षणावस्थायित्वमौत्सर्गिकम्। कारणमात्रविभागात् कारणाकारणविभागाङ्गीकारे च पाकजप्रक्रियोपदर्शितदिशा षट्पञ्चक्षणावस्थायित्वं च। तत्र क्रियात एवोत्तरसंयोगस्याऽव्यवहितोत्तरक्षणे उत्पत्त्युपगमे सत्येव पूर्वसंयोगे उत्तरसंयोगापत्तिरतः पूर्वसंयोगस्योत्तरसंयोगे प्रतिबन्धकत्वमावश्यकम्। इत्थञ्च पूर्वसंयोगात्मकप्रतिबन्धकवशादेवोत्तरसंयोगस्य न पूर्वमुत्पादापत्तिः। अथ पूर्वसंयोगोत्तरसंयोगयोः केन रूपेण प्रतिबध्यप्रतिबन्धकभावः? न च संयोगत्वावच्छिन्नं प्रति संयोगत्वेन प्रतिबन्धकत्वम्, समानावच्छेदकत्वं च प्रत्यासत्तिः, तेन सत्यपि पृष्ठादौ वस्त्रसंयोगे शरे च पुङ्खजत्वादिसंयोगे शरीरशरादिकर्मणा न संयोगानुपपत्तिरिति वाच्यम्। कारणाकारणसंयोगजन्ये कार्याकार्यसंयोगे व्यभिचारात्। शाखादौ यदवच्छेदेनाऽङ्गुल्यादिसंयोगस्तदवच्छेदेनैव हस्तादिसंयोगोदयात्। एवमङ्गु-

रामरुद्री।

त्यादौ यत्सूक्ष्मभागावच्छेदेन शाखादिसंयोगस्तदवच्छेदेनैव हस्तादावपि शाखादिसंयोगोदयाच्च। अवयवस्यैवावयवावयवादेरपि अवयविनिष्ठसंयोगाद्यवच्छेदकत्वात्। अथ कर्मजन्यसंयोगत्वावच्छिन्नं प्रति उक्तप्रत्यासत्त्या संयोगत्वेन प्रतिबन्धकत्वम्। न चैवं मूलावच्छेदेन स्तम्भादिसम्बद्धदण्डादेः सत्यपि स्तम्भादिसंयोगेऽग्रावच्छेदेन संयोगापत्तिरिति वाच्यम्। इष्टत्वात्। मूलावच्छेदेनैव तत्र देशान्तरसंयोगानभ्युपगमात्, अग्रावच्छेदेन देशान्तरसंयोगस्य सर्वसिद्धत्वादिति चेन्न। यत्र दण्डादेः पूर्वसंयोगविनाशकाले उत्तरदेशारम्भकावयवकर्मणा तदारम्भकावयवेन समं संयोगोत्पत्तिरुत्तरदेशोत्पत्तिश्च, ततस्तदवयवसंयोगावच्छेदेनैव दण्डादेरुत्तरदेशसंयोगः तत्र व्यभिचारात्। न च तत्राऽवयवसंयोगज एवोत्तरसंयोगः, न तु कर्मज इति वाच्यम्। स्वजन्यसंयोगस्यैव कर्मनाशकतया तत्कर्मणो यावदाश्रयमवस्थानप्रसङ्गात्। किञ्च भूतलाद्युत्तरदेशे सत्यपि गगनादिसंयोगे निष्क्रियतेजोवाय्वादिघृतादि संयोगे च घटादिकर्मणा घटादिसंयोगोदयाद्व्यभिचारः। अथ तदीयकर्मजनितसंयोगत्वावच्छिन्नं प्रत्युक्तप्रत्यासत्त्या तन्निष्ठसंयोगत्वेन प्रतिबन्धकत्वम्। न चैवमुत्तरदेशनिष्ठावरकभित्त्यादिसंयोगस्य प्रतिबन्धकत्वानापत्तिरिति वाच्यम्। तत्र तत्तत्कर्मजनितसंयोगव्यक्तिं प्रति तत्तद्भित्त्यादिसंयोगव्यक्तेर्विशिष्य पृथगेव प्रतिबन्धकत्वात्। न च तथाऽपि यत्र मूलावच्छेदेनैव दण्डादिः स्तम्भादिसम्बद्धोऽग्रावच्छेदेन न कुत्राऽपि संयुक्तः तत्राऽग्रावच्छेदेन कर्मोत्पत्तौ द्वितीयक्षण एवाऽग्रावच्छेदेन संयोगोत्पत्तिप्रसङ्ग इति वाच्यम्। तत्राऽग्रावच्छेदेनाऽप्यन्ततः प्रभामण्डलादिसंयोगस्य गगनादिसंयोगस्य च सत्त्वादिति चेन्न। स्तिमितवस्त्रादौ सत्यप्यभिमुखावच्छेदेन जलघृतादिसंयोगे शरीरसंयोगोदयात् पृष्ठलग्नवस्त्रे आभिमुख्यावच्छेदेन शरीरसंयोगे सत्यपि शरीरवस्त्रयोरन्तरे जलालोकगगनादिसंयोगोदयाच्च। न च तत्राऽपि विभागात्तत्तत्संयोगनाशः कल्प्यते, अतिसान्निध्यबलाच्च नोपलभ्यत इति वाच्यम्। तथा सति संयुक्तद्रव्यमात्रस्य देशान्तरगमने बाधापत्त्याऽनुभवविरोधप्रसङ्गात्, तथा तन्तूनां सत्यारम्भकसंयोगे आरम्भकसंयोगाविरोधिकर्मणाऽनारम्भकसंयोगानुपपत्तिश्च, तत्राऽऽरम्भकसंयोगनाशोपगमे द्रव्यनाशप्रसङ्गात्। आरम्भकसंयोगातिरिक्तत्वविशेषणेऽपि पूर्वोक्तानुभवविरोधस्य दुर्वारत्वात्। न च तत्कर्मव्यक्तिजन्यविभागनाश्यसंयोग एव प्रतिबन्धक इति वाच्यम्। तथा सत्यनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रिययोत्तरदेशसंयोगे जनयितव्ये आकाशादिसंयोगस्याऽप्रतिबन्धकतया तदपसारणाय कारणमात्रे विभागजविभागकल्पनावैयर्थ्यप्रसङ्गात्। अथ तत्तत्कर्मव्यक्तिजन्यसंयोगे तत्तत्कर्मप्रयोज्यविभाग एव प्रतिबन्धकः। प्रयोज्यत्वकरणाच्चाऽऽरम्भकसंयोगविरोधिविभागजनकक्रियाजन्यसंयोगेऽप्याकाशादिदेशसंयोगस्य प्रतिबन्धकत्वम्, तत्तत्क्रियाव्यक्तेस्तत्तद्विभागं प्रति विशिष्य हेतुत्वात्तत्संयोगव्यक्तेस्तत्तद्विभागव्यक्तिप्रतिबन्धकतया वा सत्यपि कर्मणि कुतश्चिदेव विभागो न तु सर्वस्मादितिनियमसम्भवादिति चेन्न। दण्डादावुत्तरदेशे सत्यपि गगनादिसंयोगे निष्क्रियजलतेजोवाय्वादिघृतादिसंयोगे स्वाधिकरणसंयोगे च हस्तादिकर्मणा हस्ताभिघातोदयात्, अभिघाताधीनकर्मोत्पत्तिद्वारा तस्याऽपि हस्तादिकर्मप्रयोज्यविभागनाश्यत्वात्। न च जन्यत्वजन्यजन्यत्वोभयमात्रसाधारणप्रयोज्यत्वस्यैवाऽत्र प्रवेशान्नाऽयं दोष इति वाच्यम्। तथाऽपि तत्तत्क्रियाव्यक्तिभेदेनाऽनन्तप्रतिबध्यप्रतिबन्धकभावापत्तिः। यत्र पूर्वदेशसंयुक्ताङ्गुल्यां क्रिया, ततोऽङ्गुलीपूर्वदेशविभागो हस्तोत्पत्तिः ततोऽङ्गुलीपूर्वदेशसंयोगनाशो हस्तपूर्वदेशसंयोगश्च, ततोऽङ्गुल्यास्तस्मिन्नेव पूर्वदेशेऽवच्छेदकान्तरे पुनः संयोगोऽङ्गुलीपूर्वदेशविभागाद्धस्तपूर्वदेशविभागश्च, तत्राङ्गुल्याः पुनः पूर्वदेशसंयोगं प्रति हस्तपूर्वदेशसंयोगस्याऽङ्गुल्यां यत्सूक्ष्मभागावच्छेदेन पुनः पूर्वदेशसंयोगस्तत्सूक्ष्मभागच्छेदेनैव वर्तमानस्य प्रतिबन्धकत्वापत्तेश्च। इष्टापत्तौ च क्षणद्वयापलापापत्तेरिति चेन्न, तदीयकर्मजनितसयोगत्वावच्छिन्नं प्रति क्रियाविरहविशिष्टतन्निष्ठसंयोगत्वेन प्रतिबन्धकत्वम्। उत्तरदेशोपरि निष्क्रियजलालोकादिसंयोगेऽपि अन्यदीयकर्मणा संयोगोत्पादाच्छाखायामङ्गुलीसंयोगसत्त्वेऽप्यङ्गुलीसंयोगजन्यहस्तसंयोगोत्पादाच्च व्यभिचारवारणाय तदीयकर्मजनितेति। संयोगस्य क्रियाविरहविशिष्टत्वं चाऽवच्छेदकतावच्छिन्नसामानाधिकरण्यसम्बन्धेन। स्तिमितवस्त्रादौ जलादिसंयोगः पृष्ठलग्नवस्त्रजलादौ शरीरशरादिसंयोगश्च न क्रियाविरहविशिष्टः, वस्त्रजलादिक्रियोत्पत्तिदशायां

शब्दहेतुर्द्वितीयः स्यात् विभागोऽपि त्रिधा भवेत् ।
एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥
विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत् ।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥

विभक्तप्रत्ययासाधारणकारणं विभागं निरूपयति । विभाग इति ।

एककर्मेति । तदुदाहरणं तु श्येनशैलविभागादिकं पूर्ववद्बोध्यम् ।

तृतीयोऽपि—विभागजविभागः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति द्विविधः, आद्यस्तावद्यत्रैककपाले कर्म, ततः कपालद्वयविभागः, ततो घटारम्भकसंयोगनाशः, ततो घटनाशः, ततस्तेनैव कपालविभागेन सकर्मणः कपालस्याऽऽकाशविभागो जन्यते, तत आकाशसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः कर्मनाश इति । न च तेन कर्मणैव कथं देशान्तरविभागो न जन्यत इति वाच्यम् । एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्याऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात् । अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात्, तस्माद्यदोद्मनारम्भकसयोगप्रतिद्वन्द्वि-

दिनकरी ।

**पूर्ववदिति** । संयोगवदित्यर्थः । तेनैव कपालविभागेनेति । तेन कपालविभागेनैवेत्यर्थः । एवकारेण कर्मणो व्युदासः । **कपालस्याकाशविभागो जन्यत इति** । अन्यथा कपालाकाशसयोगस्य नाशकाभावेन नित्यत्वापत्तिरेव, कपालाकाशसंयोगस्य प्रतिवन्धकस्य

रामरुद्री ।

तत्संयुक्तजलादिशरीरशरादेरपि सक्रियत्वात् । न हि निश्चलं पूर्वदेशतो न विभज्यैवोत्तरदेशेन संयुज्यत इति कश्चिदुपैति । क्रियाविरहविशिष्टतदवच्छिन्नसंयोगो विरोधीति तु पर्यवसितार्थः । तेन मूलावच्छेदेन निश्चलतन्त्वाद्यन्तरेण संयुक्तेऽपि तन्त्वन्तरेऽग्रावच्छेदेन क्रियातो विनाऽप्यारम्भकसंयोगनाशं नाऽग्रावच्छेदेन संयोगानुपपत्तिरिति गुणप्रकाशदीधितिरहस्ये मथुरानाथतर्कवागीशैरुक्तम् । तत्रेदं चिन्त्यते । एवं सति विरुद्धदिक्क्रिययोर्द्रव्ययोरुत्तरसंयोगस्य तयोर्विभागमन्तरेणाऽप्युत्पादापत्तिः, पूर्वसंयोगस्य क्वचिदप्याश्रये क्रियाविरहवैशिष्ट्यविरहेणाऽप्रतिबन्धकत्वात् । न च तत्र क्रियावद्द्रव्यान्तरनिष्ठसंयोगानामप्रतिबन्धकत्वेऽपि तत्समशीलगगनादिसंयोगानामेव प्रतिबन्धकत्वमस्त्विति वाच्यम् । एवं सति गगनादिसंयोगस्यैव साक्षात्प्रतिबन्धकत्वसम्भवेनोक्तगुरुतरधर्मपुरस्कारेण पूर्वसंयोगस्य प्रतिबन्धकत्वकल्पनानौचित्यात् । आत्मसंयोगत्वेन तथात्वे बहुतरलाघवसम्भवाच्च । न चाऽविरुद्धदिक्क्रियाविरहवैशिष्ट्यमेव प्रतिबन्धकतावच्छेदककुक्षौ निवेशनीयमिति नैष दोष इति वाच्यम् । एवमप्युभयकर्मजसंयोगस्थल उत्तरसंयोगानन्तरमुत्तरोत्तरसंयोगापत्तेर्दुर्वारत्वात्, द्वयोरपि संयोगयोः क्रियासमानाधिकरणतयाऽप्रतिबन्धकत्वात् । तस्मात् कया रीत्या पूर्वसंयोगस्य प्रतिबन्धकत्वमिति । तथाऽपि तत्तत्संयोगविशेषाणां प्रातिस्विकरूपेण केनचिदनुगतरूपेण वा प्रतिबन्धकत्वं सूक्ष्मधियासैव विषयीकरणीयम् ।

इत्थं च पूर्वसंयोगस्योत्तरसंयोगप्रतिबन्धकत्वे सिद्धे तदपसारणाय, तन्नाशकस्य विभागस्योत्पत्तिः प्रथममपेक्ष्यते । ननु तथाऽपि विभागपूर्वसंयोगयोः केन रूपेण नाश्यनाशकभाव इति चेन्न, द्रव्यनाशाजन्यसंयोगनाशत्वेन कार्यता, विभागत्वेन कारणता, संयोगत्वविशिष्टफलोपधायकत्वं च प्रत्यासत्तिः कारणस्य, कार्यस्य प्रतियोगित्वमिति गृहाण, इत्थमेव विभागं प्रति पूर्वसंयोगस्य हेतुत्वान्न विभागोपधायकत्वं सर्वेषामापद्यत इति संक्षेपः । विस्तरस्त्वाकरेष्ववसेयः ।

विभागं जनयेत्, तदाऽऽरम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत्। न च कारणविभागेनैव द्रव्यनाशात् पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यम्। आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात्। द्वितीयस्तावद्यत्र हस्तक्रियया हस्ततरुविभागस्ततः शरीरेऽपि विभक्तप्रत्ययो भवति, तत्र शरीरतरुविभागे हस्तक्रिया न-कारणं, व्यधिकरणत्वात्, शरीरे तु क्रिया नास्त्येव, अवयविकर्मणो यावदवयवकर्मनियतत्वात्, अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यत इति। अत एव विभागो गुणान्तरं, अन्यथा शरीरे विभक्तप्रत्ययो न स्या-

दिनकरी।

सत्वेनोत्तरसंयोगानुत्पत्त्या कर्मणोऽपि नित्यत्वापत्तिः, उत्तरसंयोगस्यैव स्वजनककर्मनिवर्तकत्वादिति भावः। अमुमर्थं हृदि निधायोक्तं-तत उत्तरदेशसंयोगस्ततः कर्मनाश इति। **तेन कर्मणैवेति**। कपालद्वयविभागजनककर्मणैवेत्यर्थः। **देशान्तरविभागः**-कपालाकाशादिविभागः। **आरम्भकेत्यादि**। आरम्भकसंयोगः-कपालद्वयसंयोगादिस्तत्प्रतिद्वन्द्वी तद्विरोधी तन्नाशक इति यावत्। एवमग्रेऽपि। **अनारम्भकसंयोगः**-कपालाकाशसंयोगादिः। **अन्यथेति**। आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणोऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणश्चैक्य इत्यर्थः। **विकसदिति**। तत्राऽग्रावच्छेदेनाऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः सत्वात्तेन कर्मणा मूलावच्छिन्नारम्भकसंयोगविरोधिविभागोत्पत्तिस्तेन चारम्भकसंयोगनाशस्तेन कमलनाशः स्यादिति भावः। **कारणविभागेनैव**-कारणमात्रविभागेनैव, कपालद्वयविभागादिनेति यावत्। **पूर्वं**-घटाद्यात्मकद्रव्यनाशात् पूर्वम्। तथा च पूर्वोक्तं 'ततो घटनाशस्ततः कपालस्याकाशविभागो जन्यते' इत्यसङ्गतमिति भावः। **सति द्रव्ये**-द्रव्यनाशं विना। **देशान्तरविभागासम्भवादिति**। अन्यथा कारणमात्रविभागे कर्मलक्षणस्याऽतिव्याप्त्यापत्तेरिति भावः। वस्तुतः कर्मलक्षणस्य तत्र नाऽतिव्याप्तिः, तत्प्रकारस्तु पाकजप्रक्रियायां सप्रपञ्चं प्रदर्शितोऽस्माभिः। **द्वितीय इति**। कारणाकारणविभागजन्य इत्यर्थः। **यावदवयवकर्मनियतत्वादिति**। क्रियाया व्याप्यवृत्तित्वनियमादिति भावः। **अत एव** वक्ष्यमाणयुक्तेरेव। **शरीरे विभक्तप्रत्ययो न स्यादिति**। यत्र हस्तक्रियया हस्ततरुविभागस्तत्र शरीरे विभागप्रत्ययः सर्वानुभवसिद्धः, स च विभागं विना नोपपद्यते। न च शरीरतरुसंयोगनाश एव तद्विषय इति वाच्यम्। विभागानङ्गीकारे शरीरतरुसंयोगनाशस्यैवासम्भवात्। न हि तत्र हस्तक्रिया शरीरतरुसंयोगनाशिका, व्यधिकरणत्वात्, अतस्तत्र हस्ततरुविभागेन शरीरतरुविभागो जन्यते, तेन च शरीरतरुसंयोगनाशो जन्यत इत्युपेयत इति विभागसिद्धिः। ननु हस्ततरुसंयोगनाश एव शरीरतरुसंयोगनाशकोऽस्तु, तरौ तदुभयसामानाधिकरण्यसत्वात्। मास्तु विभागजविभागः, हस्ततरु-

रामरुद्री।

मूले-**विभागं न जनयेदिति**। अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकतावच्छेदकरूपस्याऽऽरम्भकसंयोगप्रतिद्वन्द्विविभागजनकतावच्छेदकरूपव्यापकत्वे का क्षतिरिति तु चिन्तनीयम्। तन्त्वाद्यारम्भे तन्तुहस्तसंयोगविरोधिविभागानुदयात्कर्मणः संयोगविरोधिविभागविशेषान् प्रति विशिष्यैव हेतुत्वस्याऽऽवश्यकतयोक्तवैजात्यकल्पनमेवाऽप्रामाणिकमिति तु

परत्वं चाऽपरत्वं च द्विविधं परिकीर्तितम् ।
दैशिकं कालिकं चाऽपि मूर्त एव तु दैशिकम् ॥ १२१ ॥
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् ।

त्, अतः संयोगनाशेन विभागो नाऽन्यथासिद्धो भवति ॥ ११६ ॥ ॥ ११७ ॥ ॥ ११८ ॥ ॥ ११९ ॥ ॥ १२० ॥ ॥ इति विभागनिरूपणम् ॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति । परत्वञ्चापरत्वं चेति । दैशिकमिति । दैशिकपरत्वं बहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते, एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते, अत्राऽवधित्वार्थं पञ्चम्यपेक्षा, यथा 'पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः' 'पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२१ ॥ १२२ ॥

दिनकरी ।

विभागस्तु कर्मजन्यशरीरतरुसंयोगनाशकतया सिद्ध्यतीत्यप्यत एवापास्तम् । हस्ततरुसंयोगनाशेनैव तदुपपत्तेः । किं च हस्तक्रियैव स्वसमवायिसमवेतत्वसम्बन्धेन शरीरनिष्ठा शरीरतरुसंयोगनाशे हेतुरस्तु, वैयधिकरण्याभावादिति चेन्न, आश्रयनाशाजन्यगुणनाशस्य विरोधिगुणजन्यत्वनियमेन शरीरकर्मजन्यशरीरतरुसंयोगं प्रति हस्ततरुसंयोगस्याऽकारणत्वेन च शरीरतरुसंयोगनाशे हस्ततरुसंयोगनाशस्याजनकत्वात् । यच्चोक्तं हस्तक्रियैव स्वसमवायिसमवेतत्वसम्बन्धेन तत्र कारणमिति, तदपि न, साक्षात्सम्बन्धेन जनकत्वनियमस्याऽसति बाधके सङ्कोचकल्पनानुपपत्तेः । वस्तुतस्तु संयोगाभावो विभागो विभागाभावो वा संयोग इत्यत्र विनिगमनाविरहेणोभयोरप्यतिरिक्तत्वम् । अत एव घटात् पटो विभक्त इति प्रत्यय उपपद्यते । संयोगनाशात्मकत्वे नाशस्य सावधिकत्वाभावेन तथाप्रत्ययानुपपत्तेरिति । तदिदमभिप्रेत्योक्तम्—अतः संयोगेत्यादि ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥

॥ इति विभागग्रन्थः ॥

मूले—मूर्त एव तु दैशिकमिति । विभुद्रव्ये विप्रकृष्टदेशमात्रवृत्तित्वसन्निकृष्टदेशमात्रवृत्तित्वबुद्धेर्निमित्तकारणस्य, दिक्संयोगस्यासमवायिकारणस्य चाऽभावादिति भावः । दैशिकपरत्वस्य निमित्तकारणमाह । बहुतरेति । बहुतरसंयोगान्तरितत्वं तदेव विप्रकृष्टत्वं तद्वि-

रामरुद्री ।

टीकायाम्—आश्रयनाशेति । कारणनाशेत्यर्थः तेन परत्वापरत्वादीनामसमवायिकारणसंयोगनाशनाश्यत्वेऽपि न क्षतिः ॥ इति विभागग्रन्थः ॥

विभुद्रव्ये विप्रकृष्टदेशमात्रवृत्तित्वेति । विप्रकृष्टमात्रदेशसंयोगस्येत्यर्थः । एवमग्रेऽपि । सन्निकृष्टदेशाऽसंयुक्तत्वं मात्रपदार्थः । सन्निकृष्टविप्रकृष्टोभयसंयुक्ते तयोरुत्पादवारणाय कारणतावच्छेदककुक्षौ तस्याऽन्तर्भावनीयत्वादिति भावः । ननु विजातीयदिक्संयोगस्य परत्वाऽपरत्वासमवायिकारणत्वं वाच्यम् । अन्यथा वक्रदेशस्थस्याऽपि तदपेक्षया, तदपेक्षया योऽपरः परो वा तदपेक्षया च परापरत्वापत्तेः । तथा च निरुक्तज्ञाननिष्ठकारणतावच्छेदककुक्षौ मात्रार्थान्तर्भावो व्यर्थः, विजातीयसंयोगाभावादेव परापरत्वोत्पादस्य उभयसंयुक्ते वारणसम्भवात् । विप्रकृष्टदेशसंयुक्तत्वसन्निकृष्टदेशसंयुक्तत्वे च विभुनोऽपि गगनादेर्नाऽनुपपन्ने इत्यत आह । दिक्संयोगस्येति । तथा च तादृशवैजात्यव्यापकीभूतदिक्संयोगत्वावच्छिन्न-

अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥
तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः ।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः ॥ १२४ ॥
अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।
बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥
अथाऽवशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।

तयोः—दैशिकपरत्वापरत्वयोः । असमवायी—असमवायिकारणम् । तदाश्रये दैशिकपरत्वापरत्वाश्रये । दिवाकरेति । अत्र परत्वापरत्वं कालिकं ग्राह्यम् । यस्य सूर्यपरिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः, स ज्येष्ठः यस्य न्यूनः स कनिष्ठः । कालिकपरत्वापरत्वे जन्यद्रव्ये ( १ ) एव । अत्र—कालिकपरत्वापरत्वयोः । तेषां—कालिकदैशिकपरत्वापरत्वानाम् ॥ १२३ ॥ १२४ ॥

॥ इति परत्वापरत्वनिरूपणम् ॥

क्रमप्राप्तां बुद्धिं निरूपयति । बुद्धेरिति ।

दिनकरी ।

षयिण्यपेक्षाबुद्धिर्दैशिकपरत्वं प्रति निमित्तकारणमित्यर्थः । तदल्पीयस्त्वेति । अल्पसंयोगान्तरितत्वरूपसन्निकृष्टत्वविषयिण्यपेक्षाबुद्धिर्दैशिकापरत्वं प्रति निमित्तकारणमित्यर्थः ॥ १२१ ॥ १२२ ॥

कालिकपरत्वापरत्वे जन्ये एवेत्यत्र जन्यपदं सप्तम्यन्तम् । नित्ये तत्पूर्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेस्तदनन्तरोत्पन्नत्वरूपकनिष्ठत्वबुद्धेर्निमित्तकारणस्य कालसंयोगरूपासमवायिकारणस्य चाभावादिति भावः ॥ १२३ ॥ १२४ ॥

मूले—अपेक्षाबुद्धिनाशेनेति । स्वनिमित्तकारणविप्रकृष्टत्वादिबुद्धीनां नाशेनेत्यर्थः ।

नव्याः पुनर्बहुतरसंयोगान्तरितत्वरूपविप्रकृष्टत्वाल्पसंयोगान्तरितत्वरूपसन्निकृष्टत्वाभ्यां दैशिकपरत्वापरत्वादिव्यवहारस्य बहुतरस्पन्दान्तरितजन्यत्वरूपज्येष्ठत्वाल्पतरस्पन्दान्तरितजन्यत्वरूपकनिष्ठत्वाभ्यां च कालिकपरत्वादिव्यवहारस्योपपत्तेर्न तयोर्गुणान्तरत्वम् । अत्र च यत्काले ज्येष्ठत्वबुद्धिरुत्पद्यते तत्कालमादाय स्पन्दानां न्यूनाधिकताऽवसेया । अतो न कनिष्ठेऽधिकजीविनि परत्वव्यवहारापत्तिरिति वदन्ति ॥ इति परत्वापरत्वनिरूपणम् ॥

रामरुद्री ।

प्रतियोगिताकाभावस्यैव गगनादौ सिद्धतया न तत्र विजातीयसंयोगकल्पनसम्भव इति भावः । एवमग्रेऽपि बोध्यम् ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥

नव्याः पुनरिति । वदन्तीत्यस्वरसोद्भावनम् । तद्बीजं तु दिक्संयोगनिष्ठवैजात्यस्य अयोग्यवृत्तितया केन लिङ्गेन सिद्धिः ? परत्वापरत्वप्रतीत्येति चेत् सिद्धे तर्हि परत्वापरत्वे इति ।

॥ इति परत्वापरत्वनिरूपणम् ॥

**अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥**
**तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।**

**तत्र अप्रमां निरूपयति । तच्छून्य इति तदभाववति तत्प्रकारकं ज्ञानं भ्रम**

**दिनकरी ।**

**तदभाववतीति । इदं च प्रमायामतिव्याप्तिवारणाय । तदभाववद्विशेष्यकतदभावप्र-**

**रामरुद्री ।**

मूले—प्रमेति । (१) तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववदनुभवत्वं प्रमात्वमित्यर्थः । नन्वत्र पृथिवीजलोभयं गन्धवदिति भ्रमेऽतिव्याप्तिः, तत्राऽपि गन्धवद्विशेष्यकत्वावच्छिन्नगन्धप्रकारकत्वस्य सत्वात् । न च व्यासज्यवृत्तिधर्मानवच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वं विवक्षितमिति वाच्यम् । तथासति पृथिवीजलोभयं द्रव्यमिति प्रमायामव्याप्त्यापत्तेः, तत्र विशेष्यताया व्यासज्यवृत्तिधर्मावच्छिन्नत्वात् । ननु विशेष्यतायां तदधिकरणतावच्छेदकधर्मावच्छिन्नत्वमेव विशेष्यते । पृथिवीजलोभयत्वस्य गन्धाधिकरणतानवच्छेदकत्वात् नातिव्याप्तिरिति । न च पृथिवीजलोभयत्वस्य गन्धाधिकरणसम्बद्धत्वात्तदधिकरणतावच्छेदकत्वं कुतो नास्तीति वाच्यम् । गन्धाधिकरणे तस्य समवायसम्बन्धेन सम्बन्धित्वेऽपि पर्याप्त्याख्यसम्बन्धेन असम्बद्धत्वात् , रङ्गं रजतत्ववदितिज्ञानीयविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतावतो रङ्गत्वस्य रजतत्वाधिकरणतानिरूपितकालिकसम्बन्धावच्छिन्नावच्छेदकतावत्वादतिव्याप्तिवारणाय तदधिकरणतावच्छेदकताघटकसम्बन्धावच्छिन्नतदधिकरणतावच्छेदकतावद्धर्मनिष्ठावच्छेदकताकत्वस्य निवेशनीयतया विशेष्यतावच्छेदकतावच्छेदकीभूतपर्याप्तिसम्बन्धावच्छिन्नतदधिकरणतावच्छेदकतायाः उभयत्वे अभावात् । न चोभयत्वस्य प्रत्येकवृत्तितया उभयस्य गन्धाधिकरणत्वमस्त्येवेति तत्सम्बन्धावच्छिन्नाधिकरणत्वावच्छेदकत्वं कुतो नास्तीति वाच्यम् । पृथिवीजलोभयं गन्धवदित्यभानेन स्वव्यापकगन्धाधिकरणतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य उभयत्वेऽनङ्गीकारादिति चेन्न । निरवच्छिन्नविशेष्यताक—घट इत्यादिप्रमायामव्याप्तेः । न च तदधिकरणतावच्छेदकावच्छिन्नत्वं तदधिकरणतावच्छेदकव्यापकत्वमिति वाच्यम् , तथा सति घटपटोभयं घट इति भ्रमेऽतिव्याप्तेर्दुर्वारत्वात् । घटपटोभयत्वावच्छिन्नविशेष्यताया घटाधिकरणतावच्छेदकतद्व्यक्तित्वव्यापकत्वात् । न च तदधिकरणतावच्छेदकसमनियतत्वनिवेशात् न दोषः, तादृशविशेष्यताया घटत्वाधिकरणतावच्छेदकाव्याप्यत्वादिति वाच्यम् । घटो द्रव्यमिति प्रमायामव्याप्तेः,घटत्वावच्छिन्नविशेष्यताया द्रव्यत्वाधिकरणतावच्छेदकाव्यापकत्वात् । न च तदधिकरणतावच्छेदकयत्किञ्चिद्धर्मसमनियतत्वं विवक्षितम् , घटत्वावच्छिन्नविशेष्यताया-द्रव्यत्वाधिकरणतावच्छेदकीभूतघटत्वरूपयत्किञ्चिद्धर्मसमनियतत्वात् नाव्याप्तिरिति वाच्यम् । तथापि घटपटोभयं घट इति भ्रमेऽतिव्याप्तेर्दुर्वारत्वात् । घटपटान्यतरस्मिन् घट इति प्रतीत्या घटपटान्यतरत्वस्य घटत्वाधिकरणत्वावच्छेदकतया तत्समनियतत्वस्य घटपटोभयत्वावच्छिन्नविशेष्यतायामव्याहतत्वात् । नापि तदधिकरणतानवच्छेदकानवच्छिन्नत्वं विशेषणम् , अतो न कोऽपि दोष इत्यपि युक्तम् । निरवच्छिन्नरजतविशेष्यतानिरूपितरङ्गत्वप्रकारताशालिज्ञानस्य प्रमात्वापत्तेरिति चेन्न । तदधिकरणतानवच्छेदकानवच्छिन्नतद्वन्निष्ठ विशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वविवक्षणेन सर्वानुपपत्तिपरिहारम्भवात् । नन्वत्र तद्वत्वं तत्प्रतियोगिकसम्बन्धानुयोगित्वमवश्यं वक्तव्यम् । अन्यथा वृत्त्यनियामकसम्बन्धावगाहिप्रमायामव्याप्तेः । तथा च वायू रूपवानिति भ्रमेऽतिव्याप्तिरिति चेन्न । रूपनिरूपितत्वविशिष्टसमवायाधिकरणताया एव रूपसम्बन्धित्वेन महादेवेनाऽभ्युपगतत्वादिति । ॥ इति प्रमानिरूपणम् ॥

---

( १ ) प्रमात्वादिपरिष्कारस्याऽतिविस्तृतत्वेन दुर्बोधत्वेन बहुस्थले कृतप्रपञ्चतया चोक्तग्रन्थोपरि टीकाप्रणयनमनतिप्रयोजनकमिति मत्वा प्राचीना काऽपि टिप्पनी बुभुत्सूनामामोदाय समभुद्रि ।

तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥

इत्यर्थः । तत्प्रपञ्चः—अप्रमाप्रपञ्चः ॥ १२५ ॥ १२६ ॥ १२७ ॥

दिनकरी ।

कारकप्रमायामतिव्याप्तिवारणाय तत्प्रकारकमिति । इच्छायामतिव्याप्तिवारणाय

रामरुद्री ।

तदभाववति तत्प्रकारकं ज्ञानं भ्रम इति मूलम् । तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं तद्भ्रमत्वमित्यर्थः । नन्वेवं रजते रजतत्वज्ञानस्यापि भ्रमत्वापत्तिः, वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्न-प्रतियोगिताकरजतत्वाभावस्य रजते सत्त्वात् । न च प्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकतदभावो विवक्षित इति न दोष इति वाच्यम् । तथा सति स्वरूपतो रजतत्वप्रकारकरङ्गविशेष्यकज्ञानस्य भ्रमत्वा-नुपपत्तेः, तत्र प्रकारतावच्छेदकधर्माप्रसिद्धेः । न च स्वीयप्रकारतानवच्छेदकधर्मानवच्छिन्नप्रतियोगि-ताकाभावो विवक्ष्यते, व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावश्च न तथेति वाच्यम् । तावताऽ-प्यव्याप्तेरनुद्धरत्वात्, स्वरूपतो रजतत्वप्रकारकभ्रमीयप्रकारतानवच्छेदकधर्मानवच्छिन्नप्रतियोगिताकरज-तत्वाभावाप्रसिद्धेः । किञ्च स्वीयप्रकारतानवच्छेदकत्वं स्वीयप्रकारतानिरूपितविलक्षणावच्छेदकत्वाभावः, तथा च तत्राऽप्रसिद्धिः, तदीयप्रकारतानिरूपितविलक्षणावच्छेदकत्वाऽप्रसिद्धेः । न च वैशिष्ट्यव्यासज्य-वृत्तिधर्मानवच्छिन्नप्रतियोगिताकतदभाववत्त्वविवक्षणात् न कोऽपि दोष इति वाच्यम् । गुणकर्मान्यत्व-विशिष्टसत्तावान् गुण इत्यादिभ्रमेऽव्याप्तेः, वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नसत्तानिष्ठप्रतियोगिताका-भावस्य गुणेऽसत्त्वात् । न च प्रकारतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिता-काभावो विवक्षितः, उक्तस्थले च गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभाव एव तादृश इति नाव्याप्तिरिति वाच्यम् । तथा सति स्वरूपतो रजतत्वप्रकारकभ्रमेऽव्याप्तेर्वज्रलेपायमानत्वात्, तत्र प्रकारतावच्छेदकाप्रसिद्धेः । यदि च प्रकारतावच्छेदकत्वं न प्रकारतानिरूपितप्रकारतारूपविलक्षणा-वच्छेदकतात्वेन निवेश्यते, किन्तु प्रकारांशे प्रकारतारूपावच्छेदकत्व-प्रकारतावच्छेदकसम्बन्धनिष्ठसांस-र्गिकविषयत्वोभयसाधारणावच्छेदकतात्वेन प्रकारतानिरूपितविशेष्यताभिन्नविषयतात्वेन वा, निवेश्यते । तथा च स्वरूपतो रजतत्वप्रकारकज्ञानीयप्रकारतावच्छेदकत्वं समवाय एव प्रसिद्धमिति नाव्याप्तिरित्यु-च्यते, तथापि प्रमेयत्वेन रूपेण यावत्प्रमेयप्रकारकसंयोगसंसर्गकगुणविशेष्यकप्रमेयवत्त्वान् गुण इत्या-कारकभ्रमेऽव्याप्तिः, तत्र प्रमेयमात्रस्यैव तादृशप्रकारतावच्छेदकत्वेन तदतिरिक्ताप्रसिद्धेः । किञ्च संयो-गेन दण्डप्रकारकप्रमायामतिव्याप्तिः, तद्दण्डावृत्तिसंयोगावच्छिन्नतद्दण्डनिष्ठप्रतियोगिताकाभावस्य तद्दण्ड-वति सत्त्वात् । न च स्वीयप्रकारतानिरूपितविशेष्यताभिन्नविषयतानवच्छेदकधर्मानवच्छिन्नावच्छेदक-ताकत्वनिष्ठप्रतियोगिताकाभावो निवेश्यते, प्रकृते च तादृशसांसर्गिकविषयतावच्छेदकं संयोगत्वं, न तत्प्रतियोगितावच्छेदकतावच्छेदकं, तदवृत्तित्वस्यैव तथात्वादिति नातिव्याप्तिः । प्रमेयवत्त्वान् गुण इत्य-त्राऽपि तादृशविषयतावच्छेदकप्रमेयत्वातिरिक्तत्वस्य प्रसिद्धत्वात् तदनवच्छिन्नप्रतियोगितावच्छेदकता-कतादृशाभावो गुणे वर्त्तते एवेति नाव्याप्तिरिति वाच्यम् । रजतमित्यादिज्ञाने स्वरूपत एव समवा-यस्य संसर्गतास्वीकारात् रङ्गविशेष्यकरजतत्वप्रकारकभ्रमेऽव्याप्तितादवस्थ्यात्, तत्र तादृशविषयतावच्छे-दकाप्रसिद्धेः । अथ वृक्षः संयोगीति प्रमायामतिव्याप्तिवारणाय प्रतियोग्यनधिकरणतदभावाधिकरण-निष्ठविशेष्यतेति निवेशनीयम् । तथा च वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नाभावमादाय न दोषः । तद-धिकरणीभूतस्य विशेष्यस्य प्रतियोग्यनधिकरणत्वाभावात्, तथा च सर्वत्र तेनैव लक्षणसमन्वय इति चेन्न । तथासति गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तिः, गुणस्य सत्तारूपप्रतियोग्यधि-करणत्वात् । न च प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं वक्तव्यमिति वाच्यम् । तथा सति रजतत्व-प्रकारकप्रमायामतिव्याप्तेस्तदवस्थत्वात्, रजतस्य तादृशवैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नानधिकरण-त्वात् । अथ प्रकारताविशिष्टव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावो निवेश्यते । वैशिष्ट्या-

## रामरुद्री ।

देश्च रजतत्वव्यापकतानवच्छेदकत्वात् न दोषः । एतेन घ्राणग्राह्यगुणवानितिभ्रमप्रकारतावच्छेदकीभूतघ्राणग्राह्यगुणत्वस्याभावप्रतियोगितानवच्छेदकत्वेऽपि न दोषः, तत्र गन्धत्वस्यैव तथात्वात् । तथा च स्वीयतन्निष्ठप्रकारतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रकारत्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकरूपावच्छिन्नव्यापकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वमिति निष्कर्षः । व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय प्रमायामतिव्याप्तिवारणाय व्यापकताघटकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां विशेषणम् । न च प्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वमेव निवेश्यतामिति वाच्यम् । तथा सति रजतत्वव्यापकतावच्छेदकरजतत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाभावमादायातिव्याप्तेरित्यन्यदेतत् । तथा च न कोऽपि दोष इति चेन्न । गगनवान् घट इति भ्रमेऽव्याप्तेः, गगनस्यावृत्तितया गगनाधिकरणत्वघटितगगनव्यापकत्वाप्रसिद्धेः, विशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तेश्च, तत्र विशिष्टसत्तात्वस्य निरुक्तव्यापकतावच्छेदकत्वासम्भवात, तादृशप्रकारत्वावच्छिन्नस्य गुणेऽपि सत्त्वात् । ननु प्रकारताव्यापकधर्मावच्छिन्नाभावो निवेश्यते, तथा च गगनत्वावच्छिन्नाभाव एव उक्तस्थले लक्षणघटकः । न चैवं सत्तावान् गुण इति 'प्रमायामतिव्याप्तिः, विशिष्टसत्तात्वावच्छिन्नाभावस्य तादृशधर्मावच्छिन्नप्रतियोगिताकस्य गुणे सत्त्वादिति वाच्यम् । प्रकारताव्यापकधर्मावच्छिन्नाभावकूटत्वस्य विवक्षणीयत्वात् । गुणस्य च सत्तात्वावच्छिन्नाभावघटिततादृशकूटानधिकरणत्वात् । न चैवं रङ्गविशेष्यकरजतत्वप्रकारकभ्रमेऽव्याप्तिः, रङ्गस्य रजतत्वनिष्ठप्रकारताव्यापकजातित्वावच्छिन्नाभावघटितकूटानधिकरणत्वादिति वाच्यम् । प्रकारतासमनियतधर्मावच्छिन्नाभावकूटाधिकरणत्वस्य विवक्षणीयत्वात, जातित्वस्य प्रकारताव्याप्यत्वाभावेनादोषादिति चेन्न । तथा सति गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तेः, गुणस्य सत्तात्वावच्छिन्नाभावघटिततादृशकूटानधिकरणत्वात् ।

अत्राहुः । तत्प्रकारताघटकधर्ममादाय भ्रमे लक्षणसमन्वयः । सत्ताप्रकारताघटकधर्मश्च सत्तात्वमेवेति नातिव्याप्तिः । गुणकर्मान्यत्वविशिष्टसत्ताप्रकारताघटकधर्म एव च गुणकर्मान्यत्वविशिष्टसत्तात्वमिति नातिव्याप्तिः । न च स्वाविषयकप्रतीत्यविषयगुणकर्मान्यत्वविशिष्टसत्ताप्रकारकत्वरूपं विशिष्टसत्ताप्रकारकताघटकत्वं विशिष्टसत्तात्वस्य न सम्भवति, विशिष्टसत्तात्वावच्छिन्नप्रकारतामेव सत्ताप्रकारतात्वेन प्रकारतात्वेन चावगाहमानायां प्रतीतौ विशिष्टसत्तात्वस्याऽविषयत्वादिति वाच्यम् । स्वनिरूपकतावच्छेदकघटकधर्मावच्छिन्नप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिवेशेनानुपपत्त्यभावात् । स्वं विशेष्यता । सत्ताप्रकारतात्वादिकञ्च नोक्तभ्रमीयविशेष्यतानिरूपकत्वस्यावच्छेदकम्, किन्तु गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रकारतात्वमेवेति लक्षणसमन्वयात् । न च प्रकारतात्वस्यापि विशेष्यतानिरूपकतावच्छेदकघटकत्वात् तदवच्छिन्नप्रतियोगिताकाभावमादाय प्रमायामतिव्याप्तिरिति वाच्यम् । तन्निष्ठत्वस्यापि प्रतियोगितायां विशेषणत्वात्, उक्तप्रतियोगितायाः प्रकारतानिष्ठत्वेन अनुपपत्त्यभावादिति केचित्, तन्न, घ्राणग्राह्यगुणवज्जलमिति भ्रमेऽव्याप्तेः, तत्र जलत्वावच्छिन्नविशेष्यतानिरूपकतावच्छेदकघटकघ्राणग्राह्यगुणत्वस्याभावप्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः ।

अन्ये तु स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रकारतान्या या स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकव्यापिका प्रकारता तदन्यतन्निष्ठप्रकारतानिरूपितविशेष्यताकत्वं समुदितलक्षणार्थः । स्वपदं विशेष्यतापरम् । स्वरूपतो रजतत्वप्रकारकभ्रमे रजतत्वप्रकारतायाः स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नान्यत्वेऽपि स्वसमानाधिकरणाभावीयप्रतियोगितानवच्छेदकरङ्गत्वव्यापकत्वाभावेन तदन्यत्वान्नाव्याप्तिः । गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमे प्रकारताया गुणनिष्ठाभावप्रतियोगितानवच्छेदकसत्तात्वव्यापकत्वेऽपि स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नान्यत्वाभावेन तादृशान्यत्वसत्त्वान्नाऽव्याप्तिः । सत्तात्वेन स्वरूपतो वा सत्ताप्रकारकप्रमायां तु सत्ताप्रकारतायास्तादृशावच्छेदकावच्छिन्नान्यत्वात् तादृशावच्छेदकसत्तात्वादिव्यापकत्वाच्च तदन्यत्वाभावान्नातिव्याप्तिः । गगनवान् पट इत्यत्र तु गगनत्वावच्छिन्नप्रकारतायाः निरुक्तावच्छेदकावच्छिन्न-

रामरुद्री ।

त्वात् निरुक्तानवच्छेदकव्यापकत्वाभावात् नाव्याप्तिः। घ्राणग्राह्यगुणवज्जलमिति भ्रमे घ्राणग्राह्यगुणत्वावच्छिन्नप्रकारतायाः निरुक्तप्रतियोगितावच्छेदकगन्धत्वावच्छिन्नान्यत्वेऽपि निरुक्तानवच्छेदकव्यापकत्वाभावात् तदन्यत्वसत्त्वात् लक्षणसमन्वयः। घ्राणग्राह्यगुणवती पृथिवीत्यत्र तादृशानवच्छेदकव्यापकत्वात् नातिव्याप्तिः। ननु प्रतियोगितावच्छेदकावच्छिन्नत्वं प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकत्वम्। तथा च प्रमेयत्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्तिः, तत्र प्रकारतावच्छेदकतापर्याप्त्यधिकरणीभूतप्रमेयत्वघटितगुरुधर्मस्याभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नप्रकारताया निरुक्तावच्छिन्नान्यत्वात् स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकसत्तात्वव्यापकत्वाच्च तदन्यत्वाभावादिति चेन्न। स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणनिष्ठावच्छेदकताकत्वनिवेशनेनैवोपपत्तौ तत्रापि पर्याप्तिनिवेशे प्रयोजनविरहादिति वदन्ति, तदपि चिन्त्यम्, यत्र स्वरूपतो रजतत्वप्रकारकरङ्गविशेष्यकभ्रमः तत्राव्याप्तेः, रजतत्वत्वस्यापि रङ्गनिष्ठाभावीयकालिकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वात्। न च प्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगिताविशेषणान्नायं दोष इति वाच्यम्। घटप्रकारकसंयोगसंसर्गकगुणविशेष्यकभ्रमेऽव्याप्तेः, सर्वस्यैव गुणनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वेन तदनवच्छेदकत्वस्याप्रसिद्धेः। अथ प्रकारतावच्छेदकसम्बन्धातिरिक्तप्रकारप्रतियोगिकसम्बन्धभिन्नयत्किञ्चित्सम्बन्धावच्छिन्नत्वेन प्रतियोगिता विशेषणीया। तथा च संयोगेन घटवान् गुण इत्यत्र स्वरूपसम्बन्धावच्छिन्नप्रतियोगितैव तादृशी, तदवच्छेदकञ्च घटत्वं, अनवच्छेदकं गुणत्वप्रकारकप्रमाविशेष्यत्वत्वादिकमेवेति नाव्याप्तिरिति चेन्न। तथापि संयोगसम्बन्धेन प्रमेयप्रकारकगुणविशेष्यकभ्रमेऽव्याप्तेर्दुर्वारत्वात्, तत्र प्रकारतावच्छेदकीभूतसंयोगातिरिक्तसम्बन्धमात्रस्यैव प्रकारीभवत्प्रमेयप्रतियोगिकतया संयोगस्यैव तदतिरिक्तत्वेन तदवच्छिन्नप्रतियोगितावच्छेदकत्वाभावाप्रसिद्धेस्तदवस्थत्वात्। यदि च प्रकारतावच्छेदकसम्बन्धातिरिक्तो यः प्रकारतावच्छेदकसम्बन्धप्रतियोगिप्रकारप्रतियोगिकसम्बन्धस्तदतिरिक्तसम्बन्धावच्छिन्नत्वं प्रतियोगिताविशेषणम्। एवं च संयोगेन प्रमेयवान् गुण इत्यत्र संयोगातिरिक्तो यः संयोगप्रतियोगिघटपटादिरूपप्रमेयप्रतियोगिकसम्बन्धः समवायादिः, तदतिरिक्तः स्वरूपादिसम्बन्धः, तदवच्छिन्नप्रतियोगितावच्छेदकत्वाभावश्च गुणत्वप्रकारकप्रमाविशेष्यत्वादौ प्रसिद्धः। न च प्रमेयत्वस्यापि गुणनिष्ठाभावीयतादृशप्रतियोगितानवच्छेदकत्वात् तद्व्यापकत्वादव्याप्तिरिति वाच्यम्। स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकप्रमेयत्वावच्छिन्नत्वेन तदन्यत्वविशिष्टतादृशान्यत्वसत्त्वाददोषादित्युच्यते, तदा विषयतया प्रमेयवान् घट इति भ्रमेऽव्याप्तिः, तत्र प्रमेयमात्रस्यैव विषयतारूपप्रकारतावच्छेदकसम्बन्धप्रतियोगितया विषयताया एव तदतिरिक्ततत्प्रतियोगिकसम्बन्धभिन्नसम्बन्धतया तत्सम्बन्धावच्छिन्नघटनिष्ठाभावीयप्रतियोगितानवच्छेदकाप्रसिद्धेः। एतेन स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकव्यापकत्वं स्वसमानाधिकरणाभावीयप्रकारतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकं यत्प्रकारतावच्छेदकसम्बन्धप्रतियोगिवृत्ति तदतिरिक्तधर्मव्यापकत्वम्। घटप्रकारकसंयोगसंसर्गकगुणविशेष्यकभ्रमे गुणनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकं यत्संयोगप्रतियोगिवृत्ति घटत्वादि तदतिरिक्तत्वं गुणत्वादौ प्रसिद्धम्, तद्व्यापकत्वाभावात् प्रकारताया न दोषः। गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यत्र प्रकारतायास्तादृशसत्तात्वव्यापकत्वेऽपि तादृशप्रतियोगितावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नत्वान्न दोषः। संयोगेन प्रमेयवान् गुण इत्यत्रापि गुणनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकं यत्संयोगसम्बन्धप्रतियोगिवृत्ति तदतिरिक्तत्वं गुणत्वादौ प्रसिद्धमिति न दोषः। न चैवमपि स्वरूपतो रजतत्वप्रकारकसंयोगसंसर्गकभ्रमेऽव्याप्तिः, तत्र रजतत्वनिष्ठप्रकारताया विशेष्यतासमानाधिकरणभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकानवच्छिन्नत्वात् तादृशसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकं यत्संयोगप्रतियोगिवृत्ति तदतिरिक्तरजतत्वत्वव्यापकत्वाच्च तदन्यत्वाभावादिति वाच्यम्। समवायातिरिक्तेन सम्बन्धेन जातेः स्वरूपतो भाने मानाभावेन स्वरूपतो रजतत्वप्रकारकसंयोगसंसर्गकभ्रमस्यैवाऽसिद्धेरित्यपि निरस्तम्। विषयतया प्रमेयवान् घट इति भ्रमेऽव्याप्तेर्दुर्वारत्वात्।

आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥ १२८ ॥
किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२६ ॥

आद्य इति । विपर्यास इत्यर्थः । शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम्, एवं शङ्खादौ पीतः शङ्ख इत्याकारकं यद् ज्ञानं निश्चयरूपं तद्भ्रम इति । किंस्विदिति वितर्के । ॥ इति भ्रमप्रमानिरूपणम् ॥

निश्चयस्य लक्षणमाह । तदभावेति । तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चयः ॥ १२८ ॥ १२६ ॥ इति निश्चयनिरूपणम् ॥

दिनकरी ।

ज्ञानमिति ॥ १२५ ॥ १२६ ॥ १२७ ॥ इति भ्रमप्रमानिरूपणम् ॥

संशयेऽतिव्याप्तिवारणाय तदभावाप्रकारकमिति । अत्र च तद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानत्वं यत्र तत्र तन्निश्चयत्वमवसेयं, न तु यथाश्रुतम् । महानसोऽयं वन्हिमान्न वा पर्वतो वन्हिमानित्यस्य पर्वते वन्हिनिश्चयत्वापत्तेः । ज्ञानपदं चेच्छायामतिव्याप्तिवारणाय ॥ १२८ ॥ १२९ ॥ इति निश्चयनिरूपणम् ॥

रामरुद्री ।

तत्र वृत्तिमन्मात्रस्यैव घटनिष्ठाभावीयविषयतासम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात्तत्सम्बन्धप्रतियोगिवृत्तित्वाच्च तदतिरिक्ताप्रसिद्धेः । न चाकाशादिरेव तादृशः प्रसिद्ध इति वाच्यम् । तथापि तद्व्यापकत्वस्य प्रकारतायामसिद्धत्वादिति । तस्माद्भ्रमत्वं कथंचिदपि निर्वक्तुमशक्यमिति चेत्—

अत्र ब्रूमः । स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नभिन्ना स्वसमानाधिकरणाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मव्यापिका सती तत्तत्सम्बन्धावच्छिन्ना या या प्रकारता तदन्यतन्निष्ठप्रकारताशालित्वमिति निष्कर्षः । संयोगेन घटवान् गुण इत्यत्र गुणनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं प्रमेयत्वादौ प्रसिद्धम् । तद्व्यापकत्वसम्बन्धावच्छिन्नप्रकारताभेदस्य तदीयप्रकारतायां सत्वाल्लक्षणसमन्वयः । गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यत्र गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रकारतायाः स्वसमानाधिकरणाभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसत्तात्वव्यापकत्वात् समवायसम्बन्धावच्छिन्नत्वाच्चाव्याप्तिवारणाय स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नान्यत्वं द्वितीयान्यत्वप्रतियोगिप्रकारताविशेषणम् । स्वरूपतो रजतत्वप्रकारकभ्रमेऽव्याप्तिवारणाय व्यापकान्तम् । रजतत्वत्वस्यापि रङ्गनिष्ठाभावीयकालिकसम्बन्धावच्छिन्नाप्रतियोगितानवच्छेदकत्वात्तद्दोषतादवस्थ्यमतस्तत्तत्सम्बन्धावच्छिन्नत्वं विशेषणम् । तथा च स्वसमानाधिकरणाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितानिरूपितयत्सम्बन्धावच्छिन्नावच्छेदकतावान् यो धर्मस्तत्सम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताकतत्सम्बन्धावच्छिन्नप्रकारतान्या स्वसमानाधिकरणाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितानिरूपितयत्सम्बन्धावच्छिन्नावच्छेदकताशून्यो यो धर्मः तत्सम्बन्धावच्छिन्नतन्निष्ठव्यापकतानिरूपितस्वरूपसम्बन्धावच्छिन्नव्यापकताश्रयीभूततत्सम्बन्धावच्छिन्ना या या प्रकारता तदन्यतन्निष्ठप्रकारताशालित्वमिति निष्कर्षः । तेन रजतत्वत्वेन रजतत्वप्रकारकप्रमायां प्रकारतावच्छेदकीभूतरजतत्वत्वस्य रजतनिष्ठाभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगितानिरूपितविषयितासम्बन्धावच्छिन्नावच्छेदकताश्रयत्वेऽपि नाऽतिव्याप्तिः, न वा रङ्गविशेष्यकरजतत्वप्रकारकभ्रमे वस्तुमात्रस्यैव रङ्गनिष्ठाभावप्रतियोगितानिरूपितविषयितासम्बन्धावच्छिन्नावच्छेदकताश्रयतया तदनवच्छेदकाप्रसिद्ध्याऽव्याप्तिरिति सकलं समञ्जसम् ।

॥ इति भ्रमनिरूपणम् ॥

स संशयो मतिर्या स्यादेकत्राऽभावभावयोः ।

संशयं लक्षयति । स संशय इति । एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः ।

दिनकरी ।

एकधर्मिकेति । ह्रदपर्वतौ वह्नितदभाववन्ताविति ज्ञानेऽतिव्याप्तिवारणायैकधर्मिकेति । एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेत्यर्थः । तेन पर्वतो वह्निमान् द्रव्यं वह्न्यभाववदितिज्ञानव्युदासः । वृक्षः संयोगवान् तदभाववांश्चेतिसमुच्चयवारणाय विरुद्धेति । विरोधावगाहित्वं तदर्थः । घटोऽद्रव्यं पृथिवी चेतिज्ञानवारणाय भावाभावेति । इच्छाव्युदासार्थं विशेष्यभागः । वस्तुतस्तु एकधर्मावच्छिन्नविशेष्यकत्वनिवेशे विभिन्नरूपेणैकधर्मितावच्छेदकज्ञानस्य संशयत्वापत्तिः, एकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्वनिवेशे च निरवच्छिन्नविशेष्यतावच्छेदकताकसंशयासङ्ग्रहप्रसङ्गः, विभिन्नरूपेण धर्मितावच्छेदकतावच्छेदकावगाहिज्ञानस्य संशयत्वप्रसङ्गश्चेति स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति ध्येयम् ।

यत्तु संशयत्वं जातिविशेष इति, तन्न, चाक्षुषत्वादिना सङ्करप्रसङ्गात् ।

रामरुद्री ।

समुच्चयेति । न च समुच्चयस्य निश्चयरूपत्वे तदुत्पत्तिरेव कथं स्यात्; तदभावनिश्चयतन्निश्चययोः कार्यसहभावेन तत्तदभावविशिष्टबुद्धिप्रतिबन्धकत्वादिति वाच्यम् । घटतदभावादेरव्याप्यवृत्तित्वग्रहदशायामेव समुच्चयसम्भवात्, अव्याप्यवृत्तित्वग्रहाभावविशिष्टस्यैव तदभावादिनिश्चयस्य तद्विशिष्टबुद्ध्यादौ प्रतिबन्धकत्वात्, विशेष्यतावच्छेदकसामानाधिकरण्येन तत्तदभावविशिष्टबुद्ध्योः परस्पराविरोधितया सम्भवाच्चेति । विरोधावगाहित्वमिति । विरोधश्च तदधिकरणावृत्तित्वम् । तच्च कोटिद्वयांश एव परस्परमेककोट्यंश एव वा भासत इत्यन्यदेतत् । अत एव च संशये विरोधसूचकं वापदं प्रयुज्यत इति भावः ।

टीकायाम्-संशयत्वप्रसङ्गश्चेति । अत्र च कस्यापि दूषणस्य नावकाशः । यतः एकधर्मिकत्वं एकविशेष्यताकत्वम् । तथा च तत्प्रकारताकतदभावप्रकारताकैकविशेष्यकताकेत्यर्थकरणेन तत्रातिव्याप्तिवारणं युक्तम् । न च निर्वह्निः पर्वतो वह्निमानित्याकारकाहार्यज्ञानेऽतिव्याप्तिः । तत्र वह्न्यभावप्रकारतानिरूपितविशेष्यतायाः वह्निप्रकारतानिरूपितविशेष्यतायाश्च एकत्वादिति वाच्यम् । एकधर्मिकेत्यस्य एकधर्मितावच्छेदकताकेत्यर्थः । तथाच तन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताकविशेष्यतानिरूपिततद्विरुद्धतदभावनिष्ठप्रकारताकत्वमिति निष्कर्षः । निरुक्तज्ञानीयवह्न्यभावीयप्रकारतानिरूपितविशेष्यतावच्छेदकता शुद्धपर्वतत्वे पर्याप्ता, वह्निप्रकारतानिरूपितविशेष्यतावच्छेदकता तु वह्न्यभावपर्वतत्वोभयपर्याप्तेति तयोर्भेदान्न दोषः । एवं च विभिन्नरूपेण एकधर्मिकज्ञाने विभिन्नरूपेण एकधर्मितावच्छेदकज्ञाने च नातिव्याप्तिः, तत्र विशेष्यतावच्छेदकतयोर्भेदात्, न वा निरवच्छिन्नविशेष्यतावच्छेदकताकसंशयासङ्ग्रहप्रसङ्ग इति । अत्र वदन्ति । विशेष्यतावच्छेदकावच्छेदेन अन्यतरकोट्यवगाहित्वविशेष्यतावच्छेदकसमानाधिकरण्येन उभयकोट्यवगाहिताभ्यां विरोधावगाहित्वानवगाहित्वाभ्यां च संशयसमुच्चययोर्वैलक्षण्योपपत्तौ संशये भावाभावप्रकारतानिरूपितविशेष्यतयोः तदवच्छेदकतयोश्च भेद एवेति स्वीकर्तुं नयेऽसम्भवापत्त्या तथा परिष्कारासम्भवात् ।

सङ्करप्रसङ्गादिति । ननु मानसत्वव्याप्यत्वमेवाऽस्तु संशयत्वस्य । न च विनिगमनाविरहाच्चाक्षुषत्वादिव्याप्यत्वमपि स्यादिति वाच्यम् । अन्धादेरपि संशयोदयेन चाक्षुषत्वादिव्याप्यत्वायोगात् । न च तथापि स्मृतित्वव्याप्यत्वमादाय विनिगमनाविरहस्तदवस्थ एवेति वाच्यम् । स्मृतेः पूर्वा-

साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥

साधारणेति । उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम् । यथा उच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वाऽयं स्थाणुर्न वेति सन्दिग्धे । एवमसाधारणधर्मज्ञानं कारणम् । यथा शब्दत्वस्य नित्यानित्यव्यावृत्तत्वेन शब्दे गृहीतत्वाच्छब्दो नित्यो न वेति सन्दिग्धे । विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं, शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वभावात्, किं तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते, संशयस्तु मानस एवेति । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति । एवं व्याप्यसंशयादपि व्यापक-

दिनकरी ।

सन्दिग्ध इति क्रियापदम् । सन्देहवान् भवतीत्यर्थः । एवमग्रेऽपि । 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेः–' इत्यादिसूत्रे विप्रतिपत्तिवाक्यजन्यशाब्दसंशयस्योक्तत्वात् साधारणधर्मासाधारणधर्मज्ञानजन्यसंशयवद्विप्रतिपत्तिवाक्यजन्यस्तृतीयोऽपि संशय इति मतनिरासायाऽऽह--विप्रतिपत्तिस्त्विति । व्याप्तिज्ञानादीनामिति । आदिनाऽतिदेशवाक्यार्थज्ञानपरिग्रहः । ननु तर्हि सूत्रस्थपञ्चम्यनुपपत्तिरित्यत आह । किं त्विति । तथा च सूत्रस्थपञ्चमी प्रयोजकतायामिति भावः । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इतीति । अत्र प्रामाण्यपदमप्रामाण्यस्याऽप्युपलक्षकं, तेन प्रामाण्यसंशयस्याप्रामाण्यसंशयस्य च विषयसन्देहे स्वातन्त्र्येण हेतुत्वमिति भावः । एवं व्याप्येति । अथ व्याप्यसंशयस्य व्यापकसंशयहेतुत्वे किं मानं, कोटिस्मरणादित एव तत्सम्भवात्, क्वचित्तदनुविधानस्य तु व्याप्यतदभावयोर्व्यापकतदभावसाहचर्यस्य गृहीतत्वेन तत्स्मरण एवोपक्षीणत्वात्, तदग्रहे तु व्याप्यसंशयाद्व्यापकसंशयस्याप्यभावादिति चेत्, अत्राहुः । महानसे हुताशनो न जलह्रद इति स्मरतां पर्वतादिकमपि पश्यतां धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वम् । अत एवोत्कटकोटिकव्याप्यसंशयाद् व्यापकस्याप्युत्कटकोटिकः संशयः, कारणोत्कर्षेणैव कार्य्योत्कर्षात् । न चैतद्भगवत्सूत्रकृदनभिमतमिति वाच्यम् । सूत्रस्थ'च'कारस्याप्यनुक्तसमुच्चायकत्वात् । तथाहि "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः—" इति सूत्रम्, तस्य चाऽर्थमाहुर्भाष्यकृत्प्रमुखाः -समानधर्मः–कोटिद्वयसहचरितधर्मः, अनेकस्मात्सपक्षविपक्षाद्व्यावृत्तो धर्मः अनेकधर्मः, तयोरुपपत्तिः–ज्ञानं तस्मात्, विप्रतिपत्तिः=विरुद्धकोटिप्रतिपादकं वाक्यं तस्मात् । अत्र पञ्चम्याः प्रयोजकत्वमर्थो न हेतुत्वम् । उपलब्धिः–प्रामाण्यम्, अनुपलब्धिः–प्रामाण्यविरोधि भ्रमत्वं, तयोरव्यवस्थातश्च संशयः । एवं च प्रामाण्यसंशयजन्यो भ्रमत्वसंशयजन्यश्च

रामरुद्री ।

नुभवादिसापेक्षत्वेन तस्य निश्चयात्मकत्वे स्मृतेरपि सन्देहात्मकत्वायोगादिति चेन्न, संशयत्वस्य जातित्वे एकस्यैव ज्ञानस्य धर्म्यंशेऽपि संशयत्वापत्तेरिति ध्येयम् ।

इतिमतनिरासायेति । यद्यपि मूले विप्रतिपत्तिवाक्यजन्यशाब्दसंशयस्यैव निराकृतत्वेन संशयस्य त्रिविधत्वं न निराकर्तुं शक्यते । कोटिद्वयोपस्थापनद्वारा विप्रतिपत्तिप्रयोज्यस्य संशयस्य एवमप्यनिराकरणात् । तथापि संशये विप्रतिपत्तिवाक्यजन्यत्वमिव कोट्युपस्थापनद्वारा तत्प्रयोज्यत्वमपि निराचिकीर्षितम् । साधारणधर्मदर्शनादिजन्यकोट्युपस्थितेरेव तत्र हेतुत्वादित्याशयः । अथ विप्रतिपत्तिवाक्यतः कुतः संशयो न भवति ? न च संशयत्वस्य प्रत्यक्षत्वव्याप्यतया शाब्दसामग्रीकाले

**दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।**

**संशय इत्यादिकं बोध्यम् । किं तु संशये धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कारणमिति ॥ १३० ॥॥ इति संशयनिरूपणम् ॥**

दोष इति । अप्रमां प्रति दोषः कारणं, प्रमां प्रति गुणः कारणम् । तत्राऽपि पित्तादिरूपा दोषा अननुगताः, तेषां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम् । गुणस्य प्रमाजनकत्वं त्वनुमानात् सिद्धम् । यथा प्रमा ज्ञानसामान्यकारणभिन्नकारणजन्या, जन्यज्ञानत्वात्, अप्रमावत् । न च दोषाभाव एव कारणमस्त्विति

दिनकरी ।

विषयसंशयः । 'च'कारो व्याप्यसन्देहादिजन्यव्यापकसन्देहादेः सङ्ग्राहकः । विशेषापेक्षो विमर्श इति तु लक्षणम् । एकधर्मिकभावाभावप्रकारकत्वरूपविशेषवान् विमर्शो ज्ञानमिति तदर्थः । **इत्यादिकमिति** । आदिना साधनाव्यापकव्याप्यत्वसन्देहादितः साध्यव्यापकत्वसन्देहो बोध्यः । साधारणज्ञानादेः कार्यतावच्छेदके चाव्यहितोत्तरत्वं देयम् । तेन परस्परं न व्यभिचारः । ननु साधारणधर्मज्ञानादेरिव धर्मिज्ञानस्यापि संशयहेतुत्वात्तत्कृतः संशयविभागः कथं न प्रदर्शित इत्यत आह । **संशये धर्मिज्ञानमिति** । संशये–संशयमात्रे । तथा च धर्मिज्ञानजन्यतावच्छेदकस्य संशयत्वसमव्याप्यत्वान्न तद्विभाजकतावच्छेदकमिति भावः । ननु धर्मिज्ञानस्य संशयहेतुत्वे मानाभावः । न च धर्मिज्ञानमन्तरेण संशयः स्यादिति वाच्यम् । सति धर्मीन्द्रियसन्निकर्षे इष्टत्वादत आह । **धर्मीन्द्रियेति** ॥ १३० ॥

॥ इति संशयनिश्चयनिरूपणम् ॥

**पित्तादीति** । आदिना मण्डूकवसाञ्जनादेः परिग्रहः । अनुमानसिद्धत्वमेव प्रदर्शयति । **यथेति** । भगवज्ज्ञाने व्यभिचारवारणाय हेतौ **जन्येति** । अर्थान्तरं निराकुरुते । **न चेति**।

रामरुद्री ।

प्रत्यक्षसामग्रीविरहेण न तत्सम्भव इति वाच्यम् । तादृशस्थले शाब्दबोधानुत्पादेन शाब्दसामग्र्याः कल्पयितुमशक्यत्वादिति चेन्न, तादृशस्थले मानससामग्र्या एव सत्त्वेन शाब्दसामग्र्या अभावादेव शाब्दानुत्पादनिर्वाहात् । अन्ततस्तादृशप्रत्यक्षसामग्र्या एव समानविषयकप्रत्यक्षसामग्रीविधया शाब्दबोधप्रतिबन्धिकायाः शाब्दसामग्रीविघटनसम्भवादिति ध्येयम् ।

मूले–**धर्मिज्ञानमिति** । अन्यथा तुरगादिकमारुह्य वेगेन गच्छतोऽनन्तधर्मीन्द्रियसन्निकर्षेऽपि यस्यैव धर्मिणो ज्ञानं तस्यैव संशयो विपर्ययो वा यस्य तु न ज्ञानं न तत्रेति नियमो न स्यादिति भावः । **संशय** इति प्रकृताभिप्रायम् । आरोपमात्र एव तद्धेतुत्वमिति सिद्धान्तात् । कार्यकारणभावस्तु तद्धर्मितावच्छेदककतद्धर्मिकसंयोगसंसर्गकतद्धर्म्यसंयुक्तधर्मप्रकारकज्ञानत्वाद्यवच्छिन्नं प्रति तद्धर्मितावच्छेदकप्रकारकतद्धर्मिज्ञानत्वेनेति । न चैवं वृक्षः संयोगी न वेत्यादौ यत्र कोटिद्वयांशे नारोपः, किन्तु विरोधांश एव, तत्र संशये वृक्षादिरूपधर्मिधियो हेतुत्वं न स्यादिति वाच्यम् । तत्राऽभावरूपधर्मिज्ञानस्य हेतुत्वेन वृक्षादिरूपधर्मिज्ञानस्याऽहेतुत्वे इष्टापत्तेरिति ध्येयम् । ननु तत्र येषां धर्मिणां न ज्ञानं तेषामिन्द्रियसन्निकृष्टत्वेऽपि मानाभावः, किं च तद्धर्म्यन्तरेन्द्रियसन्निकर्षे सति तत्तद्धर्मिणां ज्ञानमेव कुतो न जायते ? दोषविशेष एव तद्धर्मिज्ञानप्रतिबन्धक इति चेत्तर्हि तत्तद्धर्मिज्ञानरूपतत्तद्धर्मिकसंशयं प्रत्यपि स एव प्रतिबन्धक इति किं धर्मिज्ञानस्य पृथग्घेतुत्वेनेत्यरुचेराह—**धर्मीन्द्रियसन्निकर्षो वेति** । टीकायां—**संशयत्वसमव्याप्यत्वादिति** । एतच्चापाततः, उक्तरीत्या संशयत्वासमनियतस्यैव धर्मिज्ञानकार्यतावच्छेदकत्वात् । किन्तु संशयत्वव्यापकत्वान्न संशयविभाजकमित्यवधेयम् ॥ इति संशयनिरूपणम् ॥

पित्तदूरत्वादिरूपो दोषो नानाविधो मतः ॥ १३१ ॥
प्रत्यक्षे तु विशेष्येण विशेषणवता समम्।

वाच्यम्। पीतः शङ्ख इतिज्ञानस्थलेऽपि पित्तरूपदोषसत्त्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गात्, विनिगमनाविरहादनन्तदोषाभावकारणत्वमपेक्ष्य गुणस्य कारणताया न्याय्यत्वात्। न च गुणसत्त्वेऽपि पित्तेन प्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानं, अतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यम्, तथा च किं गुणस्य हेतुत्वकल्पनेनेति वाच्यम्। तथाऽप्यन्वयव्यतिरेकाभ्यां गुणस्याऽपि हेतुत्वसिद्धेः। एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वम्।

तत्र दोषाः क इत्याकाङ्क्षायामाह। पित्तेति। क्वचित् पीतादिभ्रमे पित्तं दोषः, क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः, क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवंरूपा दोषा अननुगता एव भ्रान्तिजनका इत्यर्थः ॥१३१॥

अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमेण गुणान् दर्शयति। प्रत्यक्षे त्विति। प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः।

दिनकरी।

ननु पित्तात्मकदोषाभावः श्वैत्यप्रमायामेव कारणं, न शङ्खत्वप्रमायामत आह। विनिगमनाविरहादिति। प्रमायां दोषाभावः कारणं गुणो वा कारणमित्यत्र विनिगमनाविरहादिति भावः। वस्तुतो गुणहेतुतायामेव लाघवं विनिगमकमस्तीत्याह। अनन्तेति। न्याय्यत्वादिति। अनुगतगुणत्वस्याऽग्रे वक्ष्यमाणत्वान्न तद्धेतुत्वमतोऽयं दोष इति भावः। तथा च— दोषाभावानां हेतुत्वस्याऽऽवश्यकत्वे च। गुणस्याऽपीति। तथा च पित्तादिदोषाभावसत्त्वेऽपि विशेषणवद्विशेष्यसन्निकर्षरूपगुणाभावान्न शङ्खे पीतत्वप्रमेति दोषाभावेन न गुणस्यान्यथासिद्धिरिति भावः। एवं—एवं सति। अन्वयव्यतिरेकसत्त्वेऽपि यदन्यथासिद्धत्वं तदेत्यर्थः। गुणाभावः—गुणाभाव एव, न तु दोषः कारणं स्यादिति भावः ॥ १३१ ॥

रामरुद्री।

इदानीं प्रमाया भ्रमस्य चोत्पत्तिं निरूपयितुमुपक्रमते कारिकायाम्-दोष इत्यादिना। प्रमाया गुणजन्यत्वसाधकमाचार्यानुमानमाह मूले—प्रमेत्यादि। एतच्चाऽऽपाततः। तथाहि-अत्र ज्ञानहेत्वतिरिक्तत्वं सामान्याभावो वा विशेषाभावो यावत्त्वावच्छिन्नाभावो वा विवक्षितः। आद्ये प्रमाया अप्रमाया अपि ज्ञानत्वेन तद्धेतुजन्यतया बाधः, दृष्टान्तासिद्धिश्च, द्वितीयतृतीययोश्च तत्तदिन्द्रियादिव्यक्तीनां तादृशव्यक्त्यन्तरभिन्नत्वात्तादृशयावद्भिन्नत्वाच्च सिद्धसाधनमित्यतो ज्ञानसामान्येत्युक्तम्। तथा च ज्ञानत्वावच्छिन्नकार्यतान्यकार्यतानिरूपितकारणताश्रयत्वं पर्यवसितमिति नोक्तदोष इति ध्येयम्। शङ्खत्वप्रमानुत्पत्तिप्रसङ्गादिति। ननु यो दोषो यादृशप्रमायां प्रतिबन्धकस्तदभाव एव तद्धेतुः, अन्वयव्यतिरेकात्, अन्यथा भवन्मतेऽपि सति सन्निकर्षे श्वैत्यप्रमानुत्पत्तिप्रयोजकस्य दुर्वचत्वापत्तेरित्यत आह। विनिगमनाविरहादिति। तथा च तत्तद्दोषाभावानामिव तत्तत्सन्निकर्षादीनामपि तद्धेतुत्वं वाच्यमित्याशयः, अन्यथा दोषाभावे सन्निकर्षासत्त्वेऽपि तत्प्रत्यक्षापत्तेरिति ध्येयम्। तदैवाऽऽह। तथाऽप्यन्वयव्यतिरेकाभ्यामिति। तथा च दोषाभावस्य गुणस्योभयस्याऽपि हेतुत्वं विनिगमनाविरहासिद्धमिति भावः। एतेन तद्धर्मिनिष्ठविशेष्यतासम्बन्धेन तत्प्रकारकज्ञानं प्रति तद्धर्मिनिष्ठविशेष्यतासम्बन्धेन नित्यज्ञानस्य ज्ञानसामान्यस्य वा हेतुत्वेनैवोपपत्तौ विशेषणवद्विशेष्यसन्निकर्षादीनां प्रात्यक्षिकप्रमादौ कारणत्वकल्पनमयुक्तमिति निरस्तम्। तस्यैवाऽस्याऽपि विनिगमनाविरहादेव कारणत्वावश्यकत्वादिति ध्येयम्।

विशेषणवद्विशेष्यसन्निकर्ष इति। तद्धर्मिनिष्ठविशेष्यतासम्बन्धेन तद्धर्मप्रकारकप्रत्यक्षं प्रति

सन्निकर्षो गुणस्तु स्यात्, अथ त्वनुमितौ पुनः ॥ १३२ ॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याऽथ वा प्रमा ।
गुणः स्यात्, भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥
अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।
तत्प्रमा, न प्रमा नाऽपि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥

अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः । एवमग्रेऽपि ज्ञेयम् ।

॥ इति प्रामाण्यवाद उत्पत्तिवादः ॥

प्रमां निरूपयति । भ्रमभिन्नमिति ।

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं, तत्र रजतांशेऽपि प्रमा न स्यात् । तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह । अथ वेति । तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेत्यर्थः । अथैवं स्मृतेरपि प्रमात्वं स्यात् । ततः किमिति चेत्, तथा सति तत्करणस्याऽपि प्रमाणान्तरत्वं स्यादिति चेन्न । यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात् ।

इदं तु बोध्यम् । येन सम्बन्धेन यद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तेन सम्बन्धेन तत्प्रकारकत्वं च वाच्यं, तेन कपालादौ संयोगादिना घटादिज्ञाने नाऽतिव्याप्तिः ।

एवं सति निर्विकल्पकं प्रमा न स्यात्, तस्य सप्रकारकत्वाभावादत आह । न प्रमेति । ननु वृक्षे कपिसंयोगज्ञानं भ्रमः प्रमा च स्यादिति चेन्न । प्रतियोगिव्यधिकरणकपिसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात् । न च वृक्षे कपिसंयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यात्, तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम् । तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् । लक्ष्यस्याऽननुगमाल्लक्षणस्याऽननुगमेऽपि न क्षतिः ।

॥ इति प्रमालक्षणम् ॥

दिनकरी ।

एवमग्रेपि ज्ञेयमिति । उपमितौ शक्ये सादृश्यज्ञानम्, शाब्दबोधे योग्यतायाः तात्पर्यस्य वा प्रमैव गुण इति भावः । ॥ इति प्रामाण्यवाद उत्पत्तिवादः ॥

नन्वेवं रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानेऽतिव्याप्तिरत आह । तद्वद्विशेष्यकत्वे सतीति । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारत्ववज्ज्ञानमित्यर्थः । सतिसप्तम्या अवच्छिन्नत्वार्थकत्वात् । तत्प्रकारकभ्रमेऽतिव्याप्तेस्तद्वद्विशेष्यकेति । रजत एव द्रव्यमिति ज्ञाने रजतत्वप्रमात्वापत्तेरतत्तत्प्रकारकेति । ज्ञानपदं च तथाविधेच्छायामतिव्याप्तिवारणाय ।

एवं सति तत्प्रकारकत्वस्य प्रमात्वघटकत्वे सति । भ्रमः प्रमा च स्यादिति । लक्षणद्वयस्य तत्र सत्त्वादिति भावः । नन्वेवं लक्षणाननुगम इत्यत आह । लक्ष्यस्येति । अथ

रामरुद्री ।

तत्तद्धर्मवत्सन्निकर्षो हेतुरित्याशयः । न चैवं शुक्तौ रजतमिति भ्रमकाले शुक्त्याविन्द्रियसन्निकर्षसत्त्वाच्छु-

प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।
प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥

प्रमात्वमिति । मीमांसका हि प्रमात्वं स्वतोग्राह्यमिति वदन्ति । तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते । भट्टानां मते ज्ञानमतीन्द्रियं, ज्ञानजन्यज्ञातता प्रत्यक्षा, तया च ज्ञानमनुमीयते । मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते, विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः, तन्मतं दूषयति । न स्वतो ग्राह्यमिति । संशयेति । यदि ज्ञानस्य प्रामाण्यं स्वतो ग्राह्यं

दिनकरी ।

पाकरक्ते घटे श्यामरूपवत्ताप्रतीतेः प्रमात्वं स्यादिति चेदिष्टमेव तत्, घटस्य कदाचिच्छ्यामत्वात् वर्तमानत्वस्य प्रमात्वाघटकत्वात् । अत्र यद्यपि स्मृत्यन्यज्ञानत्वरूपाऽनुभवत्वस्य निवेशे वैयर्थ्यात् ज्ञानत्वघटितमेव प्रमात्वं, तथापि तस्य स्मृतिसाधारणतया तत्करणस्य प्रमाणान्तरतापत्त्या शास्त्रे प्रमाणव्यवहारौपयिकरूपमनुभवत्वघटितमेवानुमन्यन्ते तान्त्रिकाः । वस्तुतस्तु विशिष्टवैशिष्ट्यानुभवे विशेषणतावच्छेदकप्रकारकनिर्णयस्य कारणतया तज्जन्यतावच्छेदककोटिप्रविष्टतयाऽनुभवत्वस्य जातिविशेषत्वे सिद्धे ज्ञानत्वस्यानुभवत्वाघटकत्वान्नानुभवत्वस्य वैयर्थ्यमिति कृतं पल्लवितेन । ॥ इति प्रमालक्षणम् ॥

प्रामाण्यं न स्वतोग्राह्यमिति मूलेन स्वतोग्राह्यत्वं निषिध्यते, तत्र स्वतस्त्ववादिनः के इत्याकाङ्क्षायामाह । मीमांसका हीति । स्वप्रकाशत्वादिति । स्वविषयकत्वादित्यर्थः । तेनैव गृह्यत इति । ज्ञाने गृह्यमाणे तन्निष्ठज्ञानत्वादिधर्मवत्तन्निष्ठप्रामाण्यस्यापि ग्रहे बाधकाभावात्तन्मते सर्वं ज्ञानमयं घटो घटमहं जानामीत्याद्याकारकमिति भावः । तया चेति । अयमत्रानुमानप्रकारः-इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या, घटवृत्तिघटत्वप्रकारकज्ञाततात्वात्, या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या, यथा पटे पटत्वप्रकारिका ज्ञाततेति । अनुव्यवसायेनेति । ननु ज्ञानज्ञानस्य विषयाविषयकत्वात् कथं विषयघटितप्रामाण्यं तस्य विषय इत्यतो ज्ञानज्ञानस्य विषयविषयकत्वे प्रमाणमाह । विषयनिरूप्यमिति । विषयाविषयकप्रत्यक्षाविषय इत्यर्थः । ज्ञानवित्तिवेद्यो विषय इति । विषयविषयकतानियतस्वविषयताकप्रत्यक्षकं ज्ञानमित्यर्थः । अतो न साध्यहेत्वोर्वैयधिकरण्यम् । तथा च ज्ञानं विषयविषयकतानियतस्वविषयकताकप्रत्यक्षकं, विषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयत्वादित्यनुमानं ज्ञानप्रत्यक्षस्य विषयविषयकत्वे प्रमाणमिति भावः । भट्टमते च प्रत्यक्षस्थानाभिषिक्ता ज्ञाततालिङ्गकानुमितिरेव बोध्येत्यन्यत्र

रामरुद्री ।

क्तित्वेन तत्प्रत्यक्षापत्तिरिति वाच्यम् । दोषविशेषस्य प्रतिबन्धकत्वात्तदनुपपत्तेः ॥ इति प्रमालक्षणम् ॥

स्वतोग्राह्यमित्यस्य तज्ज्ञानविषयकतदप्रामाण्याविषयकज्ञानसमुदायग्राह्यमित्यर्थोऽग्रे वक्तव्यः । तत्र गुरूणां मते प्रामाण्याश्रयज्ञानविषयकत्वस्य व्यवसाये भट्टनये ज्ञाततालिङ्गकानुमितौ मिश्राणां च तदनुव्यवसायेऽनुमततया यथाक्रमं स्वविषयकव्यवसायं ज्ञानानुमितिं स्वविषयकानुव्यवसायं च तादृशज्ञानग्राहकयावद्ग्रहान्तर्गतमादाय प्रामाण्ये तद्विषयत्वबाधाद्बाध इति भ्रमं निराकर्तुं तत्तन्मते उपदर्शिततत्तद्ग्रहाणामेव प्रामाण्यविषयकत्वं व्यवस्थापयितुं तन्मतमाह मूले—तत्रेति । टीकायाम्-अत्राऽयमनुमानप्रकार इति । अत्रेदमवधेयम् । आदावयं घट इति प्रत्यक्षम्, अथ ज्ञाततोत्पत्तिः, घटवि-

स्यात्, तदाऽनभ्यासदशापन्नज्ञाने प्रामाण्यसंशयो न स्यात्, तत्र हि यदि ज्ञानं ज्ञातं, तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः? यदि तु ज्ञानं न ज्ञातं, तर्हि धर्मिज्ञानाभावात् कथं संशयः? तस्माद् ज्ञाने प्रामाण्यमनुमेयं, तथा हि इदं ज्ञानं प्रमा, संवादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं, यथाऽप्रमा। इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा, गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्, एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा, स्नेहवति जलत्वप्रकारकज्ञानत्वात्। न च हेतुज्ञानं कथं जातमिति वाच्यम्। पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात्, तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्याऽपि सुग्रहत्वात्, तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वं परं न गृह्यते, संशयानुरोधात्॥ इति प्रामाण्यवादे ज्ञप्तिवाद॥

दिनकरी।

विस्तरः। **अनभ्यासदशापन्नेति।** अनवधृतप्रामाण्यसजातीयेत्यर्थः। ज्ञातमेव-निश्चितमेव। गन्धवतीति व्याप्यवति व्यापकप्रकारकत्वस्य व्यापकवति व्यापकप्रकारकत्वव्याप्यत्वादिति भावः। ननु कथं तर्हि प्रामाण्यस्यानुमेयता, गन्धवति पृथिवीत्वप्रकारकत्वस्येव पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादेरपि प्रत्यक्षसम्भवादत आह। **तत्प्रकारकत्वेति। संशयानुरोधादिति।** यद्यपि ज्ञाने प्रामाण्यनिश्चयो धर्मितावच्छेदकसामानाधिकरण्येन प्रामाण्याभावावगाही धर्मितावच्छेदकावच्छेदेन प्रामाण्यावगाहीति कथं संशयानुपपत्तिः? तथापि प्रवृत्त्युपयुक्तस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यग्रहस्य स्वतस्त्वे संशयानुपपत्तिर्दूषणमिति ध्येयम्। न च प्रामाण्यग्राहकसामग्रीसत्त्वात् कथमग्रिमसंशयानुरोधेन प्रामाण्याग्रह इति वाच्यम्। तत्राग्रिमसंशयानुरोधेन संशयजनकदोषस्य प्रामाण्यनिश्चयप्रतिबन्धकत्वकल्पनादित्याशयात्। ननु यदि प्रामाण्यमनुमेयं तदा प्रमाण्यग्रहवैयर्थ्यम्। तथा हि अयं पुरुष इति निश्चये प्रामाण्यसन्देहेनार्थसन्देहस्यायं पुरुषो न वेत्याकारकस्योत्पत्त्या पुरुषार्थिनः प्रवृत्तिर्न सम्भवति, तत्र प्रामाण्यनिश्चये च न तत्संशयाधीनोऽर्थसन्देह इति प्रामाण्यग्रहस्य प्रवृत्तावुपयोगः, प्रामाण्यग्रहस्यानुमित्यात्मकत्वे च प्रामाण्यानुमापककरादिमति पुरुषत्वप्रकारकत्वादिरूपहेतुग्रहे तद्घटकतया पुरोवर्तिनि पुरुषत्वव्याप्यकरादिग्रहस्याऽऽवश्यकतया तेनैवायं पुरुषो न वेति सन्देहप्रतिबन्धसम्भवादलं प्रामाण्यानुमानेनेति चेन्न, करादौ पुरुषत्वव्याप्यत्वग्रहं विनापि करादिमति पुरुषत्वप्रकारकत्वहेतोः पुरुषत्वघटितप्रामाण्यव्याप्यत्वग्रहसम्भवेन प्रामाण्यानुमानसम्भवात्। एवं न्यायमतेऽनुमितेरिव द्वितीयानुव्यवसायस्यापि प्रामाण्यग्राहकत्वमित्यन्यत्र विस्तरः॥ इति प्रामाण्यवादे ज्ञप्तिवादः॥

रामरुद्री।

शेष्यकघटत्वप्रकारकज्ञानजन्यत्वव्याप्या ज्ञाततेति व्याप्तिस्मरणं चेत्येकः कालः, फलबलेन सर्वत्र तथैव कल्पनात्। तत इन्द्रियसम्बद्धविशेषणतात्मकज्ञाततेन्द्रियसन्निकर्षव्याप्तिस्मरणाभ्यां तादृशज्ञानजन्यत्वव्याप्यघटविशेष्यकघटत्वप्रकारकज्ञाततावतोयमिति तादात्म्यसम्बन्धेन व्याप्यवत्तापरामर्शः, तद्रिन्द्रिययोग्यवृत्तिज्ञाततायास्तदिन्द्रिययोग्यत्वात्, अन्यथाख्यातिवादिना भट्टेनोपनीतभानाभ्युपगमात्, तदनन्तरमुक्ताकारानुमितिरिति। वस्तुतो गुरुमते ज्ञानस्येव भट्टमते ज्ञाततायाः स्वतोग्राह्यत्वमेव, तेनाऽतीन्द्रियासन्निकृष्टस्थले न ज्ञाततालिङ्गकानुमित्यनिर्वाह इत्यन्यत्र विस्तरः। मूले-**अनभ्यासदशापन्नेति।** प्रामाण्यव्याप्यवत्तानिश्चयासमानकालीनेत्यर्थः। **प्रामाण्यं ज्ञातमेवेति।** ज्ञानग्राहकसामग्र्या एव प्रामाण्यग्राहकत्वादित्याशयः। **तस्मादिति।** इदमुपलक्षणम्। अनुव्यवसायानन्तरं प्रामाण्यसंशयानुपपत्तेश्चेत्यपि बोध्यम्॥ इति प्रामाण्यवादे ज्ञप्तिवादः॥

नतु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम् । न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात्, तव मते भ्रमस्याऽभावादिति वाच्यम् । तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात् । सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणं, अस्तु वा तत्राऽपि रजतभेदाग्रहः, स एव कारणमिति । न चाऽन्यथा-

दिनकरी।

गुरुः शङ्कते नन्विति । व्यर्थमिति । व्यावर्त्याया अन्यथाख्यातेरभावादिति भावः । भ्रमजन्येति । न्यायनये भ्रमजन्या प्रवृत्तिस्तव मते न स्यादित्यर्थः । भ्रमस्य—अन्यथाख्यातेः । तत्र—रङ्गगोचरविसंवादिरजतार्थिप्रवृत्तौ । रजते इदं रजतमितिज्ञानकाले रजतभेदाग्रहसत्त्वाद्विसंवादिप्रवृत्त्यापत्तिवारणाय दोषाधीनस्येत्युक्तम् । न्यायनये दोषाधीनो यो रजतभ्रमस्तत्स्थानाभिषिक्तरजतभेदाग्रहस्यैव तन्मते दोषाधीनतया रजते रजतभेदाग्रहस्य दोषानधीनत्वादिति भावः । यत्र रङ्गगोचरमेतद्रजतवद्भूतलमितिज्ञानं तत्र विसंवादितादृशप्रवृत्तिवारणाय स्वतन्त्रोपस्थितेति रजतविशेषणम् । मुख्यविशेष्यतयोपस्थितत्वं तदर्थः । वस्तुतो रङ्गगोचरादेतद्रजतवद्भूतलमिति ज्ञानादपि प्रवृत्तिरिष्टैवेति स्वतन्त्रोपस्थितत्वं न देयमिति ध्येयम् । हेतुत्वादिति । न्यायनयेऽपीदं रजतमिति भ्रमे हेतुतया रजतभेदाग्रहस्य तत्रावश्यकतया तस्यैव हेतुत्वं युक्तं, तद्धेतोरिति न्यायादिति भावः । कार्यकारणभावद्वयकल्पनापेक्षया लाघवादाह । अस्तु वेति । तत्रापि—सत्यरजतगोचरप्रवृत्तावपि । अपिना रङ्गगोचरप्रवृत्तिपरिग्रहः । रजतभेदाग्रहः—रजतभेदासंसर्गाग्रहाभावः । यथाश्रुते रजते नेदं रजतमिति ग्रहेपि प्रवृत्त्यापत्तेः, प्राभाकरमते तत्र रजतभेदग्रहाभावस्य सत्त्वादन्यथाऽन्यथाख्यात्यापत्तेरिति । यद्यपि पुरोवर्तिविशेष्यकस्य रजतभेदासंसर्गग्रहस्य समवायेनाभावो विशेषणतयात्मनिष्ठः प्रतिबन्धकस्तदभावः कारणमिति फलितम् । तथा च रङ्गे इदं न रजतमिति ग्रहेऽपि प्रवृत्त्यापत्तिः, रङ्गविशेष्यकरजतभेदासंसर्गग्रहस्यान्यथाख्यात्यनङ्गीकर्तृमतेऽप्रसिद्धत्वेन तदभावस्य प्रतिबन्धकत्वासम्भवात्, तथापि विषयतासम्बन्धेन प्रवृत्तिं प्रति रजतभेदासंसर्गग्रहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताको योऽभावः स विशेषणतासम्बन्धेन प्रतिबन्धक इति विषयनिष्ठतया प्रतिबध्यप्रतिबन्धकभावकल्पनान्नोक्तदोषः । एवं च तत्पुरुषीयत्वं प्रतिबध्यप्रतिबन्धकत्वयोरवच्छेदककोटौ निवेशनीयमतो न पुरुषभेदमादाय दोषः । न चैवं रङ्गे इदं रजतमितिभ्रमानन्तरं तत्र प्रवृत्तिर्न स्यात्, रजतभेदासंसर्गग्रहस्यान्यथाख्यात्यापत्त्या तत्रानङ्गीकारेण तदभावरूपस्य प्रतिबन्धकस्य सत्त्वादिति वाच्यम् । रजतभेदोपस्थितिविशिष्टस्यैव रजतभेदासंसर्गग्रहाभावस्य प्रतिबन्धकत्वोपगमात् । न चैवमपि रङ्गे इदं रजतं घटो न रजतमिति ज्ञानानन्तरमप्रवृत्त्यापत्तिरिति वाच्यम् । रजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वकल्पनात्, तत्र रङ्गे रजतभेद-

रामरुद्री ।

प्रमालक्षणोपोद्घातसङ्गत्याऽन्यथाख्यातिविचारमवतारयति मूले— नन्वित्यादिना । सर्वज्ञानानां—तत्प्रकारकसर्वज्ञानानां, यथार्थत्वात्—तत्तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वादित्यर्थः । तेनांशिकप्रमात्वमादाय न सिद्धसाधनम् । भेदाग्रहस्य हेतुत्वादिति । वस्तुतस्तु गुरुमतेऽपि रजतत्वप्रकारकप्रवृत्तिप्रत्येकहेतुत्वानुरोधेन रजतत्वनिष्ठप्रकारतानिरूपितत्वमिदन्त्वाद्यवच्छिन्नविशेष्यतायां प्रमास्थल इव भ्रम

ख्यातिः सम्भवति, रजतप्रत्यक्षकारणस्य रजतेन्द्रियसन्निकर्षस्याऽभावात्। रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न। सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात् अन्यत्राऽपि तत्कल्पनात्। न च संवादिप्रवृत्तौ तत्कारणं, विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम्। लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्थं च रङ्गे रजतत्व विशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणप्रत्यासत्तिकल्पनेऽपि न क्षतिः, फलमुखगौरवस्यादोषत्वात्। किं च रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं यत्र जातं तत्र न कारणबाधोऽपि।

दिनकरी।

ग्रहानुत्पत्त्या तत्प्रतिबन्धकदोषस्य स्वीकरणीयत्वात्। न च रङ्गे रजतभ्रमजनकदोष एवोत्तेजकोऽस्तु, किं रजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वस्वीकारेण? एवं च रजतभेदोपस्थितिवैशिष्ट्यमपि प्रतिबन्धके विशेषणं न देयं, रजतभेदानुपस्थितिकाले रङ्गे इदं रजतमिति ज्ञानादप्रवृत्तिप्रसंगाभावात्, तत्र रजतभेदासंसर्गाग्रहस्य प्रतिबन्धकस्य रङ्गे रजतभ्रमजनकदोषरूपोत्तेजकवशिष्टत्वादिति वाच्यम्। रङ्गे इदं रजतमिति भ्रमस्य न्यायमतसिद्धस्य तन्मतेऽभावेन तत्र तादृशदोषस्यानङ्गीकारात्। सम्भवतीत्यनन्तरं येन विसंवादिप्रवृत्तौ तद्धेतुत्वं स्यादिति पूरणीयम्। **सन्निकर्षस्याभावादिति**। ज्ञानलक्षणायाः प्रत्यासत्त्यन्तरस्यकल्पनं तु गौरवदोषदुष्टमित्यभिमानः। हेतुताया इत्यस्यान्वयव्यतिरेकाभ्यामिति शेषः। अन्यत्रापि-रङ्गगोचररजतार्थिप्रवृत्तावपि। तत्कल्पनात्-विशिष्टज्ञानहेतुत्वकल्पनात्। न चात्र मानाभाव इति वाच्यम्। रङ्गे रजतार्थिप्रवृत्तिरिष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्या, प्रवृत्तित्वात्, रजते रजतत्वप्रकारकप्रवृत्तिवदित्यनुमानस्यैव तत्र मानत्वात्, अत्राप्रयोजकत्वमाशङ्कते। **न चेति**। **लाघवेनेति**। संवादिविसंवादिभेदेन कार्यकारणभावद्वयमपेक्ष्य प्रवृत्तिमात्रे विशिष्टज्ञानस्यैव हेतुत्वकल्पनालाघवेनेत्यर्थः। तथा च लाघवज्ञानरूपानुकूलतर्कस्य सत्त्वान्नाप्रयोजकत्वमिति भावः। रजतांशेऽपि सन्निकर्षाभावान्नान्यथाख्यातिः सम्भवतीति प्राभाकरोक्तं दूषणमुद्धरति। **इत्थं चेति**। प्रवृत्तिमात्रे विशिष्टबुद्धेर्हेतुत्वसिद्धौ चेत्यर्थः। **फलमुखेति**। कार्यकारणभावग्रहात्मकफलात् पूर्वं गौरवस्यानिर्णयात् गौरवसन्देहस्य चाऽप्रतिबन्धकत्वादिति। भावः। नन्वस्तु संवादिविसंवादिप्रवृत्तिसाधारणप्रवृत्तित्वावच्छिन्नं प्रत्येव भेदाग्रहः कारणमिति न कार्यकारणभावद्वयकल्पनागौरवम्। न च विशिष्टज्ञानत्वापेक्षयेष्टभेदाग्रहाभावत्वस्य कारणतावच्छेदकत्वे गौरवमिति वाच्यम, रजतत्वविशिष्टानुमित्यादौ रजतभेदाग्रहत्वेन कारणत्वे तत्रैव प्रवृत्तिसाधारणरजतत्वविशिष्टविषयकत्वस्यैव कार्यतावच्छेदकत्वकल्पनेनैव निर्वाहात्। न्यायमये तु प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन हेतुत्वान्तरकल्पने गौरवमिति न तदनुरोधेन कल्पनीयभ्रमात्मकरजतज्ञानार्थं ज्ञानलक्षणाप्रत्यासत्त्यादर इति कारणबाधाद्बाधितमेव मिथ्याज्ञानमित्याशङ्कां मनसि निधाय स्थलविशेषे कारणबाधाभावादनिवार्यमेव मिथ्याज्ञानमित्याह—**किञ्चेत्यादिना**। यत्र रजते न रजतभेदग्रहो न वा रङ्गे रजतभेदग्रहस्तत्र सति युगपदिन्द्रियसन्निकर्षे रजतरङ्गयोरिमे रजते इति ज्ञाने न किमपि बाधकम् रजतत्वेन समं संयुक्तसमवायस्य सत्वात्, तादृशं च ज्ञानं

रामरुद्री।

स्थलेऽपि स्वीक्रियत एव, स्वावच्छेदकावच्छिन्नाभाववन्निष्ठस्वनिरूपितविशेष्यतानिरूपकज्ञानस्यैतन्मतेन भ्रमपदार्थत्वात्। ज्ञाने स्वनिरूपकत्व-स्वावच्छेदकावच्छिन्नाभाववन्निष्ठस्वनिरूपितविशेष्यतानिरूपकत्वो-

अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम्। रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात्, त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। किं चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वन्हिव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा। यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वन्हिव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्, (सेयमुभयतःपाशा रज्जुः)। इत्थञ्चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं, रङ्गं रजततया जानामीत्यनुभवादिति संक्षेपः॥ १३६॥ ॥ इत्यन्यथाख्यातिवादः॥

दिनकरी।

रङ्गांशेन प्रमात्मकं, विशेषणवद्विशेष्यसन्निकर्षरूपप्रमासामग्र्यभावात्, किन्त्वन्यथाख्यातिरेवेति भावः। ननु तत्तद्विशेष्यकतत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषणे तत्तद्विशेष्यघटितसन्निकर्षो हेतुः, अन्यथाऽतिप्रसङ्गात्। तथा च कथं रजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वग्रह इत्यत आह। अपि चेति। अन्यथाख्यातिभयादित्यनन्तरं रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्येति पूरितस्य सत्त्वादित्यनेनान्वयः। अनेन रङ्गेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री रजते इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री च प्रदर्शिता। रङ्गे रजतभेदाग्रहस्येत्यादिना च रङ्गे इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री रजतेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री च प्रदर्शिता। दोषादेवेति। त्वन्मते न्यायाभिमतभ्रमस्थलाभिषिक्तं भेदाग्रहं प्रति दोषस्य हेतुत्वादिति भावः। इदं चेष्टभेदाग्रहः प्रवृत्तिकारणमनिष्टभेदाग्रहो निवृत्तिकारणमिति यथाश्रुताभिप्रायेण। इष्टभेदोपस्थितिविशिष्टेष्टभेदासंसर्गाग्रहः प्रतिबन्धकस्तदभावः कारणमिति दर्शितनिष्कर्षे तु रजतभेदोपस्थितिविशिष्टरजतभेदासंसर्गाग्रहस्य प्रतिबन्धकस्य रङ्गेऽभावादिति रीत्या सामग्री बोध्या। ननु रङ्गे रजतभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रजते प्रवृत्तिरिति कथं युगपत्प्रवृत्तिनिवृत्त्योरापादनमित्यत आह। किं चेति। भेदाग्रहस्य-व्याप्यवद्भेदाग्रहस्य। अनुमितिनिराबाधेति। सति बाधाभावेऽन्यथाख्यातिरूपानुमितिर्निराबाधेत्यर्थः। आपतितमिति। अन्यथाख्यातिरूपमापतितमित्यर्थः। ननु ह्रदे वह्निव्याप्यधूमवद्भेदाग्रहान्न ह्रदो वह्निमानित्यन्यथाख्यातिरूपानुमितिः, परन्त्वगृहीतासंसर्गकं ज्ञानद्वयमेवात्रोत्पद्यते। न च तत्र विशिष्टज्ञानोत्पत्तौ बाधकाभावः, व्याप्यवद्भेदाग्रहस्य ह्रदो वह्निमानित्यन्यथाख्यातिरूपानुमितिकारणस्य सत्त्वादिति वाच्यम्। अन्यथाख्यातौ प्रमाणाभावेन तादृशकार्यकारणभावस्याकल्पनात्, अतस्तत्र प्रमाणं प्रदर्शयति। इत्थं चेति। यद्वा नन्वनुमितिं प्रति विशिष्टज्ञानस्यैव हेतुत्वं, यत्र च न तादृशविशिष्टबोधस्य सामग्री तत्र लिङ्गासंसर्गाग्रहाल्लिङ्गयसंसर्गाग्रहस्यैव परैरुपगमान्नायःपिण्डे वह्न्यनुमित्यनुरोधादन्यथाख्यातिरित्यत आह। इत्थं चेति। चकारोऽप्यर्थः। ननु तादृशानुव्यवसायो नेदंविशेष्यकज्ञाने रजतत्वप्रकारकत्वविशिष्टबुद्धिरूपः, परन्तु रजतत्वप्रकारकत्वासंसर्गाग्रहरूप एवेत्यत आह। संक्षेप इति। विद्यमानेपि भेदग्रहे आहार्यप्रत्यक्षोत्पादादिच्छाया उत्तेजकत्वं वाच्यम्, इच्छानामुत्तेजकत्वानुरोधेन चानुमितित्वादीनामेव कार्यतावच्छेदकत्वात् प्रवृत्तित्वावच्छिन्नं प्रति भेदग्रहाभावत्वेन पृथक्कारणत्वे गौरवापत्त्या बि-

रामरुद्री।

भयसम्बन्धेन प्रकारतावैशिष्ट्यमेव नोपगम्यत इति न काऽपि क्षतिरिति ध्येयम्॥ इत्यन्यथाख्यातिवादः॥

**व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।**
**हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥**

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति । व्यभिचारस्येति । व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणमित्यर्थः । व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात् तदभावः कारणम् । एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनं तु न कारणं, व्यभिचारास्फूर्त्तौ सकृ-

दिनकरी

शिष्टज्ञानत्वेनैव तत्र हेतुता कल्पनीयेति विसंवादिप्रवृत्त्यनुरोधेनान्यथाख्यातिर्दुर्वारं वेति भावः ॥ १३६ ॥ इत्यन्यथाख्यातिवादः ॥

ननु प्रामाण्यमनुमानगम्यं तदा भवेद्यद्यनुमानं प्रमाणं भवेत्तदेव न सम्भवति व्याप्तेर्ग्राहकाभावेनाज्ञानादित्यतः प्रामाण्यानुमितिप्रयोजकतया 'व्यभिचारस्याग्रहोऽप सहचारग्रहस्तथा' इति मूलेन व्याप्तिग्रहोपायो दर्श्यते, स चायुक्तः, स्वकरणीभूतव्याप्तिस्वरूपज्ञानाभावादित्यत आह । **पूर्वं व्याप्तिरुक्तेति** । व्यभिचाराग्रहस्य व्याप्तिग्राहकतामुपपादयति । **व्यभिचारग्रहस्येति** । सहचारग्रहस्य तामुपपादयति । **एवमिति** । भूयोदर्शनस्य कारणत्वं खण्डयति । **भूयोदर्शनं त्विति** । व्यतिरेकव्यभिचारमाह । **सकृद्दर्शनेपीति** । भूयोदर्शन-

रामरुद्री ।

प्रामाण्यनिरूपणानन्तरं व्याप्तिग्रहोपायनिरूपणोपयिकीं सङ्गतिमादर्शयति टीकायाम्—**नन्वित्यादिना** । तथा च व्याप्तिग्रहोपायस्य प्रामाण्यज्ञानजनकव्याप्तिज्ञानजनकत्वात्मकस्मरणप्रयोजकसम्बन्धरूपप्रसङ्गसङ्गतिमत्त्वेनैव निरूपणमिति भावः । व्याप्तिग्रहोपायनिरूपणप्रस्तावे **'पूर्वं व्याप्तिरुक्ता'**—इत्यादिकथनस्याऽसङ्गतिमालोच्य व्याप्तिग्रहोपायनिरूपणविरोधितद्घटकव्याप्तिजिज्ञासानिवर्तनोपयिकतां तस्य व्यवस्थापयितुमाह । **स चाऽयुक्त इति** । मूले—**व्याप्तिग्रहे प्रतिबन्धकत्वादिति** । व्याप्तिघटकीभूतव्यापकत्वांशग्रहे प्रतिबन्धकत्वादिति भावः । नन्वेवमपि सहचारग्रहस्य व्याप्तिग्रहजनकत्वे मानाभावः, न च विशेषणज्ञानमर्यादया तस्य हेतुत्वमावश्यकमिति वाच्यम् । तथा सति व्याप्तिशरीरे व्यभिचारादेरपि निविष्टतया तज्ज्ञानानामपि कारणत्वस्य वक्तव्यतापत्तेरित्यतः सहचारदर्शनस्य व्याप्तिग्रहत्वावच्छिन्नं प्रत्येव पृथक्कारणतां व्यवस्थापयति । **एवमिति** । व्याप्तिग्रहत्वावच्छिन्नं प्रतीति शेषः । तेन न सहचारवैशिष्ट्यबुद्धित्वावच्छिन्नं प्रति जनकतामादायाऽन्यथासिद्धिः । इत्थं च साध्याभाववदवृत्तित्वहेतुव्यापकसाध्यसामानाधिकरण्यादिरूपव्याप्तिविषयकग्रहत्वावच्छिन्नं प्रत्येव तस्य हेतुत्वं पर्यवसितम्, तथा च व्यापकसामानाधिकरण्यरूपव्याप्तिविशेष्यकज्ञानस्य तद्वैशिष्ट्यानवगाहित्वेऽपि सहचारग्रहजन्यत्वं सिद्ध्यतीत्यवधेयम् । इदं च प्राचीनमताभिप्रायेण ।

नव्यास्तु धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादिकमेव व्याप्तिः, सामानाधिकरण्यमात्रस्य रासभादिसाधारण्येन धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तेरन्यथा दुर्वारत्वात् । तादृशव्याप्तिशरीरे च साध्यसहचारस्य विशेषणविधया निवेशाद्विशेषणज्ञानविधयैव तद्ग्रहस्य हेतुता, अन्यविधहेतुताग्राहकत्वेनाऽभिमतान्वयव्यतिरेकादीनामसिद्धेः । विशेषणत्वस्य तुल्यत्वेऽपि व्यभिचारज्ञानादीनां कारणत्वाकथनं पुनः स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हत्वात् न क्षतिकरमिति प्राहुः ।

**भूयोदर्शनमिति** । भूयांसि दर्शनानीत्यर्थः । साध्यहेत्वोरिति शेषः । कारणत्वं तु स्वजन्यसंस्कारसम्बन्धेन बोध्यम् । तेनैकदा भूयसां दर्शनानामसमवधानेऽपि न क्षतिः । प्रथमगृहीतादिधूमस्याऽपि पुरुषस्य व्याप्तिग्रहसम्भवान्न भूयसां दर्शनानां कारणत्वं सम्भवतीति परिहरति—**सकृ-**

दर्शनेऽपि क्वचिद् व्याप्तिग्रहात्, क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते ॥ इति व्याप्तिग्रहोपायनिरूपणम् ॥

यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षे बाधकस्तर्कोऽपेक्षितः । तथाहि वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति तदा सा वह्निधूमयोः कार्य्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते । यद्ययं वह्निमान् न स्यात्तदा धूमवान् न स्यात्, कारणं विना कार्य्यानुत्पत्तेः । यदि क्वचित् कारणं विनापि भविष्यत्यहेतुक एव भविष्यतीति तत्राप्याशङ्का भवेत् तदा सा व्याघातादपसारणीया । यदि हि कारणं विना कार्य्यं स्यात् तदा धूमार्थं वह्नेस्तृप्त्यर्थं

दिनकरी ।

स्याहेतुत्वेपि क्वचित्प्रयोजकतया तदादर इत्याह । क्वचिदिति ।

॥ इति व्याप्तिग्रहोपायनिरूपणम् ॥

तर्कोऽपेक्षित इति । शङ्कापनयनार्थं तर्कोऽपेक्षित इत्यर्थः । तद्दर्शयति–तथा हीत्यादिना । यद्ययमिति । अयं–धूमवान् पर्वतः । कारणं विनेति । तथा च धूमो वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादिति तर्काकारो बोध्यः । यथाश्रुते वह्निमान्न स्याद् धूमवान्न स्यादिति तर्कस्य विषयपरिशोधकस्य व्याप्तिग्रहानौपयिकतयाऽसङ्गतेः । तत्रापि–तादृशतर्ककारणीभूतकार्यकारणभावग्रहेपि । आशङ्का भवेत्–आशङ्का प्रतिबन्धिका भवेत् । व्याघातमेव दर्शयति–यदि हीत्यादिना । ननु तर्कं प्रत्यापाद्यव्याप्यापादकवत्ताज्ञानं कारणं, तत्र व्याप्ति-

रामरुद्री ।

दिति । भूयोदर्शनस्यैव हेतुत्वासिद्धौ तदनुरोधेन जन्मान्तरीयभूयोदर्शनकल्पनं सुदूरपराहतमिति भावः । ननु भूयोदर्शनं न भूयांसि दर्शनानि । किं तु भूयःसु स्थानेषु दर्शनम्, तच्चाऽऽवश्यकम्, अन्यथा साध्यसाधनयोर्महानसे ग्रहणकाले महानसत्वादौ साध्यव्यापकत्वसाधनाव्यापकत्वसन्देहसम्भवेनोपाधिसन्देहस्य तन्निश्चयस्य वा सम्भवात्, तदपेक्षणे तु साध्याधिकरणचत्वरादिग्रहस्याप्यावश्यकत्वे तत्रैव महानसत्वादेरभावग्रहसम्भवेन तत्र साध्याव्यापकत्वनिश्चयसम्भवेनोपाधिज्ञानविधूननसम्भवादित्याशङ्क्य निराचष्टे—क्वचिदिति । व्यभिचारशङ्काविधूननद्वारेति । उपाधिसन्देहाहितेत्यादिः । उपयुज्यत इति । तथाच भूयोदर्शनानामुपयुक्तत्वेऽप्यन्यथासिद्धत्वं दुष्परिहरमेव । अत एव पार्थिवत्वलोहलेख्यत्वयोः शतशः सहचारग्रहेऽपि वज्रभिन्नत्वरूपोपाधिसन्देहो न निराक्रियते, भूयसां च दर्शनानां सङ्ख्याऽनियमोऽपीति सङ्क्षेप इति भावः । इति व्याप्तिग्रहोपायनिरूपणम् ॥

टीकायाम्—विषयपरिशोधकस्येति । व्यभिचारशङ्काऽप्रतिबन्धकस्येत्यर्थः । तद्धर्मावच्छिन्नापादकताकापत्तित्वेनैव तद्धर्मावच्छिन्नवत्त्वबुद्धिं प्रति विरोधितया वह्न्यभाववह्निमद्भेदादेरापादकत्वे तद्बुद्ध्यात्मकतत्संशयप्रतिबन्धस्यैव सम्भवेन तद्द्वारा वह्निनिश्चयोपयोगिताया एवोक्ततर्के सम्भवात्तस्य व्याप्तिनिश्चयोपयोगित्वकथनं यथाश्रुते न सम्भवतीति भावः । प्रतिबन्धिका भवेदिति । तर्कस्य कार्यकारणभावरूपबाधनिश्चयकालीनेच्छाजन्यज्ञानतया मानसत्वविरोधिधर्मिताविच्छेदककत्वप्रकारकज्ञानरूपे तस्मिन् कार्यकारणभावशङ्काया धर्मितावच्छेदकावगाहिताप्रतिरोधकत्वसम्भवात् बाधनिश्चयरूपतत्सामग्रीविघटकत्वाच्चेति भावः । भवेदित्यत्र सम्भावनायां लिङ् । तथा च तादृशशङ्काया व्याघातात्–प्रतिबन्धकात् तर्कात् अपसारणीया—निवर्तनीयेत्यर्थः । तत्र कीदृशस्तर्क इत्याशङ्कायां तर्काकारं विवृणोतीत्याह । व्याघातमेवेति । मूले – यदि हीत्यादि । अयं पुरुषो यदि वह्निधूमकार्यकारणभावाशङ्कावान् स्यात् वह्न्युपादानवान्न स्यादित्यर्थः । वह्न्युपादानस्य वह्निधूमयोः कार्यकारणभावशङ्काविरोधि-

**साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।**
**स उपाधिर्भवेत् तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥**

**भोजनस्य वा नियमत उपादानं तदैव न स्यादिति । यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति । तदिदमुक्तम्—तर्कः क्वचिदिति ॥ १३७ ॥**

**इतितर्कनिरूपणम् ॥**

**इदानीं ( परकीय ) व्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति । साध्यस्येति ।**

**दिनकरी ।**

ज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्त्तकस्तर्कोऽपेक्षितः, एवमग्रेपीत्यनवस्थेत्यत आह । **यत्रेति । स्वत एव**—शङ्कासामग्रीविरहादेव । न तर्कापेक्षेत्यनन्तरमतो नाऽनवस्थेति शेषः । ननु तर्कस्य न व्यभिचारशङ्कानिवर्त्तकत्वं, तर्ककारणीभूतव्याप्तिज्ञानेनैव तन्निवृत्तेः सम्भवादिति चेत्, अत्र केचित् । अनाहार्यशङ्कायास्तर्ककारणीभूतव्याप्तिज्ञानेन निराससम्भवेऽप्याहार्य-शङ्कायास्ततो निवृत्तिर्न सम्भवति, आहार्यज्ञानस्य तदप्रतिबध्यत्वात् , किन्तु तर्केणैव । तथा हि अनिष्टप्रसञ्जनात्मकेन तर्केणापादकज्ञाने आपाद्यज्ञानरूपानिष्टसाधनत्वज्ञानजननद्वारा आपा-दकज्ञाने द्वेषो जन्यते । तेन चापादकज्ञाने इच्छाप्रतिबन्धः क्रियते । एवं चेच्छारूपकारणवि-रहादेव नाहार्यशङ्कोत्पत्तिरित्यर्थवशसम्पन्नमेव तर्के तन्निवर्तकत्वमिति । केचित्तु तर्कस्य शङ्कानिवर्तकत्वं व्याप्तिज्ञानकारणीभूतो यो व्यभिचारशङ्काविरहस्तत्सम्पादकत्वम् । एवं च व्यभिचारशङ्काप्रतिबन्धकतायां तर्कस्योत्तेजकतयोत्तेजकाभावविशिष्टव्यभिचारशङ्काविरहसम्पा-दकत्वमक्षुण्णमेव तर्कस्येत्याहुः । परे तु तदापादकापत्तित्वेनाहार्यानाहार्यसाधारणतद्वि-शिष्टबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकतया तर्कस्य व्यभिचारशङ्कानिवर्तकत्वमित्याहुः । तर्कश्चाहार्यारोपविशेषः । तत्त्वं च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवाज्जिज्ञा-साविशेषनिवर्त्तकतया वा सिद्ध इति । तर्कश्च द्विविधो विषयपरिशोधको व्याप्तिग्राहक-श्चेति । तत्र विषयपरिशोधको निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः । धूमो यदि वह्निव्य-भिचारी स्याद्वह्निजन्यो न स्यादित्यादिश्च व्याप्तिग्राहकः । विस्तरस्त्वन्यत्रानुसन्धेयः ॥ १३७ ॥

॥ इति तर्कनिरूपणम् ॥

**इदानीं**—व्याप्तिग्रहोपायनिरूपणोत्तरं व्याप्तिनिश्चयाभावप्रयोजकव्यभिचारशङ्काकारण-ज्ञानविषयत्वेनोपाधेः स्मरणे सति । तथा च प्रसङ्गसङ्गत्योपाधिनिरूपणमिति भावः । सिद्धि-

**रामरुद्री ।**

त्वादिति भावः । **उपादानं** च यद्यपि तद्विषयिणी प्रवृत्तिस्तथाऽप्यावश्यकत्वादिह तत्प्रयोजकं वह्नेः धूमसाधनताज्ञानमेव विवक्षितम् । तेन प्रवृत्तेः स्वातन्त्र्येण कार्यकारणभावशङ्काविरोधित्वाभावेऽपि न क्षतिः । टीकायाम्—**तर्ककारणीभूतेति ।** धूमो यदि वह्निव्यभिचारी स्यादित्यादितर्कस्य धर्मितावच्छेदकप्रकारकनिश्चयमुद्रया वह्निव्यभिचाराभावात्मकव्याप्तिनिश्चयजन्यत्वादिति शेषः । तथा च सर्वत्रैव तदभावनिश्चयस्याऽपेक्षणीयतया तेनैव तद्वत्ताबुद्धिप्रतिरोधसम्भव इति भावः । आपत्तिमात्रस्याऽनिष्टविषयत्वे मानाभावेऽपि यस्या आपत्तेरनिष्टविषयकत्वं तस्या एव शङ्कानिवर्तकत्वम् । अत एवेष्टापत्तेर्न विरोधित्वमित्याशयः । एतन्मते, तर्कोत्पत्त्यव्यवहितोत्तरमाहार्यशङ्कोत्पत्तिसम्भवो न विरुद्ध्यत इत्यतो मतान्तरमाह—**केचित्त्विति ।** गौरवमेतन्मतेऽप्रामाणिकत्वं चाऽस्वरसबीजम् ॥ १३७ ॥ इति तर्कनिरूपणम् ॥

व्याप्तिग्रहोपायनिरूपणानन्तरमुपाधिनिरूपणे मूलकारेण सङ्गत्यप्रदर्शनात्तन्न्यूनतामाकलय्य स्वयं

साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापक इत्यर्थः ॥

ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं नोपाधिः स्यात्, तस्य साध्यव्यापकत्वाभावात्, श्यामत्वस्य घटादावपि सत्वात्, एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्वं नोपाधिः स्यात्, प्रत्यक्षत्वस्यात्मादावपि सत्त्वात् तत्र च रूपाभावात्, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्यात्, विनाशित्वस्य प्रागभावेऽपि सत्त्वात् तत्र च भावत्वाभावादिति चेन्न । यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्म्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्य्यात् । मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं, तदवच्छिन्नसाधनाव्यापकं च । एवं पक्षधर्मवहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वं वहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च । एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्य-

दिनकरी ।

विषयत्वरूपसाध्यत्वस्य सिद्धिजनकत्वरूपसाधनत्वस्य च सोपाधावभावादभिमतेति । यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्नाव्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः । यथाश्रुतेऽभिमतत्वस्य विशेषणत्वे यत्र न तदभिमानस्तत्राव्याप्तिः स्यात् । यदवच्छिन्नत्वविवक्षणाद् गुणकर्मान्यत्वविशिष्टसत्तावाञ्जातिमत्वादित्यादौ संयोगी गुणकर्मान्यत्वविशिष्टसत्वादित्यादौ च नाव्याप्त्यतिव्याप्ती । व्यापकत्वाव्यापकत्वे एकप्रकारेणैकसम्बन्धेन च विवक्षिते । तेन द्रव्यत्वत्वेन समवायसम्बन्धेन च वह्निं प्रति व्यापकस्य द्रव्यत्वस्य द्वित्वादिना संयोगादिसम्बन्धेन च धूमं प्रत्यव्यापकत्वेऽपि वह्निमान् धूमादित्यत्र द्रव्यत्वादौ नातिव्याप्तिः ॥

श्याम इति । काकः श्यामो मित्रातनयत्वादित्यादावित्यर्थः । तेन वक्ष्यमाणेन ध्वंसो विनाशी जन्यत्वादित्यनेन न पौनरुक्त्यम्, अस्य साधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्य साधनरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात् । साध्याव्यापकत्वमुपपादयति । श्यामत्वस्येति । ननु साधनावच्छिन्नसाध्यव्यापकत्वं विवक्षणीयमतो नोक्ताव्याप्तिरतः पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह । एवं वायुरिति । अत्र प्रत्यक्षं प्रत्युद्भूतरूपस्याव्यापकत्वे रूपस्य सुतरामव्यापकत्वमित्युद्भूतपदं व्यर्थं, तथाप्युपाधेः साध्यव्यापकत्वे कार्यकारणभावलक्षणानुकूलतर्कदर्शनार्थं तदिति ध्येयम् । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वोक्तौ तु पूर्वोक्तशाकपाकजत्वादावव्याप्तिरिति भावः । अव्याप्तीः परिहरति—मित्रातनयत्वेत्यादिना ।

रामरुद्री ।

सङ्गतिं प्रदर्शयति—**इदानीं व्याप्तिग्रहेत्यादि । सिद्धिविषयत्वरूपेति ।** स्वनिष्ठप्रकृतहेतुव्यापकत्वविषयताप्रयुक्तानुमितिविषयत्वस्येत्यर्थः । **सिद्धिजनकत्वरूपसाधनत्वस्येति ।** यत्किञ्चिद्वस्तुनिष्ठविधेयताशाल्यनुमितिजनकतावच्छेदकीभूतप्रकारतावच्छेदकधर्मवत इत्यर्थः । व्याप्यव्यापकयोरिति पर्यवसितार्थः । मूले—**अभिमतेति ।** तथा च निरूप्यनिरूपकभावापन्नव्याप्यत्वव्यापकत्वविषयतानिरूपितविषयताश्रयेत्यर्थः पर्यवसितः । **नाऽव्याप्त्यतिव्याप्ती इति ।** द्रव्यत्वादावित्यादिः । टीकायाम्—**न पौनरुक्त्यमिति ।** काके मित्रातनयत्वाभावाच्च न तस्य पक्षधर्मत्वमिति भावः । मूले—**प्रत्यक्षस्पर्शाश्रयत्वादिति । प्रत्यक्षस्य यः स्पर्शः**—विषयता, **तदाश्रयत्वादित्यर्थः ।** तेन न साधनावच्छिन्नसाध्यव्यापकत्वमादायाऽस्योपाधेः पौनरुक्त्यम् । आत्मनोऽपि निरुक्तरीत्या प्रत्यक्षस्पर्शाश्रयतया तत्रो-

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥

व्यापकं भावत्वं बोध्यम् । सद्धेतोस्त्वेतादृशो धर्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किञ्चित् स्यात् । व्यभिचारिणि त्वन्तत उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकमधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेः सम्भवतीति ॥ १३८ ॥

अत एव लक्षणमपि उपाधिरूपमेतदनुसारेण दर्शयति । सर्व इति । स्वसाध्येति । स्वमुपाधिः, स्वं च साध्यं च स्वसाध्ये, तयोर्व्यभिचारितेत्यर्थः ॥१३९॥

दिनकरी ।

व्यभिचारिणि त्वित्यादि । वायुः प्रत्यक्षो द्रव्यत्वादित्यादौ प्रत्यक्षत्वरूपसाध्याधिकरणमात्मा उद्भूतरूपात्मकोपाधिशून्यं साध्यव्यभिचाराधिकरणं गगनं तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वस्योद्भूतरूपेऽभावादुक्तमुपाध्यधिकरणमिति । उद्भूतरूपाधिकरणपरमाण्वाकाशान्यतरत्वावच्छिन्नसाध्याप्रसिध्या तद्दोषतादवस्थ्यमतः साध्याधिकरणमिति । उद्भूतरूपाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटादिस्तद्वृत्तिद्रव्यत्वात्मकधर्मावच्छिन्नसाध्यव्यापकत्वाभावादुक्तं यच्चेत्यादि । तत्रापि साध्यव्यभिचाराधिकरणपरमाणुघटान्यतरत्वावच्छिन्नद्रव्यत्वात्मकसाधनव्यापकत्वादुपाधिशून्यमिति । तत्रैवोपाध्यधिकरणं साध्याधिकरणं घट उपाधिशून्यमधिकरणमात्मा तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वाभावात् साध्यव्यभिचाराधिकरणमिति । उद्भूतरूपाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटः यच्चोद्भूतरूपशून्यं प्रत्यक्षत्वाभावाधिकरणमतीन्द्रियरूपादि तदन्यतरत्वावच्छिन्नद्रव्यत्वरूपसाधनाव्यापकत्वस्योद्भूतरूपेऽभावात् साध्याभावाधिकरणमिति परित्यज्य साध्यव्यभिचाराधिकरणमित्युक्तं । तदर्थश्च साधननिष्ठसाध्यव्यभिचारनिरूपकाधिकरणत्वम् । अन्तत इति । तादृशधर्मान्तरस्यास्फूर्तावित्यर्थः । न च साध्यव्यापकत्वं साध्यनिष्ठव्याप्तिनिरूपकत्वं, तथा च शुद्धसाध्यव्यापके धूमादिनिष्ठव्याप्तेः केवलधूमत्वावच्छिन्नत्वात् कथं तादृशधर्मान्तरावच्छिन्नधूमादिनिष्ठव्याप्तिनिरूपकत्वमार्द्रेन्धनादीनामिति वाच्यम् । तद्धर्माधिकरणीभूतसाध्याधिकरणनिष्ठाभावाप्रतियोगित्वरूपस्यैव तद्धर्मावच्छिन्नसाध्यव्यापकत्वस्य लक्षणे प्रवेशो न तु यद्धर्मावच्छिन्नसाध्यनिष्ठव्याप्तिनिरूपकत्वस्येत्याशयात् । धूमवान् वह्नेरित्यादावयःपिण्डमहानसान्यतरत्वावच्छिन्नसाध्यव्यापकं व्यञ्जनवत्त्वादिकं सद्ग्राह्यमेवेति ध्येयम् ॥ १३८ ॥

अत एव—यद्धर्मावच्छिन्नत्वघटितनिरुक्तलक्षणस्य तात्पर्यविषयत्वादेव । तदनुसारेण—निरुक्तलक्षणानुसारेण । स्वस्य साध्यमितिषष्ठीतत्पुरुषभ्रमं व्यावर्तयितुमाह । स्वं चेति । नव्यास्तु यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिर्लाघवात् । अत एव जलत्वतेजस्त्वयोस्तदुभयत्वेन रूपेण न क्वचिदप्युपाधित्वमित्याहुः ॥ १३९ ॥

रामरुद्री ।

द्भूतरूपवत्त्वाभावात् । टीकाकारस्तु द्रव्यत्वादिति हेतुं मन्वानोऽन्यथैव ग्रन्थं संयुयुजे ॥ १३८ ॥

मूले—तयोर्व्यभिचारितेत्यर्थं इति । तथा च साध्याभावाधिकरणीभूतसाधनाधिकरणनिष्ठाभाव-

**व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्।**

उपाधेर्दूषकताबीजमाह। व्यभिचारस्येति। उपाधिव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः। तथा हि यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी, आर्द्रेन्धनव्यभिचारित्वादिति। व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात्। यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवत्युपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा स श्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वं श्यामत्वव्यभिचारि, मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति। बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात् स्वव्याघातकत्वाच्च नोपाधिः। बाधोन्नीतस्तु पक्षेतर उपाधिर्भवत्येव, यथा वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नेरुष्णत्वग्रहे वह्नीतरत्वमुपाधिः। यस्य तूपाधेः साध्यव्यापकत्वादिकं सन्दिह्यते स सन्दिग्धोपाधिः। पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः, कथकसम्प्रदायानुरोधादिति।

दिनकरी।

**तद्धर्मवत्युपाधिव्यभिचारेण**—तद्धर्माधिकरणीभूतं यदुपाध्यभावाधिकरणं तद्वृत्तित्वेन। वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ तु प्रमेयत्वं प्रत्यक्षत्वव्यभिचारि वहिर्द्रव्ये उद्भूतरूपव्यभिचारित्वादित्यादि द्रष्टव्यम्।

ननु पक्षेतरत्वेऽतिव्याप्तिः। न च तस्य लक्ष्यत्वमेव, एकाश्रये येषामित्यादिमूलेन प्रदर्शितस्य लक्ष्यतावच्छेदकस्य तत्राभावात्। तत्र हेतौ पक्षेतरत्वव्यभिचारस्य पक्षमादायैव सम्भवात् साध्यव्यभिचारस्य तमादायासम्भवादत आह। बाधानुन्नीतेति। **स्वव्याघातकत्वादिति।** उपाधिमात्रस्य दूषकत्वव्याघातकत्वादित्यर्थः। पक्षेतरत्वस्योपाधित्वे सर्वत्रानुमाने पक्षेतरत्वस्योपाधेः सम्भवादनुमानमात्रोच्छेदापत्त्या व्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्यासम्भवादिति भावः। ननु तथापि यत्र साध्यव्यापकताग्राहकं प्रमाणमस्ति तत्र पक्षेतरत्वे लक्षणातिव्याप्तिर्दुर्वारेत्यत आह। बाधोन्नीतस्त्विति। बाधेन—पक्षे साध्याभाववत्तया उन्नीतः—साध्यव्यापकत्वेन निश्चित इत्यर्थः। **संदिग्धोपाधिरपीति।** पक्षे साध्यसन्देहेन साध्यव्यापकतासन्देहस्य पक्षेतरत्वे सम्भवादिति भावः। न च स्वव्याघातकत्वेऽनानुपाधित्वादेवाऽनुद्भावनसम्भवे सम्प्रदायमात्रे तद्धेतुत्वकथनमसङ्गतमिति वाच्यम्। यत्र साध्यव्यापकताग्राहकतर्कावतारस्तत्र व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यम्भावेन व्यभिचारानुमापकत्वरूपस्य दूषकत्वस्य व्याघातासम्भवात्।

रामरुद्री।

प्रतियोगित्वे सति साध्यसमानाधिकरणा इत्यर्थः। अत्र साधनाधिकरणे साध्याभावाधिकरणत्वस्याऽनिवेशे वह्निमान् धूमादित्यादौ महानसत्वादावतिव्याप्तिः। प्रतियोगित्वान्तमात्रविरक्षणे च तत्रैव गगनादेरप्युपाधित्वापत्तिर्बोध्या। इष्टापत्तिस्तु न सम्भवति, प्रागुक्तलक्षणविरहेणाऽव्याप्तिप्रसङ्गादिति ध्येयम्॥१३९॥

**मूले—पक्षेतर इति। नोपाधिरिति।** नोपाधित्वेन कथामुद्भाव्य इत्यर्थः। एतदेव चाऽग्रे 'पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः' इत्यादिना वक्ष्यति। प्रमाणत्वे सति स्वाव्याघातकत्वमप्युपाधिलक्षणप्रविष्टं मन्वानः शङ्कते टीकायाम्—**न चेत्यादिना। दूषकत्वस्य व्याघातासम्भवादिति।**

शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥

केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम्। तथाहि अयोगोलकं धूमवद्वह्नेरित्यादावयोगोलकं धूमाभाववत्, आर्द्रेन्धनाभावादिति सत्प्रतिपक्षसम्भवात्। इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः। यथा करका पृथिवी, कठिनसंयोगवत्त्वादित्यादावनुष्णाशीतस्पर्शवत्त्वम्। न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम्। सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात् अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरिति वदन्ति। इत्युपाधिनिरूपणम् ॥

शब्दोपमानयोरिति। वैशेषिकाणां मते प्रत्यक्षमनुमानं च प्रमाणम्, शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यम्। तथाहि दण्डेन गामभ्याजेत्यादिपदानि वैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकांक्षादिमत्प-

दिनकरी।

सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनां मतमाह। केचित्त्विति। इत्थंञ्चेति। सत्प्रतिपक्षोत्थापकतया दूषकत्वे चेत्यर्थः। अत्र च—सत्प्रतिपक्षोत्थापकत्वपक्षे च। पक्षावृत्तिरिति। पक्षवृत्तित्वे तु पक्षे तदभावेन साध्याभावासाधनादिति भावः ॥ इत्युपाधिनिरूपणम् ॥

गुरुमते लौकिकः शब्दोऽनुवादकः वैदिक एव प्रमाणं, तन्मतनिराकरणायाऽऽह। वैदिकेति। अत्र स्वर्गकामो यजेतेत्यादिपदत्वेन पक्षता, तेन विशेषतः संसर्गसिद्धिरिति द्रष्टव्यम्। तात्पर्यविषयेति। अत्र ब्राह्मणे विद्येत्यादौ यदाधिकरणत्वसंसर्गे ता-

रामरुद्री।

तथा च व्यभिचारोन्नायकस्यैव नवीनैरुपाधिलक्षणलक्ष्यतयाऽभ्युपगतत्वेन पक्षेतरस्याऽपि बहुत्र तथात्वसम्भवात्तत्र निरुक्तलक्षणासत्त्वेनाऽव्याप्तिरेव स्यात्, अतः पक्षेतरान्यत्वपर्यवसन्ने प्रमाणवत्त्वस्वाव्याघातकत्वे लक्षणे न प्रवेशनीये। तथा च तेषामुपाधित्वसम्भवेऽपि तदुद्भावनं कथकसम्प्रदायानुरोधान्न कर्तव्यमित्यत्रैव पर्यवसानमिति भावः। इदमुपलक्षणम्। मूलोक्तस्योपाधिलक्षणलक्ष्यरूपस्याऽपि पक्षेतरत्वे सम्भवो बोध्यः ॥ इत्युपाधिनिरूपणम् ॥

तन्मतनिराकरणायेति। अन्यथा लौकिकपदानामेव प्रमाणान्तरत्वखण्डनसम्भवेन तन्मतानिरासादिति भावः। इत्यादिपदत्वेनेति। आदिपदेन घटमानयेत्यादिलौकिकवाक्यपरिग्रहः। पक्षतेति। तथा च घटपदोत्तरामपदत्वेन अम्पदोत्तरानयनपदत्वादिना च पक्षत्वं पर्यवसितम्, समूहालम्बनात्मिका चाऽनुमितिः। अन्यथाऽस्मारितपदार्थसंसर्गज्ञानपूर्वकत्वमादायाऽर्थान्तरापत्तिवारणायाऽग्रे विवक्षणीयस्य पदार्थे स्मारितत्वविशेषणस्याऽव्यावर्तकतापत्तेः। सर्वेषामेव यथाकथञ्चित्पदस्मारितत्वाविशेषात्, प्रकृतपदस्मारितत्वविवक्षणे चाऽस्मदनुमतेरित्याशयः। ब्राह्मणे विद्येत्यादाविति। संसर्गे तात्पर्यविषयत्वनिवेशेऽपि यदा घटमानयेति वाक्यप्रयोक्तुः समानकालीनत्वनिष्ठत्वरूपसंसर्गद्वय एव तात्पर्यमस्ति, तत्र तात्पर्यविषयसंसर्गपदेन समानकालीनत्वसंसर्गमादाय तत्सिद्धावर्थान्तरं दुर्वारम्। न चेष्टापत्तिः, तत्र निष्ठत्वसंसर्गस्याऽपि तात्पर्यविषयत्वेन तज्ज्ञानपूर्वकत्वसिद्ध्यैवोद्देश्यपर्यवसानात्, समानकालीनत्वादिसंसर्गज्ञानपूर्वकत्वस्याऽधिकस्य सिद्धावप्यधिकन्त्वित्यादिन्यायेन तत्सिद्धेः प्रकृताविरोधित्वात्। यत्र समानकालीनत्वसंसर्गमात्र एव च तात्पर्य तत्र निरुक्तव्याप्तिज्ञानादिघटितानुमितिसामग्रीसत्त्वे तत्संसर्गप्रमापूर्वकत्वानुमानं नैयायिकानामपि दुरपह्नवमेव। नैयायिकमतसिद्धशाब्दसामग्रीस्थलमात्रनियतत्वमेव च तादृशशाब्दबोधसमानाका-

**दकदम्बत्वात्, घटमानयेति पदकदम्बवत् ।**

**दिनकरी ।**

त्पर्यं तदा विषयत्वादिसंसर्गेणार्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गे विशेषणम् । तात्पर्यज्ञाने इतरपदार्थत्वेनेतरपदार्थस्य प्रवेशात् घटत्वादिना स्मृतस्य **संसर्गो न सिद्ध्येदतः स्मारितेति** । स्मारितत्वं च वृत्त्या बोध्यम् । तेन वस्तुपदात् समवायेनाकाशत्वादिनोपस्थापितेन रूपेण संसर्गसिद्ध्यभावेऽपि न क्षतिः । **हेतौ चा**ऽयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञः पुरुष इत्यादिभागे राजपुरुषयोर्योग्यार्थयोः संसर्गे तात्पर्याभावेन साध्याभावाद्व्यभिचार इत्याकाङ्क्षाविशेषणम् । तच्चेदं पदमनेन पदेन सहामुकसंसर्गेणैतदर्थान्वितस्वार्थबोधं जनयत्विति **पदतात्पर्यार्थकम्** । तेन नाऽऽकाङ्क्षाया इतरांशवैयर्थ्यप्रसङ्गः ।

**रामरुद्री ।**

कारानुमितिसामग्र्या वैशेषिकाभिमतं विवादास्पदमिति शाब्दबोधानुपधायकतत्सामग्रीदशायां नैयायिकाभिमतायामनुमितिसामग्र्यनियमो वैशेषिकाणां न कामपि क्षतिमावहतीति वाच्यम् । घटमानयेत्यादिवाक्यतः समानकालीनत्वाद्यविषयक एव शाब्दबोधो नैयायिकानामनुभवसिद्धः, उक्तानुमानाच्च तन्न वृत्तमिति तादृशानुभवसिद्धबोधनिर्वाहाय शब्दस्य प्रमाणान्तरत्वस्वीकारप्रसङ्गात् । तथा च तादृशापत्तिवारणायाऽऽकाङ्क्षानिरूपकत्वं संसर्गे विशेषणमवश्यमुपादेयमेव, तथा च संसर्गे तात्पर्यविषयत्वानुपादाने घटमानयेत्यादौ समानकालीनत्वादिसंसर्गभानस्य संसर्गे आकाङ्क्षानिरूपकत्वनिवेशेनैव सम्भवात्तादृशप्रसिद्धस्थलं परित्यज्य **ब्राह्मणे विद्ये**त्याद्यप्रसिद्धस्थलानुधावनम् । न च वैशेषिकाणां मते शाब्दबोधस्याऽनुपगमात् संसर्गे आकाङ्क्षानिरूपकत्वनिवेशनं न सम्भवति । शाब्दबोधजनकतावच्छेदकानुपूर्वीरूपायास्तस्यास्ताद्रूप्येणाऽनभिमतत्वात् । यथाकथञ्चित्तन्निवेशने चाऽतिप्रसङ्गो दुर्वार इति वाच्यम् । आकाङ्क्षानिरूपकत्वस्याऽऽकाङ्क्षाऽनिरूपकतत्तत्सम्बन्धविशेषभिन्नत्वार्थकतयाऽदोषात् । न चैवमपि **ब्राह्मणे विद्ये**त्यादौ तात्पर्यविषयत्वोपादानव्यावृत्तिकथनमसङ्गतमेव, सप्तम्या विषयत्वार्थकत्वेऽपि तत्संसर्गेण विद्यायां ब्राह्मणान्वयस्य काऽप्यसम्भवेन तस्य निरुक्तस्थले आकाङ्क्षानिरूपकत्वासम्भवादिति वाच्यम् । विद्याशब्दस्य ज्ञानार्थतया तत्समभिव्याहृतायाः सप्तम्या विषयत्वात्पर्यकत्वस्याऽपि सम्भवादिति । इदमुपलक्षणम् । स्मारितपदार्थेऽपि तात्पर्यविषयत्वं विशेषणं देयम् । अन्यथा हरिरयमित्यादौ विष्ण्वादितात्पर्योच्चरितहर्यादिपदघटितस्थले तात्पर्यविषयीभूतस्याऽभेदसंसर्गस्य विष्ण्वादिनिरूपितस्येव वानरादिनिरूपितस्याऽपि सिद्ध्यापत्तेः । इत्थं च तात्पर्यविषयीभूतः स्मारितपदार्थसंसर्गो यत्रेति व्युत्पत्त्या लब्धे स्मारितपदार्थसंसर्गत्वस्यापि तात्पर्यविषयत्वमुपादेयम् । तेन शोभनो हरिरित्यादौ विष्ण्वादितात्पर्येण प्रयुक्ते सति न वानरादौ शोभनाभेदसंसर्गबोधप्रसङ्गः । **इतरपदार्थत्वेनेति** । इतरेति सम्पातायातम् । **घटत्वादिना स्मृतस्य**—घटत्वादिना स्मृतिविषयस्य घटादेः **संसर्गो न सिद्ध्येत्**—तदितरस्यापि संसर्गः सिद्ध्येदित्यर्थः । तथा चाऽऽकाशघटोभयबोधतात्पर्येण प्रयुक्ताद्घटपदाद्घटमात्रोपस्थितौ सत्यामपि घटादेरिव गगनादेरपि घटोऽयमित्यादिवाक्याच्छाब्दबोधः स्यादिति पर्यवसितम् । एतेन स्मारितत्वोपादानेऽपि स्मारितत्वादिनैव तदनुमित्याऽवगाहनाद्घटत्वादिना शाब्दबोधोपपादनाय शब्दस्य प्रमाणान्तरत्वं दुरपह्नवम्, घटादिसंसर्गप्रमापूर्वकत्वस्य साध्यता च दुर्वचा, तथासति घटादिसंसर्गप्रमापूर्वकत्वस्य दृष्टान्ते सत्त्वेऽपि पक्षे गामानयेत्यादिवाक्येऽभावात् गवादिसंसर्गप्रमापूर्वकत्वस्य च दृष्टान्ते घटमानयेत्यादिवाक्येऽभावात् बाधदृष्टान्तासिद्ध्योरन्यतरप्रसङ्गस्याऽपरिहार्यत्वापत्तेरिति परास्तम् । स्मारितत्वादेरेव व्यापकतावच्छेदकत्वेऽपि प्रकृतानुमितौ पक्षधर्मताबलाद्घटत्वादेरधिकस्य स्मारितत्वावच्छिन्ने भानसम्भवेनाऽदोषादिति ध्येयम् । **हेतौ चेति** । **आकाङ्क्षादिमत्पदकदम्बत्वादि**त्यादिरूप इत्यर्थः । **इतिपदतात्पर्यार्थकमिति** । इतिसमभिव्याहारार्थकमित्यर्थः । समभिव्याहृततत्तत्पदोत्तरत्वस्यैव तत्तत्पदे तत्तत्पदाकाङ्क्षारूपतायाः प्राङ्निर्णीतत्वादिति

**यद्वैते पदार्था मिथः संसर्गवन्तः, योग्यतादिमत्पदोपस्थापितत्वात्, तादृ-**

दिनकरी।

वह्निना सिञ्चतीत्यादिवाक्ये संसर्गप्रमापूर्वकत्वसाध्याभावेन व्यभिचारवारणाय हेतौ योग्यतापदम्। नीलो घटो द्रव्यं पटइत्यादौ नीलः पट इत्यादिभागे नीलपटयोराकाङ्क्षायोग्यतासत्त्वेन हेतुसत्त्वाद्व्यभिचारवारणायाऽऽसत्तिपदम्। कदम्बपदं चाऽऽकाङ्क्षादीनां परस्परप्रतियोगित्वलाभाय। अन्यथा साध्यस्य परस्परार्थघटितत्वेन व्यभिचारप्रसङ्गात्। नन्विष्टतावच्छेदकप्रकारकप्रवृत्तिविशेष्यकज्ञानस्य प्रवर्तकतया संसर्गज्ञानपूर्वकत्वानुमितेरतादृशतया कथं प्रवर्तकत्वम्? अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन प्रमापूर्वकत्वत्वेन प्रमापूर्वकत्वसिद्धावपि पुरोवर्तिविशेष्यकरजतत्वादिप्रकारकज्ञानस्य तस्मादनुत्पत्तेस्तदर्थं शब्दप्रामाण्यस्वीकार इत्यत आह। **यद्वेति। मिथः संसर्गेति।** तात्पर्यविषयपरस्परसंसर्गवन्त

रामरुद्री।

भावः। इदं च प्राचां मतमनुसृत्य। तात्पर्यज्ञानस्य स्वातन्त्र्येण हेतुतावादिनव्यमते तु तात्पर्यज्ञानरूपकारणाभावादेव अथमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राजपुरुषयोः संसर्गाविवक्षास्थले तादृशसंसर्गबोधापत्तिवारणसम्भवादाकाङ्क्षास्वरूपे तात्पर्यस्याऽनिवेशादिति ध्येयम्। **योग्यतापदमिति।** योग्यतासंग्राहकं मूलस्थमादिपदमित्यर्थः। तेन मूले योग्यतेत्यानुपूर्वीकपदाभावेऽपि न क्षतिः। इदमुपलक्षणम्। तात्पर्यस्याऽऽकाङ्क्षास्वरूपाघटकत्ववादिनव्यमते तात्पर्यमपि हेतुशरीरे प्रवेशनीयमिति ध्येयम्। **आसत्तिपदमिति।** पूर्ववदिहाऽपि रीतिरनुसन्धेया। एतच्च घटपदाद्युत्तरत्वमेवाऽम्पदादेराकाङ्क्षा, तयोरव्यवधानं त्वासत्तिरिति मताभिप्रायेणेति बोध्यम्। नन्वेतादृशरीत्या पदविशेष्यकसंसर्गप्रमापूर्वकत्वानुमित्या न शाब्दबोधापलापसम्भवः, तस्य पदार्थविषयकस्यैव नैयायिकानुभवसिद्धस्य निरुक्तानुमित्या चारितार्थ्यासम्भवादिति चेन्न। लिङ्गोपहितलैङ्गिकभानवत्पदादिविषयकत्वमपि शाब्दबोधस्य नैयायिकैकदेशिमतसिद्धमिति तन्मतमालम्ब्यैवोक्तानुमानकथनात्। तत्तल्लिङ्गकपरामर्शस्य तत्तल्लिङ्गधर्मितावच्छेदककानुमितिं प्रति हेतुत्वस्य तत्तल्लिङ्गकपरामर्शाव्यवहितोत्तरत्वादेर्जन्यतावच्छेदककोटिप्रवेशापेक्षया लाघवेन समीचीनताया इव तत्तत्पदज्ञानाव्यवहितोत्तरत्वादेर्जन्यतावच्छेदककोटिनिवेशापेक्षया तत्तत्पदविषयकत्वादेस्तथात्वस्य तुल्ययुक्त्यैव सम्भवादिति। एतादृशमतस्यैकदेशिकत्वेन सिद्धान्तपक्षमवलम्ब्य पदार्थविषयकस्याऽपि शाब्दबोधस्याऽनुमित्या चारितार्थ्यं व्यवस्थापयितुमनुमानान्तरमाह **मूले-यद्वेति।** टीकाकृतस्तु निरुक्तानुमितेस्तादृशप्रमापूर्वकत्वविषयकत्वेऽपि इदं रजतमित्यादिवाक्यजन्यशाब्दबोधसमानाकारत्वं दुरुपपादम्, इदमादिविशेष्यकरजतार्थिप्रवृत्तिं प्रति इदमादिविशेष्यकरजतत्वादिप्रकारकज्ञानस्यैव हेतुतायास्तथाविधप्रत्यक्षादिस्थले क्लृप्ततया निरुक्तवाक्यजन्यशाब्दबोधोत्तरं च तादृशप्रवृत्तेरन्यथानुपपत्त्या तादृशशाब्दबोधस्यापि तथाविधाकारकताया अवश्याभ्युपेतव्यकत्वेन तस्य निरुक्तानुमित्याऽनिर्वाहादित्यतोऽनुमानान्तरमाह— **यद्वेतीत्याहुः।** तन्न समीचीनम्। निरुक्तानुमितेरपि तथाविधाकारकताया वैशेषिकैरभ्युपगमेन उक्तदोषासम्भवात्। न चाऽनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन रजतत्वत्वादेर्व्यापकतावच्छेदकत्वे तादृप्येण रजतत्वाद्यनुमितिर्नोत्पत्तुमर्हतीति वाच्यम्। तद्धर्मावच्छिन्नविधेयताकानुमितिं प्रति तद्धर्मधर्मिकप्रकृतहेतुव्यापकतावच्छेदकत्वज्ञानस्य हेतुताया इव रजतत्वादिप्रकारकेदमादिविशेष्यशाब्दबोधं प्रति तादृशाकाङ्क्षादिज्ञानानां हेतुतायास्त्वयैव मयाऽपि स्वीकारात्। शाब्दत्वरूपजातेरपि वैशेषिकाणामिष्टत्वात्, शाब्दसामग्रीसमवधानकाले नियमतोऽनुमितिसामग्रीसमवधानस्यैव शाब्दबोधमात्रस्य यत्किञ्चित्संसर्गप्रमापूर्वकत्वानुमितिरूपताप्रयोजकस्य नैयायिकानभिमतस्य तैरुपगमात्, तत एव शब्दस्य प्रमाणान्तरत्वखण्डनसम्भवात्। शाब्दत्वजातिश्च शाब्दयामीतिप्रत्यक्षसिद्धैवेति न काऽप्यनुपपत्तिः। वैशेषिकमते शाब्दत्वजात्यसत्त्वेऽपि न क्षतिः। तथाविधानुमितिं प्रत्येव निरुक्ताकाङ्क्षादिज्ञानहेतुतायास्तन्मते

तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥ १४१ ॥

शपदार्थवत् । दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति । एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । असति च वृत्त्यन्तरे यद्यत्र वृद्धैः प्रज्युयते तत्तत्प्रवृत्तिनिमित्तकं, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् । यद्वा गवयपदं सप्रवृत्तिनिमित्तकं, साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद् गवयत्वप्रवृत्तिनिमित्तकत्वं भासते । तन्मतं दूषयति । तन्न सम्यगिति । व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात् । न हि सर्वत्र शब्दश्रवणाद्यनन्तरं व्याप्तिज्ञाने मानम-

दिनकरी ।

इत्यर्थः । तेन नाऽतात्पर्यविषयसंसर्गमादायाऽर्थान्तरम् । ननु दृष्टान्ते साध्यसिद्ध्यभावात् कथं व्याप्तिग्रह इत्यत आह । दृष्टान्तेऽपीति । ननु सर्वत्र शब्दश्रवणानन्तरमनुमिति-

रामरुद्री ।

ध्रुवत्वात् । न चैवं रजतत्वादिव्याप्यवत्तापरामर्शादनुमितिर्न स्यात्, तस्याऽनुमितिं प्रत्यहेतुत्वात्, आकाङ्क्षादिज्ञानस्यैव तन्मते तथात्वादित्यनुमितिमात्रोच्छेदः, शाब्दबोधाख्यप्रमाणान्तरस्वीकारप्रसङ्गश्चेति वाच्यम् । साधनभेदेन परामर्शानुमित्योः कार्यकारणभावस्य जन्यतावच्छेदककोटौ तत्तल्लिङ्गकपरामर्शाव्यवहितोत्तरत्वमनिवेश्य दुर्वचतया तथात्वावश्यकत्वे निरुक्ताकाङ्क्षादिज्ञानस्याऽपि स्वाव्यवहितोत्तरतादृशानुमितिं प्रत्येव हेतुताया आवश्यकतया तादृशाकाङ्क्षादिज्ञानविरहस्थलोत्पन्नतादृशानुमित्यनुरोधादेव तथाविधपरामर्शानामपि हेतुत्वस्याऽऽवश्यकतयाऽनुमितिमात्रोच्छेदासम्भवात्, शब्दस्य प्रमाणान्तरत्वाऽसम्भवाच्च । न चैवमुक्तानुमानाकारप्रदर्शनं मूलकृतामफलम्, आकाङ्क्षादिज्ञानानां निरुक्तानुमितावेव हेतुत्वकथनेनैवाऽभीष्टसिद्धिसम्भवादिति वाच्यम् । तादृशाकाङ्क्षादिज्ञानजन्यज्ञानस्याऽनुमितिरूपतायां विप्रतिपन्नं प्रति तस्याऽनुमितिरूपताव्यवस्थापनोपयिकतया तदभिधानात् । निरुक्तानुमितिसामग्रीसंवलितशाब्दसामग्रीस्थले शाब्दबोधानुमित्योरन्यतरानुदयायैकतरसामग्र्या अन्यतरप्रतिबन्धकत्वस्य नैयायिकैः कल्पनीयस्याऽनुपगमेन तादृशशाब्दबोधस्याऽनुमितिरूपताव्यवस्थितेरिति मूलाशयात् । न चैवं घटाद्यनुमितिसामग्रीसम्वलनप्रदर्शनेनाऽपि निरुक्ताभीष्टसिद्धिसम्भवादेतावद्दूरानुसरणमयुक्तमिति वाच्यम् । स्वतन्त्रेच्छस्येत्यादिन्यायेनोक्तानुमितिसामग्र्याः प्रायिकत्वाभिप्रायेण च तत्कथनस्य दोषानावहत्वादिति नव्यवैशेषिकाः । मिथः संसर्गवन्त इति । घटमानयेत्यादौ कर्मत्वं निष्ठत्वसम्बन्धेन घटवदित्यादिसमूहालम्बनानुमितिपरम् । तेन न शाब्दबोधानुमित्योरसमानाकारताप्रसङ्गः । अत्राऽपि स्मारितपदार्थत्वादिनैव व्यापकता पूर्ववद्बोध्या । स्मारितपदार्थे घटत्वादिभानं तु पक्षधर्मताबलादेवेति न पूर्ववद्दृष्टान्तासिद्धिबाधयोरन्यतरप्रसङ्ग इति बोध्यम् । गवयत्वप्रवृत्तिनिमित्तकमिति । गवयत्वावच्छिन्नशक्तमित्यर्थः । असतीत्यादि । शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यगवयत्वावच्छिन्नविषयकशाब्दबोधनिरूपितोपस्थितिनिष्ठजनकतानिरूपितजन्यत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकतावद्वृत्तिमत्त्वादित्यर्थः । तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितेर्हेतुत्वं च सर्वानुमतमेव । सामान्यमुखी व्याप्तिः, पक्षधर्मताबलाच्च विशेषभानम् । नाऽतो दृष्टान्तासिद्धिबाधयोरन्यतरत् । इदं च यत्तदर्थयोरनुगतत्वमभ्युपगम्य । तयोस्तथात्वे स्वाह । यद्वेति । साधुपदत्वादिति । किञ्चिद्विषयकबोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्पदत्वादित्यर्थः । वस्तुतस्तु पदत्वादित्येव वक्तव्यम् । वर्णत्वादिति च तदर्थः । साधुपदं तु वर्णमात्रस्य किञ्चिद्धर्मावच्छिन्नशक्तत्वद्योतनायैवेति ध्येयम् । व्याप्तिज्ञानं विनाऽपि—व्याप्तिज्ञानं विनैव । तथा च क्वचिदपि शाब्दबोधानुमितिसामग्र्योः सम्वलनस्याऽभावात्तस्याऽनुमितिरूपत्वमसम्भवदुक्तिमेवेति भावः । न हीत्यादि । शब्दश्रवणानन्तरं सर्वत्र व्याप्तिज्ञाने प्रमाणं नाऽस्तीति योजना । सर्वत्र—क्वचिदपि । नन्वेवंरीत्याऽऽकाङ्क्षा-

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यं तु भवेद् व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥

स्तीति । किं च सर्वत्र शाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियत इति ध्येयम् ॥ १४०-१४१ ॥

इति शब्दोपमानयोः पृथक्प्रामाण्यनिरूपणम् ॥

त्रैविध्यमिति । अनुमानं हि त्रिविधं-केवलान्वयिकेवलव्यतिरेक्यन्वयव्य-

दिनकरी ।

रूपकार्यान्यथानुपपत्त्या व्याप्तिज्ञानं कल्पनीयमित्यत आह । किं चेति । पदज्ञानं कल्पयित्वेति । पदस्मरणं कल्पयित्वेत्यर्थः । वन्ह्यादिशब्देनाऽर्थस्यैव वन्ह्यादिरूपेणाऽर्थेनाऽपि वह्न्यादिपदस्मरणसम्भवात्, वाच्यत्वादिवद्वाचकत्वादिसम्बन्धस्यापि स्मारकत्वादिति भावः । इदमुपलक्षणम्, आकाङ्क्षादिज्ञानं कल्पयित्वेत्यपि बोद्धव्यम् ।

मणिकृतस्त्वेते पदार्थाः परस्परसंसर्गवन्तः, योग्यतादिमत्पदोपस्थापितत्वादित्यनुमाने योग्यता न लिङ्गविशेषणम्, लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतायाश्च संशयेऽपि शाब्दबोधदर्शनात्, अतः पृथगेव शब्दो मानमिति वदन्ति ।

मिश्रास्त्वनुमानमुद्रया शब्दस्य बोधकत्वे घटमानयेति स्वरूपयोग्यम्, घटः कर्मत्वमानयनं कृतिरिति स्वरूपायोग्यमिति न स्यात्, अनुमानस्योभयत्रापि सम्भवात् । न चाऽऽकाङ्क्षाघटितहेत्वभावान्नाऽनुमितिस्तत्रेति वाच्यम् । आकाङ्क्षाभ्रमेणाऽनुमितिसम्भवात्, विषयाबाधाच्च तस्याः प्रमात्वात्, शब्दप्रामाण्ये च स्वभावान्न तादृशशब्दस्य बोधकत्वमित्याहुः।

परे तु घटात् पृथगित्यादौ घटावधिकपृथक्त्वप्रकारेण निरवच्छिन्नविशेष्यताकः पृथक्त्वाश्रयस्य शाब्दबोधः सर्वानुभवसिद्धः, स चाऽस्माकं तादृशानुपूर्वीकपदज्ञानत्वेन तादृशशाब्दबोधं प्रति हेतुत्वादुपपद्यते । वैशेषिकाणां तु पृथक्त्वं घटावधिकं, घटपदसाकाङ्क्षपृथक्पदस्मारितत्वादित्यनुमानेन न तन्निर्वाहः, पक्षविधया तदाश्रयस्याऽभानात् । न चैवं पटं पक्षीकृत्य पटो घटावधिकपृथक्त्ववानित्यनुमित्या तन्निर्वाह इति वाच्यम् । पटादिनिष्ठविशेष्यतायास्तत्र पक्षतावच्छेदकीभूतपटत्वावच्छिन्नतया निरवच्छिन्नविशेष्यताकतादृशशाब्दबोधसमानाकारकत्वस्य तथाप्यनिर्वाहादित्याहुरिति दिक् ॥ १४० ॥ १४१ ॥ इति शब्दोपमानयोः पृथक्प्रामाण्यनिरूपणम् ॥

रामरुद्री ।

दिज्ञानजन्यस्य बोधस्यैवाऽनुमितिरूपत्वं माऽस्तु, तथाऽपि आकाङ्क्षादिज्ञानस्य स्वातन्त्र्येण हेतुत्वानभ्युपगन्तृचिरन्तनवैशेषिकमतानुसारेणैव सर्वत्र शाब्दबोधानामनुमितित्वमस्त्वित्याशङ्क्य तत्र पूर्वोक्तदोषाणां सत्त्वेऽपि सुगमतया समाधानान्तरमाह । किञ्चेति ।

टीकायाम्—मिश्रास्त्विति । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु स्वरूपयोग्यतायाः प्रकृते कारणस्वरूपत्वं न सम्भवति, स्वरूपसतः शब्दस्य शाब्दबोधं प्रत्यकारणत्वात्, किन्तु कारणतावच्छेदकानुपूर्वीमत्त्वमेव, तच्च घटः कर्मत्वमित्यादौ नाऽस्तीति, मिश्राणामुक्तिस्तु ज्ञायमानपदस्य स्वरूपसदाकाङ्क्षादेश्च हेतुत्वमभिप्रेत्यैवेति ध्येयम् । इति दिगिति । शाब्दबोधस्याऽनुमितिरूपत्वे सिद्धसत्त्वेऽनुपपत्तिरित्यादिकमप्यूह्यमित्याशयः ॥ १४१ ॥ इति शब्दोपमानयोः पृथक्प्रामाण्यनिरूपणम् ॥

अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते ।
साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥

तिरेकिभेदात् । तत्रासद्विपक्षः केवलान्वयी । यथा ज्ञेयमभिधेयत्वादित्यादौ । तत्र हि सर्वस्यैव ज्ञेयत्वाद् विपक्षासत्त्वम् । (ननु सर्वेषां धर्म्माणां व्यावृत्तत्वात् केवलान्वय्यसिद्धिरिति चेन्न । व्यावृत्तत्वस्य सर्व्वसाधारण्ये तस्यैव केवलान्वयित्वात् । किं च वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । तच्च गगनाभावादौ प्रसिद्धम् ) (१) । असत्सपक्षः केवलव्यतिरेकी । यथा पृथिवी-तरेभ्यो भिद्यते, गन्धवत्त्वादित्यादौ । तत्र हि जलादित्रयोदशभेदस्य पूर्वमसिद्धतया निश्चितसाध्यवतः सपक्षस्याभाव इति । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा वह्निमान् धूमादित्यादौ । तत्र सपक्षस्य महानसादेविपक्षस्य जलह्रदादेश्च सत्त्वादिति ॥ १४२ ॥

॥ इत्यनुमानत्रैविध्यनिरूपणम् ॥

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं, तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति । साध्याभावव्यापकत्वमिति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । अत्रेदं बोध्यम् । यत्सम्बन्धेन यदवच्छिन्नं प्रति येन सम्बन्धेन येन

दिनकरी ।

तत्र–तेषु मध्ये । असद्विपक्ष इति । अत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः । यथाश्रुते सिद्ध्यसिद्धिव्याघातात् । अत्यन्ताभावाप्रतियोगित्वस्य च प्रमेयत्वादौ सत्वाल्लक्षणसमन्वयः । न चैतन्न सम्भवति, प्रमाविषयत्वरूपस्य तस्य नानात्वेनाऽननुगमादिति वाच्यम् । प्रमात्वस्यैव परम्परासम्बन्धेनानुगतत्वात् । इत्थं च प्रमेयत्वादेर्व्यतिरेकित्वभ्रमेपि केवलान्वयित्वमेवेति मन्तव्यम् । असत्सपक्ष इति । सिद्ध्यसिद्धिव्याघातादत्राप्यगृहीतहेतुसहचारं यद्व्यतिरेकिसाध्यं तत्कत्वमर्थो बोध्यः । सत्सपक्षेति । गृहीतान्वयव्यतिरेकिसाध्यकमित्यर्थः ॥ १४२ ॥ इत्यनुमानत्रैविध्यनिरूपणम् ॥

यत्सम्बन्धेन यदवच्छिन्नं प्रतीति । यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नव्याप्यता-

रामरुद्री ।

अत्यन्ताभावेति । निरवच्छिन्नवृत्तिमदत्यन्ताभावेत्यर्थः । तेनाऽऽकाशाभावकपिसंयोगाभावादेरभावप्रतियोगित्वेऽपि नाऽव्याप्तिः । अगृहीतहेतुसहचारमिति । अन्वयव्यतिरेकिण्यतिव्याप्तिवारणायाऽगृहीतेत्यादि । केवलान्वयिनि व्यतिरेकित्वभ्रमदशायामतिव्याप्तिवारणाय व्यतिरेकीति । गृहीतेत्यादि । गृहीतान्वयं यद्व्यतिरेकिसाध्यम्, तत्कमित्यर्थः । यद्यपि केवलान्वयित्वमत्यन्ताभावाप्रतियोगित्वम्, अगृहीतान्वयत्वे सति व्यतिरेकित्वं केवलव्यतिरेकित्वम्, गृहीतान्वयत्वे सति व्यतिरेकित्वमन्वयव्यतिरेकित्वमित्यपि हेतुनिष्ठमेव यथाश्रुते वक्तुं शक्यम्, तथापि केवलान्वयित्वादीनामुक्तरूपत्वे 'सर्वस्यैवाऽभिधेयत्वाद्विपक्षासत्त्वम्' इति वक्ष्यमाणग्रन्थालग्नकत्वापत्तेरीदृशनिरुक्तिरादृता, अन्यथा सर्वत्र साध्यसत्त्वेन विपक्षासत्त्वोत्कीर्तनस्य सन्दर्भविरोधापत्तेरिति ध्येयम् । प्रकृतहेतुसहचारग्रहाधीनव्यतिरेकिसाध्यकानुमित्युपधायकत्वमन्वयव्यतिरेकित्वं, प्रकृतहेतुसहचारग्रहाधीनव्यतिरेकिसाध्यकानुमित्युपधायकत्वं केवलव्यतिरेकित्वं बोध्यम् । तेन सहचारग्रहविरहदशायां नातिव्याप्तिः ॥ १४२ ॥

॥ इत्यनुमानत्रैविध्यनिरूपणम् ॥

---

(१) अयं पाठो न लिखितपुस्तके दृश्यते ।

रूपेण व्यापकता गृह्यते तत्संबन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ताज्ञानात् तत्सम्बन्धावच्छिन्नप्रतियोगिताक तद्धर्मावच्छिन्नाभावस्य सिद्धिः(१)। इत्थं च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिद्ध्यति। यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकता गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिद्ध्यति। स एवान्योन्याभावः(२)। एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिद्ध्यति।

अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम्।

दिनकरी

निरूपितव्यापकता गृह्यते इत्यर्थः। **इतरव्याप्यतेति**। इतरस्य व्याप्यतेत्यर्थः। तादात्म्येनेतरव्यापकतेति पाठे तादात्म्यसम्बन्धावच्छिन्ना या इतरनिष्ठा व्याप्यता तन्निरूपितव्यापकतेत्यर्थः। **तादात्म्यसम्बन्धेनेति**। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः सिद्ध्यतीत्यर्थः। येन सम्बन्धेन व्याप्यता गृह्यते इत्यनुक्तौ तु तादात्म्येनेतरस्य व्याप्यता यत्र गृहीता तत्रेतरात्यन्ताभावस्य सिद्धिः स्यादिति भावः। संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेनेति सावधारणम्, तेन सम्बन्धान्तरावच्छिन्नप्रतियोगिताकेन न तत्सिद्धिरित्यर्थः। अनेन च येन सम्बन्धेन व्यापकता गृह्यते इत्यस्य फलं सूचितम्। प्रदर्शितरीत्यैव येन रूपेण यदवच्छिन्नेत्यनयोरपि प्रयोजनमूह्यम्। ननु साध्यसाधनसहचारज्ञानाभावात् कथं व्यतिरेकव्याप्तिज्ञानमित्यत आह। **अत्र चेति**। तथा च व्यतिरेकसहचारेणैव व्यतिरेकव्याप्तिग्रहान्नान्वयसहचारग्रहापेक्षेति भावः। ननु साध्यप्रसिद्धिं विना तदभावाज्ञाने व्यतिरेकव्याप्तेर्दुर्ग्रहत्वं स्यात्, साध्यसिद्धौ च सिद्धसाधनमिति चेन्न। साध्यस्य घटादावेव प्रत्यक्षसिद्धत्वात्, पृथिवीतरभिन्नेत्युद्देश्यप्रतीतेरसिद्धत्वान्न सिद्धसाधनम्। पक्षतावच्छेदकनानात्व एवांशतः सिद्धसाधनस्य दोषत्वात्। अत एवानित्ये वाङ्मनसी इत्यत्र वागितिबुद्धेरुद्देश्याया अनित्यत्वस्य सिद्धत्वेनांशतः सिद्धसाधनमिति। ननु तथापि घटः कथं पक्षः? साध्यस्य निश्चयेन तत्सन्देहसिषाधयिषयोरभावादिति चेन्न। यतः सर्वा पृथिवीतरभिन्ना न वेति संशयस्य तत्प्रकारकसिषाधयिषायाश्च घटविषयत्वात्, घटत्वेन विशेषदर्शने सिद्धौ वा तेन रूपेण संशयसिषाधयिषे न भवतः, पृथिवीत्वेन तु भवत एवेति। ननु पृथिवीत्वात् घटवदित्यन्वयिनैवेतरभेदसिद्धौ व्यतिरेकिवैयर्थ्यमिति चेन्न। अन्वयव्याप्तेरग्रहे व्यतिरेकव्याप्तिस्फूर्तिदशायां व्यतिरेक्यनुमानप्रवृत्तेर्निष्प्रत्यूहत्वात्।

रामरुद्री।

**निष्प्रत्यूहत्वादिति**। एतच्च सर्वमापाततः। तद्व्यापकीभूताभावप्रतियोगिताज्ञानस्य तदभावा-

---

(१) येन रूपेण येन सम्बन्धेन यत्र व्यापकता गृह्यते तेन रूपेण तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्ताज्ञानात् यत्सम्बन्धेन यं प्रति यस्य व्याप्यता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति पाठान्तरं क्वचित्पुस्तके।

(२) न चात्र साध्याप्रसिध्या पृथिवीतरभेदवतीत्यनुमितिर्न स्यात् विशेषणज्ञानाभावादिति वाच्यम्। इष्टापत्तेः, पृथिव्यामितरभेद इति प्रथममनुमितिश्चरमं पृथिवीतरभेदवतीति भावः।

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥

केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते. न तु व्यतिरेकव्याप्तिज्ञानमपि कारणम् । यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते । साध्यप्रसिद्धिस्तु घटादावेव जाता, पश्चात् पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति ॥ १४३ ॥

॥ इति व्यतिरेकव्याप्तिनिरूपणम् ॥

अर्थापत्तिस्त्विति । अर्थापत्तिं प्रमाणान्तरं केचन मन्यन्ते । तथाहि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिः शास्त्रादवगतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिःसत्त्वं कल्प्यते । तदप्यनुमानेन गतार्थत्वान्नेष्यते । तथाहि यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते । एवं पीनो

## दिनकरी ।

आचार्यमतमाह । केचित्त्विति । व्यतिरेकसहचारेण—अन्वयसहचारनिरपेक्षव्यतिरेकसहचारेण । अन्वयव्याप्तिरेवेत्येवकारेण व्यतिरेकव्याप्तेर्व्युदासः । नन्वेवं व्यतिरेकव्याप्तिज्ञानरूपकारणाभावात् कथं व्यरेक्यनुमितिरत आह । नत्विति । व्यतिरेकव्याप्तिज्ञानमित्यस्यानुमितावित्यादिः । नन्वन्वयव्याप्तिज्ञानस्यैव हेतुत्वे कथं व्यतिरेकीति व्यवहार इत्यत आह । यत्रेति । ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ साध्यस्येतरभेदादेरप्रसिद्धत्वात् कथं व्यतिरेकसहचारग्रह इत्यत आह । साध्यप्रसिद्धिरित्विति । ननु घटादौ साध्ये निर्णीते कथं तत्रेतरभेदानुमितिरत आह । पश्चादिति । अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वादिति भावः । अत्र चान्वयव्याप्तिघटकतावत्पदार्थज्ञानादेवान्वयव्याप्तिज्ञानोत्पत्तौ व्यतिरेकसहचारज्ञानस्य तद्धेतुत्वे मानाभावः । न च व्यतिरेकसहचारेणेत्यत्र प्रयोजकत्वं तृतीयार्थः, तच्च नानुपपन्नम् , अन्वयव्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिरासद्वारा व्यतिरेकसहचारज्ञानस्य तत्र प्रयोजकत्वादिति वाच्यम् । व्यतिरेकसहचारग्रहेऽप्यधिकरणान्तरे व्यभिचारशङ्कातादवस्थ्यात् । तदधिकरणीयव्यभिचारशङ्कानिरासद्वारा तत्र तस्योपयोगित्वमित्यपि न, तदधिकरणे साधनाभावग्रहमात्रेणैव तदधिकरणीयव्यभिचारशङ्कानिवृत्तेरित्यस्वरसो वदन्तीत्यनेन सूचितः ॥ १४३ ॥

इति व्यतिरेकव्याप्तिनिरूपणम् ॥

## रामरुद्री ।

नुमितौ हेतुत्वस्यैव मूलकृतोक्ततयोक्तरीत्याऽऽक्षेपायोगात् । साध्यासिद्धावपि साध्यविशेष्यकानुमितेरिष्टत्वादिति । आचार्यमतमुपन्यस्यति मूले-केचित्त्विति नन्वेतन्मतेऽप्रसिद्धसाध्यकानुमितिर्न स्यात्, अन्वयव्याप्तेः साध्यघटितमूर्तिकत्वादित्यत आह । साध्यसिद्धिस्त्विति । घटादावेवेति । अभावप्रत्यक्षस्याऽनुयोगिविषयकत्वनियमो न बाधक इति द्योतनाय ॥ १४३ ॥

॥ इति व्यतिरेकव्याप्तिनिरूपणम् ॥

सुखं तु जगतामेव काम्यं धर्मेण जायते।
अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् ॥ १४५ ॥

देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनं सिद्ध्यति। दिवाभोजनबाधे च रात्रिभोजनं सिद्ध्यति।

अभावप्रत्यक्षस्याऽऽनुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किंचानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात् प्रत्यक्षत्वं, ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था।

एवं चेष्टापि न प्रमाणान्तरम्। तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। यत्र तु व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥ इत्यर्थापत्त्यादिनिराकरणम्।

सुखं निरूपयति। सुखं तु जगतामेवेति। काम्यम्–अभिलाषविषयः। धर्मेणेति। धर्मत्वेन सुखत्वेन कार्य्यकारणभाव इत्यर्थः ॥ इति सुखनिरूपणम् ॥

दुःखं निरूपयति। अधर्म्मेति। अधर्म्मत्वेन दुःखत्वेन कार्य्यकारणभाव इत्यर्थः। प्रतिकूलमिति। दुःखत्वज्ञानादेव सर्व्वेषां स्वाभाविकद्वेषविषय इत्यर्थः ॥ १४५ ॥

॥ इति दुःखनिरूपणम् ॥

दिनकरी।

केचन–मीमांसकाः। तदपि–अर्थापत्तेः प्रमाणान्तरत्वमपि। दिवा न भुङ्क्त इत्यादाविति आदिना मयूरः पर्वतेतरस्मिन् न नृत्यति नृत्यति चेत्यस्य संग्रहः। नन्वेतद्वाक्यान्मयूरः पर्वते नृत्यतीति ज्ञानमुत्पद्यते, न त्वेतद्व्यतिरेकिणः सम्भवति, पर्वतनृत्यस्य साध्यस्याप्रसिद्धौ व्यतिरेकव्याप्त्यनिरूपणादिति कथं नार्थापत्तिः प्रमाणान्तरमिति चेन्न। मयूरनृत्यं पर्वताधिकरणकं, पर्वतेतरानधिकरणत्वे सति साधिकरणत्वात्, पर्वतत्ववदित्यन्वयव्यतिरेकिणैव पर्वताधिकरणकमयूरनृत्यज्ञानसम्भवात् ॥ १४४ ॥ इत्यर्थापत्त्यादिनिराकरणम् ॥

धर्मत्वेनेति। इदं च प्राचां मतेनोक्तम्। नवीनमते तु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या भगवति नित्यसुखसिद्धौ धर्मस्य कार्यतावच्छेदकं जन्यसुखत्वं सुखत्वावान्तरजातिर्वेति बोद्धयम् ॥ १४५ ॥ इति सुखदुःखनिरूपणम् ॥

रामरुद्री।

कारिकायाम्—अर्थापत्तिस्त्विति। व्यतिरेकव्याप्तिबुद्ध्येति। मीमांसकानामर्थापत्तिसामग्रीकाले नैयायिकाभिमततत्स्थानाभिषिक्तानुमितिसामग्र्या नियमतः सत्त्वेऽविवादसूचनाय व्यतिरेकेत्युक्तम्। तथा हि मीमांसकैरर्थापत्तिरापत्तिरूपैव प्रमाणान्तरतया स्वीक्रियते, आपत्तिं प्रति चाऽऽपाद्यव्याप्यापादकवत्ताज्ञानं कारणम्। तथा च चैत्रो यदि गृहसत्त्वबहिः सत्त्वान्यतराभाववान् स्यात् जीवित्वाभाववान् स्यादित्याकारिकाया आपत्तेर्गृहसत्त्वबाधसहकृताया बहिःसत्त्वकल्पकत्वं तदैव स्यात्, यदि एतादृशापत्तेः पूर्वं आपाद्यापादकयोर्व्याप्तिनिश्चयः स्यात्, तादृशव्याप्तिनिश्चयस्य च जीवित्वगृहसत्त्वबहिःसत्त्वयोर्व्यतिरेकनिश्चयरूपतया आवश्यकत्वमिति अनुमानेनैव चारितार्थ्यं सम्भवदुक्तिकमेवेति ॥ १४४ ॥

इत्यर्थापत्त्यादिनिराकरणम् ॥

मूले—अभिलाषविषय इति। अन्येच्छानधीनेच्छाविषय इत्यर्थः। यद्यप्येवं सति दुःखाभावसाधनस्याऽपि एवंविधेच्छाविषयत्वोऽत्रयाऽतिव्याप्तिर्दुर्वारा, तथाऽपि अन्यद्वेषानधीनत्वमपीच्छायां विशेषणं देयमिति न क्षतिः ॥ इति सुखदुःखनिरूपणम् ॥

**निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।**
**इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥**

इच्छां निरूपयति । निर्दुःखत्व इति । इच्छा हि फलविषयिणी उपायविषयिणी च । फलं तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव पुरुषार्थः सम्भवति यज्ज्ञातं सत् स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः ।

उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ।

### दिनकरी ।

तत्र—तयोर्मध्ये । अत एव—फलज्ञानस्य फलेच्छां प्रति हेतुत्वादेव । पुरुषार्थः सम्भवतीति । सुखं दुःखाभावश्च पुरुषार्थः सम्भवतीत्यर्थः । ननु यज्ज्ञातमित्यादेः स्वविषयकज्ञानजन्येच्छाविषयत्वमित्यर्थः । तथा चोपायाऽतिव्याप्तिः, तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वादत आह––इतरेच्छेति ।

### रामरुद्री ।

मूले—उपायेच्छां प्रतीति । सुखत्वप्रकारत्वानिरूपितोद्देश्यतासम्बन्धेनेच्छां प्रतीत्यर्थः । तेन सुखत्वभ्रमेण पाकादाविच्छोत्पादेन तत्रेष्टसाधनताज्ञानाभावेऽपि न क्षतिः । न चैतादृशकार्यकारणभावे किं प्रमाणमिति वाच्यम् । निष्फले चैत्यवन्दनादौ प्रवृत्त्यभावस्यैव प्रमाणत्वात् । ननु स्वरूपसदिच्छाविषयसाधनताज्ञानस्य कारणत्वमावश्यकम्, इच्छाविषयकभ्रमस्मरणादिसत्त्वे इच्छाविरहे तत्साधनताज्ञानस्येच्छानुपधायकत्वात् । एवं च यत्रौदनस्यौदनत्वेनेच्छाविषयता, द्रव्यत्वेन तत्साधनता च पाके गृहीता, तत्रेच्छोत्पादापत्तिर्दुर्वारा । किञ्च तत्स्थले ओदनादिविषयकेच्छाविरहकालेऽपि कालान्तरीणतद्विषयतायास्तत्राऽबाधितत्वादिदानीन्तनतत्साधनताज्ञानसत्त्वेऽपि पाकादाविच्छोत्पादापत्तिर्दुर्वारैव । न च स्वरूपसदिच्छाविषयतावच्छेदकावच्छिन्नसाधनताज्ञानस्यैवेच्छां प्रति हेतुत्वोपगमान्नैष दोषः । ओदनत्वादिनेच्छाविषयतादशायां तद्रूप्येण तत्साधनताज्ञानस्यैवोत्तरीत्येच्छाजनकत्वसम्भवेन प्रागुक्तस्थले तादृशसाधनताज्ञानविरहादेवेच्छोत्पादापत्तिवारणसम्भवात् । कारणतावच्छेदकविशिष्टकारणसत्त्वस्यैव कार्योत्पादप्रयोजकत्वोपगमेन च कालान्तरीणेच्छाविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नसाधनताज्ञानस्याऽपि फलानुपधायकत्वसम्भवादिति वाच्यम् । एवमप्योदनत्वादिनेच्छाविषयतादशायां प्रमेयत्वेनौदनत्वाद्यवगाहि ओदनत्वादिना तत्साधनताज्ञानादपि इच्छोत्पादापत्तेर्दुर्वारत्वात् । कारणतावच्छेदकघटकफलादीनामिच्छापूर्वमसत्त्वेन कारणतावच्छेदकविशिष्टकारणसत्त्वस्याऽपि प्रकृते फलोत्पादप्रयोजकत्वकल्पनासम्भावादिति चेन्न । साधनतावच्छेदकादिभेदभिन्नाया व्याप्तेरननुगमेन तद्घटितपरामर्शनिष्ठानुमितिकारणतावच्छेदकस्याऽननुगतत्वेऽपि अगत्याऽव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ निवेश्याऽनन्तधर्मप्रकारेणैवाऽनुमितौ कार्यकारणभावः स्वीक्रियते, तथाऽत्राप्यगत्यौदनत्वादिप्रकारकेच्छाऽव्यवहितोत्तरपाकत्वादिप्रकारकेच्छां प्रति तादृशेच्छायाः ओदनादिसाधनताज्ञानाऽव्यवहितोत्तरपाकादिगोचरेच्छां प्रति ओदनादिसाधनताज्ञानस्य चेत्यादिक्रमेणाऽनेकविधा एव कार्यकारणभावाः स्वीक्रियन्ते । अत एवोपायेच्छां प्रति फलेच्छा कारणमिति प्राक्तनमूलसङ्गतिः । तथा च न कोऽपि दोषः । न चैवमोदनसाधनताज्ञानतेमनेच्छयोः सत्त्वे इच्छोत्पादापत्तिर्दुर्वारेति वाच्यम् । तद्धर्मावच्छिन्नसाधनताज्ञानतद्धर्मप्रकारकेच्छयोः परस्परसहकारेण फलोत्पादप्रयोजकत्वाभ्युपगमादेवोक्तदोषवारणसम्भवात् । फलेच्छाजन्यतावच्छेदकफलसाधनताज्ञानजन्यतावच्छेदकयोर्व्याप्यव्यापकभावविरहेऽपि तयोः परस्परसहकारित्वमविरुद्धम्, कार्यतावच्छेदकयोः सामानाधिकरण्यमात्रस्यैव तत्र प्रयोजकत्वात् । इदमेवाऽर्थसमाजाधीना कार्योत्पत्तिरिति गीयते ॥ नचैवमप्युपायेच्छायामुपायधर्मिकमिष्टसाधनताज्ञानमिष्टधर्मिकमुपायसाध्यत्वज्ञानं

## चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत् ।

चिकीर्षेति । कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयिणीच्छा चिकीर्षा । पाकं कृत्या साधयामीति तदनुभवात् । चिकीर्षां प्रति कृतिसाध्यताज्ञानमि-

### दिनकरी ।

कृतिसाध्यताज्ञानमिति । ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः, तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्धर्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न । यत्र कृतिसाध्यपाकत्वेनेष्टसाधनत्वं न गृहीतम्, अपि तु शुद्धपाकत्वेन कृतिसाध्यत्वं शुद्धपाकत्वेन चेष्टसाधनत्वं गृहीतं, तत्रापि पाकगोचरप्रवृत्तेरानुभविकतया

### रामरुद्री ।

वा हेतुरित्यत्र किं विनिगमकमिति वाच्यम् । स्वर्गकामो यजेतेत्यादेस्तथा सति प्रवृत्तिजनकज्ञानजनकत्वापत्तेरेव दोषत्वात्, तत्र साध्ये यागादेरन्वये स्वर्गकामानन्वयप्रसङ्गात् । मन्मते तु इष्टसाधनकृतिसाध्ययागानुकूलकृतिमान् स्वर्गकाम इति बोधः सम्भवति । न च मन्मतेऽपि यागसाध्यमिष्टं स्वर्गकामकृतिसाध्यमिति बोधः सम्भवत्येवेति वाच्यम् । प्रथमान्तमुख्यविशेष्यकबोधस्याऽनुभवसिद्धस्य परित्यागायोगादिति केचित् । मिश्रास्तु पाकत्वावच्छिन्नविषयतानिरूपितसाधनत्वविषयतानिरूपितौदनत्वावच्छिन्नविषयताशालित्वेनेष्टसाधनत्वेष्टधर्मिकसाध्यताज्ञानद्वयसाधारणरूपेणैवेच्छां प्रति जनकत्वं स्वीक्रियत इति न दोष इत्याहुः ।

**मूले—चिकीर्षा चेन्नि** । प्रवृत्तिजनकीभूतां चिकीर्षां चेत्यर्थः । तेन फलचिकीर्षायामतिव्याप्तिवारकस्य कृतिसाध्यविषयित्वस्य न वैयर्थ्यम् । टीकायाम्—**नन्वित्यादि** । न चैवं पाकः कृतिसाध्य इष्टसाधनं चेत्याकारकज्ञानात्तद्गोचरचिकीर्षा न स्यादिति वाच्यम् । घट इष्टसाधनं नीलश्चेत्यादिज्ञानकाले नीलघटत्वप्रकारिकाया इव प्रकृतेऽपि कृतिसाध्यत्वप्रकारकेच्छाया अनुत्पादस्येष्टत्वात् । अथैवमपि पाकत्वादिप्रकारकेच्छां प्रति पाकत्वाद्यवच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकज्ञानस्य हेतुताया आवश्यकतया तेनैव कृतिसाध्यत्वप्रकारकपाकत्वावच्छिन्नविशेष्यकेच्छोत्पत्तिसम्भवे कृतिसाध्यपाकत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानस्य हेतुत्वमप्रामाणिकमेवेति तादृशगुरुरूपेण कार्यकारणभावस्वीकारापेक्षया पाकत्वाद्यवच्छिन्नविशेष्यककृतिसाध्यताज्ञानत्वेन हेतुत्वकल्पनं युक्तम् । न च तत्तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तत्तद्धर्मप्रकारकेच्छाहेतुत्वेऽनन्तकार्यकारणभावप्रसङ्गात् प्रकारतासम्बन्धेनेच्छां प्रति धर्मितावच्छेदकतासम्बन्धेनेष्टसाधनताज्ञानस्य स्वीयेष्टसाधनत्वप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन ज्ञानस्यैव वा हेतुताया आवश्यकत्वात् तेनैव पाकत्वावच्छिन्नधर्मिककृतिसाध्यत्वप्रकारकेच्छाया अपि कृतिसाध्यत्वप्रकारकज्ञानसाध्यत्वोपपत्तावेतादृशकार्यकारणभावाङ्गीकारो निर्युक्तिक एवेति वाच्यम् । पाक इष्टसाधनं कृतिसाध्य इष्टसाधनमिति समूहालम्बनस्थले पाकधर्मिकचिकीर्षाया ईदृशकार्यकारणभावादिभिर्निवारयितुमशक्यतया तद्वारणाय स्वीयकृतिसाध्यत्वप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेनेच्छां प्रति स्वीयकृतिसाध्यत्वप्रकारतानिरूपितविशेष्यतावच्छेदकत्वाभिन्नेष्टसाधनत्वप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन ज्ञानस्य हेतुतायास्त्वया वाच्यतया तदपेक्षया लाघवेन कृतिसाध्यत्वप्रकारकपाकविषयकेच्छां प्रति कृतिसाध्यत्वप्रकारकपाकविशेष्यकज्ञानस्य हेतुताया एव स्वीकरणीयत्वात् कारणतावच्छेदककोटाविष्टसाधनताज्ञानान्तर्भावस्याऽनावश्यकत्वात् । न चैवमपि यत्र चिकीर्षासामग्री प्रतिबन्धिका तत्र पाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानविशिष्टतादृशकृतिसाध्यताज्ञानत्वेन प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानत्वेन प्रतिबन्धकताकल्पने लाघवात्तेन रूपेणैव हेतुत्वमुचितमिति वाच्यम् । तादृशस्थले चिकीर्षासामग्र्यनात्मकेच्छासामग्र्या एव प्रतिबन्धिकायाः सम्भवेनेदृशकार्यकारणभावप्रतिबध्यप्रतिबन्धकभावयोरनुपगमादिति चेन्न ।

तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥

बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ।

साधनताज्ञानं च कारणम्। तद्धेतुरिति । अत एव वृष्ट्यादौ कृतिसाध्यताज्ञाना-भावान्न चिकीर्षा ॥ १४७ ॥

बलवदिति । बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकमतो मधुविषसम्पृक्ता-

दिनकरी।

तदनुरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात्। अथ कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वादेव वृष्ट्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति हेतुत्वे मानभाव इति चेन्न । कृतिसाध्यत्वाभाववद्व्याप्यतदवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यताज्ञानस्य हेतुत्वे लाघवात्। इष्टसाधनताज्ञानमिति। अन्यथा निष्फलत्वज्ञानेऽपि चैत्यवन्दनादौ चिकीर्षापत्तिरिति भावः। अत्रेदं बोद्धव्यम्। पाकविशेष्यकेष्टसाधनताज्ञानस्य कार्यताच्छेदकं न पाकादिगोचरचिकीर्षात्वं, कृतिसाध्यत्वप्रकारकत्वनिवेशे प्रयोजनविरहात्, पाको जायतामितीच्छाया असङ्ग्रहापत्तेश्च। किन्तु पाकत्वावच्छिन्नमुख्यविशेष्यकेच्छात्वम्। पाकसाध्यं सुखं जायतामितीच्छायां व्यभिचारवारणाय—मुख्येति। इष्टसाधनतेत्यत्रेच्छा स्वरूपसती विशेषणम्। तेनेच्छाज्ञानशून्यकालेऽपि चिकीर्षानिर्वाहः।

अत एव—कृतिसाध्यताज्ञानस्य हेतुत्वादेव ॥ १४६ ॥ १४७ ॥

बलवद्द्विष्टेति। द्विष्टं=-द्वेषविषयीभूतम्। द्वेषश्च दुःखे ताद्रूप्येण ज्ञानात्, सर्पादौ तत्साधनताज्ञानात्। द्वेषे बलवत्त्वं जातिविशेषः। प्रतिबन्धकमिति। ननु बलवद्द्वेषविष-

रामरुद्री।

यथा शुद्धघटत्वावच्छिन्नधर्मिकसिद्धत्वग्रहदशायां नीलघटत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानान्नीलघटत्वप्रकारकेच्छा जायते तथा शुद्धपाकत्वावच्छिन्नधर्मिकसिद्धत्वग्रहदशायामपि कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानाच्चिकीर्षा जायत इति सर्वानुभवसिद्धम्। एवं च शुद्धपाकत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानकृतिसाध्यताज्ञानयोरेव तादृशचिकीर्षाहेतुत्वे शुद्धपाकत्वावच्छिन्नधर्मिकेष्टसाधनत्वकृतिसाध्यत्वयोर्ग्रहे तद्धर्मिकसिद्धताग्रहदशायामपि चिकीर्षोत्पादापत्तिर्दुर्वारा। अतः कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य हेतुत्वमङ्गीकार्यम्। न च तत्र कृतिसाध्यताज्ञानसत्त्वे इच्छोत्पत्तिरिष्यत एवेति वाच्यम्। अनुभवविरोधात्, तत्र फलस्वीकारे तादृशसिद्धत्वज्ञानानास्कन्दितेच्छासामान्यसामग्र्यात्मकेष्टसाधनताज्ञानविरहेणोक्तस्थले ज्ञानोत्पादापत्तेर्दुर्वारत्वाच्च, कृतिसाध्यपाकत्वावच्छिन्नधर्मिकसिद्धत्वज्ञानस्योत्तेजकत्वमभ्युपगम्य तदभावविशिष्टेष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानस्य प्रतिबन्धकत्वाभ्युपगमे गौरवात्। मन्मते तु कारणद्वयघटिताया एव चिकीर्षासामग्र्याः प्रतिबन्धकत्वस्य वक्तव्यतया लाघवादिति निगर्वः। स्वातन्त्र्येण हेतुताया आवश्यकत्वादिति। केचित्तु स्वकृतिसाध्यत्वप्रकारिकेच्छैव प्रवृत्तिहेतुः। स्वकृत्यसाध्यतया ज्ञाते पुरुषान्तरीयकृतिसाध्यतां ज्ञातवतस्तत्प्रकारकेच्छासम्भवेऽप्यप्रवृत्तेः। साध्यत्वमपि फलोपधानात्मकसाधनताघटितमेव ग्राह्यम्। तेनाऽस्मदादिकृतेः कृतित्वेन मेरुलङ्घनादावपि स्वरूपयोग्यतया तत्साध्यताज्ञानान्न मेरुलङ्घनादौ प्रवृत्त्यापत्तिः। ईदृशसाध्यत्वस्य फलोत्पत्तेः पूर्वं सर्वत्र निश्चयासम्भवेन संशयनिश्चयसाधारणज्ञानत्वरूपेणैव कृतिसाध्यताज्ञानस्य प्रवृत्तिकारणचिकीर्षाहेतुत्वं वक्तव्यम्। इत्थं च कृतिसाध्यत्वसंशयेऽपि चिकी-

त्रभोजने न चिकीर्षा। बलवद्द्वेषः प्रतिबन्धक इत्यन्ये।

दिनकरी।

यत्साधनत्वज्ञानस्य प्रतिबन्धकत्वे चैत्रस्याऽगम्यागमनजन्यनरके यदा बलवान् द्वेषस्तदा मैत्रस्य तादृशद्वेषशून्यस्याऽगम्यागमने तादृशनरकसाधनत्वज्ञानवत इच्छाप्रवृत्त्योरनुपपत्तिः। एवं चैत्रस्यैव कालान्तरे तादृशद्वेषसत्त्वेऽपि। न च तत्कालीनतत्पुरुषीयेच्छां प्रति प्रवृत्तिं प्रति च तत्कालीनतत्पुरुषीयबलवद्द्विष्टजनकत्वज्ञानस्य प्रतिबन्धकत्वं कल्प्यते, यत्पुरुषस्य यदा न कोऽपि द्वेषस्तत्कालतत्पुरुषान्तर्भावेण तादृशज्ञानप्रतिबन्धकत्वस्याऽकल्पनान्न तत्र तादृशप्रतिबन्धकाप्रसिद्ध्या तदभावरूपकारणस्याऽभावात्प्रवृत्त्यनुपपत्तिरिति वाच्यम्। यत्पुरुषस्य यदाऽगम्यागमनजन्यनरके बलवान् द्वेषस्तदा तत्पुरुषस्य तत्रेच्छानुत्पादादगम्यागमनगोचरत्पुरुषीयतत्कालीनेच्छाया अप्रसिद्ध्या तत्पुरुषतत्कालान्तर्भावेण तादृशकार्यकारणभावस्याऽभावेन तत्र तत्पुरुषीयागम्यागमनगोचरेच्छानुत्पादप्रयोजकस्य दुर्भिक्षापत्तेरिति चेन्न। तद्धर्मप्रकारकद्वेषविशिष्टस्य तद्धर्मावच्छिन्नजनकत्वज्ञानस्य तत्र प्रतिबन्धकत्वकल्पनेनोक्तापत्त्यभावात्। तद्धर्मप्रकारकद्वेषानुत्तरतादृशेच्छायां तादृशद्वेषाभावस्तादृशद्वेषोत्तरतद्गोचरेच्छायां तद्धर्मावच्छिन्नजनकत्वज्ञानाभावः कारणम्। बलवद्द्वेष इति। पाकादिगोचरेच्छायां बलवद्द्वेषविषयसाधनत्वज्ञानजन्यः पाकगोचरो द्वेषः प्रतिबन्धकः, पूर्वोक्तप्रतिबन्धकद्वयकल्पनापेक्षया लाघवादिति भावः। यत्र चोत्कटसुखोत्कटदुःखजनकत्वमेकस्मिन् कर्मणि गृहीतं तत्र सत्प्रतिपक्षस्थल इवेच्छाद्वेषयोरनुत्पत्तेस्तन्मते तत्र कार्यकाले द्वेषाभावस्य सत्त्वेनेच्छोत्पादापत्तिः। न च यत्र बलवद्द्विष्टसाधनत्वज्ञानेन तृतीयक्षणे द्वेषो जनितस्तदुत्तरक्षणे इच्छोत्पादापत्तिस्तवाऽपीति वाच्यम्। तत्रेच्छोत्पादस्येष्टत्वात्। क्षणविलम्बस्य शपथनिर्णेयत्वादित्यन्य इत्यनेनाऽस्वरसः सूचितः।

रामरुद्री।

चोत्पादस्याऽऽनुभविकतया पाकादिविशेष्यककृतिसाध्यत्वज्ञानस्यैव हेतुत्वमुपेयम्, न तु कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानत्वेन, धर्मितावच्छेदकांशे संशयस्याऽनुभवविरुद्धतया तादृशेष्टसाधनताज्ञानस्य कृतिसाध्यत्वांशे संशयत्वायोगात्। अत एव कृत्यसाध्यतानिश्चयस्य प्रतिबन्धकत्वे निश्चयत्वप्रवेशेन गौरवमपि ग्रन्थकृतोपदर्शयिष्यत इति प्राहुः।

इदं त्ववधेयम्। शुद्धपाकत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानजन्यायां चिकीर्षायां पाको भवत्वित्याकारकेच्छासाधारणी शुद्धपाकत्वादिप्रकारतानिरूपिताऽपि विशेष्यता स्वीक्रियते, तादृशविशेष्यतानियामकसामग्र्यास्तत्पूर्वमवश्यसत्त्वेन तत्कल्पने बाधकाभावात्। कृतिसाध्यपाकत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानजन्यायां तु न सोपेयते, मानाभावात्। तथा च शुद्धपाकत्वावच्छिन्नधर्मिकसिद्धत्वग्रहदशायां तद्धर्मिकेष्टसाधनत्वकृतिसाध्यत्वप्रकारकज्ञानकाले न पाके चिकीर्षापत्तिः, शुद्धपाकत्वप्रकारतानिरूपितविशेष्यताशालिन्यास्तादृशेच्छायास्तादृशसिद्धत्वग्रहप्रतिबध्यत्वात्, तदनात्मिकायाश्च तस्याः कृतिसाध्यपाकत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानजन्यायास्तथाविधविशेषकारणात्मकतज्ज्ञानव्यक्त्यभावादेवाऽभावासिद्धिरिति सर्वमवदातम्।

टीकायाम्—तृतीयक्षणे द्वेषो जनित इति। साधनत्वांशे तद्धर्मिकमप्रामाण्यज्ञानम्, ततो बलवद्द्विष्टसाधनताज्ञानात्मकतदुत्पत्तिस्तदुत्तरं द्वेष इत्यर्थः। इष्टापत्तिस्तु न सम्भवति, द्वेषेच्छयोः समानकालीनत्वापत्तेरिति भावः। समाधत्ते। क्षणविलम्बस्येति। तत्र तदुत्तरक्षणे इच्छोत्पादस्य

तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥
द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम् ।

तदहेतुत्वेति । बलवदनिष्टाजनकत्वज्ञानं तत्र कारणमित्यर्थः । ( कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टाजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात् कस्यचिन्मत इत्यस्वरसो दर्शितः) ॥१४८॥

॥ इतीच्छानिरूपणम् ॥

द्वेषं निरूपयति । द्विष्टसाधनतेति । दुःखोपायविषयकं द्वेषं प्रति द्विष्टसाध-

दिनकरी ।

बलवदनिष्टाजनकत्वज्ञानमिति । अत्रापि तद्धर्मप्रकारकद्वेषोत्तरेच्छायां तद्धर्मावच्छिन्नाजनकत्वज्ञानं कारणम् , तादृशद्वेषानुत्तरेच्छायां तु तद्धर्मप्रकारद्वेषाभावः कारणमिति निष्कर्षो बोध्यः। मूले—कस्यचिन्मत इत्यनेनास्वरसः सूचितः। स च बलवदनिष्टाननुबन्धित्वज्ञानत्वस्य हेतुतावच्छेदकत्वे बलवदनिष्टजनकत्वप्रकारतानिरूपिताभावविशेष्यताशालित्वादेस्तादृशनिरूप्यनिरूपकभावघटितत्वेन गौरवात् , तदघटितबलवनिष्टसाधनत्वज्ञानाभावत्वेनैव हेतुत्वं युक्तम् । न चाप्रामाण्यज्ञानानास्कन्दितबलवदनिष्टाननुबन्धित्वज्ञानत्वापेक्षयाऽप्रामाण्यनिश्चयानास्कन्दिततदनुबन्धित्वज्ञानत्वस्य प्रतिबन्धकतावच्छेदकत्वे गौरवमिति वाच्यम् । युद्धादौ बलवदनिष्टसाधनत्वसन्देहेऽपीच्छाप्रवृत्त्योरुदयाद्बलवदनिष्टानुबन्धित्वनिश्चयस्यैवेच्छाप्रतिबन्धकतायास्तदननुबन्धित्वसंशयस्यापि च कारणतायाश्च वाच्यतया च विपरीतगौरवादिति । न च बलवदनिष्टाननुबन्धित्वज्ञानस्याऽप्रवर्त्तकत्वे तद्विषयस्य विध्यर्थत्वाभावान्न कलञ्जं भक्षयेदित्यादिवाक्यानामप्रामाण्यापत्तिरिति वाच्यम् । तज्ज्ञानस्य प्रवृत्तिजनकत्वाभावेऽपि प्रवृत्तिप्रतिबन्धकबलवदनिष्टसाधनत्वज्ञानविघटकत्वेन प्रवृत्तिप्रयोजकत्वात् प्रवृत्तिप्रयोजकज्ञानविषयस्य विध्यर्थत्वानपायात् । अत्र यद्यपि यत्र प्रथमक्षणे द्वेषः, द्वितीयक्षणे फलेच्छा, तृतीयक्षणे फलसाधनताज्ञानं, तत्र तृतीयक्षणे द्वेषनाशाद्भवत्येव चतुर्थक्षणे उपायेच्छा, यत्र फलेच्छादिक्रमेणैषामुत्पत्तिस्तत्र फलेच्छारूपकारणाभावादेव नोपायेच्छा, एवमन्यत्राऽपि, आत्मविशेषगुणानां यौगपद्यानङ्गीकारादिति बलवदनिष्टानुबन्धित्वज्ञानस्य द्वेषस्य वा प्रतिबन्धकत्वं न युक्तम् , न युक्तं च बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वम् , तथापि द्वित्रिक्षणान्तरितेऽपि द्वेषे इच्छाप्रवृत्त्योरनुदयस्याऽऽनुभविकतया ज्ञानयोरेव न यौगपद्यमित्यभ्युपगमाद्वा पूर्वोक्तप्रतिबन्धकत्वस्य हेतुत्वस्य वाऽऽवश्यकत्वमिति ध्येयम् ॥ १४८ ॥ इतीच्छानिरूपणम् ॥

रामरुद्री ।

द्वेषप्रतिबन्धकत्ववादिभिरपि दुर्वारत्वादिति भावः॥ अस्वरस इति । न च बलवदित्यादि । न चेत्यस्य हेतुतावच्छेदकत्वमित्यग्रेतनेनाऽन्वयः । तत्र हेतुकथनं गौरवादित्यन्तम् । निगमयति । तदघटितेति । द्वित्रिक्षणान्तरितेऽपीति । एतन्मते द्वेषस्य स्वाधिकरणकृतिमत्त्वसम्बन्धेन प्रतिबन्धकत्वं बोध्यम् । लाघवादाह । ज्ञानयोरेवेत्यादि । एतन्मते च समवायेनैव प्रतिबन्धकत्वमित्यन्यत्र विस्तरः ॥ १४८ ॥

॥ इतीच्छानिरूपणम् ॥

प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।
चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥

नताज्ञानं कारणमित्यर्थः । बलवद्विष्टसाधनताज्ञानं च प्रतिबन्धकं, तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः ॥ इति द्वेषनिरूपणम् ॥

यत्नं निरूपयति । प्रवृत्तिश्चेति । प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदाद् प्रयत्नस्त्रिविध इत्यर्थः ॥ १४९ ॥

चिकीर्षेत्यादि । मधुविषसम्पृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः । कृतिसाध्यताज्ञानादिवद् बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति ।

कार्यताज्ञानं प्रवर्त्तकमिति गुरवः । तथाहि—ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नाऽपेक्षितमस्ति, सा च कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात् । चिकीर्षा हि कृतिसाध्यत्वप्रकारकेच्छा तत्र कृतिसाध्यत्वं प्रकारः, तत्प्रकारकज्ञानं चिकीर्षायां कारणं, तद्द्वारा प्रवृत्तौ च हेतुः, न त्विष्टसाधनताज्ञानं तत्र हेतुः, नित्ये तदभावात्, कृत्य-

दिनकरी ।

तेन—द्वेषे बलवत्त्वविशेषणेन ॥ इति द्वेषनिरूपणम् ॥

प्रवृत्तिरित्यादि । प्रवृत्तित्वं च रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः । निवृत्तित्वं च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः । जीवनयोनियत्नत्वं च साहजिकप्राणसञ्चारविषयकयत्नत्वम् ॥ १४९ ॥

ननु बलवदनिष्टानुबन्धित्वज्ञानाभावस्य प्रवृत्त्यहेतुत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरित आह । मध्विति । चिकीर्षाभावादिति । चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानाभावस्य हेतुत्वादिति भावः । कृतिसाध्यताज्ञानादिवदिति । अन्यथा कृतिसाध्यताज्ञानादेरपि चिकिर्षायामेव हेतुत्वं स्यात्, न तु प्रवृत्तौ, व्यापारेण व्यापारिणो नान्यथासिद्धत्वमिति तु प्रकृतेऽपि समानमिति भावः ।

प्राभाकरमतमाह । कार्यताज्ञानमिति । सा च-चिकीर्षा च । तद्द्वारा—कृतिसाध्य-

रामरुद्री ।

मूले—कार्यताज्ञानमिति । कृतिसाध्यताज्ञानमित्यर्थः । साध्यत्वपदार्थश्चोपरिष्टाद्विवेचयिष्यते । ज्ञानस्येति । प्रवृत्तिं प्रति साक्षादसाधनीभूतस्य ज्ञानस्येत्यर्थः । उपादानप्रत्यक्षं च साक्षात्तत्साधनमेव, उपायेच्छायास्तद्द्वारतामतेऽपि तदपगमे प्रवृत्त्यनुदयेन तस्स्वीकारावश्यकत्वात्, अतस्तस्य चिकीर्षातिरिक्तकृतिसाध्यताज्ञानापेक्षित्वेऽपि न क्षतिः । तत्प्रकारकज्ञानमिति । कृतिसाध्यत्वप्रकारकज्ञानमित्यर्थः । इदं चाऽऽपाततः । वस्तुतो लाघवात् साध्यतासंसर्गेण कृतिप्रकारिका पाको मत्कृतिमान् भवत्वित्याकारिकेच्छैव व्यापारः, न तु कृतिसाध्यत्वप्रकारिका, गौरवात् । अत एव ज्ञानमपि साध्यतासंसर्गेण कृतिप्रकारकमेव हेतुरिति तत्त्वम् । विशेषस्तूपरिष्टाद्वक्ष्यते । न त्विष्टसाधनताज्ञानमिति । तत्र—चिकीर्षासामान्ये । तेन विशेषतो हेतुत्वेऽपि न क्षतिः । हेतुरिति । एतदुत्तरं 'ननु कृत्यसाध्येऽपि प्रवृत्त्यापत्तेः कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न इति' पाठस्तदपपाठ एव । ग्रन्थश्चेत्थं व्याख्येयः—हेतुमाह । कृत्यसाध्य इति । स्वकृत्यसाध्यत्वेन ज्ञात इत्यर्थः । तादृशं च चन्द्रमण्डलानयनादि प्रसिद्धमेव । ननु कृत्यसाध्यतानिश्चयाभाव उभयमतेऽपि सर्वत्र चिकीर्षोत्पत्तिपूर्वं सिद्धः, कृतिसाध्यताज्ञानं तु न तथा,

**साध्येऽपि प्रवृत्त्यापत्तेः। कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न। तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात्। न च द्वयोरेव हेतुत्वम्, गौरवात्। ननु त्वन्मतेऽपि मधुविषसम्पृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः, कार्य्यताज्ञानसत्त्वादिति चेन्न। स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्य्यताज्ञानस्य**

दिनकरी।

स्वप्रकारकेच्छाद्वारा। **द्वयोरेवेति**। एवकारोऽप्यर्थे। **स्वविशेषणेति**। स्वं–प्रवर्तमानः पुरुषः, तद्विशेषणं–काम्ये कामना नित्ये कालशौचादि, तद्वत्ता पक्षे तत्सम्बन्धः, तस्य प्रतिसन्धानं ज्ञानमित्यर्थः। तस्य कार्यताज्ञानहेतुता लिङ्गज्ञानविधया। तथाहि पाको मत्कृतिसाध्यः, मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वादित्यनुमानम्। अत्र मदिष्टसाधनत्वमात्रोपादाने वृष्ट्यादौ व्यभिचार इति सत्यन्तम्। मदिष्टसाधने परकृतपाकादौ व्यभिचारवारणाय मत्कृतिं विनेत्यत्र मत्पदम्। श्रमे व्यभिचारवारणाय मदिष्टसाधनत्वादिति। मदीयश्रमस्य

रामरुद्री।

तथा च कृतिसाध्यताज्ञानत्वस्य सदपि लाघवं कारणतावच्छेदकतायां न विनिगमकम्, तत्र नियतपूर्ववर्तितावच्छेदकत्वकल्पनगौरवस्य दुर्वारत्वात्, तदसाध्यताज्ञानाभावत्वे चाऽन्यथासिद्धिनिरूपकतानवच्छेदकत्वस्यैव कल्प्यतया तत्राऽपि लाघवगौरवयोस्तौल्यात् तथा च कारणतावच्छेदकगौरवमकिञ्चित्करमेवेति विनिगमनाविरहादुभयोरेव हेतुत्वमावश्यकमित्याशङ्कते। **न चेति**। **हेतुत्वमित्यग्रे**ऽन्वयः। तत्र हेतुमाह। **गौरवादिति**। तथा च कथायामुभयवाद्यनुभवापेक्षणेऽपि स्वकीयतत्त्वनिर्णये परकीयानुभवस्याऽनपेक्षिततया स्वयं च कृतिसाध्यताज्ञानत्वस्य फलनियतपूर्ववर्तितावच्छेदकताघटितकारणतावच्छेदकतायाः कल्पनवेलायां कृतिसाध्यताज्ञानत्वे तत्कल्पने लाघवज्ञानस्य हेतुत्वात्कृत्यसाध्यतानिश्चयाभावत्वे गौरवज्ञानस्य प्रतिबन्धकत्वादेव चाऽस्मदभीष्टसिद्धेः। एतादृशकारणत्वग्रहाधीनस्य च यावत्फलपूर्वं कृतिसाध्यताज्ञानकल्पनागौरवस्य फलमुखत्वेनाऽदोषत्वात्। वस्तुतस्तु इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमस्य प्रागेवोपदर्शिततया स्वयं नियतपूर्ववर्तित्वस्य कृतिसाध्यताज्ञानेऽकल्पनीयत्वादेव तादृशगौरवस्याऽपि स्वमतेऽभाव एवेति हृदयम्। नैयायिकः शङ्कते। **नन्विति**। **प्रवृत्त्यापत्तिरिति**। सञ्जातबाधतादशायामित्यादिः। तेन नेष्टापत्तिसम्भवः। सञ्जातबाधता च बलवदनिष्टानुबन्धित्वादिबाधनिश्चयवत्त्वम्। इदमुपलक्षणम्। पाकादावपि सञ्जातबाधदशायामपि तथा प्रसङ्गो बोध्यः। न च फलेच्छाविरहादेव तादृशस्थलेषु न प्रवृत्त्यापत्तिसम्भव इति वाच्यम्। नित्यस्थले व्यभिचारेण तस्या जनकत्वासम्भवादिति भावः। **कार्यताज्ञानसत्त्वादिति**। बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वभ्रमोत्तरं तादृशस्थले प्रवृत्तेरानुभविकत्वेन कृतिसाध्यताया विषभक्षणादौ सत्त्वेन तज्ज्ञानस्य स्मरणात्मकस्य सञ्जातबाधतादशायामपि सत्त्वादित्यर्थः। एतेन गुरुभिर्भ्रमस्थले ज्ञानद्वयोपगमेन विषभक्षणादौ प्रवृत्तेरसत्त्वे कार्यताया अप्यसत्त्वात्तत्र कार्यताज्ञानात्मककारणविरहादेव प्रवृत्त्यभावोपपत्तेरेतदाशङ्कनमनुचितम्। न चाऽन्यथाख्यातिग्रन्थोक्तदिशा ज्ञानद्वयीयविषयतयोरपि निरूप्यनिरूपकभावस्य तैरुपगमात् कार्यत्वप्रकारतानिरूपितविषभक्षणादिनिष्ठविशेष्यतानिरूपकज्ञानस्य तत्र सत्त्वात्प्रवृत्त्यापत्तिः सम्भवत्येवेति वाच्यम्। एवं सति तद्वारणाय कार्यत्वप्रकारतानिरूपितविशेष्यतायां कृतिसाध्यनिष्ठत्वनिवेशेन स्वनिरूपितकृतिसाध्यत्वनिष्ठप्रकारतानिरूपितनिष्ठविशेष्यताकज्ञानत्वेन वा कारणत्वोपगमेनैव सर्वातिप्रसङ्गभङ्गे गुरूणामग्रिमसमाधानान्तरानुसरणस्य सन्दर्भविरोधापत्तेः, कृतिसाध्यविषयिण्या एव चिकीर्षायाः फले प्रवृत्तिवारणाय द्वारतया नैयायिकाभिमतत्वेन पूर्वमुक्तायाः स्वीकारेणैव च तादृशातिप्रसङ्गवारणसम्भवाच्चेति पूर्वपक्षः परास्तः। इत्थञ्च बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वभ्रमाधीनकृतिसाध्यत्वसम्पादनाय मूले मधुविषसम्पृक्तान्नभोजनचैत्यवन्दनरूपोदाहरणद्वयोपन्यासोऽपि सङ्गच्छते। इष्टसाधनताज्ञानसम्पादनायैव चाऽऽद्योदाहरणे मधुपदोपादानम्। यद्यपि चैत्यवन्दनस्य निष्फलत्वेन न कुर्यान्निष्फलं कर्मेत्यनेन निषिद्धतया तत्र बलवदनिष्टाननुबन्धित्वबुद्धिः भ्रमरूपात्र सम्भवत्येव, तथाऽपि चैत्यवन्दने तदनुबन्धि-

दिनकरी ।

मच्छत्रोरिष्टसाधनत्वात्तद्वेषतादवस्थ्यमतस्तत्रापि मदिति । न च स्वेच्छाधीनकृतिसाध्यता-ज्ञानमेव प्रवर्तकमन्यथा नान्तरीयकश्रमे प्रवृत्त्यापत्तेः, तच्चोक्तानुमानान्न सिद्धमिति वाच्यम्। स्वेच्छाधीनकृतिसाध्यत्वस्यैव साध्यत्वात् । एवं च हेतावपि मत्कृतिं विनेत्यत्र स्वेच्छाधीनत्वं

रामरुद्री ।

त्वज्ञानस्य नास्तिकादिसाधारण्याभावेनाऽऽचोदाहरणोपन्याससङ्गतिः । इदं त्ववधेयम् । यद्यपि सञ्जात-बाधस्य स्वकृतिसाध्यतास्मरणात् कथं प्रवृत्त्यापादनम् ? भाविन्यैवराज्ये प्रवृत्त्यतिप्रसङ्गवारणायेदानी-न्तनस्वकृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वेन तदभावात्, इदानीन्तनत्वप्रकारेण कृतेः प्रागननुभवेन स्मरणा-योगात् । न च तन्मते अतीतत्वाद्यगोचरज्ञानस्य विषयनिष्ठवर्तमानत्वविषयतानियमादनुभवागोचरस्या-ऽपि वर्तमानत्वस्य प्रमुष्टतत्ताकतादृशस्मृतौ कृत्यंशे भानमविरुद्धमिति वाच्यम् । पूर्वानुभूतकृताविदानी-न्तनत्वभानाभ्युपगमेऽन्यथाख्यात्यापत्तेः, तथापि कृतिसाध्यताज्ञानहेतुतायाः तत्तद्धर्मप्रकारकप्रवृत्तिं प्रति कालविशिष्टज्ञानत्वेनैव कारणत्वस्य व्यवस्थापयिष्यमाणत्वेन कृतीदानीन्तनत्वयोर्विशेषणविशेष्यभावम-र्यादयैकज्ञानविषयत्वायोगेऽपि ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावस्य तन्मतसिद्धतया न तादृशस्थ-ले प्रवृत्त्यापादनानिर्वाहः । अत्र ज्ञानस्य स्वीयतद्धर्मावच्छिन्नविशेष्यतानिरूपितसाध्यत्वप्रकारतानिरू-पितकृतिप्रकारतानिरूपिताधेयत्वसम्बन्धावच्छिन्नप्रकारताविशिष्टसमवायः कारणतावच्छेदकप्रत्यासत्तिः । समवाये प्रकारतावैशिष्ट्यं चैकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन । ज्ञाने कालवैशिष्ट्यं च स्वनिष्ठाव-च्छिन्नत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितकृतिप्रकारतानिरूपितसाध्यत्वप्रकारतानिरूपिततद्धर्मावच्छिन्नवि-शेष्यतानिरूपकत्व-स्वान्यवहितपूर्वक्षणवृत्तित्वोभयसम्बन्धेन । तथा च प्रमुष्टतत्ताककृतिसाध्यत्वस्मरण-तादृशकृतिधर्मिकेदानीन्तनत्वप्रकारकानुभवात्मकज्ञानद्वयसत्त्वे प्रवृत्त्यापत्तिर्विषभक्षणादौ सम्भवत्येव, तादृशस्मरणस्य निरुक्तसम्बन्धेनेदानीन्तनकालवैशिष्ट्यानपायेन कारणतावच्छेदकविशिष्टकारणसमवधा-नसम्भवात् । इदानीन्तनश्च प्रकृतज्ञानाधिकरणक्षणाव्यवहितोत्तर एव कालो ग्राह्य इति नाऽऽसङ्गतिः । न च तथाऽपि कालवैशिष्ट्यघटकप्रथमसम्बन्धे स्वनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितकृतिप्रका-रतानिरूपितसाध्यत्वप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यतायां स्वावच्छिन्नकृतिसाध्यनिष्ठत्वस्याऽपि निवेशेनैव सञ्जातबाधदशायां प्रवृत्तिवारणसम्भवेन स्वविशेषणवत्तेत्यादिना गुरूणामग्रिमसमाधाना-न्तरानुसरणमनुचितमिति वाच्यम् । स्वकृतिसाध्यतास्मरणादेवाऽऽद्यस्तन्यपानप्रवृत्त्यनुरोधात् कृतावुप-स्थितेदानीन्तनत्वासंसर्गाग्रहसदकृतस्वकृतिसाध्यताज्ञानमेव तन्मते प्रवर्तकं वाच्यमिति तादृशप्रवृत्त्यनि-र्वाहभयेनैव स्वावच्छिन्नकृतिसाध्यनिष्ठत्वस्य तद्धर्मावच्छिन्नविशेष्यतायां निवेशयितुमशक्यत्वादिति । वस्तुतस्तु स्वावच्छिन्नकृतिसाध्यनिष्ठत्वस्य तद्धर्मावच्छिन्नविशेष्यतायां निवेशेऽपि न क्षतिः, पुरुषान्तरी-येदानीन्तनकृतिसाध्यतामादायैवेदानीन्तनकृतिसाध्यत्वस्य विषभक्षणादौ सम्भवात्, पुरुषान्तरीयकृत्यं-शेऽगृहीतासंसर्गकस्वकीयत्वभ्रमात्मकज्ञानद्वयादेव प्रवृत्त्यापादनसम्भवात्, तत्र कृतिसाध्यताज्ञानस्य स्वीयतद्धर्मावच्छिन्नविशेष्यतानिरूपितसाध्यत्वप्रकारतानिरूपितकृतिप्रकारतानिरूपितज्ञानान्तरीयप्रकारता-विशिष्टसमवायस्य तत्पुरुषे सत्त्वेन प्रत्यासत्तिसत्त्वेन विषभक्षणे प्रवृत्त्यापादनसम्भवात् । न चाऽत्राऽपि समवाये तद्धर्मावच्छिन्नसाध्यककृतिवैशिष्ट्यमप्येकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन निवेशनीयमित्यु-क्तापत्तिर्वारयितुं शक्यत एवेति वाच्यम् । निगडनिश्चलदेहस्य स्वकृत्यसाध्ये गुरुतरभारोत्तोलनादौ प्रवृत्त्यसम्भवेन समवाये तथाविधवैशिष्ट्यस्य कथञ्चिदपि निवेशयितुमशक्यत्वादिति । एतेनाऽऽद्यस्तन्य-पानादिस्थले स्वतन्त्रोपस्थितेदानीन्तनत्व कृतिसाध्यत्वस्तन्यपानानां विशेषणविशेष्यभावावगाहिनो मानस-बोधादेव प्रवृत्तिसम्भवेन तदनिर्वाहभयेन स्वावच्छिन्नकृतिसाध्यनिष्ठत्वस्य विशेष्यतायां निवेशनिराकरण-मसङ्गतमित्यपि परास्तमित्यास्तां विस्तरः ।

मूले—**स्वविशेषणवत्ताप्रतिसन्धानजन्येति** । अत्र जन्यत्वमव्यवहितोत्तरत्वम् । तथा च काम्य-

प्रवर्त्तकत्वात्। काम्ये हि यागपाकादौ कामना स्वविशेषणम्, ततश्च बल-

दिनकरी।

मत्कृतिविशेषणं देयम्। अन्यथाऽन्येच्छाधीनमत्कृतिसाध्यमदिष्टसाधने नान्तरीयकजलसंयोगादौ व्यभिचारापत्तेः। एवं सति स्वेच्छाधीनमत्कृतिघटितहेत्वभावादेव श्रमे व्यभिचारवारणसम्भवात् विशेष्यदलप्रयोजनं यद्यपि न सम्भवति, तथापि नीलधूमादिवद्धेत्वन्तरत्वाद्दोषः। एवमहमिदानीन्तनकृतिसाध्यसन्ध्यावन्दनः, द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमत्वादित्यनुमानम्। यो द्विजातित्वे सति विहितसान्ध्याकालीनशौचादिमान् स तत्कालीनकृतिसाध्यसन्ध्यावन्दन इति समान्यतो व्याप्तिरिति। न चैवंरीत्येष्टसाधनत्वहेतुकानुमानसम्भवेऽपि पक्षे स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानं न सम्भवति, इष्टसाधनत्वस्य यागनिष्ठत्वेन पुरुषविशेषणत्वाभावात्, इच्छायाश्च पुरुषविशेषणत्वेऽपि तस्या लिङ्गघटकत्वेपि पक्षे तद्वत्ताज्ञानानिर्वाहकत्वादिति वाच्यम्, काम्यसाधनताज्ञानस्यापि पक्षे यागादौ(१) स्वविषयसाधनत्वरूपकामनासम्बन्धज्ञानात्मकत्वात्। वस्तुतस्तद्वत्ताज्ञानं तत्सम्बन्धज्ञानं तज्ज्ञानमेव वा, न तु पक्षोऽपि तत्राऽन्तर्भूत इति काम्यसाधनताज्ञानस्याऽपि कामनासम्बन्धज्ञानात्मकतया कामनाज्ञानात्मकतया चानुपपत्त्यभावात्। ननु स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्तकत्वे इष्टसाधनताज्ञानशून्यकालेऽपि पाके स्वविशेषणकृत्याघटितहेत्वन्तरायत्र कार्यतानुमितिः, यथा पाकः स्वेच्छाधीनमत्कृतिसाध्यः, श्रमादिभिन्नत्वे सति मत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात्, यद्वा स्वेच्छाधीनमत्कृतिं विनाऽसत्वादिति, तत्राऽपि प्रवृत्त्यापत्तिरत आह। **काम्ये हीति**। कामना—यागपाकादिगोचरकामना। क्वचित्तथैव पाठः। तथा च स्वविशेषणेत्यत्र विशिष्य तादृशकामनारूपमेव स्वविशेषणं वाच्यम्, एवं विशेषणवत्त्वमपि स्वविषयसाधनत्वरूपं वाच्यम्, तेन न स्वेच्छाधीनेत्यादिद्वितीयहेतुज्ञानजन्यकार्यतानुमितिस्थले प्रवृत्त्यापत्तिरिति भावः। ननु काम्यसाधनताज्ञानजन्यकार्यताज्ञानस्य प्रवर्तकत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरित्यत आह। **ततश्च बलवदनिष्टेति**। तथा च स्वविशेषणवत्ताप्रतिसन्धाने बलवदनिष्टाननुबन्धित्वविषयकत्वं

रामरुद्री

गोचरप्रवृत्ताविष्टसाधनताज्ञानाव्यवहितोत्तरकार्यताज्ञानस्य नित्यविषयकप्रवृत्तौ शुचितत्कालजीवित्वज्ञानाव्यवहितोत्तरकार्यताज्ञानस्य च हेतुत्वं पर्यवसितम्। तेन क्वचिदिष्टसाधनतास्मरणानन्तरं कृतिसाध्यत्वस्य हेत्वन्तराधीनज्ञानविषयत्वेऽपि न प्रवृत्त्यनुपपत्तिः। टीकायामनुमानाकारप्रदर्शनं तु सम्भवस्थलाभिप्रायकमेव। काम्यगोचरत्वं च फलोद्देश्यकत्वम्। उद्देश्यताख्यविषयता चोपरिष्टाद्विवेचयिष्यते। तेनाऽकाम्ये काम्यत्वभ्रमदशायां काम्ये नित्यत्वभ्रमदशायां वा नेष्टसाधनत्वज्ञानवत्तच्छून्ययोः प्रवृत्त्यनुपपत्तिः। इत्थं च नित्यगोचरत्वमपि फलानुद्देश्यकत्वमेव। इदं तु बोध्यम्। नित्यस्थलीयप्रवृत्तौ शुचितत्कालजीवित्वज्ञानस्य कारणतावच्छेदकता नाङ्गीकार्या, अशुचेः सन्ध्यावन्दनाद्यकरणमपि प्रत्यवायहेतुरिति भ्राम्यतः स्वस्य शौचादिमत्त्वमप्रतिसन्दधानस्याऽपि सन्ध्यावन्दनादौ प्रवृत्तेः। न चैवं शुचेरेव सन्ध्यावन्दनाद्यकरणं प्रत्यवायहेतुरिति जानतः स्वस्याऽशौचं च प्रतिसन्दधानस्य तत्र कार्यताज्ञानसत्त्वे प्रवृत्त्यापत्तिरिति वाच्यम्। तत्कालावच्छिन्नतदकरणधर्मिकप्रत्यवायोपधायकत्वज्ञानस्य प्रत्यवायविषयकविद्वेषस्य च नित्यगोचरप्रवृत्तौ जननीयायां कार्यताज्ञानसहकारित्वोपगमात्, तत्काले च स्वस्य शौचाप्रतिसन्धानेनाऽकरणस्य प्रत्यवायोपधायकत्वज्ञानासम्भवादेवाऽतिप्रसङ्गानवका-

(१) 'पाकादौ' इति पाठो युक्तः। प्रक्रान्तानुगुण्यात्।

वदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्य्यताज्ञानम्, ततः प्रवृत्तिः। तृप्तश्च भोजने न प्रवर्त्तते, तदानीं कामनायाः पुरुषविशेषणत्वाभावात्। नित्ये शौचादिकं पुरुषविशेषणं, तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः।

ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानविशिष्टकार्य्यताज्ञानमेव हेतुरस्तु, बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्, बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न। इष्ट-

दिनकरी।

विशेषणं देयमिति भावः। ननु तृप्तस्याऽपि भोजने प्रवृत्त्यापत्तिः, तस्याऽप्यतीतभोजनकामनाघटितलिङ्गजन्यकार्यताज्ञानसत्त्वादत आह। **तृप्तश्चेति। तदानीमिति।** कामनायास्तदानीं पुरुषविशेषणत्वाभावादित्यर्थः। तथा च स्वविशेषणेत्यत्र तदादीन्तनत्वं विशेषणं देयमिति भावः। ननु स्वेच्छाधीनमत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादिलिङ्गज्ञानजन्यकार्यताज्ञानात् सन्ध्यावन्दने प्रवृत्त्यापत्तिः, कृतेरपि स्वविशेषणत्वादत आह। **नित्ये शौचादिकमिति।** आदिना विहिततत्कर्मकालस्य परिग्रहः। न च कालस्य कथं पुरुषविशेषणत्वमिति वाच्यम्। स्ववृत्तिजीवनवत्त्वसम्बन्धेन तस्य पुरुषविशेषणत्वात्, विहितकालजीवित्वादेर्वाऽऽदिपदेन ग्रहणात्। तथा च नित्यगोचरप्रवृत्तिस्थले स्वविशेषणपदेन विशिष्य तत्कालीनशुचित्वादिरूपविशेषणमेव ग्राह्यमिति न पूर्वोक्तातिप्रसङ्ग इति भावः। नैयायिकः शङ्कते। **नन्विति।** तदपेक्षया—बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया। **लाघवेनेति।** नियमादिघटितजन्यत्वापेक्षया विषयित्वस्य लघुत्वादिति भावः। ननु बलवदनिष्टाजनकत्वज्ञानं न हेतुः, क्वचिद्बह्वायाससाध्ये बहुतरस्याऽपि दुःखस्याऽबलवत्त्वात् क्वचिदल्पस्य दुःखस्य बलवत्त्वादनुगतस्य बलवत्त्वस्य दुर्वचत्वादित्यत आह। **बलवदनिष्टाननुबन्धित्वं चेति। इष्टोत्पत्तीति।** इष्टोत्पत्तिनान्तरीयकं

रामरुद्री

त्वात्। इत्थं चाऽभावगोचरबलवद्द्वेषसामग्रीसमवहितस्यैव कार्यताज्ञानस्य प्रतियोगिगोचरप्रवृत्तौ कारणतायाः पर्यवसिततया लाघवादभावगोचरबलवद्द्वेषसहकृतस्यैव तज्ज्ञानस्य हेतुत्वं कल्पनायमित्याशयेनैव कार्यताज्ञानपूर्वं स्वविशेषणशुचितत्कालजीवित्वज्ञानाद्यात्मकतत्कालावच्छिन्नतदकरणधर्मिकप्रत्यवायोपधायकत्वज्ञानात्मकतदभावगोचरबलवद्द्वेषसामग्र्याः सत्त्वनिर्वाहकं स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वं तदव्यवहितोत्तरत्वपर्यवसितं मूलकृतोपदर्शितमितीत्या गुरुमतं परिष्करणीयम्। इत्थं च प्रवृत्तिकालावच्छिन्नतदकरणस्याऽप्रसिद्ध्या कार्यताज्ञानसहकारिणो निरुक्तज्ञानस्य विसंवादनैयत्येन विशेषदर्शिनां नित्यगोचरप्रवृत्त्यनुपपत्तिरिति केषाञ्चिदाक्षेपोऽपि निरवकाशः। तत्राऽप्यकरणगोचरबलवद्द्वेषसम्भवादेव प्रवृत्त्युपपत्तेः, तदभावे प्रवृत्त्यनुदयस्याऽपीष्टत्वात्। न चैवं भोजनाभावादिगोचरबलवद्द्वेषसहकृतकार्यताज्ञानादेव भोजनादिगोचरप्रवृत्तिनिर्वाहात्तत्रेष्टसाधनताज्ञानाव्यवहितोत्तरकार्यताज्ञानस्य हेतुत्वकल्पनमयुक्तमिति वाच्यम्। यत्र भोजनाभावस्य द्विष्टफलान्तरजनकत्वं न ज्ञातम्, तत्र भोजनाभावे बलवद्द्वेषासम्भवेन तत्सहकृतकार्यताज्ञानाद्भोजनविषयकप्रवृत्तेरुपपादयितुमशक्यतया तत्र भोजनधर्मिकेष्टसाधनताज्ञानसहकृतकार्यताज्ञानस्यैव हेतुत्वकल्पनाऽऽवश्यकत्वात्। अत एवेष्टसाधनताज्ञानसहकृतकार्यताज्ञानादेव प्रवृत्तिसम्भवेऽभावगोचरबलवद्द्वेषसहकृतकार्यताज्ञानस्य प्रतियोगिगोचरप्रवृत्तौ हेतुत्वकल्पनमनुचितमित्यपि निरस्तम्। नित्ये सन्ध्यावन्दनादाविष्टसाधनत्वज्ञानासम्भवेन तद्गोचरप्रवृत्तिनिर्वाहाय तथाविधहेतुताया आवश्यकत्वात्। न च तत्र प्रत्यवायाभावरूपेष्टसाधनताज्ञा-

**साधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्, साध्यत्वसाधनत्वयोर्विरोधात्। असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम्। न चैकमेकेनैकदा**

दिनकरी।

यद्दुःखं तदक्षपेयाऽतिरिक्तं यद्दुःखं तदजनकत्वमित्यर्थः। एतेन मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरपास्ता, इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तस्य मरणदुःखस्य तेन जननात्। अत्र केचित्। सुखमात्रजनके कर्मणीष्टोत्पत्तिनान्तरीयकदुःखमप्रसिद्धमिति तत्र प्रवृत्त्यभावप्रसङ्ग इति। तदयुक्तम्। कष्टं कर्मेति न्यायेन सुखजनके कर्मणि दुःखजनकत्वनियमेनाऽप्रसिद्ध्यभावात्।

मिश्रास्त्विष्टोत्पत्त्यनन्तरीयक(नरक)दुःखाजनकत्वमुक्तस्याऽर्थ इति नाप्रसिद्धिरित्याहुः।

नन्वेवं सति नरकसाधनत्वेन प्रमिते परदाराभिगमनादौ रागोत्कटस्य न प्रवर्तेत, इष्टोत्पत्त्यनान्तरीयकनरकदुःखजनकत्वेन तस्य निश्चयादित्यत आह। **बलवद्द्वेषेति।** द्वेषे च बलवत्त्वं जातिविशेषः। अत एव रागान्धस्य यदाऽगम्यागमनादिजन्यदुःखे न तादृशो द्वेषस्तदा तद्धेतावपि प्रवृत्तिः। साध्यत्वसाधनत्वयोर्विरोधमुपपादयति। **असिद्धस्य हीति।** आद्यक्षणवृत्तित्वविशिष्टस्य पाकादेरित्यर्थः। सिद्धस्य—अनाद्यक्षणवृत्तित्वविशिष्टस्य। कृत्यव्यवहितोत्तरक्षणसम्बन्धित्वघटितस्य कृतिसाध्यत्वस्य पाकोत्पत्तिक्षण एव पाकवृत्तित्वात् कालान्तरभाव्योदनादिफलसाधनत्वस्यौदनाव्यवहितपूर्वक्षणसम्बन्धित्वघटितस्य चोत्पत्तिक्षणे पाकावृत्तित्वात् तयोरेकक्षणावच्छेदेनैकत्राऽवृत्तित्वरूपविरोधादिति भावः। यद्यपि कालान्तरभाव्योदनाव्यवहितपूर्वक्षणवृत्तितावच्छेदकधर्मवत्त्वरूपमोदनसाधनत्वमाद्यक्षणवृत्तित्वविशिष्टेऽपि पाके सम्भवतीति कथं विरोधः ? तथापि स्वरूपयोग्यमिदं न फलोपधायकमिति ज्ञानात् प्रवृत्त्यनुदयेन फलोपधायकत्वरूपेष्टसाधनताऽज्ञानस्यैव संशयसाधारणस्य प्रवृत्तिकारणत्वं वाच्यम्, पूर्वोक्तं फलोपधायकत्वं चाऽऽद्यक्षणविशिष्टे यागादौ न सम्भवतीति भावः। साध्यत्वसाधनत्वयोर्विरोधं व्युत्पाद्य तयोरेकज्ञानविषयत्वं न सम्भवतीत्याह। **न चैकमेकेनैकदेति।** अव्याप्यवृत्ति-

रामरुद्री

नमस्तीति शङ्क्यम्, प्रत्यवायाभावस्य स्वत इच्छाविषयत्वासम्भवेन तत्साधनताज्ञानस्येष्टसाधनताज्ञानरूपत्वासम्भवात्। कथञ्चिद्दुःखाभावरूपेष्टसाधनत्वज्ञानेन तस्येष्टत्वसम्भवेऽपि प्रत्यवायगोचरबलवद्द्वेषस्यत्नेऽपि सन्ध्यावन्दनादौ प्रवृत्त्युदयेनाऽसार्वत्रिकतया तथाविधहेतुहेतुमद्भावस्याऽऽवश्यकताया निष्प्रत्यूहत्वात्। प्रत्यवाये बलवद्द्वेषस्य च तज्जन्यफलगोचरबलवद्द्वेषतः सम्भवात्। न च तथाऽपि नित्यगोचरप्रवृत्तिस्थलेऽभावगोचरबलवद्द्वेषस्य कार्यताज्ञानसहकारितया तादृशप्रवृत्तिनिर्वाहकस्य कार्यताज्ञानस्य तत्सहकारिबलवद्द्वेषनिर्वाहकसामग्र्यात्मकत्वविशेषणवत्ताप्रतिसन्धानोत्तरत्वस्याऽऽवश्यकत्वेऽपि काम्यगोचरप्रवृत्तिजनकस्य तस्येष्टसाधनताज्ञानात्मकस्य तत्समकालीनस्यैव वा तथात्वसम्भवेन तत्रेष्टसाधनताज्ञानात्मकत्वविशेषणवत्ताप्रतिसन्धानोत्तरत्वाभिधानमयुक्तमिति वाच्यम्। इष्टसाधनताज्ञानस्य चिकीर्षाहेतुत्वे स्वतन्त्रेष्टसाधनताज्ञानकृतिसाध्यताज्ञानफलेच्छानां युगपदवस्थानासम्भवेनेष्टसाधनत्वकृतिसाध्यत्वोभयविषयकसमूहालम्बनमेव फलोपधायकं वाच्यम्। तच्च न सम्भवति, कृतिसाध्यत्वस्य असिद्धधर्मस्य सिद्धधर्मेण साधनत्वेन सममेव ज्ञानेन विषयीकरणासम्भवात्। साधनत्वसाध्यत्वे चाऽग्रे विवेचयिष्येते समूहालम्बनज्ञानानपेक्षणात्। अथैवमिष्टसाधनताज्ञानं विनाऽपि प्रवृत्त्यङ्गीकारे विश्वजितो निष्फलत्वापत्तिः। न चेष्टसाधनताज्ञानाधीनप्रवृत्तौ प्रत्यवायजनकीभूताभावप्रतियोगित्वज्ञानस्य कार्यताज्ञानसहकारितया तस्य च विश्वजिद्यागेऽसम्भवात्तत्र प्रवृत्त्युपपत्तये फलकल्पनमावश्यकमिति

**सिद्धमसिद्धं च ज्ञायते, तस्मात् कालभेदादुभयं ज्ञायत इति।**

**मैवम्। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोधः, यदा कदाचित् साध्य-**

दिनकरी।

पदार्थस्य स्वस्वावच्छेदकानवगाहिज्ञानं न सम्भवति, मूले वृक्षः संयोगीत्येव प्रतीतेः। तथा च साध्यत्वसाधनत्वयोरपि स्वस्वावच्छेदकासिद्धत्वसिद्धत्वविषयकमसिद्धः पाकः कृतिसाध्यः सिद्धश्च पाक इष्टसाधनमिति ज्ञानं समूहालम्बनरूपं वाच्यम्। तच्च न सम्भवति, सिद्धत्वासिद्धत्वज्ञानयोः परस्परं विरोधित्वादित्यभिमानः। **तस्मात् कालभेदादिति।** न चेदानीमसिद्धः पाकः कृतिसाध्यः, अग्रे च सिद्धः पाक इष्टसाधनमिति ज्ञानादेव प्रवृत्तिरस्त्विति वाच्यम्। इदानीन्तनाग्रेतनकालयोरननुगमात्।

प्राणित्वस्याऽपि पुरुषविशेषणत्वेनाऽहमिदानीन्तनकृतिसाध्यविषभक्षणः, प्राणित्वादित्याद्यनुमितिसम्भवाद्विषभक्षणसाधारणं स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानमिति बलवदनिष्टाननुबन्धीष्टसाधनताशौचाद्यन्यतरलिङ्गप्रतिसन्धानजन्यकार्यताज्ञानं प्रवर्तकं वाच्यम्, तदपेक्षया बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानमतिलघ्विति तदेव काम्यनित्यसाधारणकारणत्वेन कल्प्यत इत्यभिप्रायेण प्राभाकरमतं दूषयति। **मैवमिति।** साध्यत्वसाधनत्वयोर्विरोधं दूषयति। **न चेति।** न हीत्यर्थः। **यदा कदाचिदिति।** यत्किञ्चित्काली-

रामरुद्री

वाच्यम्। तदुपपत्तये तत्र स्वर्गसाधनत्वं नित्यत्वं वा कल्पनीयमित्यत्र विनिगमनाविरहस्य दुर्वारत्वादिति चेन्न। विश्वजिद्यागस्य स्वर्गसाधनत्वकल्पनापेक्षया तदभावस्य प्रत्यवायाजनकत्वकल्पनाया गौरवेणैवाऽसम्भवात्। न चैतादृशलाघवानुरोधेन सन्ध्यावन्दनादीनामपि काम्यतापत्तिरिति वाच्यम्। सन्ध्यावन्दनाद्यकरणस्य प्रत्यवायजनकतायां **'अकुर्वन् विहितं कर्म', 'नाऽनुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्'** इत्यादि निन्दार्थवादस्य प्रायश्चित्तोपदेशस्य च प्रमाणत्वेन कल्पनागौरवस्याऽकिञ्चित्करत्वादिति सुधीभिर्विभावनीयम्। अथैतादृशकार्यत्वस्यैव विध्यर्थतामते चैत्यं वन्देतेत्यादेरपि प्रामाण्यापत्तिः, तत्र लिङर्थस्य कृतिसाध्यत्वस्याऽबाधितत्वादिति चेन्न। इष्टत्वात्, चैत्यवन्दनादिजन्यतद्ध्वंसरूपफलेऽपि कदाचित्कस्यचिदिष्टसाधनताभ्रमेणेच्छोत्पत्त्या चैत्यवन्दनादावपीष्टसाधनत्वाबाधेनेष्टसाधनत्वविध्यर्थतामतेऽपि तद्वाक्यप्रामाण्यस्याऽऽवश्यकत्वात्, स्वर्गकामश्चैत्यं वन्देतेत्यादिवाक्यजन्यबोधे च स्वर्गकामनायाश्चैत्यवन्दनकर्तव्यत्वप्रयोजकत्वभानेन तद्बाधादप्रामाण्योपपत्तेः। इत्थं च स्वर्गकामो यजेतेत्यादिविधितः स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्राथमिकान्वयबोधोत्पत्त्यनन्तरं स्वर्गासाधनं न स्वर्गकामनाधीनकृतिसाध्यमित्यनुपपत्तिज्ञानसहकृतेन तेनैव शब्देनाऽर्थापत्तिरूपपञ्चमप्रमाणतामापन्नेन यागस्य स्वर्गसाधनत्वमाक्षिप्यत इति न यागविषयककार्यताज्ञानसहकारिणस्तद्धर्मिककाम्यसाधनताज्ञानस्य दुर्भिक्षम्। अहरहः सन्ध्यामुपासीतेत्यादिनित्यविधिस्थले तु अकरणे निन्दार्थवादेनैव सन्ध्यावन्दनादेर्नित्यत्वबोध इति सर्वं सुस्थम्।

टीकायाम्—**अभिमान इति।** वस्तुतस्तु सिद्धत्वसाध्यत्वे कर्मप्रत्ययक्रियापदादिरूपशब्दविशेषप्रतिपाद्याखण्डधर्मस्वरूपे एव तन्मते स्वीक्रियेते। साध्यत्वप्रकारकबोधजनने साधनाकाङ्क्षानैयत्यात् परस्पराकाङ्क्षोत्थापकतावच्छेदकतया तत्सिद्धिः। अत एव यजेतेत्यादौ धात्वर्थस्य करणत्वेनाऽन्वये कर्मणः स्वर्गादेर्भाव्यस्याऽऽकाङ्क्षानैयत्येन तादृशबोधविषयत्वं कर्मत्वेन धात्वर्थस्याऽन्वये तु करणाकाङ्क्षापूरणाय गुणस्याऽन्वयो मीमांसकैः स्वीक्रियते। तयोश्चैकबोधविषयत्वमेकस्मिन् धर्मिणि न स्वीक्रियते। तथा हि वाजपेयेन स्वाराज्यकामो यजेतेत्यादौ वाजपेयपदस्य वाजमन्नं पेयमिति व्युत्पत्त्या द्रव्यवाचितया तत्क-

त्वसाधनत्वयोरविरोधात्, एकदा साध्यत्वसाधनत्वयश्चा ऽज्ञानात्।

नव्यास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकम्, अनागते तस्य ज्ञातुमशक्यत्वात्। किन्तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्त्तते, तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवृत्तिरित्याहुः।

तन्न, स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना सम्भोगादौ च प्रवृत्तौ तदभावात्।

इदं तु बोध्यम्। इदानीन्तनेष्टसाधनत्वादिज्ञानं प्रवर्त्तकं, तेन भावि-

दिनकरी।

नस्य साध्यत्वस्य यत्किञ्चित्कालीनेन साधनेन साधनत्वेन विरोधाभावादित्यर्थः। तथा चैककालीनकृतिसाध्यत्वेष्टसाधनत्वयोर्विरोधेऽपि न क्षतिः, तथा ज्ञानस्याऽस्माभिः कारणत्वानङ्गीकारात्, किन्तु निर्विशेषितयोः सामान्यतः कृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानस्यैव हेतुत्वाङ्गीकारादिति भावः। तादृशं च ज्ञानं सम्भवतीत्याह। **एकदेति।** इदं च ज्ञानान्वयि। अज्ञानात्–ज्ञानासम्भवात्। मूलावगाहिनोऽपि वृक्षः संयोगीति ज्ञानस्याऽऽनुभविकतया अव्याप्यवृत्तेर्ज्ञानं स्वावच्छेदकविषयकमेवेति नियमे मानाभावान्न पूर्वोक्तदोष इति ध्येयम्।

प्राभाकरानुयायिनवीनमतमाह। **नव्यास्त्विति। ज्ञातुमशक्यत्वादिति।** सामान्यलक्षणप्रत्यासत्त्यनङ्गीकारेण प्रत्यक्षस्य, पक्षज्ञानाभावेनाऽनुमितेश्चासम्भवादिति भावः।

**तदभावात्**–यादृशस्य पुंसः कृतिसाध्यं यद् दृष्टं तादृशत्वज्ञानाभावात्।

नन्विष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वे भावियौवराज्ये प्रवृत्त्यापत्तिरत आह। **इदं तु बोध्यमिति।** इष्टसाधनत्वादीत्यत्रादिपदोपगृहीतस्येदानीन्तनकृतिसाध्यत्वघटककृताविदानीन्तनत्वविशेषणस्य प्रयोजनमाह। **तेन भावीति।** इष्टसाधनत्वघटकेच्छायां तद्विशेषणस्य

रामरुद्री।

रणकत्वस्य भावनायामन्वये धात्वर्थस्यैव तत्कर्मताऽवश्यम्भावेन तत्र कर्मत्वबोधकालेऽसिद्धावस्थस्यैव भाव्यतया तत्र सिद्धावस्थधर्मस्य फलसाधनत्वस्य बोधो न सम्भवतीति वाजपेयपदस्य यागनामधेयत्वमाश्रित्य लक्ष्यार्थस्य वाजपेयपदवाच्यस्याऽभेदेन यागेऽन्वयमभ्युपगम्य तस्य फलं प्रति करणत्वमेव शाब्दबोधे भासत इत्युपपादितं तैः। तयोः प्रत्येकमेकैकबोधविषयत्वमेकधर्मिनिष्ठत्वं च न विरुध्यते। अत एव अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यनेन होमस्य करणत्वेन भावनायामन्वयबोधो दध्ना जुहोतीत्यत्र च होमस्य कर्मत्वेनाऽन्वयबोधश्च भवतीति तैरुक्तम्। कर्मत्वकरणत्वयोर्विधिवाक्यजन्यैकबोधविषयत्वं पुनर्वाजपेयन्यायेन निराकृतम्। तच्च तयोः सिद्धत्वसाध्यत्वरूपत्वादेव। वेदजन्यशाब्दबोधे कर्मत्वकरणत्वयोर्युगपज्ज्ञानस्योक्तरीत्याऽसम्भवेऽपि तत्प्रत्येकावगाहिशाब्दबोधद्वयोत्तरकालीनमानसादौ युगपत्तयोर्भानमेवमपि न विरुध्यत इति तादृशमानसादेव प्रवृत्तिनिर्वाहसम्भवादिष्टसाधनत्वकृतिसाध्यत्वयोरेकज्ञानाविषयत्वेन तद्गोचरसमूहालम्बनस्य प्रवृत्तिहेतुत्वखण्डनं न सङ्गच्छते इति तु न सङ्गच्छते, तयोः शब्दैकभास्यतया मानसादिविषयत्वायोगात्। सिद्धान्ते च **साध्यत्वसाधनत्वयोरविरोधित्वादि**त्यादिरीत्याऽप्रामाणिकं प्राभाकरमतमिदं निराकरिष्यत इति ध्येयम्।

मूले—**इदानीन्तनेष्टसाधनत्वादिज्ञानमिति।** एकत्वणावच्छिन्नैकारमवृत्तित्वसम्बन्धेन तद्विषयकेच्छाविशिष्टं तत्साधनताज्ञानमित्यर्थः। तथाचेच्छायाः स्वरूपसत्या एव विशेषणत्वं लभ्यते। तेनेच्छाया ज्ञातानुपयोगित्वेऽपि न क्षतिः। एवं बलवदनिष्टाननुबन्धित्वज्ञानमपि प्रागुक्तटीकाकाररीत्या

**यौवराज्ये बालस्य न प्रवृत्तिः, तदानीं कृतिसाध्यत्वाज्ञानात् । एवं तृप्तो भोजने न प्रवर्त्तते, तदानीमिष्टसाधनत्वाज्ञानात् । प्रवर्त्तते च दोषदूषितचित्तो**

दिनकरी ।

**प्रयोजनमाह । एवं तृप्त इति । बलवदनिष्टेत्यत्र बलवद्द्वेषे तद्विशेषणप्रयोजनमाह । प्रव-**

रामरुद्री ।

परिष्करणीयम् । कृतिसाध्यताज्ञानं तु इदानीन्तनकृतिसाध्यताज्ञानरूपमेव ग्राह्यमिति विवेकः । वस्तुतस्तु विशिष्टस्य कारणत्वे विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुभूतकार्यकारणभावद्वयापत्त्या तद्विषयकेच्छातत्साधनताज्ञानयोस्तद्विषयकबलवद्द्वेषतदननुबन्धित्वज्ञानयोश्च टीकाकारोक्तरीत्या तत्कालीनकृतिसाध्यताज्ञानस्य चेति रीत्या पञ्चविधाः पृथगेव कार्यकारणभावाः स्वीकर्त्तव्याः । वस्तुतस्तु तत्कालीनकृतिसाध्यताज्ञानेत्यत्राऽपि तत्तत्कालकृतिसाध्यताज्ञानयोरेव कारणत्वं स्वीक्रियते । अथैवंरीत्या कालस्य विशिष्य हेतुत्वे अलं चिकीर्षाया उपादानप्रत्यक्षादीनां च हेतुत्वेन । तत्तत्कालहेतुत्वेनैव तद्विरहकाले प्रवृत्तिवारणसम्भवात् । न च यत्काले चैत्रस्य तदानीन्तनकृतिसाध्यताज्ञानादिघटितसामग्रीवशात्पाके प्रवृत्तिस्तत्काले मैत्रस्याऽपि तादृशज्ञानशून्यस्य प्रवृत्तिवारणाय कृतिसाध्यताज्ञानादीनां हेतुत्वमावश्यकमिति वाच्यम् । तत्तत्कालीनस्वीयकृतिसाध्यताज्ञानस्यैव हेतुताया वाच्यतया तत्र च तत्तत्पुरुषप्रवेशावश्यकतया तथाविधगुरुतरकार्यकारणभावं परित्यज्य तत्तत्पुरुषीयप्रवृत्तिं प्रति तादात्म्येन तत्तत्पुरुषस्याऽपि हेतुताया वाच्यतया तेनैव मैत्रस्य प्रवृत्तिवारणसम्भवात् । मैत्रप्रवृत्तिव्यक्तीनां कालान्तरीणतया तद्धेतुकालाभावादेव तदभावस्य चैत्रप्रवृत्तिव्यक्तेश्च तत्कालीनाया अपि तादात्म्येन चैत्रस्य मैत्रेऽभावेनैवाऽभावस्य सम्भवात् । आवश्यकश्च कृतौ स्वीयत्वान्तर्भावः । पुरुषान्तरीयतदानीन्तनकृतिसाध्यतां ज्ञातवतोऽपि प्रवृत्त्यनुदयात् । अत्र वदन्ति । समवायेन तद्धर्मप्रकारकप्रवृत्तित्वावच्छिन्नं प्रति पुरुषविशेषमनन्तर्भाव्येच्छात्वेन कारणता कल्प्यते । कारणतावच्छेदकप्रत्यासत्तिश्च स्वीयतद्धर्मावच्छिन्नविशेष्यतानिरूपितसाध्यत्वप्रकारतानिरूपितकृतिप्रकारतानिरूपित समवेतत्वसंसर्गावच्छिन्नप्रकारताविशिष्टः समवायः । अन्यपुरुषीयत्वेन कृतिविषयिण्याः अन्यचिकीर्षायास्तादृशी प्रकारता यत्र तत्र न तस्याः समवायः, यत्र चाऽसौ तत्र नैतादृशी प्रकारतेति न सा क्वचिदप्यात्मनि विशिष्टसमवायेन प्रत्यासीदतीति नाऽतिप्रसङ्गः । तत्तत्कालीनप्रवृत्तौ च तत्तत्कालानां विशिष्य हेतुतेति न कालान्तरीयकृतिसाध्यत्वप्रकारकेच्छाबलात्कालान्तरे तत्कालीनप्रवृत्त्यापत्तिः । तादृशी च प्रकारतैकमात्रवृत्तिधर्मावच्छिन्ना ग्राह्या । अतश्च पुरुत्वादिना स्वविषयकपुरुषीयकृतिसाध्यताज्ञानदशायां मदीयकृतिसाध्यः पाक इत्यादिनिश्चयासत्त्वे न प्रवृत्त्यापत्तिः । इत्थं च पुरुषाणां विशिष्य हेतुताकल्पनस्याऽनावश्यकत्वान्न कालपुरुषकारणतया चिकीर्षादीनामन्यथासिद्धिः । तद्धेतुत्वे यदैकस्य पुंसः पाकत्वादिप्रकारकचिकीर्षादिकं, तदा तच्छून्यस्याऽपि पुंसः पाकत्वादिप्रकारकप्रवृत्त्यापत्तेः । वस्तुतस्तु तत्तद्धर्मप्रकारकप्रवृत्तिं प्रति सामान्यतः कालविशिष्टेच्छात्वेनैव कारणत्वं वाच्यम् । कारणतावच्छेदकप्रत्यासत्तिः पूर्ववद्विशिष्टसमवाय एव । कालवैशिष्ट्यं च स्वावच्छिन्नकृतिप्रकारतानिरूपितसाध्यताप्रकारतानिरूपिततत्तद्धर्मावच्छिन्नविशेष्यताकत्व—स्वाव्यवहितपूर्वक्षणवृत्तित्वोभयसम्बन्धेन यौवनकालीनत्वेन कृतिविषयिण्या अन्यकालीनचिकीर्षाया उक्तोभयसम्बन्धेन न केनाऽपि कालेन वैशिष्ट्यमस्तीति नाऽतिप्रसङ्गः । एवं च कालस्य विशिष्य हेतुत्वान्तरमपि न कल्पनीयम् । विषयभेदेन कार्यकारणभावभेदाभावप्रयुक्तलाघवानुरोधे तु प्रकारतासम्बन्धेन तत्तत्पुरुषीयप्रवृत्तिं प्रति कालविशिष्टविशेष्यतावच्छेदकतासम्बन्धेन तत्तत्पुरुषीयेच्छात्वेन हेतुता वाच्या । विशेष्यतायां कालवैशिष्ट्यं च स्वाव्यवहितपूर्वक्षणवृत्तीच्छाप्रतियोगिकत्व—स्वावच्छिन्नकृतिसाध्यत्वप्रकारतानिरूपितत्वोभयसम्बन्धेन । स्वाव्यवहितोत्तरक्षणावच्छिन्नकृतिसाध्यत्वप्रकारतानिरूपितत्वनिरूपितविशेष्यतावच्छेदकता वा कारणतावच्छेदकसम्बन्धो वाच्यः । कालस्य विषयतावच्छेदकत्वं चैकमात्रवृत्तिधर्मावच्छिन्नं वाच्यम् । अतो न पूर्वोक्तरीत्याऽतिप्रसङ्गः । कृतिसाध्यताज्ञानस्य च सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रति कृतिसाध्यताज्ञानत्वेन ज्ञानत्वेनैव वा हेतुता । अतिप्रसङ्गवारणस्य चिकी-

विषादिभक्षणे तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात् । न चाऽऽस्तिकस्याऽगम्यागमने शत्रुवधादिप्रवृत्तौ च कथं बलवदनिष्टाननुबन्धित्वबुद्धिः ? नरकसाधनत्वज्ञानादिति वाच्यम् । उत्कटरागादिना नरकसाधनताधीतिरोधानात् । वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती, किन्त्विष्टसाधनताज्ञानादिच्छामात्रम् । कृतिश्च प्रवृत्तिरूपा बोध्या । तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः ।

दिनकरी ।

**तते चेति** । प्रवृत्तौ–प्रवृत्तेः पूर्वं । **नरकसाधनत्वज्ञानादिति** । नरकरूपबलवदनिष्टसाधनत्वज्ञानादित्यर्थः । **उत्कटरागादिनेति** । अगम्यागमनादिसुखे उत्कटरागादिनेत्यर्थः । **नरकेति** । बलवदनिष्टेत्यर्थः । निरोधात्–अनुत्पादनात् । तादृशसुखे उत्कटरागसत्त्वेऽगम्यागमनजन्यनरके बलवद्द्वेषानुदयादिति भावः । **प्रवृत्तिरूपेति** । कृतिसाध्यताज्ञानमित्यत्र प्रवृत्तित्वेन कृतेः प्रवेश इत्यर्थः । स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतुत्ववादिमणिकृन्मतेऽपि स्वेच्छाधीनत्वं कृतिविशेषणं प्रवृत्तिरूपकृतिलाभार्थंमेवेति भावः । इत्थं च तद्व्यापारीभूतेच्छापि प्रवृत्तिसाध्यत्वप्रकारिका बोध्या, ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावादिति । **तेन**–प्रवृत्तिप्रवेशेन । **प्राणपञ्चकसञ्चारे न प्रवृत्तिरिति** । न च प्राणानामतीन्द्रियतयोपादानप्रत्यक्षाभावादेव न प्राणोपादानकसञ्चारसाध्यकप्रवृत्त्यापत्तिरिति वाच्यम् । प्राणवहनाड्युपादानकप्राणसञ्चारसाध्यकप्रवृत्त्यापत्तिवारणार्थंमेव प्रवृत्तिसाध्यताज्ञानहेतुत्वाङ्गीकारात् । यद्यपि प्राणसञ्चारावृत्तिविशेष्यतासम्बन्धेन कृतिसाध्यताज्ञानहेतुत्वाङ्गीकारादेव तथा प्रवृत्तिवारणं सम्भवति, तथापि घटादौ जीवनयोनियत्नसाध्यत्वभ्रमात् प्रवृत्त्यापत्तिवारणाय प्रवृत्तिसाध्यत्वज्ञानत्वेन हेतुत्वमावश्यकमिति ध्येयम् । एतेन प्राणसञ्चारे प्रवृत्तिवारणाय प्रवृत्तिसाध्यताज्ञानस्य हेतुत्वेपि प्रवृत्तिसाध्यत्वभ्रमात्प्राणसंचारे प्रवृत्त्यापत्तिर्दुर्वारेत्यपास्तम् । न च प्रवृत्तिसाध्यताज्ञानहेतुत्वेपि भोजननान्तरीयके श्रमे साध्यतया प्रवृत्त्यापत्तिर्दुर्वारेति वाच्यम् । तादृशश्रमे चिकीर्षाविरहादेव प्रवृत्त्यनुत्पत्तेः, तत्र चिकीर्षाविरहश्च श्रमस्य दुःखरूपतया दुःखत्वज्ञानस्येच्छाप्रतिबन्धकतयेच्छासामान्यसामग्रीविरहादेव । एतेन नान्तरीयकश्रमे प्रवृत्त्यापत्तिवारणाय स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतुत्वं वाच्यमिति मणिकृन्मतमपास्तम् । न च प्रवृत्तिसाध्यताज्ञानस्य

रामरुद्री ।

र्थाहेतुत्वेनैव सम्भवात् । व्यापारेण व्यापारिणो नाऽन्यथासिद्धिरिति तस्य नियतपूर्ववर्तिनः कारणत्वं स्वीक्रियते । अन्यथा तु नाऽस्त्येव तस्य कारणत्वम् । अथैवमिष्टसाधनताज्ञानमपि प्रवृत्तौ चिकीर्षयाऽन्यथासिद्धं भवत्विति चेन्न । तस्य प्रवृत्तावहेतुत्वे प्रवृत्तौ फलविषयतानियमानुपपत्तेः । चिकीर्षाया उपायविषयिण्याः फलाविषयकतया तन्नियामकत्वासम्भवात् । इष्टसाधनताज्ञानहेतुत्वे च तत्तद्रूपावच्छिन्नफलनिष्ठोद्देश्यतानिरूपिततत्तद्धर्मावच्छिन्नसाध्यत्वाख्यविषयताशालिप्रवृत्तित्वावच्छिन्नं प्रति तत्तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्तद्रूपावच्छिन्नसाधनत्वप्रकारताशालिज्ञानत्वेन हेतुतया फलभाननियमसम्भवात् । इत्थं च कृतिसाध्यत्वप्रकारिकेच्छा चिकीर्षा साक्षादेव प्रवृत्तिहेतुः, तत्र च समानविशेष्यककृतिसाध्यताज्ञानसहकृतं फलसाधनताज्ञानं फलेच्छा च हेतुः, तद्द्वारा च प्रवृत्तावपि, फलेच्छाकृतिसाध्यतेष्टसाधनताज्ञानचिकीर्षाणां युगपदवस्थानासम्भवादिति न्यायसिद्धान्तः । मूले—**यौवराज्य इति** । राजसिंहासनारोहणविशेष इत्यर्थः । टीकायाम्—**प्राणवहनाड्युपादानकेति** । प्राणवहनाडीनां च स्पार्शनप्रत्यक्ष-

**इत्थं च प्रवर्त्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवाऽर्थः ।**

दिनकरी ।

हेतुत्वेऽपि सुखे प्रवृत्तिसाध्यताज्ञानेच्छयोः सत्वात् तत्र साध्यताख्यविषयतासम्बन्धेन प्रवृत्त्यापत्तिरिति वाच्यम् । साध्यतया प्रवृत्तिं प्रति फलत्वज्ञानस्य प्रतिबन्धकत्वात् । वस्तुतस्तु तत्तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तत्तद्धर्मभेदस्य हेतुतायास्तत्र व्यवस्थापितत्वात् तत्र च कार्यतावच्छेदककोटौ ज्ञानत्वस्थाने गुणत्वमेव निवेशनीयम् । एवं च सुखत्वान्यवृत्तिविषयतासम्बन्धेन गुणत्वस्य कृतिसाध्यताज्ञानजन्यतावच्छेदकीभूतं यत्साध्यताख्यविषयतासम्बन्धेन प्रवृत्तित्वं तद्व्यापकतया तदवच्छिन्नजनकसुखत्वभेदस्य सुखत्वेऽभावादेव न तत्र साध्यताख्यविषयतावच्छेदकतया प्रवृत्त्यापत्तिः, व्याप्यधर्मावच्छिन्नजनकसामग्र्या फलजनने व्यापकधर्मावच्छिन्नजनकसामग्र्या अपेक्षितत्वात् । अनयैव च रीत्या प्राणसञ्चारत्वे श्रमत्वे च साध्यताख्यविषयतावच्छेदकतासम्बन्धेन प्रवृत्तिवारणं बोध्यम् । एतदेव हृदि निधाय प्राणसञ्चारस्य प्रवृत्त्ययोग्यत्वादेव न तत्र प्रवृत्तिरिति मिश्रैरभिहितमिति दिक् ।

**इत्थं चेति** । प्रवृत्तिं प्रतीष्टसाधनत्वादिधियो हेतुत्वे चेत्यर्थः । **इष्टसाधनत्वा-**

रामरुद्री ।

विषयत्वमस्त्येवेति भावः । **तत्र तत्र व्यवस्थापितत्वादिति** । अनुमितिपरामर्शशाब्दबोधयोग्यताज्ञानानां धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या कार्यकारणभावमते तत्तद्धर्मे धर्मितावच्छेदकतासम्बन्धेन तदत्यन्ताभावतद्द्रव्यद्वादिव्याप्यवत्तापरामर्शतदत्यन्ताभावादिमत्तावगाह्याहार्ययोग्यताज्ञानादिबलात्तादृशसम्बन्धेन तदत्यन्ताभावतद्द्रव्यद्वादेरनुमितिशाब्दबोधवारणाय तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदस्य हेतुताया आकारग्रन्थेषु विधिवादादिषु गदाधरभट्टाचार्यैर्व्यवस्थापितत्वादित्यर्थः । **प्रवृत्त्ययोग्यत्वादेवेति** । तथा च मणिकृतां तद्वारणाय कृतौ स्वेच्छाधीनत्वविशेषणदानमनुचितमिति भावः । तेषामपि तत्र चिकीर्षाऽयोग्यत्वस्य विषयतासम्बन्धेनेच्छां प्रति तादात्म्येन प्रतिबन्धकत्वरूपस्याऽवश्यकल्प्यत्वात् । अन्यथा तत्र चिकीर्षोत्पादापत्त्या स्वेच्छाधीनत्वविशेषणदानेऽपि तद्वारणासम्भवादिति । न च बलोपायव्यायामादिश्रमे मल्लादेरिच्छाप्रवृत्तिदर्शनात् कथं तस्येच्छां प्रत्ययोग्यतेति वाच्यम् । तत्र श्रमहेतुक्रियायामेवेच्छाप्रवृत्त्योरनुभवसिद्धत्वात् । भोजनादिकृतित इव तादृशक्रियाविशेषगोचरकृतितोऽपि नान्तरीयकविधयैव श्रमोत्पत्त्यभ्युपगमादिति निगर्वः । **मिश्रैरभिहितमिति** । शब्दमण्यालोके मणिकृतां कृतौ स्वेच्छाधीनत्वविशेषणदूषणावसर इति शेषः ।

**मूले—इष्टसाधनत्वादिकमेवार्थं इति** । नन्वेवं प्रवर्तकज्ञानविषयस्येष्टस्य स्वर्गपश्वादिभेदेन नानाविधतया तत्साधनत्वघटकस्य विधिप्रत्ययस्यापि नानार्थताप्रसङ्गः । न च इच्छाविषयतावच्छेदकत्वविशिष्टधर्मावच्छिन्नसाधनत्व एव विधिशक्त्युपगमान्न नानार्थताप्रसङ्ग इति वाच्यम् । एवमपि ज्ञानविषयतावच्छेदकत्वकृतिविषयतावच्छेदकत्वादिकमादाय विनिगमनाविरहेण इष्टसाधनत्वज्ञेयसाधनत्वकृतिविषयसाधनत्वादीनां शक्यताप्रसङ्गात्, इच्छाविषयतायाः कारणसामग्र्यधीनतया इष्टसाधनत्वस्यैतादृशस्य केवलान्वयितया चैत्यं न वन्देत जलं न ताडयेदित्यादौ नञर्थानन्वयप्रसङ्गाच्च । न च तत्र स्वर्गसाधनत्वादौ लक्षणेति वाच्यम् । स्वर्गसाधनत्वादौ शक्तिः, इष्टसाधनत्वादौ च लक्षणेत्यस्यापि सुवचत्वात्, स्वर्गसाधनत्वादौ लाघवसम्भवाच्च । वक्तृबुद्धिविषयतावच्छेदकत्वादेस्तदादिपदशक्यतावच्छेदकानुगमकत्ववदिच्छाविषयतावच्छेदकत्वस्योपलक्षणविधया विधिपदशक्यतावच्छेदकानुगमकत्वस्याऽपि चैत्यं वन्देतेत्यादेः प्रामाण्यभिया स्वीकर्तुमशक्यत्वात्, चैत्यवन्दनादेरपि कस्यचिदिच्छाविषयतावच्छेदकीभूतस्वनाशत्वावच्छिन्नजनकत्वानपायादिति चेदत्र केचित्, स्वसमभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न एव विधिशक्त्यभ्युपगमात् । विश्वजिता यजेतेत्यत्र च स्वर्गकामपदमध्याहा-

## दिनकरी ।

दिति । आदिना बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वयोः परिग्रहः । अत्र च निष्फले प्रवृत्त्यभावादिष्टसाधनत्वस्येष्टसाधनेऽपि मधुविषसम्पृक्तान्नभोजनेऽप्रवृत्तेर्बलवदनिष्टाननुबन्धित्वस्य कृत्यसाध्ये सुमेरुश्रृंगाहरणादावप्रवृत्तेः कृतिसाध्यत्वस्य च ज्ञानं प्रवृत्तिहेतुः, तच्च विधित इतीष्टसाधनत्वादिकं विध्यर्थ इति भावः । ननु भावियौवराज्यादौ प्रवृत्तेर्वारणायेदानीन्तनकृतिसाध्यताज्ञानादेः प्रवर्तकत्वं वाच्यं, तच्च न विधिवाक्यात्, ततः शक्यकृतिसाध्यत्वेष्टसाधनत्वप्रकारकज्ञानस्यैवोत्पत्तेरिति कथं प्रवर्तकज्ञानं विधित इति ? अत्र वदन्ति । न विधिः साक्षात् प्रवर्तकं ज्ञानमुत्पादयति, किं तु विधिवाक्यादिष्टसाधनत्वे कृतिसाध्यत्वे चाऽवगते किमिष्टमित्याकाङ्क्षायां स्वर्गकामादिपदसमभिव्याहारात् स्वर्गसाधनमिति ज्ञानमानुमानिकं मानसं वोत्पद्यते, अन्यथा विशेषरूपेण फलज्ञानाभावात् प्रवृत्त्यनुपपत्तेः,

## रामरुद्री ।

र्थम्, लक्षणयैव वा तत्र स्वर्गसाधनत्वादेर्बोध इत्यभ्युपगमात् । स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादित्यादिजैमिनीयन्यायस्याऽप्येतादृशनिरूढलाक्षणिकार्थे तात्पर्यग्राहकतया एवोपगन्तव्यत्वेनाऽदोषात् । स्वपदप्रवेशेनाऽननुगमस्तु न, शक्तिवादोक्तरीत्या स्वजन्यत्व—स्वसमभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नसाधनत्वावगाहित्वोभयसम्बन्धेन विधिपदविशिष्टो बोधो भवत्वित्याकारस्यैव भगवत्सङ्केतस्योपगन्तव्यत्वात् । न चैवं चैत्यवंदनध्वंसकामश्चैत्यं वन्देतेति वाक्यस्य प्रामाण्यापत्तिरिति वाच्यम् । इष्टत्वादिति वदन्ति, तन्न, समभिव्याहृतकामनाविषयतावच्छेदकत्वस्याऽनुगमकत्वे चैत्यं न वन्देतेत्यादेरननुभावकत्वापत्तेः । तत्रैतादृशविध्यर्थाप्रसिद्ध्या तदभावस्य नञा बोधयितुमशक्यत्वात् । कामनाविषयतावच्छेदकत्वमात्रमेवाऽनुगमकम्, स्वसमभिव्याहृतकामनाविषयतावच्छेदकत्वं तु तात्पर्यग्राहकम्, निषेधविधिस्थले तु प्रकरणादिरेव तात्पर्यग्राहक इत्युक्तौ तु न निस्तारः, विनिगमनाविरहेण ज्ञानविषयतावच्छेदकत्वादेरपि शक्यतावच्छेदकानुगमकत्वसम्भवेनाऽनन्तशक्तिकल्पनाप्रौव्यात् । वस्तुतस्तु स्वर्गत्वादिपुरस्कारेणेष्टं साधनत्वघटकीभूततावत्पदार्थश्च प्रत्येकमेव खण्डशो विध्यर्थः, स्वर्गसाधनत्वपशुसाधनत्वादौ प्रत्येकमखण्डशक्तिकल्पने गौरवात्, स्वसमभिव्याहृतकामनाविषयतावच्छेदकत्वादिकं प्रकरणादिकं च तात्पर्यग्राहकं, तथा च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गसाधनमित्याकारकस्तृप्तिकामः पचेतेत्यादिविधिस्थले च तृप्त्यादिसाधनं पाक इत्याकारक एव बाध इति न कोऽपि दोषः, तात्पर्यस्य नियामकत्वादेव सकलातिप्रसङ्गभङ्गात । इत्थं च विश्वजिता यजेतेत्यादौ तात्पर्यविषयीभूतफलप्रतिपत्त्यर्थमेव विश्वजिन्न्यायावतारः, तत्र दर्शितरीत्या समभिव्याहृतस्य पदस्य कामनाऽवाचितया तात्पर्यग्रहयासम्भवादितिसर्वमवदातम् । टीकायाम्—अत्र चेत्यादि । बलवदनिष्टाननुबन्धित्वस्येति । साक्षात्तु बलवदनिष्टाननुबन्धित्वं न विध्यर्थः । न चैवं न कलञ्जं भक्षयेदित्यादेरप्रामाण्यापत्तिरिति वाच्यम् । तत्र नञ एव बलवदनिष्टानुबन्धित्वे निरूढलक्षणाया उपगन्तव्यत्वादिति वदन्ति, तन्न, हुतायां वपायां दीक्षितस्याऽन्नमश्नीयात्, विवाहार्थेऽनृतं ब्रूयादित्यादिविधिप्रामाण्योपपत्तय एव बलवदनिष्टाननुबन्धित्वस्य विध्यर्थताया उपगन्तव्यत्वादिति । साक्षाद्विधित इति । इदमापाततः । दर्शितरीत्या साक्षात्प्रवर्तकस्यैव ज्ञानस्योत्पादसम्भवेन विशेषरूपेण फलज्ञानाभावरूपबाधकासम्भवात् । किं तु इदानीन्तनत्वमपि विधिजन्यज्ञाने भासत एव । न चैवं तत्तत्कालभेदेनाऽनन्तशक्तिकल्पनापत्तिः, आख्यातसामान्यस्यैव लक्षणया शक्त्यैव निर्वाहेऽतिरिक्तायास्तस्या अनभ्युपगमात् । स्पष्टं चेदं शब्दशक्तिप्रकाशिकाटीकादौ । इत्थं च कृतिसाध्यत्वादिकमपि विधेरर्थः, कृतेराख्यातसामान्यार्थतया विधिवाक्यजन्यबोधे तस्या धात्वर्थे साध्यतासंसर्गेणाऽन्वयोपगमादेव निर्वाहात् । न चैतादृशरीत्या कृतिसाध्यत्वबोधानुपगमे का क्षतिरिति वाच्यम् । पङ्गुः समुद्रं न तरेन्नैकः पर्वतमारोहेदित्यादिनिषेधविधीनां प्रामाण्योपपत्तय एव तत्स्वीकारा

## दिनकरी ।

एवमिदानीन्तनत्वान्तर्भावेण कृतिसाध्यत्वादिज्ञानमनुमानादिति । अत एवोक्तं मणिकृताऽपि "एवं विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्तकम्" इति ।

अत्र भट्टपादाः । लोके प्रवृत्तिर्द्वेधा, स्वेच्छाधीना परप्रेरणाजन्या च । तत्राऽन्यायां प्रवर्तनाया अनुपयोगेऽपि द्वितीयप्रवृत्तौ सा प्रयोजिका, आचार्यप्रेरणयेदं करोमीति व्यवहारात् । प्रवर्तना च प्रवर्तयितुः प्रवृत्त्यनुकूलव्यापारविशेषः, स च चेतनस्याऽभिप्राय एव, अचेतनस्य तु वेदस्याऽभिधानामकः कश्चिच्छब्दसमवेतः । तथा चाऽऽचार्याभिप्रायज्ञानाद्यथा शिष्यः प्रवर्तते तथाऽभिप्रायज्ञानाद्विधिस्थले प्रवृत्तिरिति सैव लिङर्थः । सैव च शाब्दी भावना लिङ्त्वांशेनोच्यते । अर्थभावना त्वाख्यातत्वांशेन । तदुक्तम्—

## रामरुद्री ।

वश्यकत्वात् । तत्र कृत्यसाध्यत्वे नञो लक्षणेति न शङ्क्यम्, क्लृप्तेनैवोपपत्तावतिरिक्तकल्पनाया अन्याय्यत्वात्, हनूमान् समुद्रं तरेदेवेत्यादिवाक्यानामेवमपि प्रामाण्यानुपपत्तेर्दुर्वारत्वाच्चेति ।

**लोके प्रवृत्तिर्द्वेधेति ।** अत्राऽयं भट्टपादानामाशयः । न तावदिष्टसाधनत्वादिकं लिङोऽर्थः, तथात्व इष्टसाधनताज्ञानादेव प्रवृत्तेराचार्यप्रेरितोऽहं गामानयामीत्यादावाचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तेः । न च प्रवृत्तिजनकेष्टसाधनताबोधकलिङुच्चारयितृत्वात्तस्य प्रवर्तकत्वव्यवहारः, तथात्वे राजप्रेरितपदातेस्तादृशलिङुच्चारयितृत्वेन प्रवर्तकत्वापत्तौ पदातिप्रेरितोऽहं न गामानयामि, किन्तु राजप्रेरित इति पदातौ प्रवर्तकत्वाभावव्यवहारानुपपत्तेः । अथाऽन्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वं प्रवर्तकत्वम् । तथात्वे पितृप्रेरिते राज्ञि प्रवर्तकत्वानापत्तेः । अतश्चैतादृशव्यवहारबलात् प्रवृत्तिकारणीभूतज्ञानविषयीभूतेच्छाश्रयत्वेनैव प्रवर्तकत्वं वाच्यम् । न चेच्छाया लिङादिवाच्यत्वाभावे ज्ञानं सम्भवति, विषयविशेषस्येष्टसाधनत्वेऽपि परेच्छाविषयत्वाभावेनेष्टसाधनत्वस्य व्यभिचारितया परेच्छानुमापकत्वानुपपत्तेः । अतः परिशेषाल्लिङादिवाच्यैव सा, तथा च प्रवृत्तिविषये यागादाविष्टसाधनत्वादेरनुमानेनैव बोधोपपत्तेर्न पुनर्वाच्यत्वकल्पनावसरः । भवति ह्ययमत्र प्रवर्ततामित्याकारकेच्छाविषयत्वमिष्टसाधनत्वव्याप्तम्, अतस्तेन तदनुमानम् । तादृशेच्छाविषयत्वं च तादृशाप्तेच्छाविषयीभूतप्रवृत्तिविषयत्वं बोध्यम् । तेन प्रतारकेच्छामादाय न व्यभिचारः, न वा प्रवृत्तौ तदाश्रये पुरुषे वा इच्छाविषये इष्टसाधनत्वाभावेऽपि व्यभिचारः । 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' 'लोट् च' 'छन्दसि लिङर्थे लेट्' इत्यादिपाणिन्यनुशासनादयमेवाऽर्थो विज्ञायते । विधिः—निकृष्टस्य प्रेरणम् । निमन्त्रणम्—अनिष्टजनकीभूताकरणप्रतियोगित्वानुमापकप्रवर्तकेच्छा । यथा श्राद्धादौ दौहित्रादेः प्रवर्तनम् । तत्र प्रमाणान्तरेणाऽभोजने प्रत्यवायावगमात् । अत एव विधिस्थल इवाग्रिमयोरपि लाघवादिष्टसाधनत्वानुमापकत्वमेव कृतिसाध्यत्वानुमापकत्वन्तु सर्वत्रैव, माऽस्तु वा तत् । आमन्त्रणम्—कामचारानुज्ञा । तत्र प्रेरकस्याऽऽग्रहाभावमात्रम्, अन्यत्र सर्वत्राऽऽग्रहोऽप्यधिको भासते । अधीष्टम्—उत्तमं प्रति सत्कारपूर्वकप्रेरणम् । एतेषु चतुर्षु प्रवर्तनात्वस्यैकस्याऽनुगतत्वात्तेन रूपेणैकैव शक्तिः । अन्यांशस्य तु प्रमाणान्तरलभ्यत्वान्न शक्यत्वमिति । **द्वितीयप्रवृत्तौ सा प्रयोजिकेति ।** प्रयोजकत्वं चेच्छायाः प्रवृत्तिं प्रति न स्वरूपेण कारणत्वम्, तदभावेऽपि तद्भ्रमेण प्रवृत्त्युदयात्, स्वरूपेण कारणत्वे लिङुक्तिवैयर्थ्याच्च । नाऽपि प्रवृत्तिकारणीभूतज्ञानविषयत्वम्, इष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिविशेषं प्रति प्रयोजकतयैवाऽन्वयव्यतिरेकसिद्धौ तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वकल्पने मानाभावात्, अपि तु प्रवृत्तिजनकज्ञानविषयेष्टसाधनत्वाद्यनुमापकत्वमेव तत् । तदेव च प्रवर्तनात्वप्रेरणात्वादिपदेन निर्दिश्यते । तदपि न लिङादिपदशक्यतावच्छेदकम्, गौरवात्, अन्यलभ्यत्वाच्च । प्रवृत्तिर्हि आख्यातादेव लभ्यते, प्रयोजकत्वं तु संसर्गबलेनेति न शक्यतावच्छेदकम् । अपि तु लोकवेदसाधारणं व्यापारत्वमेव तथा । अस्ति हि लौकिके लिङादिशब्दोपस्थाप्यपुरुषाशये प्रवृत्तिसाधनीभूतेष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिप्रयोजकव्यापारत्वम् । वेदे-

दिनकरी ।

'अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥' इति अभिधा-शब्दः, तन्निष्ठा भावनाऽभिधाभावना, अर्थः यागादिरात्मा वा, अर्थात्मकत्वं

रामरुद्री ।

ऽपि शब्दश्रवणोत्तरकालमनुमायैव तत्कार्यदर्शनादिच्छायाश्चाऽपौरुषेये वेदे बाधात्कार्यानुमेयमलौकिकं धर्मं लिङादिनिष्ठं लिङादिवाच्यं परिकल्प्य तस्य तदनुमापकत्वकल्पनात्तत्राऽपि प्रवृत्तिप्रयोजकव्यापारत्वम् । अत उभयसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम् । तदयमत्र क्रमः, प्रथमं लिङादिपदाद्व्यापारत्वेन सामान्यरूपेणैव व्यापारोपस्थितिः, पश्चादाख्यातोपस्थितकृतौ तस्य स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्यत्वसंसर्गेणाऽनुपस्थितेनैवाऽन्वयः । शाब्दबोधश्च व्यापारवती यागादिकृतिरिति । न च लिङर्थविशेष्यक एव शाब्दबोध इति भ्रमितव्यम्, लकारार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रत्येव आर्थभावनानिष्ठविशेष्यतासम्बन्धेनाऽऽख्यातपदजन्योपस्थितिः कारणमिति कालादिसाधारण्येनैककार्यकारणभावकल्पनालाघवानुरोधेनाऽऽख्यातार्थकृतेरेव मीमांसकैर्मुख्यविशेष्यत्वाभ्युपगमात् । अन्यथा 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते—' इति द्वितीयाद्यराद्धान्तेन ।

'भावनैव हि वाक्यार्थः सर्वत्राऽऽख्यातवत्तया—'

इति वार्तिकेन च विरोधः । सूत्रे भावार्था इति, भावः—भावना कृतिरिति यावत् । तदर्थाः—तन्मुख्यविशेष्यकबोधजनकाः । वार्तिकेऽपि भावना—कृतिरेव, वाक्यार्थः—वाक्यजन्यबोधमुख्यविशेष्यः । एवकारेणाऽन्ययोगो व्यवच्छेद्यः । आख्यातवत्तया—आख्यातप्रतिपाद्यतयेत्यर्थः । तेन कृतेः शाब्दभावनातिरिक्तसकलकारकान्वये विशेष्यत्वनियमेऽपि कृतेरन्वये शाब्दभावना मुख्यविशेष्यतया भासत इति भावार्थाधिकरणस्थकृतिरिति चिरन्तनमतमपास्तम् । एवं च देवदत्तः पचेदित्यादौ लोके तथाविधशाब्दबोधोत्तरं चैत्रप्रेरितोऽहं पचामीत्यादिव्यवहारवशेन पुरुषनिष्ठत्वाद्व्यापारस्येच्छारूपत्वस्य पाकविषयकृतिसम्बन्धात् पाकेऽयं प्रवर्ततामित्याकारत्वस्य च तस्याः सिद्धौ तदाश्रयस्य प्रयोजकवृद्धस्य प्रमाणान्तरेणाऽऽप्तत्वावगमे समानसंवित्संवेद्यतया पाकेऽयं प्रवर्ततामित्याकारकाप्तनिष्ठेच्छाविषयकृतिविषयत्वरूपहेतुज्ञानं मानसं जायते, ततश्च तस्मिन् हेतौ क्रियान्तरदृष्टान्तावगतेष्टसाधनत्वकृतिसाध्यत्वयोर्व्याप्तिस्मरणादुभयविषयिण्यनुमितिरुपपद्यते, क्वचिच्चाऽनिष्टसाधनीभूताकरणप्रतियोगित्वादेरपि, सामग्रीवशात् । तत्सामग्री चाऽयमत्र प्रवर्ततामित्याकारकत्वभङ्गनिमित्तकानिष्टप्रमाजनकेच्छाविषयत्वरूपहेतुपरामर्शादिरूपा । स्वपदमिच्छापरम् । वेदेऽपि लिङादिशब्दश्रवणोत्तरकालं व्यापाररूपपदार्थोपस्थित्या निरुक्तसम्बन्धेन व्यापारवती यागादिकृतिरिति शाब्दबोधे जाते वेदस्थलिङादिप्रेरितोऽहं यागादि करोमीत्यादिव्यवहाराद्यागविषयककृतिसम्बन्धाच्च तस्य लिङादिनिष्ठत्वं यागेऽयं प्रवर्ततामित्याद्याकारकत्वं चाऽवगम्यते । अत एव वर्णात्मकलिङादेर्नित्यत्वात्तद्वृत्त्यलौकिकधर्मस्याऽपि नित्यत्वम् । न च भ्रमप्रमासाधारण्येन तज्ज्ञानस्यैवाऽनुमितिजनकत्वाल्लोकवदेव तत्सिद्धौ प्रमाणाभावः, वेदेऽर्थज्ञानस्य भ्रमत्वानुपपत्त्या तत्सिद्धेः । तस्य यागविषयककृतिविषयता च न ज्ञानादिसाधारणी अतिरिक्ता वा, अपि तु पाकेऽयं प्रवर्ततामित्यादिलौकिकेच्छाविषयतासाधारणी तदभिन्ना वेच्छासामान्यनिरूपितविषयताभिन्ना, अनुगतप्रतीतेरेव तत्र प्रमाणत्वात् । अतश्च लिङादेर्निर्दोषत्वेनाऽनाप्तभिन्नत्वेऽवधारिते समानसंवित्संवेद्यतयैव प्रतारणाद्यजन्यहिताहितोपदेशजनकनिष्ठनिरुक्ताकारकव्यापारविषयीभूतकृतिविषयत्वरूपहेतुज्ञानं तथैव मानसं जायते । अतश्च तेनेष्टसाधनत्वाद्यनुमितिर्लोकवदेव नाऽनुपपन्ना । वस्तुतस्त्विच्छात्वं जातिरेव लिङादिपदशक्यतावच्छेदिका लाघवात्, वेदस्थले तु लक्षणा, ईश्वरेच्छैव वा तत्राऽप्यर्थ इति बोद्धव्यम् । इत्थं च यत्र प्रमाणान्तरेण यागादाविष्टसाधनता न बुद्ध्यते तत्रेष्टसाधनत्वस्यैव प्रवर्तनाज्ञानादनुमितिः । यत्र तु तत्प्रमाणान्तरेणाऽवगतम्, निषेधेन च तस्याऽनिष्टसाधनत्वमपि, यथा दीक्षितान्नभोजनस्य 'न दीक्षितान्नमश्नीयात्' इति निषेधात्, तत्र 'हुतायां वपायां दीक्षितस्याऽन्नमश्नीयात्' इति पुनर्विधिरनिष्टसाधनत्वाभावस्यैवाऽनुमापको न त्विष्टसाधनत्वस्य, तस्य प्रमाणान्तरसिद्धत्वेन सिषाधयिषाभावेऽनुमित्यनुपपत्तेरित्यादिकं बहुतरमूहनीयम् । **अर्थो यागादिरिति** । अर्थपदेन श्रेयःसाधनस्य

दिनकरी।

चाऽर्थगोचरत्वमर्थाश्रितत्वं वा। तथा च यागादिगोचराऽऽस्माश्रिता प्रवृत्तिरर्थभावना। अत्र च शब्दभावनाया अर्थभावनैव भाव्या, अर्थभावनायाश्च फलं स्वर्गादीति बोध्यम्। तदुक्तम्—

'लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः।
सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥' इति।

अस्यार्थः। लिङोऽभिधा वाच्या। तस्याः किं भाव्यमित्याकाङ्क्षायामुक्तम्—भाव्या च तस्या इति। केन भाव्या इत्याकाङ्क्षायां—सम्बन्धेति। सम्बन्धबोधः—लिङादिपदशक्तिज्ञानम्। तत्राऽऽलस्येन निवर्तमानं पुरुषं स्तुतिरुत्तेजयतीति सा सहकारिणी त्याह—प्ररोचनेतीति वदन्ति।

तन्न। लोके स्वेच्छाधीनप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वेन क्लृप्तत्वादन्यत्रापि प्रवृत्तौ—तदेव हेतुरस्तु, किमतिरिक्त(प्रवर्तनाज्ञानस्यातिरिक्त)हेतुत्वेन। अत एव वेदेऽपि न

रामरुद्री।

विवक्षितत्वात्। 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रे तथाविधार्थकताया मीमांसकसम्मतत्वादिति भावः। यागादिरूपस्याऽर्थस्याऽननुगतत्वात्समवायिकारणत्वरूपश्रेयःसाधनत्वविशेषाभिप्रायेणाऽऽह। **आत्मा वेति। भाव्येति।** उत्पाद्येत्यर्थः। तत्त्वं च प्रयोज्यत्वमेवेति बोध्यम्। **सम्बन्धबोध इति।** स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्यत्वरूपसंसर्गबोधः इत्यप्यर्थः सम्भवतीति ध्येयम्। **करणमिति।** करणं—स्वजन्यफलजनकम्। न त्वसाधारणकारणम्, बाधितत्वात्। इच्छात्मकत्वेन करणादिनिरपेक्षाया अपि शाब्दभावनायाः यत्नत्वेन रूपेणोपस्थितार्थभावनानित्यसाकाङ्क्षयोः करणेतिकर्तव्यतयोरभिधानं च वस्तुस्वरूपप्रदर्शनमात्रायैव, न तु तयोः शाब्दबोधेऽपि प्रवेशः, तथात्वे मानाभावादिति ध्येयम्। **तत्राऽऽलस्येन निवर्तमानमिति। आलस्येन**—बलवदनिष्टजनकत्वज्ञानेन। **निवर्तमानं**—प्रवृत्त्यभाववन्तम्। **उत्तेजयति**—तादृशज्ञाने अप्रमाण्यज्ञानसम्पादनेन प्रतिबन्धकापसरणवन्तं करोतीत्यर्थः। अयं भावः—प्रवृत्तिं प्रति अप्रामाण्यज्ञानानास्कन्दितबलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकतया यावच्चिकीर्षितस्य कर्मणस्तदननुबन्धित्वं न ज्ञायते तावत्पर्यन्तं कष्टं कर्मेति न्यायेन तत्समवधाने सति प्रवृत्त्यनुपपत्तेरर्थवादाः प्राशस्त्यात्मकं स्वार्थं बलवदनिष्टसाधनत्वाभावं प्रतिपाद्य प्रतिबन्धकीभूतज्ञानेऽप्रामाण्यज्ञापनेन तद्विघटयन्तः प्रवृत्त्युत्पत्तौ साहाय्यमाचरन्तीति। क्वचिदभ्यनुज्ञाविध्यादौ विधित एव तदवगम इत्यप्युक्तमेव प्राक्। इदन्त्ववधेयम्। अर्थवादलभ्यप्राशस्त्यस्योक्तरूपत्वे यागादिजन्यश्रमादेरपि कदाचिद्बलवद्द्वेषविषयत्वसम्भवेन तदजनकत्वबोधने विधेरप्रामाण्यप्रसङ्गः, किन्तु योग्यतया तत्र तत्र नरकाद्यजनकत्वमेव तदिति।

**अतिरिक्तहेतुत्वेनेति।** इदमापाततः। वस्तुतस्तु तादृशेच्छाया विधिवाच्यत्वे एव मानाभावः, आचार्यप्रेरितोऽहं गामानयामीत्यादिव्यवहारस्याऽऽचार्यादीनां प्रवृत्तिप्रयोजकीभूतविध्यर्थबुबोधयिषावत्त्वेनैव प्रवर्तकत्वोपपत्तौ विधेः प्रवर्तनावाचित्वे मानाभावात्, बुबोधयिषाया अवगमस्य च प्रकरणादिना सम्भवेन तदुपपत्तये विधिप्रत्ययस्य तद्वाचकत्वकल्पनाया अन्याय्यत्वात्, अन्यथा घटादिबुबोधयिषाया अपि घटादिपदवाच्यत्वापत्तेः।

यत्तु प्रवर्तनाया विध्यर्थत्वानुपगमे यत्र केनचित् स्वत एव पाकादाविष्टसाधनत्वादि बुद्ध्वा प्रवृत्तं तस्य पाकवर्तमानतादशायां चैत्रः पचेदिति प्रयोगापत्तिः, इष्टसाधनत्वादिविशिष्टपाकानुकूलकृतिमत्त्वस्य चैत्रेऽबाधितत्वात्, चैत्रः पचतीतिवद्वर्तमानत्वाबोधेऽपि क्षतिविरहात्। इष्टापत्तौ च तादृशवाक्यप्रयोक्तुरुपहासानुपपत्तिः। मन्मते तु तादृशप्रवृत्तेः प्रेरणाप्रयोज्यत्वाभावाद्विषयबाधेनाऽप्रामाण्योपपत्तिस्तादृशप्रयोगस्येति वैषम्यम्। ननु भवन्मतेऽपि यत्राऽन्यप्रेरणया चैत्रस्य प्रवृत्तिस्तत्र पाकवर्तमानतादशायां चैत्रः पचेदिति प्रयोगस्य प्रामाण्यापत्तिः, पाकानुकूलायाश्चैत्रनिष्ठप्रवृत्तेः प्रेरणाप्रयोज्यत्वस्याऽ-

**इत्थं चविश्वजिता यजेतेत्यादौ यत्र फलं न श्रूयते, तत्रापि स्वर्गः फलं कल्प्यते**
**नन्वहरहः सन्ध्यामुपासीतेत्यादौ इष्टानुपपत्तेः कथं प्रवृत्तिः ? न चाऽऽर्थ-वादिकं ब्रह्मलोकावाप्तिः प्रत्यवायाभावो वा फलमिति वाच्यम् । तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः, कामनाभावेऽकरणापत्तेः, इत्थं च यत्र फल-**

**दिनकरी ।**

प्रवर्तनाज्ञानं हेतुः, शब्दशक्तिभिन्नायामभिधायां मानाभावाच्च । अत एव मण्डनमिश्राः—

'पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥'

इत्यादिना प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वमेव प्रवर्त्तनेत्युक्तवन्तः ।

नन्वेवं विश्वजिता यजेतेत्यादौ फलाश्रवणेनेष्टसाधनताज्ञानाभावात् प्रवृत्तिर्न स्यादत आह--**इत्थं चेति** । इष्टसाधनत्वादेर्विध्यर्थत्वे चेत्यर्थः ।

ननु नित्ये सन्ध्योपासनादौ फलाभावान्नेष्टसाधनत्वज्ञानं प्रवर्त्तकं, न वा तद्विषयो विध्यर्थं इत्यभिप्रायेण शङ्कते । **नन्विति । न चाऽऽर्थवादिकमिति ।**

'सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥'

इत्यर्थवादबोधितमित्यर्थः । **नित्यत्वहान्यापत्तेरिति** । नित्यत्वकाम्यत्वयोर्विरोध

**रामरुद्री ।**

बाधादिति चेन्न, नाऽस्माभिः प्रेरणाया विषयतासम्बन्धेनैव प्रवृत्तावन्वय इत्युच्यते, न वा प्रेरणा-विषयीभूतप्रवृत्तिविषयत्वेन यागादौ, येनोक्तप्रयोगापत्तिः शङ्क्येत, किन्तु स्वज्ञानजन्यानुमितिप्रयोज्यत्व-संसर्गेणाऽऽख्यातार्थप्रवृत्तौ प्रेरणायाः प्रकारत्वम्, तच्च प्रेरणाज्ञानं स्वप्राक्कालीनस्वज्ञानोपधेयमेव स्वरूपेण तद्व्यक्तित्वेन वा संसर्गमध्ये निविशते । प्रथमस्वपदं तत्तत्प्रवृत्तिव्यक्तिपरम्, द्वितीयस्वपदं तत्तल्लिङादिपदव्यक्तिपरम् । तेन तत्तत्प्रवृत्तिप्रागभावकाले यल्लिङादिपदज्ञानम्, तेनोत्पादितं यत्प्रे-रणाज्ञानं, तज्जन्येष्टसाधनत्वानुमितिप्रयोज्यत्वं संसर्ग इति फलितम् । अतश्च प्रवृत्तिवर्तमानतादशायां अनेन संसर्गेण प्रेरणावत्त्वस्य प्रवृत्तौ बाधादस्मन्मते तादृशप्रयोगापत्तेरनवकाशादिति नव्यमीमांसक-मतम्,

तन्न, वाक्यप्रयोगे वाक्यार्थबुबोधयिषाया अपि हेतुत्वेन स्वत इष्टसाधनतादिज्ञानवत्पुरुषविषयक-तादृशबुबोधयिषाया इष्टसाधनत्वादिज्ञानसिद्धत्वग्रहप्रतिरुद्धतया तदभावादेव तादृशप्रयोगवारणसम्भ-वात् । तदसिद्धत्वभ्रान्त्या तत्सिद्धत्वाज्ञानेन वा प्रयुक्तात्तादृशवाक्याच्चेष्टसाधनत्वादिविषयकशाब्दस्य नैयायिकानामिष्टत्वात्, इष्टसाधनत्वादिग्रहासिद्धत्वभ्रान्त्या तत्सिद्धत्वाज्ञानेनैव च दोषेण तादृशवाक्य-प्रयोक्तुरुपहासोपपत्तेरिति भवदीयक्लृप्तिकल्पनाया व्यर्थत्वादिति दिक् । अतिरिक्तप्रवर्तनावादिनां मतं पुनरपि खण्डयति । **अत एवेति** । प्रवर्त्तनाज्ञानस्याऽहेतुत्वादेवेत्यर्थः । **अत एवेति** । प्रवर्तनाया अभिधातिरिक्तत्वादेवेत्यर्थः ।

**इष्टसाधनताज्ञानाभावादिति** । स्वसमभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकत्वस्य विधिपदशक्यतावच्छेदकोपलक्षणतया कामादिपदसमभिव्याहारमन्तरेणेष्टसाधनताज्ञानासम्भवादित्यर्थः । मूले—**स्वर्गः फलमिति** । तथा च स्वर्गकामपदमध्याहर्तव्यमिति भावः ।

मूले—**काम्यत्व इति** । फलकामनाधीनकृतिसाध्यत्व इत्यर्थः । **नित्यत्वहान्यापत्तेरिति** । शौचतत्कालजीवित्वादिविशिष्टसकलद्विजकृतिसाध्यतारूपाया नित्यताया भङ्गप्रसङ्गादित्यर्थः । तथा च तद्बोधिकाया अहरहः श्रुतेरप्रामाण्यप्रसङ्ग इत्यर्थः । अहरहः सन्ध्यामुपासीतेति श्रुत्या हि शौचत-त्कालजीवित्वविशिष्टद्विजमात्रप्रत्येककृतिसाध्यत्वं सन्ध्यावन्दनत्वावच्छेदेनाऽवगतम्, शौचतत्कालजी-वित्वादेरधिकारिविशेषणतायाः पदाध्याहारादर्थाध्याहाराद्वाऽन्यैकवाक्यतया वा लाभात्, वीप्सायाश्च-

**श्रुतिस्तत्राऽर्थवादमात्रमिति चेन्न । ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात् । न च कामनाभावेऽकरणापत्तिः, त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात् ।**

**दिनकरी ।**

इत्यभिमानः । ननु तयोर्विरोधित्वे मानाभावः, 'अहरहः सन्ध्यामुपासीत इत्यादिश्रुति 'सन्ध्यामुपासते—' इत्यर्थवादयोरेकवाक्यतावलेन तत्कालजीविफलकामस्य संवलिताधिकारः कल्प्यत इत्यत आह । **कामनाभाव इति । अकरणापत्तेरिति** । अकरणे प्रत्यवायानुत्पत्त्यापत्तेरित्यर्थः । कामनारूपाधिकाराभावादनधिकृताकरणस्य प्रत्यवायजनकत्वाभावादिति भावः । ननु तथाऽपि नित्यस्थलीयफलश्रुतेर्वैयर्थ्यमित्याशङ्क्याऽर्थवादतया स्तुतिमात्रे तात्पर्यं कल्प्यत इत्याह । **इत्थं चेति । कल्पनादिति** । इदमुपलक्षणम् । अर्थवादोपस्थितकामनाया

**रामरुद्री ।**

वच्छेदावच्छेदेनाऽन्वयतात्पर्यग्राहकत्वात्, इत्थं च संध्यावन्दनादेः फलकामनाधीनकृतिसाध्यत्वरूपकाम्यत्वं न सम्भवति, तादृशफलकामनाशून्यपुरुषीयकृतिसाध्यसन्ध्यावन्दनव्यक्तिषु कामनाधीनकृतिसाध्यत्वस्य बाधादहरहः श्रुत्यर्थवादयोरेकतराप्रामाण्यस्य दुर्वारत्वादिति भावः । न च सन्ध्यावन्दनत्वावच्छेदेन न तादृशकृतिसाध्यत्वान्वयसम्भवः, बाधात्, एकपुरुषीयकृतिसाध्यत्वस्याऽपरपुरुषीयसन्ध्यावन्दनेऽभावात्, भाविसन्ध्याकालजीवित्वविशिष्टभाविद्विजकृतिसाध्यत्वस्याऽतीतसन्ध्यावन्दनादावभावाच्चेति वाच्यम् । तत्सन्ध्याकालजीवित्वविशिष्टकृतिसाध्यत्वस्य तत्सन्ध्याकालीनसन्ध्यावन्दन एव सम्भवेन सन्ध्यावन्दनत्वसामानाधिकरण्येन तादृशकृतिसाध्यत्वावगमेऽपि फलतः सन्ध्यावन्दनमात्रस्य कृतिसाध्यतावगमात्, सर्वेषामेव सन्ध्याकालानां प्रातिस्विकरूपेण जीवित्वविशेषणतया प्रवेशादिति । न च सन्ध्यावन्दनत्वसामानाधिकरण्येनैवान्वयबोधोपगमान्नैष दोष इति वाच्यम् । असति बाधके वेदजन्यशाब्दबोधेऽवच्छेदावच्छेदेनैवाऽन्वयनियमस्योपगन्तव्यत्वात् । अन्यथा स्वकृतयागादिव्यक्तौ फलसाधनत्वसन्देहेन प्रवृत्त्यनुपपत्तेरिति भावः । अनया रीत्याऽहरहः श्रुतेः सन्ध्यावन्दने कामनाभाववत्पुरुषकृतिसाध्यत्वग्राहिदृष्टप्रमाणविरोधेनाऽप्रामाण्यमापादितम्, श्रुतिप्रामाण्यमभ्युपेत्य तादृशदृष्टप्रमाणस्येदानीमप्रामाण्यमापादयति । **कामनाभाव इति । अकरणापत्तेः**—कृतिसाध्यत्वाभावापत्तेरित्यर्थः । तथा च कृतिसाध्यत्वग्राहिदृष्टप्रमाणस्याऽप्रामाण्यापत्तिरिति भावः । टीकायाम्—**विरोधित्वे मानाभाव इति** । तत्र हेतुमाह । **अहरहरिति** । यतो इत्यादिः । तथा च यतः संवलिताधिकारः कल्प्यते, अतस्तयोर्विरोधे मानाभाव इति योजना । **संवलिताधिकार इति । संवलितः**—समुदितः, **अधिकारः**—फलहेतुप्रवृत्तिप्रयोजकः । तेन शुचित्वतत्कालजीवित्वं फलकामना च द्वयमेव नित्यक्रियाजन्यफलहेतुः, यद्विशिष्टेनैव क्रियमाणस्य कर्मणः फलार्जकत्वं तस्यैव प्रवृत्तिप्रयोजकधर्मस्याऽधिकारत्वात् । इत्थं च विध्यर्थवादयोरेकवाक्यताबलेन तत्कालजीविफलकामद्विजमात्रप्रत्येककृतिसाध्यत्वस्यैव प्रत्येकं सन्ध्यावन्दनेषु बोधोपगमान्नैष दोष इति भावः । **अनधिकृताकरणस्येति** । वस्तुतस्तु—

'निद्रया कलहैर्नृत्यैरनाश्वासैश्च साम्प्रतम् । त्यक्तवैदिककर्माणो घोरं नरकमाप्नुयुः—'

इत्यादिस्मृतिबलात् फलकामनातिरिक्तयावदधिकारवत एव नित्यनैमित्तिकाकरणे प्रत्यवायः कल्प्यत इति सन्ध्यावन्दनदशायां फलकामनाविरहेऽपि शौचादिमतस्तदकरणे प्रत्यवायः सम्भवत्येव । अन्यथा सन्ध्यादशायां पतितस्पर्शनिबन्धनादप्यकरणात् प्रत्यवायो न स्यात्, अतः स्वज्ञाननिष्पाद्यभिन्नेनैवाऽधिकारेण विशिष्टस्याऽकरणे प्रत्यवायस्य वाच्यत्वात् । यदि च फलकामना नाऽधिकारः, प्रमाणाभावात्, अन्यथाऽनुषङ्गात् फलसिद्धिः काऽपि न स्यात्, यद्विशिष्टेनैव क्रियमाणस्य फलजनकत्वं तस्यैव शौचब्राह्मणत्वादेरधिकारत्वात्, 'अकामकृतात् कामकृतं पापं पुण्यं च द्विगुणं—'इत्यापस्तम्बवच-

**ननु वेदबोधितकार्य्यताज्ञानात् प्रवृत्तिः सम्भवत्येवेति चेन्न । इष्टसाधनत्वमविज्ञाय तादृशकार्य्यताज्ञानसहस्रेणाऽपि प्रवृत्तेरसम्भवात् ।**

**यदपि पण्डापूर्वं(१) फलमिति, तदपि न । कामनाऽभावेऽकरणापत्तेस्तौल्यात् । कामनाकल्पने त्वार्थवादिकफलमेव रात्रिसत्रन्यायात् कल्प्यते, अन्यथा प्रवृत्त्यनुपपत्तेः ।**

दिनकरी ।

अधिकारत्वेऽपि 'अकुर्वन् विहितं कर्म' इत्यादिना शौचे सति विहिताननुष्ठानस्य प्रत्यवायजनकत्वबोधनात् कामनासंवलितस्य शुचित्वादेर्नाधिकारत्वं, किन्तु नित्यस्थले फलकामनाशुचित्वायोरधिकारयोः संवलनं, तथा च कामनाविरहेऽपि शुचित्वादिरूपाधिकारसत्वात् तदा सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वमेव । कामनाया अधिकारत्वेऽपि तदधिकारवतः शौचादिविरहिणः सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वं न कल्प्यते, शुचितत्कालजीवित्वरूपाधिकारैकदेशवतोऽप्यकरणे प्रत्यवायजकत्वकल्पनेन संवलिताधिकारत्वेऽपि क्षतिविरहाच्चेत्यपि द्रष्टव्यम् । एतेन तत्र नियमेन फलकामनासत्वे मानाभावेऽपि न क्षतिरिति सूचितम् ।

ननु नित्यगोचरप्रवृत्ताविष्टसाधनताज्ञानं कारणमेव नेत्यनेनैवोपपत्तौ किमर्थं नित्यस्यापि काम्यत्वं कल्पनीयमत आह । **नन्विति । इष्टसाधनत्वमिति ।** अन्वयव्यतिरेकाभ्यां प्रवृत्तित्वावच्छिन्नं प्रतीष्टसाधनताज्ञानस्य हेतुत्वादिति भावः । अत एव कुसुमाञ्जलौ सन्ध्योपासनमफलमपि क्रियते वेदबोधितत्वादित्याशङ्क्य गुरुमतमेतन्न गुरोर्मतमित्यभिधायैवोपेक्षितमाचार्यैः ।

यच्च पण्डाप स्वतः प्रयोजनं नित्यस्य कर्मण इति प्राभाकरमतं तदपि दूषयति । **यदपीति ।** कामनाऽभावे-पण्डापूर्वात्मकफलकामनाभावे । **रात्रिसत्रन्यायादिति ।** तथा हि रात्रिसत्रशब्दवाच्यानां ज्योतिर्गौरित्यादिवाक्योत्पन्नकर्मणां फलजिज्ञासायामत्यन्ताश्रुतस्वर्गादिकल्पने गौरवाद्विश्वजिन्न्यायापवादेन "प्रतितिष्ठन्ति ह वा य एता रात्रीरुप-

रामरुद्री ।

नात् कामनाया द्विगुणफलं प्रत्येव प्रयोजकत्वावगतेरित्युच्यते, तदाऽनुपपत्तिगन्धोऽपि नाऽस्तीति युक्तमुत्पश्यामः । न चैवं रीत्यैवोपपत्तौ सर्वत्र कामनासद्भावकल्पनेन नित्यत्वकाम्यत्वयोरविरोधापादकाग्रिममूलावतारानुपपत्तिरिति वाच्यम् । विधिवाक्यार्थवादवाक्ययोरुक्तरीत्यैकवाक्यतया अर्थवादवाक्यस्य ब्रह्मलोकादिसाधनत्वबोधे विधिवाक्यस्य तात्पर्यग्राहकत्वं विनाऽसम्भवेन तत्कल्पने गौरवभियैव तादृशग्रन्थावतारसङ्गतेरिति । **स्तुतिमात्र इति ।** स्तुतिहेतुत्व इत्यर्थः । **तात्पर्यं**—वक्तुरभिप्रेतत्वम् । सुखहेतुपदार्थमात्रोपस्थितिः स्तुतिः । तथा च तादृशशब्दप्रयोगमात्र एव वक्तुरभिप्रेतत्वम्, न तु ततोऽर्थबोधोऽपि विवक्षित इति भावः । न चैवमेतादृशार्थवादस्य शाब्दबोधाजनकत्वेनाऽप्रामाण्यापत्तिरिति वाच्यम् । विधिवाक्याद्बलवदनिष्टाननुबन्धित्वरूपप्राशस्त्यबोधनिर्वाहार्थं तादृशार्थे तात्पर्यग्राहकत्वेन परम्परया शाब्दबोधोपयोगित्वेन परम्परया प्रामाण्यसम्भवादिति ध्येयम् । । **कल्पनाद्वितीति ।** अननुभूयमानाया अपि फलकामनायाः कल्पनादित्यर्थः । टीकायाम्—**शौचे सतीति ।** तेनाऽशुचेः सन्ध्यावन्दनाद्यकरणे न प्रत्यवायानुत्पत्तिप्रसङ्गः । इदमुपलक्षणम् । यत्र प्रत्यवायपरिहारस्याऽनुपस्थितिस्तत्राऽन्ततः स्वविशिष्टताप्रतिपत्त्यर्थं लोकविगाननिवृत्त्यर्थमेव वा नित्यस्थले प्रवृत्तिर्भविता, कल्पकारणं विना कार्यानुत्पादादिति ध्येयम् ।

---

(१) निष्फला पूर्वमित्यर्थः ।

तेनानुत्पत्तिमेवाऽन्ये प्रत्यवायस्य मन्वते । एवं—

'सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥'

एवं—

'दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् ।—'

इत्यादिवचनप्रतिपादितब्रह्मलोकादिकमेव फलमस्तु । न च पितृप्रीतिः कथं फलं ? व्यधिकरणत्वादिति वाच्यम् । गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात्, अत एवोक्तं शास्त्रदर्शितं फलमनुष्ठानकर्तरीत्युत्सर्ग इति । पितॄणां मुक्तत्वे तु स्वस्य स्वर्गादिफलम्, यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गफलकल्पनात् । पण्डापूर्वार्थं प्रवृत्तिश्च न सम्भवति । न हि तत् सुखं, तस्य स्वतः पुरुषार्थत्वाभावेन फलत्वाभावात्, न वा तत्साधनम् । प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेत्, इत्थम्—तथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः, एवं प्रत्यवायाभावस्य सत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि सुवचत्वात् ।

दिनकरी ।

यन्ति'' इत्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितम्, तथाऽत्राप्यार्थवादिकं ब्रह्मलोक एव फलं लाघवादित्यर्थः । अन्यथा—फलाभावे ।

तेन—आर्थवादिकफलकल्पने लाघवेन । तत्र—तत्रार्थवादिकं फलं दर्शयति—**अनुत्पत्तिमित्यादिना** ।

अत एव—पितृप्रीतेः श्राद्धफलत्वादेव । **उत्सर्ग इतीति** । श्राद्धादिफलस्य कर्तृमात्रगतत्वे तु व्यभिचाराभावान्नियम एव स्यादिति भावः । पण्डापूर्वस्वीकारेऽपि तत्साधनताज्ञानस्य प्रवर्त्तकत्वं न सम्भवतीत्याह । **पण्डापूर्वार्थमिति** । तथा चेच्छाविषयत्वाभावेन फलत्वाभावान्न तत्साधनताज्ञानं प्रवर्त्तकमिति भावः । ननु त्वन्मतेऽपि प्रत्यवायानुत्पत्तेः कथं फलत्वं ? स्वतः पुरुषार्थत्वाभावात्, न वा दुःखानुत्पत्तिरूपपुरुषार्थसाधनत्वेन तत्रेच्छाविषयत्वं, दुःखानुत्पत्तेः प्रागभावरूपायास्तदजन्यत्वादित्याशङ्क्य परिहरति—**प्रत्यवायेत्यादिना** । अनुत्पत्तावित्युद्देश्यत्वं सप्तम्यर्थः । **कथं प्रवृत्तिरिति** । पूर्वोक्तरीत्या प्रत्यवायानुत्पत्तेः फलत्वाभावेन तत्साधनताज्ञानस्य प्रवृत्त्यहेतुत्वात् सन्ध्यावन्दनादौ कथं प्रवृत्तिरित्यर्थः । प्रत्यवायाभावः—प्रत्यवायप्रागभावः । तदभावे—सन्ध्यावन्दनादिनित्याभावे । तदभावः—प्रत्यवायाभावस्याभावः । तदभावे—प्रत्यवायाभावस्याभावे । तदभावः—दुःखप्रागभावाभावो दुःखरूपः । **योगक्षेमसाधारणेति** । योगः—अप्राप्तस्य प्राप्तिः । क्षेमः—सिद्धस्य संरक्षणम् । प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य हेतुतायां साधनतायाः क्षेमसाधारण्या एव प्रविष्टत्वादिति भावः ।

प्रागभावस्य प्रतियोगिविकल्पग्रासेन फलत्वासम्भवात् प्रत्यवायात्यन्ताभाव एव नित्यस्य

रामरुद्री ।

**प्रतियोगिविकल्पग्रासेनेति** । यस्य कस्य कदाचिदपि नो पादस्तस्य प्रागभावस्मानाभावाबस्याऽवश्यमुत्पत्तिस्तस्यैव प्रागभावस्य स्वीकरणीयतया सन्ध्योपासने कृतेऽपि तदुत्पत्तेरावश्यकत्वात्तदनुत्पत्त्यर्थं

एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति ।

ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः ? इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न । तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रम्, तदभावश्च नञा बोध्यते । अथ वा बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थस्तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति ।

**दिनकरी ।**

फलं स्वरूपसम्बन्धविशेषात्मकक्षेमसाधारणजन्यतया अत्यन्ताभावे सत्वादिति तु नव्याः ।

एवमेव—योगक्षेमसाधारणमेव ।

**ननु न कलञ्जमिति ।** अत्र कलञ्जभक्षणाभाव इष्टसाधनमित्यन्वयबोधाभ्युपगमे बाधकाभाव इत्यत आह । **विध्यर्थे कथं नञर्थेति ।** विध्यर्थनञर्थयोः कथमन्वयः, विध्यर्थेष्टसाधनत्वाद्यन्वितनञर्थस्याभावस्य कलञ्जभक्षणे कथमन्वय इत्यर्थः । **अशक्यत्वादिति ।** कलञ्जभक्षणे तस्य बाधादिति भावः । **बलवदनिष्टाननुबन्धित्वमात्रमिति ।** विधेः कृतिसाध्यत्वादिषु त्रिषु शक्तिस्वीकारेण क्वचित्कस्यचिद्विध्यर्थस्य बोधस्वीकारादिति भावः । प्रवृत्तिं प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकस्यैव हेतुत्वं लाघवात्, न तु कृतिसाध्यत्वादिप्रत्येकविषयकज्ञानत्वेन, गौरवात्, अतो विधेरपि विशिष्टमेव शक्यं वाच्यम् । एवं च निषेधस्थले विशिष्टाभावो विधिसमभिव्याहृतनञा बोध्यत इत्यभिप्रायवानाह—**अथ वेति । विशेषणाभावे विश्राम्यतीति ।** एवं चेष्टसाधनत्वादिमति कलञ्जभक्षणादौ विशिष्टाभावो बोध्यमानो बलवदनिष्टाननुबन्धित्वाभावे पर्यवस्यतीति भावः ।

**रामरुद्री ।**

सन्ध्योपासनस्य वैयर्थ्यापत्तेरिति भावः । **प्रत्यवायात्यन्ताभाव एवेति ।** प्रागभाववत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकप्रत्यवायात्यन्ताभाव इत्यर्थः । तेन सन्ध्यावन्दनकर्तुस्तत्र प्रत्यवायाभावस्य प्रागभावरूपकारणविरहादेवोपपत्तावपि न क्षतिः । प्रायश्चित्तादेरप्येतादृश्येव रीतिश्चिन्तनीया ।

मूले—**तत्र बाधादिति ।** इष्टसाधनत्वकृतिसाध्यत्वाभावयोरित्यादिः । **न विध्यर्थ इति ।** न विधिप्रत्ययजन्यबोधविषय इत्यर्थः । इदमुपलक्षणम् । श्येनेनाऽभिचरन् यजेतेत्यत्र कृतिसाध्यत्वे सतीष्टसाधनत्वमात्रमेव विधिवाक्यजन्यशाब्दबोधे भासते, न तु बलदनिष्टाननुबन्धित्वमपि, तत्र तस्य बाधादिति । अथैवमग्नीषोमीयं पशुमालभेतेत्यादावपि बलवदनिष्टाननुबन्धित्वपरित्यागेनेष्टसाधनत्वकृतिसाध्यत्वयोरेवाऽन्वयबोधस्वीकारसम्भवेन मा हिंस्यादिति निषेधस्य वैधहिंसेतरहिंसापरत्वकल्पनं मीमांसकानामसङ्गतम् । न चासति बाधक औत्सर्गिकार्थपरित्यागस्याऽन्याय्यतया मा हिंस्यादिति निषेधस्य वैधेतरहिंसापरत्वेनैवोपपत्तावग्नीषोमीयमित्यादेर्बलवदनिष्टाननुबन्धित्वबोधकत्वमक्षुण्णमेवेति वाच्यम् । अग्नीषोमीयमित्यादिवाक्यस्यौत्सर्गिकार्थापरित्यागोपपत्तये हिंसानिषेधकवाक्यस्य वैधेतरहिंसापरत्वकल्पनेऽप्यौत्सर्गिकार्थपरित्यागस्याऽऽवश्यकतयैकस्यैवौत्सर्गिकार्थपरित्यागकल्पने विनिगमकाभावस्य दुर्वारत्वादिति चेन्न, वैधहिंसाया निषेधविषयत्वेऽनन्तवैधहिंसाधीनानन्तपापव्यक्तिकल्पनागौरवस्यैव बाधकत्वात्, तादृशगौरवस्य च मा हिंस्यादिति निषेधस्य वैधेतरहिंसापरत्वे लाघवमिति लाघवज्ञानसम्पादकतया वैधेतरहिंसाविषयकबोधस्यैव स्वीकर्तव्यत्वात् । यद्वौत्सर्गिकार्थपरित्यागे उभयोर्विनिगमनाविरहेऽपि न क्षतिः, विनिगमनाविरहेणैकशेषस्य कर्तुमशक्यतयोभयविषबोधस्याऽप्यङ्गीकर्तव्यतया मा हिंस्यादिति

**ननु श्येनेनाऽभिचरन् यजेतेत्यत्र कथं बलवदनिष्टाननुबन्धित्वं विध्यर्थः ? श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्। न च वैधत्वान्न निषेध इति वाच्यम्। अभिचारे प्रायश्चित्तोपदेशात्।**

दिनकरी।

विशिष्टस्य विध्यर्थत्वे श्येने बलवदनिष्टाननुबन्धित्वरूपविशेषणबाधात्कथं विशिष्टस्य विध्यर्थस्य बोध इत्याशङ्कते। **ननु श्येनेनेति।** श्येनेति कर्मनामधेयम्। अभिचरन्–वैरिमरणं कामयन्। **कथमिति।** श्येने तस्य बाधितत्वादिति भावः। अर्थः–विधिजन्यबोधविषयः। **वैधत्वान्न निषेध इतीति।** यज्ञीयपश्वालम्भनानुरोधेन मा हिंस्यादिति निषेधस्य वैधहिंसेतरहिंसापरत्वादिति भावः। **अभिचार इति।** तथा 'चाभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति' इति तत्र प्रायश्चित्तोपदेशवैयर्थ्यापत्त्या निषेधविधेस्तदतिरिक्तपरत्वं न सम्भवतीति भावः।

रामरुद्री।

निषेधस्य वैधहिंसाऽविषयकत्वसिद्धयैवाऽस्मदभीष्टसिध्याऽग्नीषोमीयवाक्येन बलवदनिष्टाननुबन्धित्वाबोधेऽपि क्षतिविरहादिति विभावनीयम्।

टीकायाम्– **विशिष्टस्य विध्यर्थस्य इति।** त्रयाणां तथात्वे पूर्वोक्तयुक्त्या बलवदनिष्टाननुबन्धित्वपरिहारेणाऽपि शेषभूतार्थद्वयभानसम्भवादिति भावः। **प्रायश्चित्तोपदेशवैयर्थ्यापत्त्येति।** शाप्यत्वं निषेधविध्यन्वयितृतीयार्थः। तादृशोपदेशे **अभिचारं** अभिचारजन्यं पापं त्रिभिः कृच्छ्रैर्व्यपोहतीत्यर्थस्यैव वाच्यत्वेन पापस्याऽभिचाराजन्यत्वे तादृशार्थानुपपत्त्या तदुपपत्तयेऽभिचारनिषेधबोधकत्वस्याऽपि कल्पनीयत्वादिति भावः। एतच्च अभिचारं न कुर्यादित्यादिरूपनिषेधविध्यन्तरकल्पने न हेतुतयोपात्तम्, अभिचारे प्रायश्चित्तोपदेशस्याऽर्थवत्त्वाय मा हिंस्यादिति निषेधविधेरेव तत्र प्रवृत्तिकल्पनसम्भवेन तमुपेक्ष्य निषेधान्तरकल्पनस्य मूलकृतामसङ्गतत्वापत्तेः। न च मा हिंस्यादिति निषेधाविषयत्वेऽपीत्यध्याहर्तव्यादिभागस्याभिचार इत्यादिमूलस्य तादृशनिषेधान्तरबोधन एव तात्पर्यमङ्गीकर्तव्यमिति वाच्यम्। तादृशाध्याहारे मानाभावात्। अथवा अभिचारे प्रायश्चित्तोपदेशादित्यस्य मा हिंस्यादितिनिषेधभिन्ननिषेधप्रवृत्तिसाधकत्वमेवाऽभिमतम्। अत एव प्रायश्चित्तोपदेशसामान्यस्यार्थवत्त्वाय कल्पनीयत्वरूपस्य हेतोर्निषेधविधौ मा हिंस्यादितिनिषेधभिन्नत्वसाधकत्वं न सम्भवति, मा हिंस्यादिति निषेधस्याऽपि तथाकल्पनसम्भवेन हेतोर्व्यभिचारसन्देहादित्यतः **प्रायश्चित्तोपदेशादित्यस्य** अभिचारमहीनं चेत्यादिवचनबोधितकृच्छ्रत्रयात्मकप्रायश्चित्तविशेषपरत्वेन व्याख्यानमपि सङ्गच्छते। न हि तादृशप्रायश्चित्तविशेषस्यार्थवत्त्वाय मा हिंस्यादितिनिषेधप्रवृत्तिः कल्पयितुं शक्यते, अभिचारातिरिक्तलौकिकहिंसाया अपि तद्विषयत्वेन तत्राऽपि कृच्छ्रत्रयाचरणरूपप्रायश्चित्तोपदेशप्रसङ्गात्। मा हिंस्यादितिनिषेधाप्रत्यस्यैव प्रत्यवायस्याऽभिचारजन्यस्य कृच्छ्रत्रयाचरणापनोद्यत्वमुक्तप्रायश्चित्तविधिना बोध्यते, प्रत्यवायान्तरस्य च तादृशस्य प्रायश्चित्तान्तरोपदेशसङ्गतिरित्युच्यते चेत्तदपि न, श्येनोत्पत्तिवाक्यस्य विशेषशास्त्रतया सामान्यशास्त्रस्य मा हिंस्यादित्यादेस्तदतिरिक्तहिंसापरत्वेनैव प्राप्ततया श्येनजन्यप्रत्यवायस्य ततः प्राप्तेरेवाऽसम्भवात्, पापवैचित्र्यमन्तरेण प्रायश्चित्तवैचित्र्यासम्भवात्तादृशजातिद्वयावच्छिन्नपापजनकत्वस्यैकवाक्यार्थत्वासम्भवाच्चेति। टीकाग्रन्थस्त्वित्थं व्याख्येयः—ननु किं निषेधविध्यन्तरकल्पनेन? मा हिंस्यादिति निषेधस्यैव तत्र प्रवृत्तिः कल्प्यतामित्याशङ्क्याऽऽह **तदतिरिक्तपरत्वं न सम्भवतीति।** पूर्वोक्तयुक्त्याऽभिचारातिरिक्तलौकिकहिंसापरमा हिंस्यादित्यादिनिषेधवाक्यरूपत्वं न सम्भवतीत्यर्थः। अनेन प्रघट्टकेन मा हिंस्यादिति निषेधस्य वैधहिंसामात्राविषयत्वमुक्तम्, तदनभ्युपगमे

न च मरणानुकूलव्यापारमात्रं यदि हिंसा, तदा खड्गकारस्य कूपकर्त्तुश्च हिंसकत्वापत्तिः, गललग्नान्नभक्षणजन्यमरणे स्वात्मवधित्वापत्तिश्चेति वाच्यम्। मरणोद्देश्यकत्वस्याऽपि विशेषणत्वात्, अन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न, तत्र बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभावात् । वस्तुतः श्येनवारणायाऽदृष्टाद्वारकत्वेन विशेषणीयम् ।

**दिनकरी ।**

नचैवं यज्ञीयपशुहिंसाया अपि प्रत्यवायजनकत्वापत्तिरिति वाच्यम्, अनुपदिष्टप्रायश्चित्तहिंसेतरहिंसापरत्वान्मा हिंस्यादिति निषेधविधेरिति ।

साक्षान्मरणानुकूलव्यापार एव हिंसा न श्येनस्तथेति मा हिंस्यादिति निषेधाविषयत्वादस्त्वेव बलवदनिष्टाननुबन्धित्वमित्यभिप्रायेण साक्षात्परम्परासाधारणमरणानुकूलव्यापारमात्रस्य हिंसात्वे दोषमाह । **मरणानुकूलव्यापारमात्रं यदि हिंसा तदेति ।** साक्षात् परम्परासाधारणः सर्वोऽपि व्यापारो यदि हिंसा तदेत्यर्थः । ननु मरणोद्देश्यकत्वनिवेशेऽन्योद्देशेन प्रक्षिप्तनाराचेन यत्र ब्राह्मणमृतिस्तत्र प्रायश्चित्तं न स्यात्, तस्य हिंसात्वाभावेन मा हिंस्यादिति निषेधाविषयत्वादत आह । **अन्योद्देश्यकेति । वाचनिकमिति ।** न तु मा हिंस्यादिति निषेधविषयतयेति भावः । **अदृष्टाद्वारकत्वेनेति ।** श्येनस्यादृष्टद्वारैव

**रामरुद्री ।**

भक्त्या दोषमाह । **न चैवमिति ।** न चेत्यस्य **वाच्यमिति** परेणाऽन्वयः । **एवं**—एवं रीत्या वैधाविषयत्वस्य माहिंस्यादिति निषेधेऽभ्युपगमे सति, **इतिवाच्यम्**—इति दोषः, यज्ञीयपशुहिंसाया अपि प्रत्यवायजनकत्वापत्तिरूपो दोषो नेति पर्यवसितार्थः । अन्यथा तु वैधविषयत्वाङ्गीकारे यज्ञीयपशुहिंसाया अपि सदोषत्वापत्तिरिति भावः । एवमित्यनेनोक्तमेवाऽर्थं स्फोरयति । **अनुपदिष्टेति ।** वैधहिंसेतरहिंसापरत्वादित्यर्थः । तेन श्येने प्रायश्चित्तोपदेशेऽपि न क्षतिः । एतावता प्रबन्धेनाऽभिचारं न कुर्यादित्यादिप्रायश्चित्तोपदेशोन्नेयेन विधिनाऽवगतबलवदनिष्टसाधनत्वस्य श्येनस्य तदननुबन्धित्वघटितविधिवाक्यार्थाऽन्वयायोग्यत्वमुपपादितम् । नहि यज्ञीयपशुहिंसायां माहिंस्यादिति निषेधस्य तदतिरिक्तहिंसाविषयत्वकल्पनेनेवाऽत्राऽपि विध्यनुशिष्टाभिचारातिरिक्ताभिचारपरतयाऽभिचारनिषेधवचनस्य श्येनादौ विध्यर्थान्वयः कल्पयितुं शक्यते, सर्वस्यैवाऽभिचारस्य विधिविषयत्वेन तदन्यस्य तस्याऽलीकतया तद्विषयस्य निषेधस्य प्रामाण्यानुपपत्तेरिति कथञ्चिदपि विरोधपरिहारासम्भव इति ग्रन्थभावार्थः पर्यवसितः ।

अभिचारे प्रायश्चित्तोपदेशार्थवत्त्वाय माहिंस्यादिति निषेधस्य तत्र प्रवृत्तिस्वीकारो न युक्तः, हिंसापदस्य श्येनाबोधकत्वात्, साक्षान्मरणजनकव्यापारस्यैव तथात्वात्, इत्थं चाऽभिचारमहीनं चेत्यादिकमरिमरणकामनायामेव प्रायश्चित्तोपदेशपरतया कथञ्चिन्नेयम्, कामनाया अप्यभिचारपदार्थत्वादित्याशयेन शङ्कते । **न चेति ।** अथवा केषां चित्समाधानान्तरं निराकर्तुं तन्मतमाह । **साक्षादिति ।** तथा च माहिंस्यादितिनिषेधप्रवृत्तिस्तत्र न सम्भवतीति भावः । **मरणोद्देश्यकत्वस्येति ।** यद्यपि प्रायश्चित्तोपदेशस्याऽर्थवत्त्वाय कल्पनीयनिषेधान्तरेण श्येनस्य पापजनकत्वप्राप्तेरबाधितत्वेति हिंसालक्षणपरिष्करणमनावश्यकं, तथाऽपि समाधानान्तरस्यैव कथनान्न दोषः । तादृशसमाधानस्याऽपि अत्र समुच्चयात् । 'अभिचारे प्रायश्चित्तोपदेशात्' इति मूलस्य मध्यमणिन्यायेनोभयान्वयित्वादिति ध्येयम् । **विध्यर्थत्वाभावादिति ।** तथा च तत्र लक्षणया कृतिसाध्यत्वविशिष्टेष्टसाधनत्वबोध इत्यर्थः, विधौ न परः शब्दार्थ इति नियमस्य च विधिप्रत्ययातिरिक्तशब्दपरत्वादिति भावः । अत एव वाऽस्वरसात् कल्पान्तरमाह । **वस्तुत इति । श्येनवारणायेति ।** श्येनस्य बलवदनिष्टाननुबन्धित्ववारणायेत्यर्थः । **विशेषणीयमिति ।**

अत एव काशीमरणाद्यर्थं कृतशिवपूजादेरपि न हिंसात्वम्। न च साक्षान्मरणजनकस्यैव हिंसात्वं, श्येनस्तु न तथा, किं तु तज्जन्यापूर्वमिति वाच्यम्। खड्गघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः।

केचित्तु श्येनस्य हिंसा फलं, न तु मरणम्, तेन श्येनजन्यखड्गाघातादिरूपा हिंसाऽभिचारपदार्थः, तस्य च पापजनकत्वमतः श्येनस्य वैधत्वात् पापाजनकत्वेऽप्यग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्त्तन्ते इत्याहुः।

दिनकरी।

वैरिमरणसाधनत्वादिति भावः। नन्वस्तु श्येनस्य हिंसात्वं किमदृष्टाद्वारकत्वविशेषणेनेत्यत आह। **अत एवेति**। अदृष्टाद्वारकत्वविशेषणादेवेत्यर्थः। **न हिंसात्वमिति**। तथा च तादृशशिवपूजनादेर्हिंसात्ववारणायावश्यकेनादृष्टाद्वारकत्वविशेषणेन श्येनस्यापि हिंसात्ववारणमिति भावः। ननु साक्षान्मरणजनकत्वविशेषणादेव तादृशशिवपूजनश्येनादेर्वारणे किमदृष्टाद्वारकत्वेन गुरुविशेषणेनेति तटस्थः शङ्कते। **न च साक्षादिति**।

अदृष्टाद्वारकत्वविशेषणं विनैव श्येने बलवदनिष्टाननुबन्धित्वमुपपादयतां मतमाह। **केचित्त्विति**। **हिंसा फलमिति**। साक्षान्मरणफलको व्यापारः फलमित्यर्थः। तस्य–खड्गाभिघातादेः। **पापजनकत्वमिति**। अभिचारमहीनं चेत्यादिनाऽभिचारस्य पापजनकत्वबोधनात् साक्षान्मरणजनकव्यापारस्यैवाभिचारपदार्थत्वादिति भावः। न च पूर्वं न चेत्यादिनाभिचारस्य पापजनकत्वबोधनात् साक्षान्मरणजनकव्यापारस्यैव हिंसात्वमित्याशङ्कितत्वात् तेन पौनरुक्त्यमिति वाच्यम्, पूर्वं साक्षान्मरणजनकस्य श्येनजन्यापूर्वस्य हिंसात्वमाशङ्कितमिह च तथाभूतस्य खड्गाभिघातादेरिति भेदात्। नचादिपदेन श्येनजन्यापूर्वस्य तथाभूतस्य ग्रहणात् कथं भेद इति वाच्यम्। श्येनजन्यापूर्वस्यैतन्मते खड्गाभिघातं प्रत्येव व्यापारतया तस्य मरणजनकत्वाभावात्। न च साक्षान्मरणजनकव्यापारस्य हिंसात्वे खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानुपपत्तिस्तदवस्थैवेति वाच्यम्। तत्र खड्गघातात्युत्तरमेव सन्निपातादिदोषस्योत्पत्त्या मरणं प्रति तस्य व्यापारतया व्यवधानासम्भवात्। कुतस्तर्ह्यास्तिकानां श्येने न प्रवृत्तिरत आह। **अग्रिमेति**। तथा च पातकप्रयोजकत्वान्न तत्रास्तिकानां प्रवृत्तिरिति भावः।

रामरुद्री।

बलवदनिष्टानुबन्धित्वरूपं पापजनकत्वमिति शेषः। तद्घटितमेव च बलवदनिष्टाननुबन्धित्वमिति न श्येनादौ विध्यर्थान्वयानुपपत्तिरिति भावः। न चैवं श्येनादेरदृष्टाद्वारकबलवदनिष्टानुबन्धिभिन्नत्वात्तस्य नाऽभिचरेतेत्यादि निषेधविषयत्वानुपपत्तिरिति वाच्यम्। अग्रे समाधास्यमानत्वात्। व्रणपाकपरम्परया ब्राह्मणमरणजनके खड्गाघातादौ निषेधप्रवृत्त्युपपत्तय एव चाऽदृष्टाद्वारकबलवदनिष्टसाधनत्वाभावस्य विध्यर्थत्वावश्यकत्वादिति। टीकायाम्—**वैरिमरणसाधनत्वादिति**। नाऽदृष्टमद्वारीकृत्य वैरिमरणजन्यानिष्टप्रयोजकत्वमिति शेषः। न चैवमभिचारप्रायश्चित्तोपदेशेन श्येनस्य साक्षादनिष्टजनकत्वस्याऽऽवश्यकत्वाद्विध्यर्थबाधस्तदवस्थ एवेति वाच्यम्। अभिचारमहीनं चेत्यादौ अभिचारपदस्य शत्रुमरणकामनाजन्यपापवाचित्वेन कामनायाः पापजनकत्वेऽपि श्येनस्याऽतथात्वादिति निगर्वः। मूले—**अत एवेति**। **न हिंसात्वमिति**। न बलवदनिष्टानुबन्धित्वमित्यर्थः। अन्यथा तु मरणस्य दुःखत्वेन तदनुबन्धित्वस्य तादृशशिवपूजनादौ सत्त्वात्तत्र विध्यर्थान्वयो बाध्येतेति भावः।

**दिनकरी**

अत्र नव्याः। मास्तु श्येनस्य मा हिंस्यादिति निषेधविषयत्वम्, तथाप्यभिचारतया पापजनकत्वं सर्वसंमतम्। अभिचारस्योपपातकमध्ये मनुना परिगणितत्वादिति कथं तस्य बलवदनिष्टाननुबन्धित्वम्? यच्चोक्तं-श्येनजन्यखड्गाभिघातादेरेवाभिचारतया पापजनकत्वं न श्येनस्येति, तदपि न। अभिचारमहीनं चेत्यत्राभिचारपदेन तज्जनकश्येनादेर्ग्रहणात्, अन्यथा प्रत्यभिचारेण यत्र न खड्गघाताद्युत्पत्तिस्तत्र प्रायश्चित्तं न स्यात्। एवमपि श्येने पापप्रयोजकताया बलवदनिष्टप्रयोजकत्वोपपादनस्याशक्यत्वाच्च। प्रवृत्तिं प्रति बलवदनिष्टाप्रयोजकत्वज्ञानस्यैव जनकतया तद्विषयस्यैव विध्यर्थत्वात्। तथा च श्येनस्य बलवदनिष्टाननुबन्धित्वमुपपाद्य विधेर्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वे शक्तिरयुक्ता, किंतु त्रिषु शक्तित्रयं स्वीकृत्य क्वचित् कस्यचित्क्वचित् कस्यचिदर्थस्य बोध इत्यङ्गीकरणीयम्। श्येनेनेत्यादौ तु बलवदनिष्टाननुबन्धित्वस्य बोधो न भवत्येव। परं त्विष्टसाधनत्वकृतिसाध्यत्वयोरेवेति। किंच विशेषणविशेष्यभावे विनिगमनाविरहेणापि विशिष्टे शक्तिर्न युक्ता। न च प्रत्येकं शक्तिं स्वीकृत्य क्वचित् कस्यचिदर्थस्य बोधोपगमे नियामकाभाव इति वाच्यम्। तात्पर्यस्यैव नियामकत्वात्। प्रत्येकशक्तिपक्षेऽगम्यां गच्छेदित्यादिवाक्यानामिष्टसाधनत्वादिप्रमाजनकतया प्रामाण्यापत्तिरित्यपि न, इष्टापत्तेः। तत्राप्रामाण्यव्यवहारस्तु कदाचिद्बलवदनिष्टाननुबन्धित्वभ्रमजनकत्वनिबन्धनः। न च बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वे सति कृतिसाध्यः पाक इत्येव बोधो न तु कृतिसाध्यत्वे सतीत्यादिरूप इति विशिष्टशक्तिपक्षेपि न विनिगमनाविरह इति वाच्यम्। तथैव बोधो नान्यथेत्यस्य शपथनिर्णेयत्वात्। तस्माद्बलवदनिष्टाननुबन्धित्वादिषु प्रत्येकं शक्तिरिति प्रथमकल्प एव युक्तः। तत्रापि बलवदनिष्टाननुबन्धित्वं नार्थः। यागादिजन्यनान्तरीयकदुःखस्यापि यदा कदाचित् यस्य कस्यचिद्बलवद्द्वेषविषयतया यजेतेत्यादीनामप्रामाण्यापत्तेः, न कलञ्जमित्यादिनिषेधविधिवदश्वमेधेन न यजेतेत्यादीनामपि प्रामाण्यापत्तेश्च। अश्वमेधादौ यदा यः पुरुषः प्रवर्त्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषविषयाजनकत्वमर्थ इति तु न सत्, कालभेदेन पुरुषभेदेन च विधिशक्तिकल्पने गौरवात्, कालविशेषपुरुषविशेषाणां विशिष्य ज्ञातुमशक्यतया कालविशेषपुरुषविशेषान्तर्भावेन शक्तेर्दुर्ग्रहत्वाच्च, नाश्वमेधेन यजेतेत्यादिनिषेधविधिवत्र कलञ्जं भक्षयेदित्यादिनिषेधविधीनामप्रामाण्यापत्तेश्च, तत्र यदा यः पुरुषः प्रवर्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषविषयाजनकत्वस्य तत्रापि सत्वात्, किन्तु वैदिकविधेः पापाजनकत्वमर्थः, तदभाव एव न कलञ्जं भक्षयेदित्यादौ नञा बोध्यते। शाकं न भुञ्जीतेत्यादिवाक्यस्य प्रामाण्यनिर्वाहाय रोगाजनकत्वमप्यर्थः। एवं पुष्ये नोद्वहेत्, नैकः पर्वतमारोहेदित्यादावपि तत्तदनिष्टा-

**रामरुद्री।**

अभिचारवदस्य शत्रुमरणकामना नाऽर्थः, किन्तु यागादिरेव, तथा च श्येने पापाजनकत्वस्याऽन्वयो न सम्भवत्येवेति सिद्धान्तभूतं नव्यमतमुपन्यस्यन्नेव मूलोक्तप्रथमकल्पं दूषयति टीकायाम्—**अत्र नव्या इति। अशक्यत्वाच्चेति।** ननु अदृष्टाद्वारकबलवदनिष्टप्रयोजकत्वाभाव एवोक्तरीत्या विध्यर्थ इत्याशय इत्यत आह। **प्रवृत्तिं प्रतीति।** तथा च बलवदनिष्टप्रयोजकत्वसामान्याभाव एव तदर्थ इत्यर्थः। अदृष्टाद्वारकबलवदनिष्टप्रयोजकत्वाभाव एव विध्यर्थः, प्रवृत्तिं प्रति यादृशबलवदनिष्टाननुबन्धित्वाभावज्ञानं कारणं तादृशस्यैव तस्य विध्यर्थत्वमित्यत्र नियामकाभावात्, यादृशं प्रमाणान्तरेणाऽप्राप्तं तादृशस्यैव वेदे विध्यर्थत्वादित्यतो दूषणान्तरमाह। **किञ्चेति।**

आचार्य्यास्तु आप्ताभिप्रायो विध्यर्थः। पाकं कुर्य्या इत्यादावाज्ञादिरूपेच्छावाचित्ववल्लिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः। ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्त्तते। कलञ्जभक्षणादौ तदभावान्न प्रवर्त्तते। यन्तु वेदे पौरुषेयत्वं नाऽभ्युपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम्। न च कर्त्रस्मरणं बाधकम्। कपिलकणादादिकमारभ्याऽद्यपर्य्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात्। अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः। तत्रैव कर्तृस्मरणमस्तीति चेत्, वेदेऽपि "छन्दांसि जज्ञिरे तस्मात्-"इत्यादिकर्तृस्मरणमस्त्येव। एवं—

'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते-' इत्यपि द्रष्टव्यम्।

'स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारकाः॥'

### दिनकरी।

जनकत्वमर्थो बोध्यः। न च शक्त्यानन्त्यम्, नरकत्वरोगत्वादीन् द्वेषविषयतावच्छेदकत्वेनोपलक्षणीभूतेनानुगमय्य तत्तदवच्छिन्नप्रतियोगिताकाभावकूटे एकशक्त्यभ्युपगमात्, रोगाद्यजनकत्वादौ लौकिकलिङ्गो लक्षणाभ्युपगमाद्वेति वदन्ति।

विध्यर्थश्चाप्ताभिप्रायः, स च स्वेष्टसाधनतानुमापकः, इष्टसाधनताज्ञानं च प्रवर्त्तकमित्युदयनाचार्यमतमाह। **आचार्यास्त्विति।** इत्यादावित्यादिना पाकं कुर्यामित्युत्तमपुरुषपरिग्रहः। आज्ञादीत्यादिनाऽध्येषणादिपरिग्रहः। तथा च पाकं कुर्याः पाकं कुर्यामिति मध्यमोत्तमपुरुषयोराज्ञाद्येषणरूपेच्छावाचित्वं क्लृप्तं तद्दृष्टान्तेन प्रथमपुरुषेऽपीच्छावाचित्वमनुमेयमिति भावः। **लाघवादिति।** बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षयेच्छात्वेन विधिशक्तौ लाघवादित्यर्थः। इत्यर्थः-इति बोधः। **अनुमायेति।** अत्र च यागो मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनं, मत्कृतिसाध्यतयाऽऽप्तेनेष्यमाणत्वात् मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजनवदित्यनुमानमवधेयम्। तदभावात्-आप्तेष्टत्वाभावेन तद्धेतुकेष्टसाधनत्वज्ञानाभावात्। ननु वेदे वक्तुरभावात् कस्येच्छा लिङा बोधनीयेत्यत आह। **यस्त्विति। विधिरेवेति।** वक्तृभिन्नेच्छाया बोधने विधेः सामर्थ्याभावाद्विधिरेव वेदवक्तुरीश्वरे मानमिति भावः। **न च कर्त्रस्मरणमिति।** कर्त्तुः-वेदकर्त्तुः। अस्मरणं-स्मृतिभिरबोधनम्। तथा च वेदोऽपौरुषेयः, अस्मर्यमाणकर्तृकत्वादित्यनुमानं बाधकमित्यर्थः। **कपिलकणादेति।** कपिलकणादगौतमादिभिस्तच्छिष्यैश्चाद्यपर्यन्तमित्यर्थः। कर्तृस्मरणस्य-सकर्तृकत्वबोधकस्मृतेरित्यर्थः। नन्वीश्वरस्य वेदवक्तुः सर्गादौ केनचित्साक्षाददृष्टत्वादननुभवेऽस्मरणं तदभावे ऋषीणां स्मृतिप्रणयनं च न सम्भवतीति चेन्न। पौरुषेयत्वानुमानेन वेदवक्तारमनुभूय तन्मूलकश्रुतिस्मृतिप्रणयनयोः सम्भवात्। अन्यथा-वेदे सकर्तृकत्वानङ्गीकारे। तत्रैव-स्मृतिष्वेव। वेदस्य सकर्तृकत्वे श्रुतिं प्रदर्श्य स्मृतिमपि प्रदर्शयति। **एवमिति।** ननु वेदस्य नित्यत्वबोधकं भारताद्येव तस्याकर्तृकत्वे प्रमाणं भविष्यतीत्याशङ्कते-**स्वयम्भूरिति।**

इति तु वेदस्य स्तुतिमात्रम् । न च पौरुषेयत्वे भ्रमादिसम्भवादप्रामाण्यं स्यादिति वाच्यम् । नित्यसर्वज्ञत्वेन निर्दोषत्वात् । अत एव पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेः कर्तृत्वं वेदस्य । किञ्च वर्णानामनित्यत्वस्य वक्ष्यमाणत्वात् सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति ॥ १५० ॥

दिनकरी ।

नित्य इत्यर्थः । एव भगवानित्यपि वेदविशेषणम् । **स्तुतिमात्रमिति** । तथा च पूर्वोक्तश्रुतिस्मृत्योर्विरोधेनास्य भारतस्य न स्वार्थे तात्पर्यमपि तु स्तुतिपरत्वमिति भावः । **भ्रमादिसम्भवात्**-पुरुषस्य भ्रमप्रमादादिदोषसम्भवादित्यर्थः । **नित्यसर्वज्ञत्वेनेति** । नित्यसर्वविषयकज्ञानवत्वेनेत्यर्थः । **निर्दोषत्वात्**-भ्रमादिशून्यत्वात् । **अत एव**-नित्यसर्वज्ञत्वाभावादेव । ननु नित्यसर्वज्ञपुरुषप्रणीतत्वापेक्षया नित्यनिर्दोषत्वं वेदे स्वीकृत्य तदेव वेदप्रामाण्ये प्रयोजकमस्तु । तथा च सकर्तृत्वानुमाने बाध इत्यतो वेदस्य नित्यत्वे बाधकमाह । किंचेति । **तत्सन्दर्भस्येति** । तन्निष्ठानुपूर्वीविशेषस्येत्यर्थः । आनुपूर्व्या नित्यत्वे त्वनित्यसमवेतनित्यस्य जातित्वेनानुपूर्व्या जातित्वापत्तेरिति भावः । अत्र चाप्तेच्छाविषयत्वस्येश्वरेच्छाविषयत्वरूपस्य केवलान्वयिनः कलञ्जभक्षणेऽपि सत्वाद्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसाध्यस्य च तत्राभावेन व्यभिचारात् कथं तस्य तदनुमापकत्वम् ? बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्व कारकेच्छाय लिङ्गर्थत्वे च लाघवाद्बलवदनिष्टाननुबन्धीष्टसाधनत्वमेव लिङर्थोऽस्तु, कृतमाप्तेच्छयेत्यस्वरस आचार्यस्त्वित्यनेन सूचितः ।

नन्विष्टसाधनत्वस्य न विधितो बोधः सम्भवति, स्वर्गत्वावच्छिन्नसाधनत्वस्य यागे बाधात्, गङ्गास्नानादिजन्यऽस्वर्गे व्यभिचारात्, स्वर्गनिष्ठवैजात्यावच्छिन्नसाधनत्वस्य यागे सत्वेऽपि तद्वैजात्यस्य विधिबोधितस्वर्गसाधनत्वान्यथानुपपत्त्या कल्पनीयस्य प्रागनुपस्थित्या तद्घटितकारणत्वे विधिशक्तिग्रहायोगादिति चेन्न । स्वरूपसम्बन्धविशेषरूपाया एव कारणतायाः विध्यर्थत्वोपगमादित्येके । अन्यथासिद्धिनिरूपकतानवच्छेदकधर्मवत्स्वर्गकत्वमेव स्वर्गकारणत्वमित्यन्ये । वस्तुतस्तु स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकधर्मवत्वमेव स्वर्गकारणत्वं, तच्च यागे न बाधितं, स्वर्गनिष्ठवैजात्यरूपस्वर्गत्वधर्मावच्छिन्नं प्रति यागस्य व्यभिचाराभावात् । ननु विधेरिष्टसाधनत्वे शक्तत्वेऽपि स्वर्गसाधनत्वस्य कथं ततो बोधः ? स्वर्गसाधनत्वादौ विधिशक्तिकल्पने तु शक्त्यानन्त्यम् । न च विधिप्रत्ययोपस्थिते इष्टे स्वर्गपदोपस्थितस्वर्गस्याभेदेनान्वयात् स्वर्गाभिन्नेष्टसाधनत्वस्य बोधः सम्भवतीति वाच्यम् । स्वर्गपदस्य समासान्तर्गततया तदर्थस्यान्यत्रान्वयासम्भवादिति चेन्न, स्वर्गसाधनत्वादौ विधेः शक्तिकल्पनेन तथाबोधनिर्वाहात् । न चैकैकस्य बोधेविधेर्विनिगमकाभावः स्वर्गादिपदसमभिव्याहाराधीनतत्तद्धर्मघटितसाधनत्वे तात्पर्यग्रहस्यैव विनिगमकत्वात् । नचैवं विधिशक्त्यानन्त्यम्, स्वर्गत्वादिधर्मावच्छिन्ननिरूपितसाधनत्वेष्वेकशक्त्युपगमात् । न च शक्यतावच्छेदकभेदाच्छक्तिभेदः, इष्टतावच्छेदकत्वेन स्वर्गत्वादीन्यनुगतीकृत्य तदवच्छिन्ननिरूपितसाधनत्वे एकशक्त्युपगमात् । न चेष्टतावच्छेदकत्वेनैव शाब्दबोधे स्वर्गत्वादीनां भानं स्यान्न तु स्वरूपत इति वाच्यम् । इष्टतावच्छेदकत्वस्योपलक्षणतया शक्तिविषयत्वाद्विशेषणस्यैव शाब्दबोधे भानोपगमात् । उपल-

उपादानस्य चाऽध्यक्षं प्रवृत्तौ जनकं भवेत् ।
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टोपायत्वधीयदि ॥ १५१ ॥
यत्नो जीवनयोनिस्तु सर्वदाऽतीन्द्रियो भवेत् ।
शरीरे प्राणसञ्चारे कारणं तत् प्रकीर्त्तितम् ॥ १५२ ॥

उपादानस्येति—उपादानस्य—समवायिकारणस्य, अध्यक्षं प्रत्यक्षं च प्रवृत्त कारणमिति ।

निवृत्तिरिति । द्विष्टसाधनताज्ञानस्य दुःखसाधनविषयकनिवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकादवधारितमिति भावः ॥ १५१ ॥

यत्न इति । जीवनयोनियत्नो यावज्जीवनमनुवर्त्तते, स चातीन्द्रियः । तत्र प्रमाणमाह । शरीर इति । प्राणसञ्चारो ह्यधिकश्वासादिः प्रयत्नसाध्यः । इत्थं च प्राणसञ्चारस्य सर्वस्य यत्नसाध्यत्वमनुमानात् । प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः । स एव जीवनयोनिः प्रयत्नः ॥ १५२ ॥ इति यत्ननिरूपणम् ॥

दिनकरी ।

क्षणत्वं च तत्पदजन्यबोधाविषयत्वेन शक्तिविषयत्वं, तत्पदजन्य बोधविषयत्वेन शक्तिविषयत्वमेव च विशेषणत्वमित्यन्यत्र विस्तरः ॥ १५० ॥

**समवायिकारणस्येति ।** तत्साध्यकप्रवृत्तिं प्रति तत्समवायिकारणात्मकतदुपादानगोचरलौकिकप्रत्यक्षस्य हेतुत्वम् । न च शब्दसाध्यकप्रवृत्तिर्मृदङ्गादौ न स्यात्तदुपादानस्य गगनस्याऽतीन्द्रियत्वात्, एवं ध्वंससाध्यकप्रवृत्तिरपि, तत्समवायिनोऽप्रसिद्धेरिति वाच्यम् । इष्टापत्तेः । शब्दसाक्षात्कारसाध्यकप्रवृत्तेरेव मृदङ्गादिगोचराया उपगमादिति । प्राचीनमतानुसारेणेदम् । नवीनमते त्वधिष्ठानमात्रमुपादानं बोध्यम् । तेन यागादेर्हविः शब्दस्य मृदङ्गादिः प्राणसञ्चारादेश्च प्राणवहनना़ड्यादिरुपादानमिति बोध्यम् ।

**मूले-द्वेषादिति ।** फलगतो द्वेषो द्विष्टसाधनताज्ञानं च निवृत्तिं प्रति कारणमित्यभिप्रायेणोक्तम् ॥ १५१ ॥

**प्राणसञ्चारो हीति ।** अधिकश्वासादिः प्राणसञ्चारो यत्नसाध्यः-प्रत्यक्षयत्नसाध्यतया दृष्टः, धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनादिति भावः । **इत्थं चेति ।** दृष्टान्तसिद्धावित्यर्थः । **सर्वस्येति ।** एकत्र यत्नसाध्यत्वस्याऽऽनुभविकत्वेन तद्दृष्टान्तेन प्राणसञ्चारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वानुमानादिति भावः । **स एव**-प्राणसञ्चारहेतुत्वेनानुमीयमान एव ।

नव्यास्तु जीवनयोनियत्ने मानाभावः प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगरूपाजीवनात्तत्प्रयोजकादृष्टाद्वा सम्भवादुक्तानुमानस्य चाऽप्रयोजकत्वात् । अन्यथैकत्र यत्ने ज्ञान-

रामरुद्री ।

टीकायाम्—**शब्दसाक्षात्कारेति ।** शब्दस्य साक्षात्कारः—साक्षात्कारजनिका श्रोत्रावच्छिन्नसमवायरूपा उत्पत्तिर्यस्मादिति व्युत्पत्त्या दण्डाभिघातादावित्यर्थः । तेन मृदङ्गादेर्न समवायिकारणत्वानुपपत्तिरिति ध्येयम् ।

अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥
तदेवाऽसमवायि स्यात् पतनाख्ये तु कर्मणि ।
सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथाऽपरम् ॥ १५४ ॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्यमन्यत्राऽनित्यमिष्यते ॥ १५५ ॥
नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु ।

गुरुत्वं निरूपयति । अतीन्द्रियमिति ।

अनित्ये—द्व्यणुकादौ । तत्—गुरुत्वमनित्यं, नित्ये—परमाणौ नित्यं, गुरुत्वमित्यनुवर्त्तते ॥ १५३ ॥

तत्—गुरुत्वम्, असमवायि—असमवायिकारणम् । पतने—आद्यपतन इत्यर्थः ।

॥ इति गुरुत्वनिरूपणम् ॥

द्रवत्वं निरूपयति । सांसिद्धिकमिति । द्रवत्वं द्विविधं, सांसिद्धिकं नैमित्तिकं चेत्यर्थः ॥ १५४ ॥

परमाणाविति । जलपरमाणौ द्रवत्वं नित्यमन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम् ॥ १५५ ॥

कुत्रचित्तेजसि कुत्रचित्पृथिव्यां च नैमित्तिकं द्रवत्वम् । तत्र को वा नैमित्तिकार्थस्तद्दर्शयति । नैमित्तिकमिति । वह्नीतिपदं तेजोऽर्थकम् । तथा च तेजःसंयोगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तेजसि, घृतजतुप्रभृतिपृथिव्यां च वर्तते इत्यर्थः ।

दिनकरी ।

जन्यत्वदृष्टान्तेन जन्ययत्नत्वावच्छेदेन ज्ञानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तेरिति प्राहुः ॥ १५२–१५३ ॥ इति यत्ननिरूपणम् ॥

पतनसमवायिभिन्नत्वरूपं पतनासमवायित्वं रूपादावतिव्याप्तमतो व्याचष्टे । असमवायिकारणमिति । द्वितीयादिपतनस्य वेगासमवायिकारणकत्वादाह आद्येति । एवं च संयोगासमवधानकालीना क्रिया गुणासमवायिकारणिका, क्रियात्वात्, संयोगजन्यक्रियावदित्यनुमानेन गुरुत्वसिद्धिरिति भावः ॥ १५४–१५५ ॥ इति गुरुत्वनिरूपणम् ॥

तेजः संयोगजन्यमिति । अग्निसंयोगासमवायिकारणकमित्यर्थः ।

रामरुद्री ।

मूले—अतीन्द्रियमिति । अन्यथा पतनाभावदशायां भूतलादिनिष्ठस्य घटादेस्त्वगिन्द्रियसन्निकर्षे सति गुरुत्वमुपलभ्येतेति भावः । विशेषस्तु प्रागेवोक्तः ॥ १५३ ॥ इति गुरुत्वनिरूपणम् ॥

अग्निसंयोगेति । ननु करकादावग्निसंयोगे सति विलयनदर्शनात् तदीयमपि नैमित्तिकमेव द्रवत्वमिति सांसिद्धिकद्रवत्वे मानाभाव इति चेन्न । करकादीनां विलयनानन्तरं करकात्वेन प्रत्यभिज्ञानाभावेन द्रव्यान्तरोत्पत्तेस्तत्र स्वीकरणीयतया तत्राऽवयवीभूतजलद्रवत्वाधीनद्रवत्वोत्पत्तिसम्भवे नैमित्तिकद्रवत्वो

द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत् । १५६ ॥
स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षाद् दहनस्याऽनुकूलता ॥ १५७ ॥
संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।
मूर्तमात्रे तु वेगः स्यात् कर्मजो वेगजः क्वचित् ॥ १५८ ॥

द्रवत्वं स्यन्दने हेतुरिति । असमवायिकारणमित्यर्थः । संग्रहे-सक्त्वादिसंयोगविशेषे । तत्-द्रवत्वम् , स्नेहसहितमिति बोद्धव्यम् । तेन द्रुतसुवर्णादिना न संग्रहः ॥ १५६ ॥ इति द्रवत्वनिरूपणम् ॥

स्नेहं निरूपयति । स्नेहो जल इति । जल एवेत्यर्थः । असौ-स्नेहः । ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चाऽसौ जलीयः, तथा सति दहनप्रातिकूल्यप्रसङ्गादत आह । तैलान्तर इति । तत्प्रकर्षात्-स्नेहप्रकर्षात् । तैल उपलभ्यमानः स्नेहोऽपि जलीय एव, तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ॥ १५७ ॥ इति स्नेहनिरूपणम् ॥

संस्कारं निरूपयति । संस्कारेति । वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविध इत्यर्थः । मूर्तमात्र इति । कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः । शरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते, तेन च पूर्वकर्मनाशः, तत

दिनकरी ।

वक्ष्यमाणातिप्रसङ्गादाह । स्नेहसहितमिति । तच्च सांसिद्धिकमेव । तथा च सांसिद्धिकद्रवत्वत्वेन हेतुत्वान्न सुवर्णादिद्रवत्वस्य सङ्ग्रह इति भावः । न चाऽऽवश्यकस्नेहहेतुत्वेनैवाऽनतिप्रसङ्गे सांसिद्धिकद्रवत्वस्य सङ्ग्रहहेतुत्वे मानाभाव इति वाच्यम् । स्नेहत्वेन सांसिद्धिकद्रवत्वत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेणोभयस्यापि हेतुत्वात् ॥१५६॥

॥ इति द्रवत्वनिरूपणम् ॥

असौ-तैले प्रतीयमानः स्नेहः । जलीयः-तैलान्तर्गतजलभागनिष्ठः । तथा सति—तैलान्तर्जलभागस्वीकारे । दहनप्रातिकूल्यप्रसङ्गात् दहननाशप्रसङ्गात् । दहननाशं प्रति संयोगेन जलस्य हेतुत्वादिति भावः ॥ १५७ ॥ इति स्नेहनिरूपणम् ॥

वेगो जन्यत इति । वेगत्वं तु जातिविशेषः प्रत्यक्षसिद्धः । तेनेति । कर्मनाशकस्योत्तरसंयोगस्य तदानीमभावाद्वेगस्यैव कर्मनाशकत्वं कल्प्यत इति भावः । तत इति ।

रामरुद्री ।

त्पत्तिस्वीकारस्याऽनुचितत्वात्, घृतादौ तथा विलयनदशायामपि घृते द्रवत्वप्रत्ययेन नैमित्तिकद्रवत्वाभ्युपगमावश्यकत्वात्, कारणद्रवत्वाधीनत्वे विलयनात्पूर्वमपि तदुत्पत्त्यापत्तेः करकायां तु करकारम्भकसंयोगविशेषस्य प्रतिबन्धकत्वादेव द्रवत्वानुत्पादोपपत्तेः, घृतारम्भकसंयोगस्य च प्रकृते द्रवत्वप्रतिबन्धकत्वाभ्युपगमे विलयनदशायामपि द्रवत्वानुपपत्तेर्दुर्वारत्वादिति द्रष्टव्यम् । उभयस्याऽपि हेतुत्वादिति । न चैवं स्नेहस्य गुणान्तरत्वे एव मानाभावः, स्नेहकार्यस्य संग्रहस्य द्रवत्वादेवोपपत्तेः, द्रवत्वतारतम्यादेव संग्रहादितारतम्योपपत्तेरिति वाच्यम् । प्रत्यक्षसिद्धत्वेनोभयोरपि स्वीकारावश्यकत्वात्, तैलादिसंसृष्टकाष्ठादौ जलीयद्रवत्वाप्रत्यक्षेऽपि स्नेहप्रत्यक्षस्याऽनुभवसिद्धत्वादिति संक्षेपः ॥ १५६ ॥

इति द्रवत्वनिरूपणम् ॥

स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम्॥ १५९॥
भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्॥ १६०॥

उत्तरकर्म, एवमग्रेऽपि। विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वात् पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात्। यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः॥ १५८॥

स्थितिस्थापकेति। आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात्। केचिदिति। चतुर्षु—क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः। असौ-स्थितिस्थापकः। क्वचित्–आकृष्टशाखादौ॥१५९॥

भावनाख्य इति। तस्य-संस्कारस्य। उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम्। तत्संशयात् संस्कारानुत्पत्तेर्निश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः। ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं, तेनोपेक्षादिस्थले न स्मरणम्। इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुताऽस्त्विति चेन्न। विनिगमनाविरहेण संस्कारं प्रत्यप्युपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात्। किं चोपेक्षास्थले संस्कारकल्पनाया गुरु-

दिनकरी।

पूर्वकर्मनाशानन्तरमित्यर्थः। एवमग्रेऽपीति। उत्तरकर्मणापि पूर्ववेगनाशस्ततो वेगान्तरोत्पत्तिरित्येषा दिगित्यर्थः। विना च वेगमिति। वेगं विना कर्मनाशो न स्यादित्यन्वयः, नाशकान्तराभावादिति भावः। ननु पूर्वकर्मणो नाशाभावे का क्षतिरत आह। कर्मोत्पत्तिश्च न स्यादिति। अत्र हेतुः कर्मणः कर्मप्रतिबन्धकत्वादिति॥

अत्र केचित्, उत्तरसंयोगेनैव पूर्वकर्मनाशोत्तरकर्मणोः सम्भवात् तत्पूर्वकर्मनाशकर्मोत्पत्तिस्वीकारे प्रयोजनाभावादलं वेगेन? तस्माद्वेगेन गच्छतीति कर्मजनकतया प्रत्यक्षमेव वेगे प्रमाणमित्याहुः॥ १५८॥

पुनर्गमनस्येति। यथापूर्वसंयोगजनकक्रियाया इत्यर्थः। स्थितिस्थापकसाध्यत्वादिति। वेगस्य तूत्तरदेशसंयोगजनकक्रियाजनकत्वं, न तु यथापूर्वसंयोगजनकक्रियाजनकत्वमिति न वेगेन स्थितिस्थापकस्यान्यथासिद्धिरिति भावः। स्थितिस्थापकत्वं जातिविशेषः क्रियाविशेषजनकतावच्छेदकतया सिद्धः। स्थितिस्थापकश्च क्रियाविशेषजनकः, स्वजन्यक्रियानाश्योऽतीन्द्रियश्चेति मूले उक्तप्रायम्॥ १५९॥

इत्थं च-उक्तप्रकारेणोपेक्षाज्ञानात् स्मृतिवारणे च। वस्तुतः संस्कारं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्व एव विनिगमकमस्तीत्याह। किं चेति। संस्कारकल्पनाया गुरुत्वादित्य-

रामरुद्री।

मूले—चतुर्ष्वपीति। व्यजनाकृष्टवाय्वादौ वन्ह्यादिज्वालासु पूयमानघटादिमध्यप्रविशज्जलादौ च यथावस्थितसंयोगदर्शनात्स्थितिस्थापकसंस्कारोऽनुमीयत इति भावः।

**स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।**

त्वात् संस्कारं प्रति चोपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् ॥ १६० ॥

तत्र प्रमाणं दर्शयति । स्मरण इति । असौ-संस्कारो यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्प्यते । विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्, स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात् । न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् । अप्रयोजकत्वात् ।

परे त्वनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः ।

॥ इति संस्कारनिरूपणम् ॥

दिनकरी ।

स्य स्मृतिं प्रत्येवोपेक्षान्यनिश्चयत्वेन हेतुत्व इत्यादिः । सिद्धत्वादित्यग्रिमस्यापि पञ्चम्यन्तस्य नेत्यनेनान्वयः ॥ १६० ॥

तत्र-संस्कारे, उद्देश्यवाचकपदस्य प्रागपेक्षितत्वात् तथान्वयप्रदर्शनार्थमुदीच्यस्याप्यसावित्यस्य प्राक् धारणमिति बोध्यम् । **अतः संस्कारः कल्प्यत इति** । अथानुभवस्य ध्वंस एव व्यापारोऽस्तु प्रतियोग्यभावयोरेकत्राऽजनकत्वमित्यस्याऽप्रयोजकत्वात् । न चानुभवस्य स्मृतिं प्रति प्रतिबन्धकत्वापत्तिरिति वाच्यम् । संसर्गाभावत्वावच्छिन्नकारणताश्रयीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकतापदार्थत्वात्, इह च संसर्गाभावत्वेनाजनकत्वात् । न चाऽनुभवद्वितीयक्षणोत्पन्नसंस्कारेण तृतीयक्षणे स्मरणसम्भवात् ध्वंसस्य व्यापारत्वं न सम्भवति, फलस्य प्राक्कालेऽनुभवध्वंसस्याभावादिति वाच्यम् । तत्रापि क्षणविलम्बेनैव स्मरणाभ्युपगमादिति चेन्न; संस्कारानङ्गीकारे कदाचिदनुभूतस्य सर्वदा स्मरणापत्तेः, अनुभवध्वंसात्मकव्यापारस्य सर्वदा सत्वात् । न चोद्बोधकाभावादस्मरणमिति वाच्यं, यत्र वस्तुविशेषज्ञानात्मकोद्बोधकेन दश पञ्च वा घटादेः स्मरणानि जातानि न त्वधिकानि तत्र घटादिस्मृतौ तद्वस्तुज्ञानस्यैव नियतोद्बोधकतया तत्सत्त्वे उद्बोधकाभावस्य वक्तुमशक्यत्वात् । वस्तुतस्त्वनुपदं वक्ष्यमाणापूर्वसाधकयुक्त्या संस्कारसिद्धिर्निराबाधेति ध्येयम् । **स्वस्वव्यापारान्यतराभावे** । कार्योत्पत्त्यव्यवहितपूर्वक्षणे स्वस्वव्यापाराभावे । **कारणत्वासम्भवादिति** । कार्याव्यवहितप्राक्क्षणवृत्तिस्वस्वव्यापारान्यतरकत्वस्यैव कारणतापदार्थत्वादिति भावः । **अप्रयोजकत्वादिति** । संस्कारजन्यत्वस्य स्मृतित्वे प्रयोजकत्वाभावादित्यर्थः ।

मणिकृन्मतं प्रदर्शयति—**परे त्विति** । त्वन्मतेऽन्तराकल्पनीयस्मृतिव्यक्तावुद्बुद्धसंस्कारस्य हेतुत्वकल्पनं, मन्मते तु प्रत्यभिज्ञायां तद्धेतुत्वकल्पनमिति समानमन्तरास्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायां तद्धेतुत्वकल्पने च तवाधिकं गौरवमित्याहुरित्यनेनास्वरसः सूचितः ।

॥ इति संस्कारनिरूपणम् ॥

रामरुद्री ।

टीकायाम्—**वस्तुविशेषज्ञानात्मकेति** । पदार्थविशेषज्ञानाद्यात्मकेत्यर्थः ॥ इति संस्कारनिरूपणम् ॥

धर्माधर्मावदृष्टं स्याद् , धर्मः स्वर्गादिकारणम् ॥ १६१ ॥
गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः।

अदृष्टं निरूपयति। धर्माधर्माविति। स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः॥ १६१ ॥

तत्र प्रमाणं दर्शयितुमाह। यागादीति। यागादिव्यापारतया हि धर्मः कल्प्यते। अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात्। तदुक्तमाचार्य्यैः—

'चिरध्वस्तं फलायाऽलं न कर्म्मातिशयं विना–' इति।

ननु यागध्वंस एव व्यापारः स्यात्। न च प्रतियोगिध्वंसयोरेकत्राऽजनकत्वम्, सर्वत्र तथात्वे मानाभावात्। न च त्वन्मते फलानन्त्यं, मन्मते चरमफलस्याऽपूर्व्वनाशकत्वान्न तथात्वमिति वाच्यम्। कालविशेषस्य सहकारित्वादित्यत आह। गङ्गास्नानेति। गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमेवाऽपूर्व्वं कल्प्यते, लाघवादिति भावः।

दिनकरी।

स्वर्गादीत्यत्र स्वर्गपदेन सुखमात्रस्यादिपदेन शरीरेन्द्रियादेः परिग्रह इति प्रदर्शयति। स्वर्गादिसकलेत्यादिना। अग्रे नरकादीनामित्यत्राप्येवम्॥ १६१ ॥

तत्र–धर्मे। यागादीति। आदिना होमदानपरिग्रहः। यागत्वं च देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वम्। देवतोद्देश्यकत्वं देवतास्वत्ववद्विशेष्यकत्वम्। शब्दमयी देवतेति पक्षे तु तस्या इदमित्यारोपज्ञानविषयत्वमुद्देश्यत्वम्। होमत्वं चाग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारत्वम्। दानत्वं च मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वमिति सम्प्रदायः। यागत्वहोमत्वादयो मानसप्रत्यक्षगम्यजातिविशेषा इत्यन्ये। श्राद्धस्य पित्रपेक्षया यागत्वेन ब्राह्मणापेक्षया दानत्वेन तत्र साङ्कर्यान्नेदं युक्तमित्यपरे। अन्यथा–धर्माभावे। चिरविनष्टस्याऽप्यनुभवस्य स्मृतिजनकत्वादाह। निर्व्यापारतयेति। चिरध्वस्तमिति। चिरकालनष्टं कर्म, अतिशयं–अपूर्वं विना फलाय–फलजननाय नालं–न समर्थमित्यर्थः। तथात्वे—ध्वंसप्रतियोगिनोरेकत्र जनकत्वाभावे। एकमेवापूर्वं कल्प्यत इति। वस्तुतस्तु यागस्यापि ध्वंसो न व्यापारः, तथात्वे कीर्तितयागात् स्वर्गोत्पादवारणाय स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदो निवेशनीयस्तत्र च कीर्तितत्वस्यैकस्याभावेन कीर्तितत्वावच्छिन्नप्रतियोगिताकभेदनिवेशनमशक्यमतः कीर्तितव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो निवेशनीयः। एवं च दशकीर्तितयागस्थले परस्परं तत्तद्व्यक्तिभेदसत्त्वेन स्वर्गोत्पादवारणाय भेदकूटस्यैव कारणतावच्छेदकत्वमुपगन्तव्यम्, तत्र च विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावानन्त्यम्, अपूर्वस्वीकारे तु क्षणिकतया कीर्तितयागानां मेलनासम्भवेन भेदानामेकत्र निवेशे प्रयोजनाभावः। यादृशकीर्तितयागादपूर्वमापादनीयं तद्भेदावच्छिन्नयाग-

रामरुद्री।

प्रयोजनाभाव इति। अपूर्वस्य तादृशस्थलेऽनुत्पत्त्यैव स्वर्गोत्पत्तिवारणसम्भवात्। ननु तादृशस्थलेऽपूर्वोत्पादवारणायैव कीर्तितान्यत्वं त्वया कारणतावच्छेदककुक्षौ निवेशनीयमिति तुल्यो दोष इत्यत आह। यादृशेति। तद्भेदावच्छिन्नयागव्यक्तेरिति। अकीर्तितत्वोपलक्षिताया अपूर्वकारण-

कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥

ननु ध्वंसोऽपि न व्यापारोऽस्तु। न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्। अनन्यथासिद्धनियतपूर्ववर्तित्वस्य तत्रापि सत्त्वात्, अव्यवहितपूर्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वे, न तु सर्वत्र, कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्व इत्यत आह। कर्म्मनाशेति। यदि ह्यपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात्। न हि तेन यागादिनाशः प्रतिबन्धो वा कर्त्तुं शक्यते, तस्य पूर्वमेव वृत्तत्वादिति।

दिनकरी।

व्यक्तेस्तदानीमभावात्। न चापूर्वसम्बन्धेन कीर्तितयागव्यक्तीनां मेलनं सम्भवतीति स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदानामेकत्र निवेश आवश्यक इति वाच्यम्। अपूर्वानुत्पत्त्यैवाऽस्वर्गसम्भवे स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदानामनिवेशात्, कीर्तिततयागादूर्ध्वंसोत्पादेन ध्वंसजनकतावच्छेदककोटौ कीर्तितभेदानामनिवेशस्यासम्भवादित्यन्यैरपरिशीलितः पन्थाः। **कारणत्व इति।** घटकत्वं सप्तम्यर्थः। एवमग्रेऽपि। **कार्यकालवृत्तित्वमिवेति।** यथा समवायिकारणस्य कारणत्वे कार्यकालवृत्तित्वं घटकं न त्वसमवायिकारणस्य कारणत्वे तथेत्यर्थः। तेन—कर्मनाशाजलस्पर्शादिना। तस्य—यागादेः। पूर्वं—कर्मनाशाजलस्पर्शादितः पूर्वम्। **वृत्तत्वादिति।** उत्पन्नत्वाद्विनष्टत्वाच्चेत्यर्थः। योग्यविभु-

रामरुद्री।

त्वेन सम्प्रतिपन्नाया यागव्यक्तेरित्यर्थः। तथा च अपूर्वं प्रति विशेषतः कारणीभूतानां यागव्यक्तीनामभावादेव तादृशस्थलेऽपूर्वानुत्पत्तिसम्भवे न यागस्याऽपूर्वजनकतावच्छेदककोटावपि कीर्तितान्यत्वं निवेशनीयमिति तत्तत्कीर्तितभेदकूटनिवेशाधीनं पूर्वोक्तं गौरवमपूर्ववादिनां नाऽस्त्येवेति भावः। माऽस्त्वपूर्वजनकतावच्छेदककोटौ कीर्तितान्यत्वनिवेशः, तथापि स्वर्गजनकतावच्छेदककोटौ तन्निवेश आवश्यक एव, दशकीर्तितयागस्थलेऽपूर्वसम्बन्धेन तेषां समवधानसम्भवादिति आग्यन्नाशङ्कते। **नचेति।** उत्तरयति। **अपूर्वानुत्पत्त्यैवेति।** तथा चाऽपूर्वसम्बन्धेन तेषां समवधानमेव नाऽस्तीति भावः। यद्यपि कीर्तितयागस्थलेऽपूर्वानुत्पादोपपादनायाऽपूर्वं प्रति यागस्य विशेषतस्तत्तद्व्यक्तित्वेन कारणत्वानि कल्प्यान्येवेति गौरवमपूर्ववादिनामपि समानम्, न च यादृशाङ्कुरविशेषे दश कर्मव्यक्तयः कीर्तिता एव, एकैव तु कर्मव्यक्तिरकीर्तितेति स्थितिः, तादृशस्थलेऽपूर्वद्वारा यागस्य स्वर्गं प्रति हेतुतावादिनामेव लाघवम्, यागस्य स्वर्गजनकतावच्छेदककोटौ कीर्तितान्यत्वनिवेशे दशकीर्तितभेदानां निवेशावश्यकतया तेषां विशेषणविशेष्यभावे विनगमनाविरहेण बहूनां कार्यकारणभावानां स्वीकारप्रसङ्गात्, अपूर्ववादिनस्तु तादृशापूर्वव्यक्तिं प्रति तादृशाकीर्तितयागव्यक्तेरेकमेव कारणत्वं कल्प्यम्। एतादृशस्थलविशेषसूचनपरतयैव **दशकीर्तितयागस्थले** इति निर्देशः, तत्रत्यदशपदस्य बहुपरत्वात्, अग्रे च **यादृशकीर्तितयागादपूर्वमापादनीयं तद्भेदावच्छिन्नयागव्यक्तेस्तदानीमभावात्**'——इत्यनेन तादृशे कव्यक्त्यभावादेवाऽपूर्वानुत्पादोपपादनमपि साधु—इच्छत इति वाच्यम्। तादृशस्थले स्वर्गं प्रत्यपि यागस्य तद्व्यक्तित्वेनैव हेतुताया वादिना वक्तुं शक्यत्वेनाऽपूर्वानभ्युपगमेऽपि क्षतिविरहात्। तथाऽपि कीर्तितयागानां स्वर्गं प्रत्यपि स्वरूपायोग्यत्वे तदनुष्ठातृणां वृथाचेष्टाकर्तृत्वेन न कुर्यान्निष्फलं कर्मेति शास्त्रबोधितप्रत्यवायभागिताप्रसङ्गः; निषेधस्थनिष्फलपदस्य फलोपधायकान्यपरत्वे प्रतिबन्धकबाहुल्यवशेनाऽसमाप्तसमासिकानां किरणावल्यादिकर्तॄणामपि मङ्गलजन्यदुरितभागिताप्रसङ्गादित्यवधेयम्।

**कार्यकालवृत्तित्वमिति।** ननु कार्यकालीनत्वस्य कारणत्वघटकत्वे कीदृशं कारणत्वमिति चेन्न।

अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः।
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३॥

एतेन देवताप्रीतिरेव फलमित्यपास्तम्। गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसम्भवात्, देवतायाश्चेतनत्वेऽपि(१) तत्प्रीतेरनुद्देश्यत्वात्, प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात्, जन्यसुखादेस्तत्राभावात्। तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादेरेव विष्णुप्रीतिशब्देन कथ्यते ॥ १६२ ॥

अधर्मो नरकादीनामिति। नरकदुःखादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म इत्यर्थः। प्रमाणमाह। प्रायश्चित्तेति। यदि ह्यधर्मो न स्यात् तदा प्रायश्चित्तादिना नाश्यत्वमधर्मस्य न स्यात्। न हि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते, तस्य पूर्वमेव विनष्टत्वादिति भावः। जीवेति। ईश्वरस्य धर्माधर्माभावादिति भावः ॥ १६३ ॥

दिनकरी।

विशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वादिच्छात्मकयागस्य तृतीयक्षण एव नष्टत्वादिति भावः। एवमग्रेऽपि।

'धर्मः क्षरति' इत्यस्य धर्मो यागादिः, क्षरति फलभाङ् न भवतीत्यर्थकतया कर्मनाशाजलस्पर्शादेः स्वध्वंससम्बन्धेन स्वर्गादिफलं प्रति प्रतिबन्धकत्वमेव युक्तमिति न सत्, एकाश्वमेधानन्तरमश्वमेधः कृत इति कीर्तिते तदुत्तरं पुनरश्वमेधकरणेऽपि स्वर्गानुदयापत्तेः। न च तदश्वमेधजन्यस्वर्गत्वावच्छिन्नं प्रति तत्कीर्तनत्वेन प्रतिबन्धकत्वान्नाश्वमेधान्तरात् स्वर्गानुदयप्रसङ्ग इति वाच्यम्। यदश्वमेधस्य कीर्तनं कृतं तदश्वमेधजन्यस्वर्गाप्रसिद्ध्या तादृशप्रतिबध्यप्रतिबन्धकभावस्य कल्पयितुमशक्यत्वात्।

तच्चापूर्वं दर्शपूर्णमासयोर्द्विविधं परमापूर्वं कालिकापूर्वं चेति। तथा हि 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति'' ''उपांशुयागमन्तरा यजति'' 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्'' 'ऐन्द्रं दध्यमावास्यायाम्' 'ऐन्द्रं पयोऽमावास्यायाम्–' इति पञ्चभिर्वाक्यैर्विहितेभ्यः षड्भ्यः आग्नेयादिभ्यः षडुत्पन्नान्यपूर्वाणि तान्येव कालिकापूर्वाण्युच्यन्ते, तेभ्यश्च परमापूर्वमिति। ननु षडपूर्वाण्यावश्यकानि सात्वादेव स्वर्गहेतवः सन्तु, किं परमापूर्वेणेति चेन्न। दर्शपूर्णमासाभ्यां यजेतेत्यनेनोभयत्वावच्छिन्नस्य स्वर्गसाधनत्वावगमादुभयत्वावच्छिन्नस्यैकव्यापारकल्पनादुत्पत्त्यपूर्वाणां चोभयत्वावच्छिन्नाजन्यत्वात्, दर्शपूर्णमासाभ्यामिति विधिप्रवृत्तिसमये चिरविनष्टस्य दर्शपूर्णमासस्य व्यापारतयैकस्यैवापूर्वस्य कल्पनाच्च। न चैवमनन्तरं षण्णां यागानां क्रमिकत्वज्ञाने षडपूर्वकल्पनागौरवं, तस्य फलमुखत्वात्। न च पञ्चभिः पञ्चापूर्वद्वारा षष्ठेन च साक्षादेव परमापूर्वं जन्यतामिति किं षष्ठेन कालिकापूर्वेणेति वाच्यम्। षष्ठेनाप्युत्तराङ्गदक्षिणासहकारेणैव परमापूर्वजननात्, ताव-

रामरुद्री।

कार्याधिकरणे कार्याव्यवहितप्राक्काल—कार्यकालान्यतरावच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वस्यैव तथात्वात्। तथाच कारणत्वं तत्तत्कारणानुरोधेन यथाऽननुगतमेव स्वीक्रियते तथा

(१) अनिश्चयेन इति पाठान्तरम्।

इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।
शब्दो ध्वनिश्च वर्णाश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ।
कदम्बगोलकन्यायादुत्पत्तिः कस्य चिन्मते ॥ १६६ ॥
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥

इमौ-धर्माधर्मौ । वासनेति । अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्म्मणी न फलायाऽलमिति भावः । ज्ञानादपीत्यपिना भोगपरिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वं ? "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि-"इतिवचनवि-

दिनकरी ।

त्कालं षष्ठस्य यागस्याऽनवस्थित्या तज्जन्यापूर्वस्याऽऽवश्यकत्वात् । अत्र परमापूर्वं प्रति स्वर्गं प्रति च दर्शत्वपूर्णमासत्वव्यापकेन दर्शपूर्णमासोभयसाधारणवैजात्येन कारणत्वमित्येके । दर्शत्वेन पूर्णमासत्वेन च कारणत्वं, दण्डचक्रवन्मिलितानां फलोपधानमित्यपरे । अत्र त्रयात्मकदर्शजन्यमपूर्वमेकं कालिकापूर्वत्रयव्यापारकम् , एवं त्रयात्मकपूर्णमासजन्यमेकमपूर्वं कालिकापूर्वत्रयव्यापारकं ताभ्यां स्वर्गजनकापूर्वोत्पत्तिः, तच्च परमापूर्वं फलशिरस्कापूर्वमित्युच्यत इति नवापूर्वपक्ष इत्येके । तत्रैव फलशिरस्कापूर्वे मानाभावादष्टापूर्वमित्यन्ये । कालिकापूर्वषट्केनैव परमापूर्वसम्भवात् व्यापारीभूतापूर्वद्वये मानाभावात् पूर्वोक्ता सप्तापूर्व्येव युक्तेति नव्याः । इदं चाऽपूर्वं जातेष्टिपितृयज्ञादौ कर्तृनिष्ठमुत्पद्यत इत्येके । भोक्तृनिष्ठमिति तु सम्प्रदायः । प्राभाकरास्तु यागक्रिया सर्वात्मना नैव नश्यति, किन्तु सूक्ष्मरूपेण स्वर्गदेहारम्भकेषु यागसम्बन्धिद्रव्यारम्भकेषु यागकर्तर्यात्मनि वाऽवस्थाय फलमारभत इत्याहुः । तन्न । ज्ञानेच्छादिरूपस्य यागस्यात्मनो योग्यविभुविशेषगुणतया क्षणचतुष्टयावस्थायित्वनियमात्, ज्ञानेच्छादीनां सदाऽननुभवेन समानाधिकरणस्वोत्तरवर्त्तिगुणनाश्यत्वस्वीकारात् । अन्यथैवंरीत्या जगत एव सूक्ष्मरूपतया सर्वदावस्थानप्रसङ्गादित्यलं विस्तरेण ॥ १६२ ॥ १६३ ॥

ननु गङ्गादिदर्शनादिना ईश्वरे कुतो न धर्मादेरुत्पत्तिरत आह मूले-इमौ तु वासनाजन्याविति । ईश्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्मादेरुत्पत्तिरिति भावः । धर्माधर्मौ प्रति वासनाया हेतुत्वे मानाभाव इत्यत आह मुक्त्यावस्थाम्—अत इति । ज्ञानिना-तत्त्वज्ञानवता । वचनविरोधादिति । तेनादृष्टनाशमात्रे भोगस्य हेतुत्वप्रतिपाद-

रामरुद्री ।

प्रकृते कार्यपूर्वकाले नियतवृत्तित्वरूपमेव कारणत्वं भविष्यतीति भावः । तच्च कार्याधिकरणे कार्यपूर्वत्वविशिष्टक्षणावच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वलक्षणं बोध्यम् । इदमापाततः । समवायिकारणस्थलेऽपि कार्याव्यवहितप्राक्क्षणावच्छेदेन वृत्तिमदत्यन्ताभावप्रतियोगितानवच्छेदकधर्मव-

रोधात्, इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न । तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात् । कथमन्यथा प्रायश्चित्तादिना कर्म्मणां नाशः ? तदुक्तम्, "ज्ञानाग्निः सर्वकर्म्माणि भस्मसात्कुरुतेऽर्जुन" इत्यादिना । श्रूयते च—

क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे । इति ।

ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्यात् ज्ञानेन सर्वेषां कर्म्मणां नाशादिति चेन्न । प्रारब्धेतरकर्म्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत् प्रारब्धम् । तदभिप्रायमेव नाऽभुक्तमिति वचनमिति । इत्यदृष्टनिरूपणम् ॥

शब्दं निरूपयति । शब्दो ध्वनिश्चेति ॥ १६४ ॥

नभोवृत्तिः आकाशसमवेतः । दूरस्थशब्दस्याऽग्रहणादाह । श्रोत्रेति ॥१६५॥

ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह । वीचीति । आद्यशब्देन बहिर्दशदिगवच्छिन्नाऽन्यः शब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापक एवंक्रमेण श्रोत्रोत्पन्नो गृह्यत इति । कदम्बेति । आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन् कल्पे कल्पनागौरवादुक्तं कस्यचिन्मत इति ॥ १६६ ॥

ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह । उत्पन्न इति । शब्दानामुत्पादविनाशशालित्वादनित्यत्वमित्यर्थः । ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्, इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह । सोऽयं क इति । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु

दिनकरी ।

नादिति भावः । इत्थं चेति । कर्मणां भोगैकनाश्यत्वे चेत्यर्थः । अन्यथा—उपलक्षकत्वाभावे । सर्वकर्म्माणीति । सर्वकर्म जन्यादृष्टानीत्यर्थः । भस्मसात्कुरुते–नाशयति । स्मृतिं दर्शयित्वा श्रुतिं दर्शयति । क्षीयन्ते चेति । तदभिप्रायमेव–प्रारब्धकर्माभिप्रायमेव ।

॥ इत्यदृष्टनिरूपणम् ॥

गौरवादिति । दशशब्दानां तत्प्रागभावानां तेद्धेतुहेतुमद्भावानां च कल्पने गौरवादित्यर्थः ॥ १६४ ॥ १६५ ॥ १६६ ॥

रामरुद्री ।

स्वरूपस्यैव कारणत्वस्याऽभ्युपगमात् । असमानकालीनवस्तुनि समवायासम्भवात्तेन सम्बन्धेन कार्याधिकरणस्य प्रसिद्धिनिर्वाहायैव समवायिकारणस्य कार्यसहभावाङ्गीकारावश्यकत्वादिति प्रागेव निरूपितप्रायम् । अग्रिमभागे शब्दनिरूपणे च यद्यपि आकरग्रन्थेषु भूयान् विस्तरोऽस्ति, तथाऽपि तस्य तत एवाऽनुसन्धानसम्भवादनावश्यकत्वाच्च नेह तन्निबन्धनेऽस्माकं प्रवृत्तिरित्यत्रैवोपरम्यते ।

॥ इत्यदृष्टनिरूपणम् ॥

तद्व्यक्त्यभेदो विषयः, उक्तप्रतीतिविरोधात् । इत्थं च द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति ॥ १६७ ॥

ननु सजातीयत्वं सोऽयमिति प्रत्यभिज्ञायां भासते इति कुत्र दृष्टमित्यत आह ।

दिनकरी ।

उक्तप्रतीतिविरोधादिति । उत्पादविनाशशालिप्रत्ययविरोधादित्यर्थः ।

इत्थं चेति । प्रत्यभिज्ञानस्य सजातीयविषयत्वे चेत्यर्थः ।

द्वयोरपीति । उत्पादप्रतीतिप्रत्यभिज्ञानयोरित्यर्थः ।

अत्र मीमांसकाः, स एवायं गकार इति प्रत्यभिज्ञया गकारादेस्तावत्कालावस्थानस्य विषयीकृतत्वेनान्तरीभूतशब्दादिनाऽनाशेन न शकाभावाद्वर्णानित्यत्वसिद्धिः । न च प्रत्यभिज्ञा तज्जातीयत्वविषयिणी बाधकाभावात् अन्यथा, सर्वत्रापि तथाभावेऽभेदोच्छेदापत्तिः । नच तारत्वमन्दत्वरूपविरुद्धधर्माध्यासो बाधकः । प्रत्यभिज्ञानबलेन तस्य नित्यत्वसिद्धौ तारत्वादेर्व्यञ्जकवायुधर्मत्वस्य कल्पनात् श्रोत्रेण वायुधर्मस्य तारत्वादेरपि ग्रहणसम्भवात् । य एव तारः स एवान्यापेक्षया मन्द इति प्रतीतेस्तारत्वमन्दत्वयोरविरोधाच्चेत्याहुः । तन्न । तथासति कत्वगत्वादेरपि व्यञ्जकवायुधर्मत्वापत्त्या ककारगकारयोरपि भेदो न सिद्ध्येदिति वर्णैक्यापत्तेः । वस्तुतस्तु वर्णानित्यत्वपक्षे कण्ठताल्वाद्यभिघातानां कत्वादिकं कार्यतावच्छेदकं वर्णनित्यतापक्षे तु कसाक्षात्कारत्वमिति गौरवात् । न च नित्यत्वमतेपि लौकिकविषयितया कत्वमेव तज्जन्यतावच्छेदकमिति गौरवानवकाश इति वाच्यम्, कोलाहलप्रत्यक्षस्यासङ्ग्रहप्रसङ्गात् । न हि कोलाहलप्रत्यक्षं कत्वादिविषयकम् । अन्यथा तुल्ययुक्त्या घटाद्युत्पादकस्यापि घट(प्रत्यक्ष)त्वमेव कार्यतावच्छेदकमिति तदपि नित्यमेव स्यादिति । नचानित्यत्वमते प्रत्यभिज्ञायास्तज्जातीयत्वविषयकत्वेन तज्जातीयोयमिति स्यान्न तु सोयमितीति वाच्यम्, यत्र प्रत्यभिज्ञायां जातित्वेन गत्वादेर्भानं तत्रैव तज्जातीयोयमित्याकारः यत्र तु स्वरूपतो भानं तत्र सोयमित्याकार इत्यभ्युपगमादिति ।

अत्रेदं बोध्यम् । शब्दो द्विविधः । ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मकसंयोगजन्याद्यशब्दं प्रति गगनं समवायिकारणं भेर्याकाशसंयोगोऽसमवायिकारणं भेरीदण्डसंयोगादि निमित्तकारणम् । विभागजन्यध्वन्यात्मकाद्यशब्दं प्रति तु वंशदलाकाशविभागोऽसमवायिकारणं वंशदलद्वयविभागो निमित्तकारणम् । वर्णात्मकाद्यशब्दं प्रति तु कण्ठताल्वादिनाऽऽकाशसंयोगोऽसमवायिकारणं कण्ठताल्वादिना वाय्वादिसंयोगो निमित्तकारणम् । द्वितीयादिशब्दं प्रति तु आद्यशब्दोऽसमवायिकारणम् । न च भेर्याकाशसंयोगकण्ठाद्याकाशसंयोगादीनां शब्दं प्रति करणत्वे मानाभाव इति वाच्यम् । भावकार्यस्यासमवायिकारणजन्यत्वनियमेन तत्कारणत्वस्वीकारात् । तादृशनियमे मानाभावे तु मास्तु तेषां कारणत्वं भेरीदण्डसंयोगादिनिमित्तकारणसहकृतेनाकाशेनैव शब्दोत्पत्तिसम्भवादिति । प्रथमादि शब्दानां च स्वकार्यशब्देनैव नाशः चरमस्य तूपान्त्यशब्देनोपान्त्यशब्दनाशेन वा नाश इति ॥ १६७ ॥

तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ।। १६८ ।।

इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता ।।

---

तदेवेति। यदौषधं मया कृतं तदेवान्येनापि कृतमित्यादिदर्शनादिति भावः॥

॥ इति सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥

॥ इति शब्दनिरूपणम् ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्य्यपुत्रश्रीयुतविश्वनाथपञ्चानन-भट्टाचार्य्यविरचिता न्यायसिद्धान्तमुक्तावली सम्पूर्णा।

---

## दिनकरी।

मूले तदेवौषधमित्यादिना सैवेयं दीपकलिकेत्यादेः परिग्रहः। ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रकाशयति। यदौषधं मया कृतमित्यादिना। अत्र च स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासाहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्वान्न व्यक्त्यभेदो विषयः किन्तु तत्सजातीयाभेदो विषय इति भावः ॥

भानुं प्रणम्य परिभाव्य च शास्त्रसारं मुक्तावलीकिरण एष पितृप्रदिष्टः।
सद्युक्तिभिर्दिनकरेण करेण सोऽयं नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु ॥

मुक्तावलीप्रकाशो यः स्वाज्ञानतिमिरापहः। तेन सन्तोषमायातु नीलकण्ठः सतीप्रियः॥

इति श्रीमद्भारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेवभट्टतनूजश्रीमद्दिन-करभट्टविरचिते न्यायसिद्धान्तमुक्तावलीप्रकाशे गुणनिरूपणम् ॥

---

## रामरुद्री।

सिद्धान्तच्युतिशङ्किभीरुमनसा यत्नेन दूरीकृतप्रज्ञाकल्मषसञ्चयेन रुचिरा टीका कृतैषा मया।
याताऽऽलोचनमार्गमद्य सुधियामादर्शयन्ती नवं पन्थानं कुरुतादनारतममूनन्तःप्रमोदाकुलान् ॥

इति श्रीरामरुद्रभट्टाचार्यारब्धायां श्रीमहामहोपाध्यायश्रीलक्ष्मणशास्त्रिसुतश्रीराजेश्वर-शास्त्रिप्रपूरितायां मुक्तावलीप्रकाशतरङ्गिण्यामष्टमस्तरङ्गः समाप्तिमगमत् ॥

---

समाप्तश्चायं ग्रन्थः ॥

